# अद्वैतवेदान्ते भामतीप्रस्थानस्य तुलनात्मकमध्ययनम्

**[A Comparative Study of The Bhamati School of Advaita Vedanta]**

राष्ट्रिय - संस्कृत - संस्थानस्य

विद्यावारिधि (Ph. D.) उपाधये प्रस्तुतः शोधप्रबन्धः


मार्गनिर्देशकः

डा० चक्रधर विजल्वानः

प्राचार्यः

गुरुवायूर केन्द्रीय संस्कृतविद्यापीठम्

पुरनाट्टुकरा, त्रिचूर (केरल)

अनुसंधात्री

कुमारी वसन्ता, एम्

अद्वैतवेदान्ताचार्या

गुरुवायूर केन्द्रीय - संस्कृतविद्यापीठम्

पुरनाट्टुकरा, त्रिचूर (केरल)



शोधस्थलम्

गुरुवायूर - केन्द्रीय - संस्कृत - विद्यापीठम्

पुरनाट्टुकरा, त्रिचूर, केरल

1986

# अद्वैतवेदान्ते भामतीप्रस्थानस्य तुलनात्मकमध्ययनम्

[A Comparative Study of
The Bhamati School of Advaita Vedanta]

राष्ट्रिय - संस्कृत - संस्थानस्य

विद्यावारिधि (Ph. D.) उपाधये प्रस्तुतः शोधप्रबन्धः


मार्गनिर्देशकः

डा० चक्रधर बिजल्वानः
प्राचार्यः
गुरुवायूर केन्द्रीय संस्कृतविद्यापीठम्
पुरनाट्टुकरा, त्रिचूर (केरल)

अनुसंधात्री

कुमारी वसन्ता, एम्
अद्वैतवेदान्ताचार्या
गुरुवायूर केन्द्रीय - संस्कृतविद्यापीठम्
पुरनाट्टुकरा, त्रिचूर (केरल)



शोधस्थलम्

गुरुवायूर - केन्द्रीय - संस्कृत - विद्यापीठम्

पुरनाट्टुकरा, त्रिचूर, केरल

1986

## शोधनिर्देशकीय-संस्तुति:

मदीयमार्गनिर्देशने अद्वैतवेदान्ताचार्यपदवीधारिण्या (कुमारी) वसन्ता· एम् इति नाम्न्या अनुसन्धात्र्या गुरुवायूर् केन्द्रीयसंस्कृतविद्यापीठे शोधकार्यम् कृत्वा राष्ट्रीय-संस्कृत-संस्थानस्य विद्यावारिधि (Ph.D) उपाधि-प्राप्त्यर्थम् " अद्वैतवेदान्ते भामतीप्रस्थानस्य तुलनात्मकम् अध्ययनम् " इति विषय-मवलम्ब्य शोधप्रबन्धोयमारचित: । अत्र प्रस्तुता सामग्री अस्या एव स्वोपज्ञा मौलिकी च विद्यत इति सजोषं प्रमाणयति -

C.D. Bijalwan 29.5.86

डा· चक्रधरबिजल्वान:

प्राचार्य:,

गुरुवायूर् केन्द्रीय-संस्कृतविद्यापीठम् ,

पुरनाट्टुकरा, त्रिचूर् केरला

Forwarded
C.D. Bijalwan
29.5.86
Principal

## आत्मनिवेदनम्

"अद्वैतवेदान्ते भामतीप्रस्थानस्य तुलनात्मकमध्ययनम्"

इत्येनं विषयमधिकृत्य लिखितोऽयं शोधप्रबन्धो मया नीरक्षीरविवेकिनां शास्त्रपारंगतानां विदुषां समक्षं सादरं प्रणतिपुर:सरं च प्रस्तूयते । भारतीयदर्शनेष्वद्वैतवेदान्तस्य विशिष्टं महत्त्वमस्तीति सुस्पष्टमेव । ब्रह्मसूत्रशांकरभाष्याधारितस्य भामतीप्रस्थानस्यान्यप्रस्थानापेक्षया यद्विशिष्टं महत्त्वं विद्यते, तदपि नास्ति विशेषज्ञानामपरोक्षम् । शास्त्रपारंगतै: विद्वत्तल्लजैरपि कठिनतया बोधगम्ये अद्वैतवेदान्तविषयके प्रबन्धे अल्पज्ञाया: मम बालचापल्यतुल्यो योऽभिनिवेश: संजात:, तत्र मन्ये करुणालयस्य भगवत: गुरुवायुपुरेश्वरस्य प्रेरणा अथवा कृपा एव कारणम् ।

अद्वैतवेदान्ते मम रुचिस्तदैवारब्धाऽभूद्यदा मया शास्त्रिकक्ष्याया: पाठ्यविषयेषु अद्वैतवेदान्तस्याध्ययनमारब्धम् । आचार्यकक्ष्यायामपि ममाध्ययनस्य विषय: अद्वैतवेदान्त: आसीत् । स्वकीयाध्ययनकाले मया भामत्या: यत्किंचिदध्ययनं कृतं, तदैव मयाऽनुभूतं यत्स्वीयाज्ञानस्य दूरीकरणार्थम् भामतीप्रस्थानस्य विशिष्टमध्ययनं मया करणीयमिति । अत: शोधकार्यस्य समुचितेऽवसरे समागते सति मया तदर्थमसौ विषय: प्रस्तावित: । गुरुवायूर्विद्यापीठस्य स्थानीयशोधसमितेरनुशंसामधिकृत्य केन्द्रीयशोधसमितिद्वारा शोधविषयस्यानुमोदनानन्तरं राष्ट्रियसंस्कृतसंस्थानस्य निदेशकवर्यै: असौ विषय: मम शोधकार्याय स्वीकृत: । अत: सर्वप्रथमहं संस्थानस्य प्राक्तननिदेशकवर्येभ्य: डा॰ रामकरणशर्ममहाभागेभ्य:,

तथा डा० मण्डनमिश्रमहाभागेभ्यः स्वकीयान् प्रणामान् समर्पयामि ।

भामतीप्रस्थानस्यांशिकं समालोचनं कतिपयेषुष्वन्येष्वपि ग्रन्थेषूपलभ्यते । किन्तु तेषामपेक्षया मम शोधप्रबन्धस्य रूपरेखाआयामाश्च भिन्नाः विस्तृताश्च वर्तन्ते । भाषायाः दृष्ट्या प्रतिपादनक्रमस्य तथा विषय-विश्लेषणस्य दृष्ट्या च मम शोधप्रबन्धस्यान्येभ्यः एतादृशेभ्यः शोधप्रबन्धेभ्यो ग्रन्थेभ्यश्च भेदो वर्तते । उदाहरणतया 'भामतीप्रस्थान तथा विवरण-प्रस्थान का तुलनात्मक अध्ययन' इत्येवं प्रकारेण डा० सत्यदेवशास्त्रिद्वारा हिन्दी-भाषायां रचिते पुस्तके भामतीप्रस्थानस्य प्रमाणविषयकं मतमत्यमप्यालोचितं न दृश्यते । अद्वैतवेदान्तपरम्परायाः समीक्षणमपि तत्र नास्ति, न्यायप्रभृतीनामन्यदर्शनानां तुलनायां भामतीप्रस्थानस्य विश्लेषणमपि तत्र नास्ति । एवमेव भास्करप्रस्थानेन सह भामतीप्रस्थानस्य तुलनापि तस्मिन्पुस्तके नास्ति । अतः किंचित्साम्येऽपि मम शोधप्रबन्धः डा० सत्यदेवशास्त्रिविरचिताद्ग्रन्थाद्भिन्नः अस्ति । एवमेवं 'भामती एक अध्ययन' इत्येवंप्रकारेण 'डा० ईश्वरसिंहद्वारा' हिन्दी-भाषायां रचिते ग्रन्थेऽपि भामतीप्रस्थानस्याकलनमन्येषां सर्वेषां प्रस्थानानां तुलनायां तथा नास्ति, यथा मया स्वकीयेऽस्मिन् शोधप्रबन्धे प्रयतितम् । अपि च 'राजेन्द्रप्रसाद दूबे' द्वारा रचितः 'वाचस्पतिदर्शनमितिनामकः' संक्षिप्तः ग्रन्थोऽपि केवलं ब्रह्माविद्याविषयकधारणायाः पर्यालोचनं करोति, न तु समग्रस्य भामतीप्रस्थानस्य । अतः मदीयस्य शोधप्रबन्धस्य स्वरूपं ततोऽपि भिन्नमिति नास्त्यत्र किमप्यधिकं वक्तव्यम् । डा० 'हसूरकरद्वारा' रचिता 'वाचस्पतिमिश्र ऑन्

अद्वैतवेदान्त' इत्येवंप्रकारेण आंग्लभाषायां प्रथितैका महत्वपूर्णा कृतिरस्ति । तथापि तस्यां कृतौ वाचस्पतेः सिद्धान्तानामांशिकमेव विश्लेषणं दृश्यते न तु समेषां सिद्धान्तानां न वा समग्रस्य भामतीप्रस्थानस्य । विभिन्नैः विद्वद्भिः रचितेष्वन्येषु अद्वैतवेदान्तपरकग्रन्थेषु तथा भाष्यभामत्यादिसहितेषु ब्रह्मसूत्रस्य संस्करणेषु भूमिकारूपेण प्रकाशितेषु नैकेषु व्याख्यानेष्वपि भामती-प्रस्थानसम्बद्धाः विषयाः आंशिकरूपेणैव चर्चिताः दृश्यन्ते । अतः ग्रन्थरूपेण भूमिकारूपेण वा लिखितानां तेषां प्रबन्धानामपेक्षया मदीयस्यास्य शोधप्रबन्धस्य पृथक्त्वं समधिकं भामतीप्रस्थानपरकत्वं च स्वतःस्पष्टमेव ।

उपर्युक्तप्रकारेण यद्यपि मदीयस्यास्य शोधप्रबन्धस्य आयामा उपर्युक्तानां ग्रन्थानामायामेभ्यो भिन्नाः वर्तन्ते , तथापि उपर्युक्तेष्वन्येषु च नैकेषु ग्रन्थेषु , व्याख्यानेषु भूमिकासु च तत्तद्ग्रन्थकारैः ये विचाराः प्रस्तुताः , तेषामपि मया सावधानतयाऽध्ययनं कृतम् । यत्र-यत्र मया तेषामुपयोगित्वमनिवार्यत्वं चानुभूतं,तत्र-तत्र मया तेषां नामोल्लेखं कृत्वा तेभ्यो साहाय्यमपि गृहीतं तान् प्रति च स्वकीयः समादरोऽपि प्रकटितः । अत्राप्यहमुपर्युक्तेभ्योऽन्येभ्यश्च वाचस्पतिमिश्रदर्शनचिन्तकेभ्यः मम पूर्ववर्तिभ्यो विद्वद्भ्यः सविनयं स्वकीयाः प्रणतयो निवेदयामि ।

अस्मिन् शोधप्रबन्धे सप्त अध्यायाः सन्ति । एतेष्वध्यायेषु समालोचितानां विषयाणां रूपरेखा एवमस्ति -

1 वेदान्तेतरप्रमुखभारतीयदर्शनानां सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकमध्ययनम् ।

2॰ वेदान्तपरम्परायाः सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकमध्ययनम् ।

3॰ सुरेश्वर-भास्कर-पद्मपाद प्रकाशात्मयतिः प्रवर्तितानां वार्तिकप्रभृतिप्रस्थानानां सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकम समीक्षणाम् ।

3 भामतीप्रस्थानस्य स्वरूपपरिचयः, अन्यप्रस्थनानां सन्दर्भे भामतीप्रस्थानप्रतिपादितानां प्रमुखसिद्धान्तानां तुलनात्मकमध्ययनम् ।

5 तत्वमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकमध्ययनम् ।

6 ज्ञानमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकमध्ययनम् ।

7 उत्तरवर्तिग्रन्थेषु प्रभावस्य दृष्ट्या भामतीग्रन्थस्य रचनाशैल्याः दृष्ट्या च भामतीप्रस्थानस्याध्ययनं, शोधप्रबन्धस्य पुनराकलनं च ।

उपर्युक्तप्रकारेण शोधप्रबन्धस्य विषयाणां विश्लेषणे यद्यपि केषुचित्स्थलेषु पुनरुक्तिर्दृश्येत, तथापि संकल्पनानां सम्प्रदायानुसारं तुलनात्मकरूपेण प्रतिपादनार्थम् यदावश्यकमासीत्तस्य परिहारः कथं कर्तुम् शक्येत ?

ये विषयाः मयाऽत्र निरूपिताः, येन प्रकारेण च तेऽत्र विश्लेषिताः, तेषां सर्वेषां तेन प्रकारेण विश्लेषणमद्यावधि रचितेषु तथा मया दृष्टेषु ग्रन्थेषु मया न दृष्टः । अतोऽहं सविनयं कथयितुं शक्नोमि यत् मयाऽस्मिन् शोधप्रबन्धे केषुचित्स्थलेषु नवीनानि तथ्यानि विदुषां पुरतः समुपस्थापयितुं यो लघुप्रयास कृतः, केषुचित्स्थलेषु च सम्प्रवर्तितानां तथ्यानां नूतनरूपेण विश्लेषणे यः प्रयत्नो विहितः, तदर्थमहं विदुषामाशीर्वादमिच्छन्त्यपि आचार्यस्य जयन्तभट्टस्य शब्देषु विदुषां पुरतः सविनयमेतन्निवेदयितुमिच्छामि यत् - " कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्रविचार्यताम् ॥"

जाने , यदत्र नैकेषु स्थलेषु भाषायाः विचाराणां च स्खा-
लित्यं विद्वद्भिः परिलक्ष्येत । तथापि मया केनापि प्रकारेण संग्रथितामिमां
मालां कृतभूरिपरिश्रमाः नीरक्षीरविवेकिनो परीक्षणनिपुणाः शास्त्रविचक्षणाः
वाचस्पतयो विद्वत्तल्लजाः एतत् विचार्य स्वीकरिष्यन्ति यत् -

"तैरेव कुसुमैः पूर्वमसकृत्कृतशेखराः ।
अपूर्वरचनेदाम्नि दधात्येव कुतूहलम् ।।"

केरलेषु संस्कृतं अद्यापि सर्वाधिकं समाद्रियते । भगवत्पादेन शंक-
राचार्येण स्वजन्मना पवित्रितेऽस्मिन् क्षेत्रे अद्वैतवेदान्तं प्रति जनाभिरुचिः स्वा-
भाविकी ।भगवतः कृपया मयापि तादृशे परिवारे जनिर्लब्धा , यत्र संस्कृतं प्रति
अद्वैतवेदान्तं प्रति च परम्परारूपेणापि महानादरः आसीदस्ति च । मम शोध-
कार्ये मम मात्रा तथा मम भ्रात्रा श्रीमता जयचन्द्रमहाभागेन तथाऽन्यैः पारिवारिकैः
यत्प्रोत्साहनं सौविध्यं च मह्यं प्रदत्तं , यच्च साहाय्यमाचरितं,तदर्थमहं तान्प्रत्यव-
श्यमेव स्वजीवनपर्यन्तं कार्तज्ञं धारयिष्यामि ।

शोधकार्यस्य सम्यक्पूर्त्यर्थम् मया नैकेषामाधुनिकविदुषां ग्रन्थाः
अधीताः । तेषामुल्लेखः सन्दर्भग्रन्थसूच्यां कृतः । नैकेषां विदुषां साक्षाद्रू-
पेण पत्रद्वारा च साहाय्यमपि मया प्राप्तम् । एतादृशेषु कृपाप्रवणेषु पितृकल्पेषु
विद्वत्सु मम भक्तिभावः यावज्जीवं स्थास्यति । शोधसामग्र्याः संकलनार्थम् मया
निम्नलिखितेभ्योऽन्येभ्यश्च ग्रन्थालयेभ्यः महत्साहाय्यं गृहीतम् ।

1 मान्युस्क्रिप्ट् लइब्रेरी , त्रिवेन्द्रम् ।

2 मान्युस्क्रिप्ट् लाइब्रेरी , मद्रास् ।

3 अड्यार् लाइब्रेरी , अड्यार् ।

4 साहित्याक्काडमीपुस्तकालय , त्रिचूर् ।

5 रामकृष्णमिशन पुस्तकालय , कलिक्कट् । , कालटीप्रभृति ।

6 तदर्थमेतेषां पुस्तकालयानां अधिकारिणः प्रति धन्यवादान् विज्ञापयामि ।

असौ शोधप्रबन्धो मया गुरुवायूर् केन्द्रीयविद्यापीठस्य प्राचार्याणां न्यायवेदान्तादिविषयानवलम्ब्य विविधग्रन्थप्रणेतॄणां डा॰ सि॰डि॰ बिजल्वान्महाभागानां मार्गनिर्देशने रचितः । गुरुवर्यैः ममाभिभावकल्पैः डा॰ बिजल्वान्महाभागैः मम मार्गनिर्देशनं कृत्वा मयि याऽहैतुकी कृपा कृता , तदर्थमहं तेषां चरणेषु पुनःपुनः प्रणामान् निवेदयामि ।

गुरुवायूर्केन्द्रीयसंस्कृतविद्यापीठे मयाऽस्य प्रबन्धस्य कृते शोधकार्यम् कृतम् । शोधकार्यविधौ शोधच्छात्रवृत्तिरपि मया लब्धा, विद्यापीठीयपुस्तकालयस्योपयोगः कृतः , नैकेषामध्यापकानां सहयोगोऽपि प्राप्तः । अतः राष्ट्रीयसंस्कृतसंस्थानस्याधिकारिणः, विशेषतः निदेशकवर्यान् डा॰मण्डनमिश्रमहाभागान्प्रति भूयोभूयः धन्यवादान् ज्ञापयामि ।

सत्स्वपि बहुष्वन्तरायेषु अल्पज्ञाया अपि मम शोधप्रबन्धोऽयं पूर्णतां प्राप्तः । अतः गुरुवायुपुराधीशस्य भागवतः श्रीकृष्णस्य कृपैवात्र प्रमुखं कारणमिति परिभावयन्ती तथा स्वकीयानां स्खालित्यानां कृते शास्त्रविचक्षणेभ्यः पण्डितप्रवरेभ्यः क्षमां याचयन्ती अहमेनं शोधप्रबन्धं अद्वैतवेदान्तनयज्ञानां करुणापराणां विदुषां सम्मुखं सादरं सविनयं च समुपस्थापयामि ।

Vasantham वसन्तम्
अनुसन्धात्री

## प्रथमोऽध्यायः

वेदान्तेतर प्रमुख भारतीयदर्शनानां स्वरूपपरिचयः तेषु प्रतिपादितानां कतिपय प्रमुख सिद्धान्तानां सन्दर्भे भामती प्रस्थान प्रतिपादितानां सम्बद्ध सिद्धान्तानां तुलनात्मकं निरूपणम् । 1–108

*****      *****      *****

अनुक्रमणिका

----------

11

## द्वितीयोऽध्यायः

**वेदान्तपरम्परायाः सन्दर्भे भामती प्रस्थानस्य स्वरूपपरिचयस्तुलनात्मकम् समीक्षणं च** 109-162

अनुक्रमणिका

xxxxxxxxxxxxxxxxxx

15

## तृतीयोध्यायः

---

सुरेश्वर-भास्कर-पद्मपाद-(प्रकाशात्मयति) प्रवर्तितानां वार्त्तिकप्रभृति-
प्रस्थानानां सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकम् समीक्षणम् । 163- 229

---

अनुक्रमणिका

---

## चतुर्थोऽध्याय:

भामतीप्रस्थानस्य स्वरूपपरिचय:, अन्यप्रस्थानानां सन्दर्भे भामतीप्रस्थान-प्रतिपादितानां प्रमुख-सिद्धान्तानां तुलनात्मकं समीक्षणं च ।

पंचमोऽध्यायः

तत्वमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य समीक्षणम्

षष्ठोऽध्यायः

ज्ञानमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य तुलनात्मकमध्ययनम् ।

सप्तमोऽध्याय:

उत्तरवर्त्यद्वैतवेदान्तग्रन्थेषु भामत्या: प्रभावस्य सन्दर्भे वाचस्पते: रचनाशैल्या: सन्दर्भे तथा शोधप्रबन्धे चर्चितानां विषयाणां सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम् ।



xxxxxxxxxxxxxx

सप्तमोऽध्याय:

प्रथमो भाग:

## प्रथमः अध्यायः

वेदान्तेतर प्रमुख भारतीयदर्शनानां स्वरूपपरिचयः, तेषु प्रतिपादितानां कतिपय प्रमुख सिद्धान्तानां सन्दर्भे भामती प्रस्थान प्रतिपादितानां सम्बद्ध सिद्धान्तानां तुलनात्मकं निरूपणम् ।

* * * * *

दृशिर् प्रेक्षणे इत्यस्मात् धातोः करणे ल्युटि सति दर्शनशब्दो निष्पद्यते । दृश्यते अनेनेति दर्शनम् । कस्यचित् पदार्थस्य पारमार्थिकं रूपं किम् ? जगतोऽस्य वास्तविकस्वरूपं किम् ? कदा वा कस्मात् वा जगदिदम् उदपद्यत ? जगदिदं कः ससर्ज? मानवः स्वजीवनकाले कथमनुत्तमम् आनन्दम् अनुभवेत्, मोक्षं वा लभेत? एतेषाम् एतादृशानां च प्रश्नानां समाधानाय यत् शास्त्रजातं प्रभवति, तदेव दर्शनम् इत्युच्यते ।

दर्शनस्य शास्त्रत्वं स्वतः सिद्धम् । ''शासनात् शंसनात् शास्त्रं शास्त्रमित्यभिधीयते।शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः'' । 1(x) (पाद-टिप्पण्योऽस्याध्यायस्य अन्ते द्रष्टव्याः) इति पूर्वसूरिभिः अभाणि । शास्त्रशब्दस्यापि शासनकरणमित्येवार्थः । शासनं नाम अभ्यर्हितार्थबोधनमेव । अभ्यर्हितार्थबोधने करणीभूतस्य शास्त्रमिति नाम । अभ्यर्हितार्थः कः इति चेत, उच्यते मोक्षः एव । ' तत्वज्ञानात् मुक्तिरिति' उक्त्या तत्वज्ञानादेव मोक्षः जायते इत्यवगन्तुं शक्यम् । तत्वज्ञानं च प्रायः शास्त्रार्थाध्ययनोत्पन्नमिति' इत्यत्र उपनिषदेव प्रमाणम् । तद्यथा -

'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये '' इति ।।

---

x• प्रथमाध्यायस्य पादटिप्पण्यः
101 पृष्ठतः 108 पृष्ठपर्यन्तं प्रदत्ताः ।
अतः तत्रैव द्रष्टव्याः

आंग्लभाषायां दर्शनशब्दस्य पर्यायत्वेन 'फिलासफी' इति शब्दः सुप्रथितः । वस्तुतः फिलास, सोफिया इति द्वयोः ग्रीकशब्दयोर्मेलनेन फिलासफी इति समस्त शब्दः निष्पन्नः । अत्र पूर्वं पदम् 'अनुरागं' द्वितीयं च विद्याम् अभिधत्ते । ग्रीक चिन्तको 'हेराक्लिटस्' अर्थमिमं प्रथमतया चिन्तयामास ।

'फिलासफर' इत्ययं शब्दः ज्ञानानुरागी इत्यर्थे प्रयुज्यते । जगदिदं किम्? परमात्मा कः ? इत्येतान् अन्यांश्च विषयान् अवगन्तुं ईत्सवः अनुरागिणश्च ये जनाः प्रभवन्ति, त एव 'फिलासफर' इति निगद्यन्ते । कथं वयं सर्वेभ्योऽपि दुःखेभ्यः आत्यन्तिकरूपेण निवृत्ताः सन्तः निःश्रेयसम् अधिगच्छेम इत्येतस्य निदर्शनमेव दर्शनानां प्रयोजनं प्रतिपाद्यं च । तद्यथा -

''यद् आभ्युदयिकं चैव नैःश्रेयसिकमेव च ।

सुखं साधयितुं मार्गं दर्शयेत् तद्धि दर्शनम् '' ।।

भारतीयदर्शनानि आस्तिक-नास्तिक-वर्गद्वये विभक्तानि । वेद-प्रामाण्यम् अंगीकुर्वतां दर्शनानां समावेशः आस्तिकदर्शनवर्गे तथा वेद-प्रामाण्यम् अनंगीकुर्वतां दर्शनानां समावेशः नास्तिकदर्शनवर्गे क्रियते ।

आस्तिकदर्शनानि न्याय-वैशेषिक सांख्य-योग-पूर्वमीमांसावेदान्तश्च । नास्तिक दर्शनानि चार्वाकदर्शनं, जैनदर्शनं, बौद्धदर्शनम् इत्येतानि(बौद्धेष्वपि सौत्रान्तिक-माध्यमिक-योगाचार वैभाषिकाः इति अवान्तर भेदाः वर्तन्ते । आस्तिकदर्शनानाम् उपज्ञातारः गौतमः, कणादः- कपिलः- पतंजलिः- जैमिनिः बादरायणश्च । नास्तिकदर्शनानां तु बृहस्पतिः, महावीरः, बुद्धश्च । भामती प्रस्थानस्य सम्यग् रूपेण विश्लेषणार्थम् एतेषां सर्वेषाम् आकलनमप्यावश्यकं वर्तते, इतिकृत्वा एतेषाम् अत्र संक्षिप्तः परिचयः दीयते भामती प्रस्थान-दिशा यथावश्यकं समीक्षणं च क्रियते ।

## 1.10 चार्वाकदर्शनम्

नास्तिकदर्शनेषु सर्वप्रथमं परिगण्यते चार्वाकदर्शनम्[2]। चार्वाकदर्शनस्य प्रवर्त्तनं बृहस्पतिना कृतम् इति प्रायः विद्वभिः स्वीक्रियते। चार्वाका कश्चिद् महान् कविः आसीदिति केषांचिद् मतम्। किन्तु केचिद् इत्यम् अभि-प्रयन्ति यद् 'चार्वाकः' इत्येषा संज्ञा एकस्य पुरुषस्य न, अपितु समुदायस्य अस्ति। 'चारुः वाकः (वाक्यं) यस्य सः चार्वाकः' इत्येवं क्रमेण चार्वाक-शब्दः प्रचलितः इति। उपदेशं विनापि जनाः चार्वाकस्य मतम् अनुसरन्तीति एतन्मतं 'चार्वाक' - इति नाम्ना प्रख्यातम्। अस्य मतस्य अपरं नाम 'लोकायतम्' इत्यस्ति।

भगवत्पादाः आदिशंकराचार्याः एतन्मतम् 'लोकायतिकम्' इति नाम्ना निर्दिशन्ति। 'षड्दर्शनसमुच्चयस्य रचयितुः गुणरत्नस्य मतानुसारं यः पुण्यपापादिपरोक्षवस्तूनां चर्वणं करोति, सः चार्वाक इति कथ्यते। काशिकावृत्तौ चार्वाकनाम्नः कस्यचिद् आचार्यस्यापि उल्लेखो वर्त्तते।

## 1.11 चार्वाकीया तत्वमीमांसा

चार्वाकमतानुसारं पृथ्वी अप्- तेजस् वायु एतानि चत्वारि भूतानि एव तत्वानि। एतेषां संयोग एव देहः। तेभ्यः एव देहाकार-परिणतेभ्यो चैतन्यम् उपजायते, किण्वादिभ्यो मदशक्तिवद् येषां वस्तूनां मलनेन मद्यं सम्पद्यते, तानि वस्तूनि पृथक् पृथक् रूपेण मदयोत्पादने न समर्थानि। तथैव पृथिव्यादि-पंचभूतानि समेत्यैव चैतन्यमुत्पादयन्ति, पृथक् पृथक् रूपेण नु तानि अचेतनानि। शरीरस्य विनाशे सति चैतन्यमपि नश्यति।

चार्वाकाः स्वीयं मतं बृहदारण्यक श्रुतेः अर्थं परिवर्त्य समर्थयन्ति। तथाहि - 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यन्ति स न प्रेत्य संज्ञास्तीति'[3]।

चार्वाकाः आकाशस्य पदार्थत्वं न स्वीकुर्वन्ति । यतः आकाशस्य अस्तित्वम् अनुमानप्रमाणेन ज्ञायते । अनुमानं च ते प्रमाणत्वेन नांगीकुर्वन्ति ।

प्रकृतिक्रमेण(पृथक्क्रमेण) अवस्थितेषु किण्वादिषु (सुरायाः समुद्पादको वृक्षविशेषः) मादकता न भवति किन्तु सम्मील्य विकृतिं प्राप्तेषु तेषु चैतन्यं संजायते । तादृशचैतन्यविशिष्टो देह एव आत्मा इति तेषां कथनम् । देहातिरिक्ते आत्मनि तेषां मतानुसारं मानाभावात् । तथाहि - 'देह स्थौल्यादियोगाच्च स एवात्मा नचापरः मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ''[4] ।।

यथा सारथिना अश्वैश्च संचालिते रथो गतिर्भवति, तथैव देहादिसंघाताद् आत्मा भिन्न इति एतादृशम् अनुमानं चार्वाकाः न स्वीकुर्वन्ति । चार्वाकाः यज्ञानाम् उपयोगित्वं वेदानां प्रामाण्यं च नांगीकुर्वन्ति । तथाहि

''अग्निहोत्रं त्रयोवेदाः त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः [5] ।।

## ।।2 चार्वाकमतानुसारं पुरुषार्थस्वरूपम्

'धर्मार्थकाममोक्षेषु काममेव केवलं चार्वाकाः पुरुषार्थत्वेन स्वीकुर्वन्ति । तथाहि - 'अंगनालिंगनाजन्यसुखमेव पुमर्थता । कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते [6] ।। दुःखभयात नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । तथाहि - 'नहि मृगाः सन्ति इति शालयो नोप्यन्ते । नहि भिक्षुकाः सन्ति' इति स्थाल्यो नाधिश्रियन्ते ।

देहस्य विनाशः एव मोक्षः । तथा कण्टकादिजन्यं दुःखमेव नरकः लोकप्रसिद्धो राजा एव परमेश्वरः इति चार्वाकमतम् । चार्वाकाः , वेदस्य प्रामाण्यं न स्वीकुर्वन्ति । ज्ञानकाण्डस्य कर्मकाण्डवादिभिः कर्मकाण्डस्य ज्ञानकाण्डवादिभिः च प्रतिक्षिप्तत्वेन अग्निहोत्रादेः जीविकामात्र प्रयोजनवत्वात्'[7] ।

अत्रैतद् ज्ञातव्यं वर्त्तते यत् कर्मकाण्डप्रामाण्यवादिनः मीमांसकाः ज्ञानकाण्डस्य प्रतिक्षेपं कुर्वन्ति । एवमेव ज्ञानकाण्डवादिभिः वेदान्तिभिश्च कर्मकाण्डस्य प्रतिक्षेपः क्रियते ।

कर्मकाण्डज्ञानकाण्डयोः अप्रामाण्यत्वात् चार्वाकाः समस्तमपि वेदम् अप्रामाणिकं मन्यते ।

चार्वाकाः प्रत्यक्षं नाम एकमेव प्रमाणं स्वीकुर्वन्ति । चतुर्णां भूतानां ज्ञानं प्रत्यक्ष प्रमाणेन सिध्यतीति तेषां मतम् ।

## । । 3 चार्वाकमतानुसारं प्रमाणस्वरूपम्

चार्वाकाः प्रत्यक्षस्यैव प्रमाणत्वं स्वीकुर्वन्ति । नापरेषाम् अनुमानादीनाम् । अत्रैतद् ज्ञातव्यमस्ति यत् मीमांसकाः वेदान्तिनश्च षट् प्रमाणानि स्वीकुर्वन्ति । नैयायिकमतानुसारं प्रत्यक्षानुमानोपमानशब्दाः इति चत्वारि प्रमाणानि सन्ति । वैशेषिकैः प्रमाणद्वयमेव स्वीक्रियते । तद्यथा-

'' शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् '' ।।

किन्तु चार्वाकाणामेतन्मतमस्ति यत् अनुमानम् अपि प्रमाणत्वेन स्वीकर्तुं न शक्यते । अनुमानस्य आधारः व्याप्तिरस्ति । व्याप्तिपक्षधर्मताशालिलिंगमकं भवतीति अभ्युपगम्यते अनुमानप्रामाण्यवादिभिः । व्याप्तिश्च उभयविधोपाधिविधुरः सम्बन्धः । स च सत्तया चक्षुरादिवत् नाङ्गभावं भजते, किन्तु ज्ञाततया ।

चार्वाकस्य मतानुसारं व्याप्तेः ज्ञानं प्रत्यक्षप्रमाणेन न भवति । प्रत्यक्षमपि द्विविधम् बाह्यम् आन्तरं च । बाह्यप्रत्यक्षेण व्याप्तेः ज्ञानं भवितुं न शक्नोति । यतः बाह्यप्रत्यक्षं बाह्येन्द्रियैः भवति बाह्येन्द्रियाणां सम्बन्धश्च तत्कालिकवस्तुभिः सहैव । नैयायिकैस्तु व्याप्तिः 'त्रिकालिका' इति प्रतिपाद्यते । बाह्येन्द्रियैश्च त्रैकालिकं ज्ञानं न भवति ।

आन्तरप्रत्यक्षेणापि व्याप्तिज्ञानं कर्तुं न शक्यते । यतः आन्तर-प्रत्यक्षं मनसा भवति मनश्च अन्तरिन्द्रियम् । तथा अन्तरिन्द्रियमेतत् बाह्येन्द्रियाधीनम् । यावत्पर्यन्तं बाह्येन्द्रियैः कस्यचित् वस्तुनः ज्ञानं न भवति, तावत्पर्यन्तं मनसाऽपि ज्ञानं भवितुं न शक्नोति । अतः चार्वाक-मतानुसारं प्रत्यक्षप्रमाणाद्द्वारा व्याप्तेः ज्ञानं न, व्याप्तिज्ञानाभावे च कुतोऽनुमानम्?

अनुमानेनापि व्याप्तेः ज्ञानं भवितुं न शक्नोति । यतः एकस्य अनुमानस्य सिद्ध्यर्थं अन्यस्य आवश्यकता भवेत्,अन्यस्य कृते अन्यस्य एवं च अनवस्थादोषः प्रसज्येत् ।

यदि एतत् कथ्यते यत् धूमधूम ध्वजयोः अविनाभावेन अनुमानं सिद्ध्यति । तदपि न समीचीनम् चार्वाकमतानुसारम् । यतः वचनमात्रे मन्त्रादिवत् विश्वासाभावत् । अपि च अनुपदिष्टाविनाभावस्य पुरुषस्य अन्तर्दर्शनेन अर्थान्तरानुमित्यनुमाने स्वार्थानुमानकथायाः कथाशेषत्व-प्रसंगात् । का कथा पुनः परार्थानुमानस्य ?

शब्दप्रमाणेनाऽपि व्याप्तिज्ञानं कर्तुं न शक्यते । यतः वैशेषिक-मतानुसारं शब्दोपमानयोः अन्तर्भावः अनुमाने एव संजायते । यदि अन्तर्भावः न स्वीक्रियते तर्हि वृद्धव्यवहारस्पलिंगावगतिसापेक्षतया तत्रापि अनवस्थादो-षप्रसंगात् ।

उपमानेनापि व्याप्तेः ज्ञानं भवितुं न शक्नोति । तस्य संख्या-सम्बन्धादि-भूतकत्वेन अनौपाधिकसम्बन्धभूतकत्वसम्भावात् ।

पुनश्च उपाधेः अभावेऽपि व्याप्तेः ज्ञानं कर्तुं न शक्यते । यतः उपाध्यभावः कुत्रचित् वर्तते इति ज्ञानमपि दुष्करम् । उपाधयः प्रत्यक्ष-प्रमाणावगम्याः एव भवन्ति भविष्यन्तीति नात्र नियमः । अभावज्ञानं च प्रतियोगिज्ञानसापेक्षम् । प्रत्यक्षोपाधीनाम् अभावः अन्यक्षेत्रे ज्ञानं शक्यते ?

यदि स अभावः अपि अनुमीयते, तर्हि तत्रापि व्याप्तेः आवश्यकता भविष्यति । एवमत्रापि अनवस्थादोषः प्रसज्येत ।

उपाध्यभावज्ञानेन व्याप्तिज्ञानं भवतीति अस्मिन् विषये अपरमपि कारणमस्ति तच्च इत्थं वर्तते-
उपाधि ज्ञाने जाते तदभावविशिष्टसम्बन्धरूपव्याप्तिज्ञानं व्याप्तिज्ञानाधीनं च उपाधिज्ञानमिति अन्योन्याश्रयदोषः प्रसज्येत । एवं प्रकारेण उपाध्यभावम् आश्रित्यापि व्याप्तिज्ञानं कर्तुं न शक्यते । यत्तु धूमादिज्ञानानन्तरं अग्न्यादिज्ञानं लोकानां जायते तत्तु पूर्वकालप्रत्यक्षम् आश्रित्य भवति । स्वभावेन काकतालीयन्यायेनापि एतत्सर्वं सम्भवति । उक्तं च चार्वाकैः स्वीयमतस्य समर्थने -

'' अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः ।
केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः ।।[8] ''

## 1 1 4 भामतीप्रस्थानानुसारं चार्वाकमतसमीक्षणम्

अद्वैतवेदान्तस्य पुष्ट्यर्थं तथा प्रतिपक्षिमतानां निरसनार्थं वाचस्पतिमिश्रेण यद्यपि सर्वेष्वेव ग्रन्थेषु प्रयासः कृतः, तथापि भामत्यां तेन अतिनिपुणतया विस्तरेण च परमतखण्डनं कृत्वा येन प्रकारेण अद्वैतवेदान्तसिद्धान्तानां स्थापना कृता नूनमत्यन्तं महत्त्वपूर्णं वर्तते ।

चार्वाकमतानुसारं देहव्यतिरिक्तस्य आत्मनः सद्भावः नास्ति । किन्तु ब्रह्मसूत्रे भगवता बादरायणेन ''एक आत्मनः शरीरे भावात्'' ( 3 3 53) इत्येतद्सूत्रेण चार्वाकमतस्य उद्भावनं कृत्वा 'व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्'' ( 3 3 54) इत्यनेन सूत्रेण चार्वाकमतस्य निरसनं कृतम् ।

अत्र भामत्याः उपस्थापनात्पूर्वं भागवत्पादानां शंकराचार्याणां मतमपि द्रष्टव्यं वर्त्तते । तद्यथा - ''अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्य आत्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति संभावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः पुरुषः इति चाहुः[9] ।

'' न त्वेतदस्ति यदुक्तमव्यतिरेको देहादात्मन इति । व्यतिरेक एवास्य देहाद्भवितुमर्हति । तद्भावाभावित्वात् । यदि देहभावे भावाद्देहधर्मत्वमात्मधर्माणां किं न मन्येत ? देहधर्मवैलक्षण्यात् । ये हि देहधर्मा रूपादयस्ते यावद्देहं भवन्ति । प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति। देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते, न त्वात्मधर्माश्चैतन्यस्मृत्यादयः । अपि च सति हि तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं न त्वसत्यभावः । पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसंचारेणात्मधर्मा अनुवर्तेरन्[10]'' इति ।

अत्र वाचस्पतिमिश्रस्य कथनमेतदस्ति - 'नन्वात्मास्तित्वोपपत्तय एवात्रोच्यन्ताम्' किं तदाक्षेपेणेत्यत आह- आक्षेपपूर्विका इति । यद्यपि समस्तव्यस्तेषु पृथिव्यप्तेजोवायुषु न चैतन्यं दृष्टम् तथापि कायाकारपरिणतेषु भविष्यति । नहि किण्वादयः समस्त-व्यस्ता न मदना दृष्टा इति मदिराकारपरिणता च मदयन्ति । अहमिति चानुभवे देह एव गौराद्याकारः प्रथते, नतु तदतिरिक्तस्तदधिष्ठानः कुण्ड इव दधीनि । अत एवाहं स्थूलो गच्छामीत्यादिसमानाधिकरण्योपपत्तिरहं स्थूलादिभिः । ननु दधिसमानाधिकरजानि मधुरादीनि कुण्डस्यैकाधिकरण्यमनु भवन्ति सित मधुरं कुम्भमिति । न चाप्रत्यक्षमात्मात्वमनुमानादिभिः शक्यमुन्नेतुम् । न खल्वप्रत्यक्षं प्रमाणमस्ति[11] ।

उक्तं हि - 'देशकालादिभेदानां भेदादभिन्नासु शक्तिषु भावानुमानेन प्रसिद्धिरति - दुर्लभा' इति । यदा च उपलब्धिसाध्यानन्तरीयक - भावस्य लिंगस्यैयं गतिस्तदा केव कथा दृष्टव्यभिचारस्य शब्दस्यार्थापत्तेश्चात्यन्तपरोक्षार्थगोचराया उपमानस्य च सर्वैकदेशसादृश्यविकल्पितस्य सर्वसारूप्ये तत्त्वात् । एकदेशसारूप्ये चातिप्रसंगात् सार्वेणोपमानात् । सौत्रस्तु हेतुः भाव्यकृता व्याख्यातः ।[12]

वाचस्पतिमिश्रस्य कथनानां सारः एषः अस्ति यत् चैतन्य- इच्छाद्वेष- प्रभृतिगुणानाश्रित्य आत्मा अनुमातुं शक्यते तथा आध्यात्मिकैः उपदेश- वाक्यैरपि देहादिव्यतिरिक्तस्य आत्मनः अस्तित्वं सिद्धयति ।

एवं च चार्वाकाणाम् एतत् कथनमपि समुचितं नास्ति यत् भूमिवाटव नलानिलेभ्यः चतुर्भ्यः भूतेभ्यः चैतन्यमुपजायते इति । यतः भूतविशेषगुणरूपादिः वैधर्म्यान्न न चैतन्यं शरीरगुणः । एतेन च इदमपि सिद्धयति यत् चैतन्यं न शरीरधर्मः, अपितु अन्यस्य अर्थात् आत्मनः धर्मः ।

चैतन्यं मदशक्तिवत् स्वीकर्तुं न शक्यते । यतः मदशक्तिः केषाञ्चित् द्रव्याणां सम्मिश्रणस्य फलं भवति । अपि च मादकता सम्मिश्रणस्य प्रत्येकं अंशे उपलभ्यते । एवंप्रकारेण यदि शरीरे अपि चैतन्यस्य संचारः स्वीक्रियते, तर्हि शरीरस्य प्रत्येकम् अंगे पि चैतन्यं प्रसज्येत । एवं च अवयवेष्वपि पृथक् पृथक् रूपेण चैतन्ये स्वीकृते सति अवयवानां कार्येषु पारस्परिकः विरोधः संजायेत । तथा न भवति । अतः एतत्कथयितुं शक्यते यत् शरीरस्य प्रत्येकम् अंगे चैतन्यं नास्ति ।

यदि अनेकेषां चैतन्यानाम् एकत्वं स्वीक्रियते, तर्हि एकतायाः संयोजकः कश्चित् भवितव्यः । एवं सत्यपि शरीरेन्द्रियमनःप्राणप्रभृतिभ्यः भिन्नम् एकं चैतन्यम् आत्मरूपेण अवश्यमेव स्वीकरणीयम् । अतः वाचस्पतिमिश्रस्य मतानुसारं लोकायतिकानां देहात्मवादसिद्धान्तः समीचीनः नास्ति ।

लोकायतिकाः प्रत्यक्षस्यैव प्रमाणत्वं स्वीकुर्वन्ति किन्तु भामती-प्रस्थाने अन्यानि अपि प्रमाणानि स्वीक्रियन्ते । चार्वाकाणां भूतचतुष्टय-विषयेऽपि अद्वैतवादिनां मतभेदाः सन्ति । आगमप्रामाण्यविषयेऽपि मत-भेदः वर्तते । अतः संक्षेपक्रमेण एतत्कथयितुं शक्यते यत् भामतीप्रस्थाना-नुसारं चार्वाकसिद्धान्ताः ग्राह्याः न सन्ति ।

## ।20 बौद्धदर्शनम्

बौद्धमतस्य प्रवर्तको भगवान् गौतमो बुद्धः आसीत्[13] । बाल्यकाले अस्य नाम सिद्धार्थः आसीत् । बोधिवृक्षस्य अधः उपविश्य सम्पादितत्वात् अथवा 'बुद्धेन उपदिष्टम्' इत्याश्रित्य एतत्दर्शनं 'बौद्धदर्शनम्' इत्येवं रूपेण प्रसिद्धम् । यद्यपि अस्य मतस्य उपदेष्टा भगवान् बुद्ध एक एव आसीत्, तथापि शिष्याणां ज्ञानग्रहणप्रकारम् अधि गतज्ञानावबोधनम् अथवा अधि-गतज्ञानविश्लेषणाम् आश्रित्य बौद्धदर्शनस्य चत्वारः उपभेदाः संजाताः ।

## ।2। बौद्धदर्शनस्य चत्वारः सम्प्रदायाः, अवान्तरवादाश्च

महात्मनः बुद्धस्य उपदेशवाक्य-जातम् आसीत् । ''सर्वं क्षणिकं क्षणिकम्, दुःखम् दुःखम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यमिति । इदमेव वाक्यजातं 'भावनाचतुष्टयम्' इत्यपि कथ्यते । एतद् उपदेशवाक्यजात-माश्रित्य अधिकारिभेदात् शिष्यैः ये अर्थाः अवगताः,ताननुश्रित्यैव महात्मनोः बुद्धस्य शिष्याः वर्गचतुष्टये विभक्ताः संजाताः । एवंप्रकारेण च बौद्ध-मतं सम्प्रदायचतुष्टये विभक्तम् अभवत् । ते च सम्प्रदायाः माध्यमिक-योगा-चार-सौत्रान्तिक-वैभाषिकक्रमेण प्रथिताः ।

## । 2 । (I) माध्यमिकसम्प्रदायः (शून्यवादः)

माध्यमिकदर्शनस्य प्रमुखः सिद्धान्तः 'शून्यवादः' इत्यस्ति । शून्यवादस्य प्रवर्तकः प्रमुखरूपेण आचार्यो नागार्जुनः आसीत् । माध्यमिकमतस्य व्युत्पत्तिः एवमस्ति शिष्यैस्तावद् योगाश्च आचारश्च द्वयं करणीयम् । तत्र अप्राप्तस्यार्थस्य प्राप्तये अथवा ज्ञानाय शिष्यैः यः पर्यनुयोगः (अर्थात् शंका) उपस्थाप्यते स एव योगः' इति उच्यते । गुरुवचनस्यांगीकरणम् आचारः इत्युच्यते । गुरुवचनस्यांगीकरणादुत्तमाः पर्यनुयोगस्याकरणाद् अधमाः । अतस्तेषां 'माध्यमिकाः' इति प्रसिद्धिः । तैः ये सिद्धान्ताः प्रवर्तिताः, तेषु शून्यवादस्य प्रामुख्यं वर्त्तते । शून्यवादे निम्नलिखितानां भावनानां विश्लेषणं विशेषतः अपेक्ष्यते -

### (अ) सर्वं क्षणिकं क्षणिकम्

पदार्थानां सत्ता तावत्पर्यन्तमेव, यावत्पर्यन्तं तेषां क्रियाकारित्वं भवति । सत्तायाः स्थायित्वे अंगीकृते सति वस्तुनः स्वभावस्यापि स्थायित्वम् अंगीकरणीयं स्यात् । तत्तु माध्यमिकानां मते न समीचीनम् । यतः उत्तरवर्ति क्षणे वस्तुनः सा एव अवस्था न दृश्यते, या पूर्वस्मिन् क्षणे भवति । एवंप्रकारेण माध्यमिकानां मतानुसारं 'सर्वं क्षणिकं क्षणिकम्' इत्यस्याः भावनायाः अर्थोऽयमस्ति यत् जगत् क्षणिकमस्ति नतु स्थायि । अर्थक्रियाकारिदशायाम् एव जागतिकवस्तूनां सत्ता न ततः पूर्वं न च ततः पश्चात् । अतएवोक्तम् 'सर्वं क्षणिकं क्षणिकम्' । ब्रह्मसूत्रे, शांकरभाष्ये भामतीप्रस्थाने च अस्य मतस्य खण्डनं दृश्यते[14] । तद्यथा शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिद्धः इति तन्निराकरणाय नादरः क्रियते ।

(आ) सवर्म् दुःखाम् दुःखाम्- 'सर्वं दुःखं दुःखाम्'

इत्यस्याः भावनायाः व्याख्यानं माध्यमिकैः एवंप्रकारेण कृतं यत् संसारात् निवृत्यर्थम् एतत् आवश्यकमस्ति यत् दुःखानिवृत्यर्थं प्रवृत्तिः स्यात् । यदि संसारस्य दुःखमयता न ज्ञायते तर्हि दुःखनिहत्यर्थं जनानां प्रवृत्तिः कथं स्यात्? दुःखेभ्यः निवृत्यर्थं च केन प्रकारेण उपायान् कुर्युः ? अस्य प्रश्नस्य समाधानार्थम् एतदुच्यते 'सर्वं दुःखम् दुःखम्' इति एषा भावना करणीया । तद्यथा 'सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थकरसम्मतम् अन्यथा निविवृत्सूणां तेषां तन्निवृत्युपायो न स्यात् प्रवृत्यनुपपन्तेः । तस्मात् सर्वं दुःखं दुःखम्' इति भावनीयम् ।

यदि एवमुच्यते यत् अस्य सिद्धान्तस्य दृष्टान्तः कः तर्हि प्रतिवक्तुं शक्यते यत् सर्वेषां पदार्थानां स्वलक्षणात्वं वर्त्तते । क्षणभंगत्वात् एकं वस्तु अन्यस्य दृष्टार्थत्वं न भजते ।

अत्र एतत् ज्ञातव्यं वर्त्तते यत् वस्तुतः सर्वेषु चार्वाकेतर-भारतीयदर्शनेषु प्रमुखातया बन्धमोक्षविवेचनं दृश्यते । बन्धस्यार्थः अस्ति जरामरणजन्मप्रभृति-दुःखानाम् अनुभूतिः । दुःखस्य सत्ता व्यावहारिकरूपेण सर्वैः स्वीकृता । दुःखस्य अवस्थितिविषये नास्ति दार्शनिकानां विशिष्टः मतभेदः । किन्तु दुःखं कथं भवति? दुःखस्य निवारणाय के उपायाः आश्रयणीयाः इत्येता-दृशेषु विषयेषु समुपलभ्यन्ते दार्शनिकाः मतभेदाः ।

महात्मना बुद्धेन स्वयमेवोक्तम् - 'हे भिक्षवः, इदं दुःखम् प्रथमम् आर्यसत्यम् । जन्मापि दुःखम्, जरापि दुःखम्, मरणमपि दुःखम् । अप्रियवस्तुभिः सह समागमः दुःखम् । प्रियवस्तुनः वियोगः अपि दुःखम् । ईप्सितवस्तुनः अप्राप्तिः दुःखम् । संक्षेपेण समुत्पादिता रूप-वेदना-विज्ञान-संज्ञा-संस्काराश्च इत्येवं रूपेण प्रथिताः पंचस्कन्धाः अपि दुःखम् ।

महात्मनो बुद्धस्य एतदुक्थानमपि ज्ञातव्यं वर्त्तते । यद् उल्लासस्य आनन्दस्य वा अवसरः जीवने क्षणमपि नास्ति यतः इदं जगद् दुःखेन नित्यं तप्यते[15] ।

(इ) सर्वं स्वलक्षणं स्वलक्षणम्

अद्वैतवेदान्ते ब्रह्मणः आनन्दमयत्वं प्रतिपाद्यते[16] । जगतः सत्ता व्यावहारिकी नतु पारमार्थिकी । भामतीप्रस्थानेऽपि सूत्रभाष्यमार्ग एवानुसृतो दृश्यते । सर्वेषां वस्तूनां क्षणिकत्वे स्वीकृते सति समानवस्तुनः तस्मिन्नेव हि क्षणे अभावाद् एकस्य वस्तुनो लक्षणम् अपरेण सह तस्य सजातीयत्वम् आश्रित्य निरूपयितुं न शक्यते । अतः प्रत्येकं वस्तु स्वलक्षणमेव वर्त्तते ।

बौद्धाः सामान्यस्यास्तित्वं न स्वीकुर्वन्ति । स्वलक्षणात्वात् वस्तुषु सादृश्यं दर्शयितुं न शक्यते । तेषां मते विभिन्नेषु पदार्थेषु तादृक् एव वैसादृश्यमस्ति यथा पंचागुलीषु दृश्यते -

'एतासु पंचस्ववभासितेषु प्रत्यक्षबोधे स्फुटमंगुलीषु । साधारणम् रूपमवेक्षते यः शृंगं शिरस्यात्मन ईक्षते सः ।''
कस्यापि सामान्यलक्षणस्याभावे एतद् वक्तुं शक्यते, यद् कश्चिद् पदार्थः अन्यस्य समानत्वं भजते इति । अपि च ज्ञाता अपि क्षणे क्षणे परिवर्त्तते । अतः ज्ञातृज्ञानयोः क्षणभंगुरत्वम् । कोऽपि ज्ञाता इदं कथयितुं न शक्नोति 'यद् अयमेव स घटः यः मया पूर्वं दृष्टः ।' नैयायिकैः वैशेषिकैश्च 'सामान्यम्' अंगीकृतम् । किन्तु तैरपि सामान्य-समवाय-विशेषेषु सामान्यस्य अस्तित्वं नांगीक्रियते । अतः एतद् कथयितुं न शक्यते यद् सामान्यं बिना सन्तायाः अस्तित्वं नास्ति । एवं प्रकारेण नैयायिकैः वैशेषिकैश्च गोरूपवस्तुनि गोत्वरूपेण पशुरूपवस्तुनि वा पशुत्वरूपेण यत्सामान्यम् अंगीकृतं तद् बौद्धानां मते न समीचीनम् । सामान्यस्य कल्पना यदि सन्तायाः न्यायवैशेषिकनयेऽपि स्वीकर्त्तुं न शक्यते । यतः सामान्यसमवायविशेषेषु सामान्यं नास्ति । अद्वैतवेदान्ते ब्रह्मणः अपि स्वरूपलक्षणं तटस्थलक्षणं चेति लक्षणद्वयस्य उल्लेखो वर्त्तते ।

अतः भामतीप्रस्थानेऽपि वस्तु स्वलक्षणपरकः बौद्धसिद्धान्तो नांगीक्रियते ।

(ई) सर्वं शून्यम् शून्यम्

माध्यमिकैः शून्यवादस्य एतावान् आश्रयः गृहीतः, यन्ते शून्यवादिनः इति संज्ञया प्रथिताः संजाताः । शून्यवादस्य स्थापना नागार्जुनेन माध्यमिककारिकायां कृताः । यद्यपि अस्य सिद्धान्तस्य चर्चा 'प्रज्ञापरिमितारत्नकरण्ड' प्रभृतिषु प्राक्तनग्रन्थेष्वप्यस्ति, तथापि सिद्धान्तरूपेण अस्य स्थापना नागार्जुनेन एव कृता । संक्षिप्तरूपेण अस्य मतस्य सारः अयमस्ति यत् इदं सर्वं दृश्यमानं जगत् शून्यम् अस्ति । माध्यमिकानां मतानुसारं शून्यमेव परमतत्त्वमस्ति । यथोक्तं माधवाचार्येण सर्वदर्शनसंग्रहे -

' न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ।।''[17]

अस्मिन् विषये माध्यमिकाः इदं कथयन्ति यत् यदि घटादि पदार्थः स्यात्, तर्हि तस्य निर्माणाय कुम्भकारचक्रदण्डादीनां कारणानाम् आवश्यकता न स्यात् । अतः घटः सत् नास्ति ।

घटः असदपि नास्ति । यदि स असदिति स्वीक्रियते, तर्हि कुम्भकारप्रभृतिकारणात्यपि तस्य निर्माणाय असमर्थानि स्युः । यथा सत्स्वपि नैकेषु कारणेषु वन्ध्यायाः पुत्रः आकाशकुसुमं वा न जायते, तथैव घटस्य असद्दशायाम् अनेकैरपि कारणैः तस्योत्पादनं कर्तुं न शक्यते ।

घटः सदसत् उभयरूपमपि नास्ति । यतः यत् सत्, तत् असद् भवितुं न शक्नोति तद्यथा-

'' न सतः कारणापेक्षा व्योमादेरिव युज्यते ।
कार्यस्यासंभावी हेतुः स्वपुष्पादेरिवासतः ।।''

भाटः अनुभयात्मकः अपि नास्ति । एतद कथनं न समीचीनम् यत यः असत नास्ति तत सदपि नास्ति । अतः वदतोव्याघातात् उभयपक्षः अनुभयपक्षश्च न समीचीनः ।

। 2 ।(ऊ) भामतीप्रस्थानानुसारं शून्यवादक्षणभंगवादयोः समीक्षणम्

बौद्धानां सम्प्रदाये 'सर्वं क्षणिकं क्षणिकम्' दुःखम् दुःखम् स्वलक्षणं स्वलक्षणम्, शून्यं शून्यमिति एताः चतस्रः भावनाः अतीव प्रामुख्यं भजन्ते । महात्मना बुद्धेन स्वयमेव एताः चतस्रः भावनाः प्रवर्तिताः । उत्तरवर्तिभिः बौद्धाचार्यैः एतासां भावनानां विश्लेषणं विस्तरेण कृतम् । एतासु सर्वप्रथमा भावना 'सर्वं क्षणिकं क्षणिकमित्यस्ति ।

यद्यपि कतिपयानि अन्यानि दर्शनानि अपि जगतः भंगरत्वं प्रतिपादयन्ति । किन्तु बौद्धानां क्षणस्य यत स्वरूपमस्ति तस्य न्यायवैशेषिकादिदर्शनेषु निरूपितात क्षणस्वरूपत्वात पार्थक्यं वर्त्तते । क्षणिकत्वस्य समर्थने बौद्धानामेतत कथनमस्ति - 'तत्र क्षणिकत्वं नीलादिक्षणानां सत्वेनानुमातव्यं यत्सत्तत्क्षणिकम्, यथा जलधरपटलं, सन्तश्चामी भावा इति । सर्वदर्शनसंग्रहे माधवाचार्येण क्षणिकत्वस्य विस्तृतं विश्लेषणं कृत्वा तस्य सारः ज्ञानश्रियः शब्देषु एवंप्रकारेण निर्दिष्टः -
18

''यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी ।
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा ।।
नाप्येकैव विधान्यथा परकृतेनापि क्रियाभिर्भवेत् ।
द्वेधापि क्षणभंगसंगीतरतः साध्ये च विश्राम्यति ।।''

एवंप्रकारेण बौद्धानां सत्ताविषयकः सिद्धान्तः एषः अस्ति यत संसारे सर्वाणि वस्तूनि परिवर्तनशीलानि सन्ति । परिवर्तनं च क्षणे क्षणे जायते । एकमेव वस्तु द्विवारं द्रष्टुं न शक्यते । एकस्यामेव नद्यां द्विवारं स्नातुं न शक्यते । एकस्मिन् क्षणे एव वस्तुनः सत्ता भवति । द्वितीये क्षणे तस्य विनाशः । एष एव बौद्धानां क्षणभंगवादः ।

अस्य सिद्धान्तस्य खण्डनं न्याय-वैशेषिकप्रभृतिषु दर्शनेष्वपि दृश्यते । अद्वैतवेदान्तेऽपि तथैव । क्षणभंगवादस्य विरुद्धम् अनेके तर्काः प्रस्तूयन्ते । तद्यथा- जगतः पदार्थाः यदि क्षणिकाः मन्यन्ते, तर्हि परमार्थस्य सिद्धिः कथं भवितुं शक्नोति? क्षणभंगि स्वीकृते सति कृतस्य विनाशः प्रसज्येत' अकृतस्य कर्मणः भोगः आपतेत । भवस्य भंग स्याद (यतः कर्मभोगफलानां प्राप्त्यर्थमेव प्राणिनां जन्म भवति) मोक्षसिद्धान्तः अपि अपहीयेतं । स्मृतेरपि भंग स्याद । (यतः स्मरणकर्ता क्षणभंगि सति स एव नास्ति न भवति यः अनुभवकर्ता आसीत् । प्रत्यभिज्ञायाः अपि अवसरः न स्याद । एवं प्रकारेण 'स्याद्वादमंचर्यां' मल्लिषेणेन सम्यग् उक्तम् यत् सत्स्वपि अनेकेषु विरोधिकारणेषु यदि बौद्धाः क्षणभंगवादम् आश्रयन्ति तर्हि एतत्तु तेषां महासाहसिकत्वमेव स्यात्[19] । जयन्त भट्टेनापि 'न्याय-मंजर्यां' क्षणिकवादस्य खण्डनं कृत्वा बौद्धाः विनिन्दिता । तद्यथा-

'नास्त्यात्मा फलभोगमात्रमथ च स्वर्गाय चैत्यार्चनम्
संस्काराः क्षणिका युगस्थितिभृतश्चैते विहाराः कृताः ।
सर्वं शून्यमिदं वसूनि गुरवे देहीति चादिश्यते
बौद्धानां चरितं किमन्यदियती दम्भस्य भूमिः परा ।।''[20]

अद्वैतवेदान्ते सूत्रकारेण भाष्यकारेण तथा भामतीकारप्रभृतिभिः क्षणभंगवादस्य खण्डनं कृतम् तदपि द्रष्टव्यं वर्त्तते । तद्यथा - 'अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्ननुपलब्धुरपि क्षणिकतामभ्युपेयात् । नच सा सम्भवतिः अनुस्मृतेः । अनुभवमुपलब्धिमनूत्पद्यमानं स्मरणमेवानुस्मृतिः । सा चोपलब्ध्येककर्तृका सती सम्भवति , पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात्[21] ।

अत्र भामती - 'यस्तु सत्यप्येतस्मिन्नुपलब्धृस्मर्त्रोरन्यत्वेऽपि समानायां संततौ अत्र कार्यकारणाभावाद् स्मृतिरनुपपत्स्यत इति मन्यमानो न परितुष्यति तं प्रति प्रत्यभिज्ञासमाज्ञातप्रत्यक्षविरोधमाह '(भाष्यकारः)[22] तद्यथा भाष्ये - 'अपि च दर्शनस्मरणयोः कर्तर्येकस्मिन्प्रत्यक्षः । प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यमिति । यदि हि तयोर्भिन्नः कर्ता स्यात्ततोऽहमद्राक्षीदिति प्रतीयात्; न त्वेवं प्रत्येति कश्चित् इति[23] । अस्मिन् विषये यथोक्तं वेदान्तकल्पतरुकारेण । तद्यथा - 'उपलब्धृस्मर्त्रोरन्यत्वेऽपि स्मृतिरनुपपत्स्यत इत्यन्वयः । अस्मिन् मते क्रियातिरिक्तकर्त्रभावादुपलब्धिस्मृती एव उपलब्धृस्मर्तारौ तयोर्भेदेऽप्येकसन्ततिगतत्वेन कार्यकारणभावान्नातिप्रसंग इत्युक्तं भवति । प्रत्यभिज्ञात्वेन समाज्ञातं सम्यग्ज्ञातम् । अहमद्राक्षीदिति यथाश्रुते अप्रयोगता स्याद्, तां परिहरति ।[24]

अपि च सूत्रम् 'नासतोऽदृष्टत्वात्'[25] । अत्र च भाष्यम्- 'यद्यभावाद्भाव उत्पद्येताभावात्वविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्याद् । नहि बीजादीनामुपमृदितानां योऽभावस्तस्याभावस्य शशविषाणदीनां च निःस्वभावत्वाविशेषादभावत्वे कंचिद्विशेषोऽस्ति, येन बीजादवांगरो जायते क्षीरादेव दधीत्येवं जातीयकः कारणविशेषाभ्युपगमोऽर्थवान्स्याद् । निर्विशेषस्य त्वभावस्य कारणात्वाभ्युपगमे शशविषाणादिभ्योऽप्यंकुरादयो जायेरन्' न चैवं दृश्यते[26] ।

अत्र भामती - 'नाभावाद् कार्योत्पत्तिः । कस्मात्? अदृष्टत्वाद् । नहि शशविषाणादंकुरादीनां कार्याणामुत्पत्तिर्दृश्यते । यदि त्वभावाद्भावोत्पत्तिः स्यात्ततोऽभावत्वविशेषात् शशविषाणदिभ्योऽप्यंकुरोत्पत्तिः । न ह्यभावो विशिष्यते । विशेषणयोगे वा सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः[27] ।

अपि च सूत्रम्- 'उदासीनानामपि चैवं सिद्धिः यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येव, एवं सत्युदासीनानामनीहमानानामपि जनानामभिमतसिद्धिः ,अभावस्य सुलभत्वाद् । कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पन्तिः स्याद् ।

कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्यात्यमत्रोत्पत्तिः । तन्तुवायस्यापि तन्तूनतन्वानस्यापि तन्वानस्यैव वस्त्रलाभः । स्वर्गापवर्गयोश्च न कंचित्कथंचिन्समीहितं । नचैतदयुज्यतेऽभ्युपगम्यते वा केनचित् । तस्मादप्यनुपपन्नोऽयमभावादभावोत्पत्त्यभ्युपगमः[29] ।

अपि च अन्यानि सूत्राणि- 'नाभाव उपलब्धेः[30]' ''वैधर्म्याच्च न स्वप्नादिवत्[31]' न भावोऽनुपलब्धेः[32]' 'क्षणिकत्वाच्च[33]' 'सर्वथानुपपत्तेश्च[34]' ।

अत्र भाष्यादिवचनानि - ' न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । कस्मात्? उपलब्धेः । उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः - स्तम्भः कुड्यं घटः पट इति । न चोपलभ्यमानस्यैवाभावो भवितुमर्हति । यथाहि कंचि द्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे न तृप्यामिति, तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं ' नाहमुपलभे नच सोऽस्तीति ब्रुवन्कथमुपादेयवचन स्यात्[35] ।

''किं च स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति । कस्मात्? वैधर्म्यात् । वैधर्म्यं हि भवति स्वप्नजागरितयोः । किं पुनर्वैधर्म्यम् । बाधा बाधानिति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्या मयोपलब्धो महाजनसमागम इति, न ह्यस्ति मम महाजनसमागमो निद्राग्लानं तु मे मनो बभूव तेनैषा भ्रान्तिरुद्बभूवेति[36] । किंच बौद्धाः कथयन्ति यत् 'विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्पत इति । अत्रोच्यते- न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम् । अर्थोपलब्धिनिमित्ताहि प्रत्यर्थं नानारूपा वासना भवन्ति । अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः? अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यान्नाभिप्रायसिद्धिः । यावत्यन्वयव्यतिरेकावर्थापलापिनोपत्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति, तावत्येवं सति प्रत्युक्तौ द्रष्टव्यौ । अपि च विनापि वासनाभिरर्थोपलब्ध्युपगमाद्विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमादर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः । अपि च वासना नाम संस्कार-

विशेषः । संस्काराश्च नाश्रयमन्तरेणावकल्प्यते । एवं लोके दृष्टत्वात् । नच तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः ।''[37]

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं, तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति । अपि च विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद्यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि 'उत्तरोत्पादे च पूर्वनिरोधात्' इत्येवमादीनि, तानीहाप्यनुसंधातव्यानि । एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च। ''[38]

'सर्वथानुपपत्तेश्च' इत्यस्य सूत्रस्य भाष्ये भगवत्पादः शंकराचार्यः कथयति यत् - 'अपि च बाह्यार्थविज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसंबद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति ।[39]

भामतीप्रस्थानेवाचस्पतिप्रभृतिभिः आचार्यैः भगवत्पादस्य कथनानां यथातथा विश्लेषणं कृत्वा उपर्युक्तमतानां पुष्टिः कृता । भगवद्पादः शंकराचार्यः अन्यैश्च अद्वैतवेदान्तिनः बौद्धग्रन्थेभ्यः अनेकान् सिद्धान्तान् अद्वैतवेदान्तसिद्धान्तैः सह सादृश्यं प्रतीयते उदाहरणतया बौद्धानां शून्यम् अद्वैतवेदान्तिनां ब्रह्म इव प्रतीयते । ब्रह्मणः स्वप्रकाशस्य यः सिद्धान्तः अद्वैतनये प्रचलितः दृश्यते तस्य विज्ञानवादेन सह सादृश्यं निराकर्तुं न शक्यते । श्रीमतां सुरेन्द्रनाथदासगुप्तमहोदयानां तु इदं मतं वर्त्तते यत् विज्ञानवादेन सह शून्यवादं योजयित्वा उपनिषदां आत्मनित्यतासम्बन्धिमतस्य तत्र समावेशं कृत्वा भगवता शंकराचार्येण अद्वैतवेदान्तनयस्य उद्भावनं कृतम्[40] ।

## । 2 । (2) योगाचार सम्प्रदायः ( विज्ञानवादः )

बौद्धानां द्वितीयः सम्प्रदायः योगाचारः इति नाम्ना प्रसिद्धो वर्त्तते । अप्राप्तवस्तुनः प्राप्त्यर्थम् अथवा अप्राप्तज्ञानस्य प्राप्त्यर्थं सन्देहनिवारणार्थं वा क्रियमाणपर्यनुयोगः (प्रश्नः ) योगः इति कथ्यते । तथा गुरोः कथनस्य यथावत् अंगीकारः आचारः इति कथ्यते ।

माध्यमिकदार्शनिकाः उपर्युक्तयोः उभयोर्मध्ये एकम् आचारं स्वीचक्रुः । अतः ते माध्यमिकाः इति प्रख्याताः । माध्यमिकानां विपरीतं ये बौद्धदार्शनिकाः योगं च आचारं च स्वीकृतवन्तः ते योगाचाराः इत्येवं रूपेण प्रख्याताः । योगाचारः विज्ञानवादनाम्नापि अभिधीयते । मैत्रेयनाथः योगाचारसम्प्रदायस्य प्रमुखः आचार्यः इति स्वीक्रियते ।

बौद्धधर्मानुयायिनः सर्वप्रथमं वगद्वये विभक्ताः आसन् । श्रावकयान(हीनयान्) महायानरूपेण । कालान्तरे महायानसम्प्रदायः अपि द्विधा विभक्तोऽभवत् । माध्यमिकसम्प्रदायः योगाचारसम्प्रदायश्च इत्येवं रूपेण ।

### (अ) भामतीप्रस्थानुसारं विज्ञानवादस्यसमीक्षणम्

विज्ञानवादिनः बाह्यवस्तुनः सत्तां निराकृत्य विज्ञानस्य सत्तां स्वीकुर्वन्ति । 'नाभाव उपलब्धेः' इत्यस्य सूत्रस्य भाष्ये भगवता शंकराचार्येण तेषां मतस्य उपन्यासः एवं कृतः - 'केषांचित्कल विनेयानां बाह्ये वस्तुन्याभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता । नासौ सुगताभिप्रायः । तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः । तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते, सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यावहारानवतारान् । कथं पुनरवगम्यतेऽन्तस्य एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थो-[4] स्तीति ।'' एवम् उपन्यस्य शंकराचार्यः अस्य मतस्य खण्डनं करोति । तद्यथा-' न स्वलक्षणावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । कस्मात्? उपलब्धेः ।

उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भः कुड्यं घटः पट इति । नचोपलभ्यमानस्याभावो भवितुमर्हति ।[42]

तमधिकृत्य वाचस्पतिः एवं करोति- 'शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते । लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि । तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । असंचासीदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति । तथा च सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते ।[43] अस्य कथनस्य सारः वेदान्तकल्पतरुकारः एवं प्रतिपादयति - 'अतात्त्विकत्वं प्रपंचस्य व्यवस्थापयितुम्, अधिष्ठानं वस्तुभूतं वाच्यं तस्याभावस्त्वन्मते प्रमाणस्तत्वानुपलब्धेरिति प्रतिपादयन्न भावोऽनुपलब्धेरिति सूत्रम् ।''[44]

अपिचानुभवमात्रेण साधारणमात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः स्तम्भज्ञानं, कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्यांगीकर्तव्यम् । अंगीकृते च तस्मिन्विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बाह्यार्थसद्भावकल्पना । अपि सहोपलम्भनियादभेदो - - - कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यते ।[45]

अस्य समाधानं वाचस्पतिः एवं करोति - ' न तावद्विज्ञानमिन्द्रियवन्निलीनमर्थं प्रत्यक्षयितुमर्हति । नहि यथेन्द्रियमर्थविषयं ज्ञानं जनयत्येवं विज्ञानमपरं विज्ञानं जनयितुमर्हति । स्वप्नदर्शनमधिकृत्य इदं कथयति यत् विज्ञानादतिरिक्तं विषयस्य सत्ता नांगीकर्तुं शक्यते । किन्तु स्वप्नपदार्थानां भानं तदैव भवितुं शक्नोति यदा जाग्रदावस्थायाम् अपि तेषामनुभवः स्यात् । कुमारिलभट्टः अपि एवं वदति - 'जागत्प्रपंचदर्शनात् जनितसंस्कार एव स्वप्नपदार्थप्रतिभानस्य कारणमिति ।

विज्ञानवादिनां सकाशे एकं विज्ञानक्षणं वर्त्तते यदि तस्य प्रमातृत्वं कल्प्यते तर्हि अवशिष्टानि त्रीणि अर्थात् प्रमितित्वं मन्यते तर्हि अन्येषां समाधानं नोपपद्यते । वित्तेः (विज्ञानस्य) सत्तामात्रेण वेदना न सम्भवति । बाह्यविषयः स्वरूपस्य प्रतिबिम्बं प्रक्षिप्य तस्मै अनुभूतिस्वरूपतां प्रयच्छति । विषयाभावे ज्ञानस्य सत्ता न सिद्ध्यति ।

ज्ञानरूपी दर्पणः यथा कर्त्रा, कर्मणा तथा साधनेन सह सम्बन्धं स्थापयति, तदा स विषयप्रकाशने समर्थो भवति । विज्ञानं केनाप्यन्येन सह सम्बन्धं स्थापयितुं न शक्नोति । विज्ञानविषयस्य ग्राह्यग्राहकनियमः कथं जायेत? असद्रूपेण सह ग्राहकस्य कार्यकारणभावः कथं सम्भवति? केनापि प्रकारेण सम्बन्धः न वर्त्तते चेत् ग्राह्यग्राहकस्य निरूपणं कथं भविष्यति ।

वाचस्पतिः अस्मिन् विषये एवं कथयति - 'ग्राह्यस्य असत्तायाः किं प्रमाणम्? तेन सह सम्बन्धं बिना ज्ञानं तस्य भासकं भवितुं शक्नोति? समनन्तरप्रत्ययपरम्परा एवं स्वभावं विषयकल्पनायाः पूर्वं कुतः लब्धवती?

वाचस्पतिमिश्रेण सुदृढरूपेण एतत् प्रतिपादितं यत् योगाचारनिर्दिष्टं विज्ञानं क्षणिकम् । अन्तःकरणस्य चित्तक्षणम् अतिरिच्य विज्ञानक्षणं किमपि नास्ति । अस्य विपरीतम् अद्वैतवेदान्तनिरूपितं ब्रह्म नित्यं, निराकारं, कूटस्थं ग्राह्यनिरपेक्षं स्वतन्त्रं सच्चिदानन्दस्वरूपम् एवमेवाद्वितीयं तत्त्वं वर्त्तते ।

विज्ञानाद्वैत

1.2. ।(2)(आ) ब्रह्माद्वैतवादयोर्वैलक्षण्यम्

उपर्युक्तप्रकारेण भगवता शंकराचार्येण बौद्धमतस्य प्रत्याख्याने कृते सत्यपि शंकरस्य ब्रह्माद्वैतवादेन सह सादृश्यं कल्पयित्वा शंकराचार्य-विपक्षिभिः अनेकैः आचार्यैः एतत् कथितं यत् शंकराचार्यः 'प्रच्छन्नबौद्धः' अस्तीति । तद्यथा- विगीतं विच्छिन्नमूलं महायानिकबौद्धगाधितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति ।[46] तथा च 'येत्तु बौद्धमतावलम्बिनो मायावादिनः तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः ।''[47]

उपर्युक्ताऽऽक्षेपाणां समाधानार्थं शंकराचार्यानुयायिनाम् आचार्याणामेतत् कर्तव्यं संजातं यत्ते अद्वैतवेदान्तसिद्धान्तानां विज्ञानाद्वैतवादशून्यवादप्रभृतिभिः विलक्षणत्वं पृथग्त्वं वा प्रतिपाद्य स्वकीयमतस्य स्थापनां कुर्वन्तु इति । वाचस्पतिना भामत्यां बौद्धमतस्य यत् खण्डनं कृतं तस्य स्थायीपुलकन्यायेन कानिचित् उदाहरणानिअत्र प्रस्तूयन्ते ।

वाचस्पतिमिश्रेण अध्यासभाष्ये विज्ञानाद्वैतवाद अद्वैतवादयोर्मध्ये स्पष्टं वैलक्षण्यं निरूप्य बौद्धमतस्य उपस्थापनं कृतम् । तद्यथा - 'प्रपंचस्य पुनरत्यन्तासतो निरस्तसमस्तसामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभावविषयाभावः, कुतो वा चिदात्मन्यारोपः'[48] इत्यादि ।

। 2 । (3) सौत्रान्तिकसम्प्रदायः ( बाह्यार्थानुमेयवादः )

बौद्धानामेकः सम्प्रदायः 'सौत्रान्तिक' इति नाम्ना व्यवह्रियते । सौत्रान्तिकाः आन्तरं बाह्यं उभयमपि वस्तुजातं स्वीकुर्वन्ति । तथापि तेषां मतमिदमस्ति यत् बाह्यार्थाः नाशवन्तः । अतः तेषां प्रत्यक्षं ज्ञानं न भवति ते तु अनुमेयाः । यथा प्रतिबिम्बं दृष्टवा बिम्बस्थानानुमानं क्रियते तथैव बाह्यपदार्थानामपि अनुमानं भवति । विज्ञानवादस्य खण्डनं कुर्वन्तः सौत्रान्तिकाः कथयन्ति यत् वस्तुनः सत्ता तथा वस्तुज्ञानस्य सत्ता समकालिकतां न भजतः । यदा वयं घटं पश्यामः तदा घटः बहिर्वर्त्तते । किन्तु तस्य ज्ञानं चित्ते भवति । अत एव वस्तुनः ज्ञानस्य स्थानं पृथक् वर्त्तते । यथा बाह्यवस्तूनां संख्या निश्चिता नास्ति तथैव तेषां ज्ञानस्यापि असंख्याः श्रेण्यः वर्त्तन्ते ।

भगवता बुद्धेन बुद्धत्वप्राप्तेः आरभ्य निर्वाणपर्यन्तं यत् किमपि कथितं, तस्य संकलनं, 'त्रिपिटके' निबद्धं वर्त्तते । त्रिपिटकस्य विभागाः सन्ति - विनयपिटकः (अनुशासनविषयकः ) सुत्तपिटकः (संघविषयकानु-

शासनविषयाणांसंग्रहः ) अभिधम्मपिटकः ( आध्यात्मिकनीतीनां संग्रहः )

महात्मना बुद्धेन यद किमप्युक्तं तत्सर्वं तस्य शिष्यैः मौखिकरूपेण संरक्षितम् । बुद्धस्य वाणीनां संकलनम् अशोकस्य राज्यकाले क्रिस्तोः पूर्वं तृतीयायां बौद्धसंगीतौ अभवत् ।

पिटकत्रयमध्ये सौत्रान्तिकाः अभिधम्मपिटकं न स्वीकुर्वन्ति । यतः अस्य पिटकस्य निर्माणम् अशोकस्य शासनकाले अभवत् । तत्र च बुद्धस्य मूलवचनानां भ्रान्तरूपं प्रस्तुतं वर्तते इति कृत्वा सौत्रान्तिकाः अभिधम्मपिटकस्य प्रामाणिकत्वं न स्वीकुर्वन्ति । एते तु सुप्तपिटकम् एव प्रमुखरूपेण आश्रयन्ति ।

माधवाचार्यस्य मतानुसारम् एते बौद्धाः महात्मनो बुद्धाद सूत्रस्यान्तम् अर्थात् दुःखस्य निहन्युपायं पृष्टवन्तः । अतः एते सौत्रान्तिकाः इत्येवं रूपेण समुद्घोषिताः स्वयमेव महात्मना बुद्धेन । सूत्रस्यान्तं पृच्छताः प्रति कथितम् -, 'भवन्तश्च सूत्रस्यान्तं पृष्ठवन्तः सौत्रान्तिकाः भवन्तु' इति भगवता अभिहिततया सौत्रान्तिकसंज्ञा एतेषां संजातेति ।

सूत्रपिटकमाश्रित्य प्रवर्तन्ते इति सौत्रान्तिकाः । सूत्रान्तं पृच्छन्तीति सौत्रान्तिकाः । अथवा ये सूत्रप्रमाणिकाः नतु शास्त्रप्रमाणिकाः , ते सौत्रान्तिकाः । शास्त्रं हि अभिधर्मकोशः सौत्रान्तिकाः तं नाश्यन्ति ।

### 1 2 1 (4) वैभाषिकसम्प्रदायः ( बाह्यार्थप्रत्यक्षवादः )

बौद्धानां चतुर्थः सम्प्रदायः ''वैभाषिकः ' इत्येवं रूपेण प्रसिद्धः अस्ति । असौ सम्प्रदायः ' सर्वास्तिवादः ' इत्येवं रूपेणापि प्रथितो वर्तते । अपरेषां त्रयाणां सम्प्रदायानानां कथनानि 'विरुद्धभाषा' इत्येवं मन्वानाः एते आचार्याः वैभाषिकाः इति कथ्यन्ते । यथा माधवाचार्यः कथयति केचन बौद्धायाः - बाह्येषु गन्धादिष्वान्तरेषु रूपादिस्कन्धेषु सत्स्वपि-

वैभाषिकाख्यया ख्याताः ।

अपरं कारणमिदमस्ति यत् कनिष्कस्य समये बौद्धानां या या चतुर्थी संगीतिः अभवत् तस्यां संगीतौ अस्य सम्प्रदायस्य मूलग्रन्थं ज्ञानप्रस्थानमाश्रित्य एका टीका निर्मिता अभवत् । तस्याः टीकायाः नाम 'विभाषा' अस्ति । अतः एतदपि कथयितुं शक्यते यत् 'विभाषां' टीकाग्रन्थम् आश्रित्य प्रवर्तन्ते इति वैभाषिकाः ।

अनयोरुभयोर्मतयोः पुष्टिः यशोमित्रद्वारा रचितात् 'स्फुटार्था' नामकग्रन्थात् सुतरां संजायते । तद्यथा - 'विभाषा वा वदन्ति वैभाषिकाः' 'विभाषया दीव्यन्ति चरन्ति वा वैभाषिकाः ।

वस्तुतः वैभाषिकाः सौत्रान्तिकाश्च हीनयानस्य उपसम्प्रदयात्वेन विद्यन्ते । अशोकस्य समये बौद्धानां या द्वितीया संगतिः अभवत्, तस्यां संगीतौ स्थाविरवादात् सर्वास्तिवादः पृथक् अभवत् । सर्वास्तिवादिनां स्थाविरवादिनां च प्रमुखः भेदः अयमस्ति च सर्वास्तिवादिनः अभिधम्मपिटकस्य प्रामाणिकत्वं न स्वीकुर्वन्ति ।

सौत्रान्तिकैः सह वैभाषिकाणां मतभेदः अयमस्ति यत् सौत्रान्तिकाः बाह्यपदार्थानाम् अनुमेयत्वं स्वीकुर्वन्ति । किन्तु वैभाषिकाः बाह्यपदार्थानामपि प्रत्यक्षागम्यत्वं प्रतिपादयन्ति । एतेषां कथनमिदमस्ति यत् यावत्पर्यन्तं कस्यापि वस्तुनः प्रत्यक्षं न भवति, तावत्पर्यन्तं तस्य अनुमानमपि न कर्तुं शक्यते । उदाहरणतया येन जनेन अग्नेः प्रत्यक्षं न कृतं तेन धूमं दृष्ट्वाऽपि अग्नेरनुमानं कर्तुं न शक्यते । अतः वैभाषिकाः विज्ञानवादिनाम् एतन्मतमपि न स्वीकुर्वन्ति यत् बाह्यवस्तुनः मनसि वर्तमानानां विचाराणां प्रतिनिधिमात्राणि सन्तीति ।

सौत्रान्तिकाः वर्त्तमानकालस्य सत्तां स्वीकुर्वन्ति । किन्तु वैभाषिकाः कालत्रयस्य स्वीकरणात् सर्वास्तिवादिनः इत्यपि उच्यन्ते । व्याप्यभावे लोकानुभावविरोधाश्च सौत्रान्तिकानाम् अनुमेयवादः वैभाषिकः न स्वीक्रियते । यथा माधवाचार्यः कथयति - ' विज्ञानुमानवादे प्रत्याक्षिकस्य कस्यचिदर्थस्य अभावेन व्याप्तिसंवेदनस्थानाभावेन अनुमानप्रवृत्त्यनुपपत्तिः । सकललोकानुभावविरोधश्च । सौत्रान्तिकानां मतानुसारं पदार्थाः द्विवविधाः बाह्यः अध्यवसेयश्च । बाह्यपदार्थाः ते सन्ति एषां निर्विकल्पकं प्रत्यक्षं भवति । अध्यवसायाश्च पदार्थाः ते सन्ति ये सविकल्पकत्वेन अर्थात् नामरूपजात्यादि आरोपरहितं ज्ञायन्ते । प्रकारान्तरेण प्रत्यक्षसिद्धं वस्तु ग्राह्यम्, अनुमानसिद्धं वस्तु अध्यवसेयम् । अपरं च ग्राह्यम् निर्विकल्पकं तथा कल्पनापोढ़म् (कल्पनारहितं) अध्ययवसेयम् सविकल्पकम् ।

वैभाषिकाणां मतमिदमस्ति यत् भगवता बुद्धेन परस्परविरोध्युपदेशानां यत् प्रवर्तनं कृतं तद् शिष्याणां वर्गभेदानाश्रित्य कृतम् । तद्यथा - शिष्याः संसारिक पदार्थेषु आसक्ताः न भवेयुः इत्येतदर्थम् उक्तं सर्वं शून्यम् ।

अन्यान् प्रति उक्तं बाह्यपदार्थाः बौद्धपदार्थाश्च उभयमेव सद् । बौद्धपदार्थाः प्रत्यक्षग्राह्याः अन्ये च अनुमेयाः । केचिद् शिष्या एवं मन्यमानाः आसन् यद् बाह्याः बौद्धाश्च सर्वे पदार्थाः सत् तथा प्रत्यक्षगम्याः ।

महात्मा बुद्धः यद्यपि एकः तथापि तस्य वचनेषु भेदः कथमभवत् इत्यस्मिन् विषये वैभाषिकाणाम् इदं कथनम् अस्ति यत् तैरेव बुद्धस्य वचनं सम्यग्रूपतया ज्ञातम् । अधिकारिभेदात् च उपदेशभेदाः संजाता 'बौद्धचित्तविवरणनामके' ग्रन्थे ते कथयन्ति - ''देशनालोकनाथानाम् सत्वाशयवशानुगाः । भिद्यन्ते बहुधा लोकोपायैबहुभिः पुनः ।।''

बौद्धमते चित्तस्य पंचविकाराः सन्ति । तद्यथा - रूप-विज्ञान-वेदना- संज्ञा- संस्काराश्च । विषयेण सह रूपस्कन्धः । विज्ञानस्कन्धो नाम आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहः । प्रागुक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः । गौरित्यादि शब्दोल्लेखि-संवित्प्रवाहः संज्ञास्कन्धः । वेदनास्कन्धाश्रिता रागद्वेषादयः क्लेशाः उप-क्लेशश्च संस्कारस्कन्धः ।

विज्ञानं द्विधा । आलयविज्ञान- प्रवृत्तिभेदेन । यदा विज्ञानस्कन्धः रूपस्कन्धेन सह वर्त्तते, तदा सुखदुःखानाम् अनुभूतिः जायते । बौद्धदर्शने द्वादशायतनस्य प्रमुखं स्थानं वर्त्तते । तद्यथा पंचज्ञानेन्द्रियाणि,पंचकर्मे-न्द्रियाणि मनोबुद्धिश्च ।

बौद्धानां पुर्जन्मसिद्धान्तः भावचक्रे अन्तर्भवन्ति । अविद्या-संस्कार- विज्ञान-नामरूप- षडायतनम् -स्पर्श-वेदना-तृष्णा-उपादान-भाव-जाति-जरा-मरणश्च द्वादश भावचक्रेत्युप्यन्ते ।

बौद्धनये प्रख्यातो निर्वाणशब्दः सामान्यतया मोक्षस्यैव पर्याय इति प्रतिभाति । किन्त्वस्ति उभयोर्मध्ये आन्तरो भेदः । बौद्धानां मतानुसारम् अष्टांगमार्गस्य समाश्रयणमेव निर्वाणस्य साधनम् ।

**1 2 2 (1)प्रतीत्यसमुत्पादवादः**

प्रतीत्यसमुत्पादवादः बौद्धानां प्रमुखाः सिद्धान्तः अस्ति । अस्य अवलम्बनं सर्वैरेव बौद्धसाम्प्रदायिकैः क्रियते । जगतः समुद्भवप्रक्रिया कीदृशी अस्ति, सृष्टिप्रक्रियायां का व्यवस्था वर्त्तते । इत्येतादृशानां प्रश्नानां समाधानाय बौद्धैः यः सिद्धान्तः प्रवर्तितः स एव वर्त्तते प्रतीत्यसमुत्पादवादः ।

अत्र एतद् ज्ञातव्यं वर्तते यत् जगतः उत्पत्तिविषये भारतीयदार्शनिकानां विभिन्नानि मतानि सन्ति । तेषु च आरम्भवादः, संघातवादः, परिणामवादः, विवर्तवादः इत्येते वादाः प्रमुखाः सन्ति । जगतः कारणत्वविषये न्यायवैशेषिकानां मतभेदतास्ति यत् परमाणवः अस्य जगतः उपादानकारणम्, ईश्वरश्च निमित्तकारणं कुलालवत् ।

अद्वैतवेदान्तिनः यद्यपि जगतः मिथ्यात्वं प्रतिपादयन्ति । तथापि व्याहारिकसत्तायाः निमित्तकारणत्वम्' उपादानकारणत्वं च ब्रह्म एव इति ते वदन्ति । ब्रह्मणः निमित्तकारणत्वं तेषां मतानुसारं लूतावद् वर्त्तते । बौद्धानां सृष्टिप्रक्रियासिद्धान्तः संघातवादः इत्येवं रूपेण प्रख्यातः वर्तते । स्थूलतया संघातवादः एवं प्रकारान्तरेण प्रतीत्यसमुत्पादवादः इत्युच्यते ।

महात्मना बुद्धेन यद्यपि दार्शनिकप्रश्नानां विषये मौनमेव आश्रितम् । तथापि तस्य मूलवचनानि आश्रित्य तस्य शिष्यैः दार्शनिकप्रश्नानां समाधानाय अपि ये प्रयत्नाः कृताः तेषामेव परिणामभूताः सन्ति प्रतीत्यसमुत्पादसदृशाः सिद्धान्ताः ।

प्रतीत्यसमुत्पादवादस्य करणसमुदायः अथवा कारणसमुदायः इत्येवं प्रकारेणापि ज्ञातुं शक्यते । बुद्धस्य वचनानुसारं समुदयः दुःखस्य कारणं भवति । (सर्वदर्शनसंग्रहे समुदय शब्दस्य स्थाने समुदायशब्दस्य प्रयोगः दृश्यते)

प्रतीत्यसमुत्पादवादस्य शृंखालस्तम्भद्वयं विद्यते । तद्यथा- हेतुपनिबन्धः प्रत्ययोपनिबन्धश्च । अत्र एतद् ज्ञातव्यं वर्त्तते यद् प्रायः अन्येषां दार्शनिकानां मतानुसारं कार्यकारणश्रृंखालायां कस्यापि कार्यस्य हेतुः प्रमुखतया किमपि एकं तत्वं भवतीति स्वीक्रियते । तद्यथा अंकुरस्य हेतुः बीजः, अहंकारस्य हेतुः महान्(सांख्ये) किन्तु बौद्धदर्शने कस्याप्येकस्य कार्यस्य एकः हेतुः न स्वीक्रियते । तेषां मतानुसारं कार्यस्योत्पादनाय हेतूपनिबन्धनेन सह प्रत्ययोपनिबन्धस्यापि आवश्यकता वर्त्तते । अर्थात् कार्यं कारणद्वयाश्रितं भवति ।

अत्रेतद् ज्ञातव्यं वर्तते यत् प्रतीत्यसमुत्पादवादः स्वतन्त्रतया कारण-द्वयाश्रितो वर्तते । एकं कारणमस्ति हेतूपनिबन्धानरूपम्, अपरं कारणमस्ति प्रत्ययोपनिबन्धानरूपम् । हेतूपनिबन्धानरूपं कारणं यद् भवति तद् एकाकी एव अपरं हेतुं जनयति यथा बीजादंकुरः, अंकुरात्पत्रम्,अथवा अविद्यायाः संस्कारः संस्काराद् विज्ञानम् ।

प्रत्ययोपनिबन्धानरूपं कारणं तत् भवति यद् सजातीय विजातीय सामग्रीसापेक्षं सद् कार्यं जनयति नतु एकाकी यथा मृत्तिका जलं वायुः, ऊष्मा, आकाशः एतानि तत्वानि मिलित्वा बीजम् अंकुररूपेण उत्पादयन्ति ।

प्रतीत्यसमुत्पादवादस्य स्वरूपनिरूपणं पूर्वपक्षत्वेन अद्वैतवेदान्तशास्त्रेऽपि उपलभ्यते । अस्मिन् विषये भगवता बादरायणेन स्वकीयम् अभिमतं ब्रह्म-सूत्रे एवं प्रकारेण प्रकटितम् - 'समुदायोभयहेतुकेऽपि तदप्राप्तिः इति[50] । तथा 'इतरेतरप्रत्ययत्वादिचेन्नात्पत्तिमात्रनिमित्तत्वाद[51] एवं च 'उत्तरोत्पादे च पूर्वनिरोधात् इति[52] ।

एतेषां सूत्राणां भाष्ये भगवत्पादेन शंकराचार्येण प्रतीत्यसमुत्पाद-वादस्य खण्डनं कृतम् । वाचस्पतिना अमलानन्देन तथा अप्पयदीक्षितेनापि अस्य सिद्धान्तस्य खण्डनं कृतम् किन्तु खण्डनात्पूर्वं एभिः आचार्यैः अस्य सिद्-धान्तस्य यद् स्वरूपनिर्धारणं पूर्वपक्षरूपेण कृतं तदपि अतीत महत्वपूर्णं वर्तते ।

वाचस्पतिमिश्राः कथयन्ति ब्रह्मसूत्रशांकरभाष्यव्याख्याने - 'संक्षेपतो हि प्रतीत्यसमुत्पादवादलक्षणमुक्तं बुद्धेन - 'इदं प्रत्ययफलम्' इति । उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवेषां धर्माणां धर्मता । धर्मस्थितधर्मनियामकता प्रतीत्यसमुत्वादानुलोमता इति[53] ।

प्रत्ययशब्दस्य व्युत्पत्तिः अमलानन्देन वेदान्तकल्पतरौ एवंप्रकारेण निर्दिष्टा - 'प्रत्ययशब्दः इण् धातोः भावार्थीयच्प्रत्ययान्तस्य रूपम् । तथा च समुदितत्ववाची[54] । ~~तथा च समुदितत्ववाची~~ ।'

अमलानन्दः बौद्धमतमनूद्य एवमपि कथयति यत् - 'हेतुमन्यं प्रति अयते गच्छतीति इतरसहकारिभिर्मिलितो हेतुः प्रत्ययः । इदं कार्यं प्रत्ययस्य कारणसमुदायमात्रस्य फलं, न चेतनस्य कस्यचिदित्यर्थः । हेतुपनिबन्धस्य संग्राहकं ब्रह्मसूत्रमुदाहरति - उत्पादाद्वेति । तथागतानां बुद्धानां मते धर्माणां कार्याणां कारणानां च या धर्मता कार्यकारणभावरूप एषा उत्पादादनुत्पादाद्वा स्थिता[55] ।

वाचस्पतिमिश्रेण अस्मिन् विषये इदमुक्तम् - 'अथ पुनरयं प्रतीत्यसमुत्पादवादो द्वाभ्यां कारणाभ्यां भवति । - हेतूपनिबन्धतः - प्रत्ययोपनिबन्धतश्च । सः पुनर्द्विधा- बाह्यः, आध्यात्मिकश्च । यथा बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः - बीजादंकुर, अंकुरात् पत्रं, पत्रात् काण्डम्, काण्डात् नालः, नालात् गर्भो, गर्भात् शूकः, शूकात् पुष्पं, पुष्पात् फलमिति हेतूपनिबन्धः[56] ।

'प्रत्ययोपनिबन्धः प्रतीत्यसमुत्पादस्योच्यते । प्रत्ययो हेतूनां समवायः । हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति, तेषामयमानानां भावः प्रत्ययः । समवायः इति यावत् । यथा षण्णां धातूनां समवायाद्बीजहेतुरंकुरो जायते । तत्र च पृथ्वीधातुर्बीजस्य संग्रहकृत्यं करोति यतोऽकुंरः कठिनो भवति, अब्धातुर्बीजं स्नेहयति, तेजोधातुबीजं परिपाचयति, वायुधातुबीजमभिनिर्हरति यतोऽकुंरो बीजन्निर्गच्छति, आकाशधातुबीजस्यानावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामं करोति, तदेतेषामविकलानां धातूनां समवाये बीजे रोहत्यकुंरो जायते नान्यथा[57] ।

वाचस्पतिमिश्रस्य मतानुसारम् - इदं प्रतीत्य(प्राप्य) इदम् अ उत्पदयते

इत्येतदस्ति प्रतीत्यसमुत्पादवादस्यार्थः । अमलानन्दः अपि एवं कथयति - कारणे सति तत्प्रतीत्य प्राप्य समुत्पादः । अप्पय्यदीक्षितः अत्रैवं कथयति - बाह्यः आभ्यन्तरश्च प्रतीत्यसमुत्पादवादो हेतूपनिबन्धनश्चेति द्वाभ्यां कारणाभ्यां भवतीति बौद्धाः व्यवहरन्ति । तत्र कारणं प्राप्य कार्यमुत्पद्यते इति । यद् अयं प्रतीत्यसमुत्पादः कारणात् कार्योत्पादः इत्यर्थः । हेतूपनिबन्धः एकैक कारणसम्बन्धः प्रत्ययोपनिबन्ध कारणसमुदायसम्बन्धः । तत्र बाह्यकार्ये हेतूपनिबन्धस्योदाहरणम् बीजादिफलपर्यन्तम्, प्रत्ययोपनिबन्धस्य उदाहरणं बीजादङ्कुरजनने महाभूतानि धातुविशेष इति षण्णां धातूनां समवायः । एवं द्विविधयोरपि कारणकार्ययोः कार्योत्पादे स्वस्वनिष्टचैतन्यापेक्षा वा स्वतन्त्रकारणान्तरगतचैतन्यापेक्षा वा नास्तीत्यपि केषां(बौद्धानां) मतम् । [58]

## I 2 2(2) भामतीप्रस्थानानुसारं प्रतीत्यसमुत्पादवादस्यसमीक्षणम्

भगवत्पादेन शंकराचार्येण अस्य मतस्य खण्डनं निम्नलिखितप्रकारेण कृतम् । 'उपपन्नः संघातः इति चेद, तन्न , कस्माद? उत्पत्तिमात्रत्वात् । भवेदुपपन्नः संघातो यदि संघातस्य किंचिन्निमित्तमवगम्येत । न त्ववगम्यते । यत्र इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्योत्पत्तिमात्रमिमित्तं भवद्भवेन्न तु संघातोत्पत्तेः किंचिन्निमित्तं संभवति । [59]

अत्र वाचस्पतिः एवं वदति - यत् खलु हेतूपनिबन्धकार्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वाद उत्पद्यतां नाम । पंचस्कन्धसमुदायस्तु प्रत्ययोपनिबन्धो न हेतुमात्राधीनोत्पत्तिः, अपितु नानाहेतुसमवधानजन्म । नच एकस्मादेव कारणात्कार्यसिद्धेः किमन्यैः कारणैरिति - वाच्यम्, कारणचक्रानन्तरं कार्योत्पादाद सिद्धमित्येव नास्ति ।

भागवत्पादेन शंकराचार्येण भाष्ये पूर्वपक्षरूपेण एषा शंका उपस्थापिता - ननु अविद्यादिभिः अर्थात् आक्षिप्यते संघात इति युक्तम् । अत्रोच्यते वाचस्पतिमिश्रेण - 'किमाक्षेप उत्पादनम् आहो ज्ञापनम् । तत्र न तावत् कारणम् अन्यथा अनुपद्यमानं कार्यम् उत्पादयति किन्तु स्वसामर्थ्येन । तस्मात् ज्ञापनं वक्तव्यम् । तथा च ज्ञापितस्य अन्यदुत्पादकं वक्तव्यं तश्च स्थिरपक्षेऽपि अन्यपि च भोक्तरि अधिष्ठातारं चेतनमन्तरेण न सम्भवति । किमंग पुनः क्षणिकेषु भावेषु ।[60]

वाचस्पतिमिश्रस्य कथनानां सारः अयमस्ति यत् - यावत्पर्यन्तं साक्षात्परम्परायाः वा चेतनस्य सहयोगः न प्राप्यते तावत्पर्यन्तं जडवर्गः क्रियाशीलो भवितुं न शक्नोति । कुसूलस्थबीजः अंकुरोत्पादने तावत्पर्यन्तं समर्थो न भवति, यावत्पर्यन्तं कृषीवलः क्षेत्रस्य कर्षणं परिष्कारं च न करोति । एवमेव मृत्तिकया घटः तन्तुभिर्वा पटः तावत्पर्यन्तं न निर्मीयते यावत्पर्यन्तं कुलालस्य कुविन्दस्य वा तत्र सक्रिया नास्ति ।

चैतन्यस्य सहयोगं बिना अविद्याप्रवृत्तिहेतवः अथवा पृथिव्यादिप्रत्ययाः स्वीयं कार्यं कर्तुं समर्थाः न भवन्ति । बौद्धाः चेतनस्य आत्मनः वा सत्तां न स्वीकुर्वन्ति । अतः प्रतीत्यसमुत्पादवादः स्वीकरणीयः नास्ति । दुःखादौर्मनस्यादीनाम् उपलब्धिरपि जडविज्ञानेन कर्तुं न शक्यते । यदि चेतनस्य सहयोगं बिना अविद्यादि हेतुचक्रेण कार्यस्य निर्वाहः स्वीक्रियते, तर्हि सर्वेषां शरीराणि सदृशानि स्युः । कथं तत्र अन्तरः स्यात्?

बौद्धेतर कतिपयदार्शनिकानां मतानुसारं भोक्तुः अर्थात् चैतन्यस्य अध्यक्षात् अनुप्राणिताः भूतप्रत्यया अविद्यादिहेतवश्च शरीराणां वैभिन्ने कारणतां धारयन्ति किन्तु बौद्धमते कर्ता अथवा भोक्ता न स्वीक्रियते ।

एवं सति विभिन्नतायाः कारणं किमपि न स्यात् । विभिन्नता तु दृश्यते एव । अतः बौद्धानां एषः सिद्धान्तः स्वीकरणीयः सन्ति ।

अपरं कर्तृरभावे इच्छायाः अपि अभावः स्यात् । इच्छायाः अभावे प्रयत्नः प्रवृत्तयश्च वा कथं स्युः । एवं प्रकारेण यदि बौद्धानां मतं स्वी, क्रियते, तर्हि प्रवृत्तिनिवृत्ति चक्रस्य अवसानमेव स्यात् ।

यवबीजे कथं यवांकुर स्यात् कदलीग्रन्थितः कथं न वटोत्पत्तिः भोक्तुः कर्तुः च अनिवार्यता आवश्यमेव स्वीकरणीया । अन्यथा लोकव्यवस्था हीयते । भोक्तुः कर्तृश्च स्वीकारे प्रतीत्यसमुत्पादवादः ध्वस्तो जायेत ।

## । 3 0 जैनदर्शनम्

जैनदर्शनं नास्तिकदर्शनेषु अन्यतममस्ति । 'आर्हतदर्शनम्' इत्यपि अस्य नाम वर्तते । आर्हतदर्शनस्य इतिहासोऽतीव प्राचीनोऽस्ति । अस्य दर्शनस्य आदिप्रवर्तकः भगवान् ऋषभदेवः आसीत् । किन्तु जैनवाङ्मये तत्ववादविषयकाः ये ग्रन्थाः अद्योपलभ्यन्ते, ते अन्तिमस्य तीर्थंकरस्य भगवतः महावीरस्य उपदेशगाथाभिः सम्बद्धाः वर्तन्ते । भगवतो ऋषभदेवात् आरभ्य महावीर-पर्यन्तं चतुर्विंशति तीर्थंकराः समभवन् । अतः एवं कथयितुं शक्यते यत् भगवता महावीरेण यदुक्तं तत्र समेषां तीर्थंकराणां कथानान्यपि समाहितानि सन्ति । भगवतः महावीरस्य जन्म क्रिस्तुपूर्व षड्शताब्दयाम् अभवत् । तीर्थंकरस्य 'जिनः' इति अपरं नाम । जिनशब्दस्यार्थः अस्ति विजेता । तीर्थंकराः रागद्वेषादीन् जित्वा निर्वाणात्मकं मोक्षं प्राप्नुवन्ति, एतस्मात् कारणात् एतेषां 'जिनः' इति अपरं नाम भवतिः जिनानां दर्शनमेव जैन-दर्शनमित्युच्यते । रागद्वेषादिदोषान् कर्मशत्रून् वा जयतीति जिनः । तस्यानुयायिनो जैनाः । निर्गन्थप्रवचनम्, आर्हतदर्शनम्, जैनदर्शनम्' इत्येतानि अन्यानि नामानि अपि एतद् प्रतिपादयन्ति, यत् अस्मिन् दर्शने कस्याप्येकस्य

पुरुषस्य न, किन्तु सिद्धान्तानां प्रामुख्यं वर्त्तते । एवं सत्यपि प्रमुख-रूपेण एतद्दर्शनं भगवतो महावीरस्य उपदेशानाश्रित्यैव प्रचलति ।

। 3 । जैनदर्शनसाहित्यम्

जैनसाहित्यं द्विधा विभक्तं वर्त्तते । आगमसाहित्यम् - ग्रन्था साहित्यम् च । आगमस्यापि द्वौ उपविभागौ वर्त्तेते अंगाः उपांगाश्च । अंगानां रचना भगवतो महावीरस्य जीवनकाले अभवत् । उपांगाः ते एव कथ्यन्ते, एषाम् अंगसाहित्येन सह विसंवादो न भवति । आगमस्य परिभाषा एवमस्ति - आगम्यन्ते परिच्छिद्यन्ते अर्थाः अनेनेति आगमः । केवल मनः पर्यायावधिपूर्वचतुर्दशकलवकरूपः इति । 6।

श्वेताम्बर- दिगम्बरेति रूपेण आर्हतमतं सम्प्रदायद्वये विभक्तम् । महावीरस्य मरणानन्तरं तदनुयायिनां पारस्परिक-सैद्धान्तिक- मतभेदेन द्वौ सम्प्रदायौ संजातौ । विभागस्य काल 300 ख्रिस्तु पूर्वम् आसीत् । श्वेताम्बर-दिगम्बररूपेण सम्प्रदाय-विभागस्य प्रवर्त्तकः भद्रबाहुरासीत् इति कथ्यते ।

। 3 2 जैनदर्शनस्य प्रमुखाः सिद्धान्ताः ।

। 3 2 (1) परमाणुसंघातवादः - परमाणूनां संघातादेव संसारस्य सर्वे पदार्थाः जायन्ते इति जैनाः मन्यते । अयं परमाणुसंघातः स्कन्धः इति अभिधीयते । परमाणुः अनादिः अनन्तः नित्यः अमूर्तश्च । जैनमतानुसारं संयमादेव मोक्षो लभ्यते ।

तेषां मते ज्ञानस्य पंचत्वं विद्यते । तद्यथा मतिज्ञानम् - श्रुतिज्ञानम्-अवधिज्ञानम् - मनः- पर्यायज्ञानम् - केवलज्ञानं च । मनः इन्द्रिय स्मृति-प्रत्यभिज्ञा तर्कात् मतिज्ञानम् शब्दात् श्रुतिज्ञानम्, त्रिकालजन्यवस्तूनां प्रत्य-क्षीकरणम् अवधिज्ञानम्, मनसः ज्ञानमेव मनः पर्यायज्ञानम् । जीवन्मुक्तस्य ज्ञानं केवलज्ञानामित्युच्यते । जैनमते ईश्वरस्य जगत्कर्तृत्वं नांगीक्रियते । जैनदर्शने स्याद्वादस्य अत्यधिकं महत्वं वर्त्तते । स्याद्वादस्य अपरं नाम अनेकान्तवादः

त्यस्ति ।

निरास
। 3 2 (2) क्षणभंगवाद निरास:
---

'बौद्धानां सर्वं क्षणिकम्' इत्येनं सिद्धान्तं आर्हताः प्रतिक्षिपन्ति । तेषां तर्कः - अस्ति - 'त्वदयाऽऽत्मा कश्चित् तर्हि लौकिक-पारलौकिक फलसाधनसम्पादनं किमर्थं भवेत् । अपि च नह्येतत् सम्भवति अन्यः करोति अन्यो भुङ्क्ते इति तस्मात् योऽहं प्राक्कर्म अकरवं, सोऽहं सम्प्रति तत्फलं भुञ्जे इति पूर्वापरकालानुयायिनः तस्य स्वयुक्प्रमाणावसिततया पूर्वापरभागविकलकालकलावस्थितिलक्षणाक्षणिकता परीक्षकैः अर्हद्भिः नं-परिभाष्या ।

अस्मिन् विषये बौद्धानाम् एतद् कथनमस्ति यत् क्षणिकत्वेऽपि कार्यकारणभावः नियामकः भवति । यथोक्तम् -

'यस्मिन्नेव हि संताने आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ।।
कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते ।
शक्तिराधीयते तत्र काचित्तां किं न पश्यसि ? ।।'[62] इति ।

अस्याः युक्तेः खण्डनम् आर्हताः इत्थं कुर्वन्ति- यत् यद्यपि अन्येऽपि दार्शनिकाः संसारः 'क्षणभंगुरः' इति स्वीकुर्वन्ति । किन्तु बौद्धैः यत् क्षणं स्वीक्रियते, तस्मिन् क्षणे ते न्यायशास्त्रवत् उत्पत्तिविनाशक्षणेण अवस्थात्रयं न स्वीकुर्वन्ति । निमेषेऽपि चतस्रः अवस्थाः भवन्ति(पलकसंचालनम्) पूर्वस्थानविभागजनं पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः ) किन्तु एतासां चतसृणाम् अवस्थानां पृथक् पृथक् रूपेण अनगम्यत्वात् निमेषमेव वयं जानीमः नतु निमेषभागम् । बौद्धास्तु नैयायिकादीनां किरीतं क्षणस्य निमेषस्य वा

अनुशासनकाल भागत्वं स्वीकृत्य क्षणभंगसिद्धान्तं प्रवर्तयन्ति । किन्तु बौद्धाभिमतं क्षणं लोकैः नानुभूयते । अतः बौद्धानाम् एतन्मतं समीचीनं नास्ति । अत्र एतद् ज्ञातव्यमस्ति यद् बौद्धाः वस्तूनां विनाशं सम्बन्धहीनं मन्वते । किन्तु अन्येषां दर्शनानाम् इदं मतमस्ति यद् नाशः अपि पूर्वापर-सम्बन्धशून्यो नास्ति ।

बौद्धानां क्षणभंगवादस्य खण्डनं कुमारिलभट्टेन 'श्लोकवार्तिके, शंकराचार्येण ब्रह्मसूत्रे (2-2-10 ) जयन्तभट्टेन न्यायमंजर्यां तथा मल्लिषेणेन स्याद्वाद[illegible] मंजर्याम्' कृतम् । अस्मिन् विषये जैनाचार्यहेमचन्द्र-विरचिते वीतरागस्तुतिग्रन्थे निम्नलिखितः श्लोकः उपलभ्यते । अस्मिन् श्लोके ये पंचविधाः तर्काः प्रस्तुताः सन्ति, तत्र प्रायः सर्वेषां बौद्धेतरदार्शनिका-नाम् ऐकमत्यं विद्यते । स च श्लोकः माधवाचार्येणापि सर्वदर्शनसंग्रहे उद्धृतः । तथाहि -

'कृतप्रणाशाकृतकर्मभोग भवप्रमोक्ष स्मृति भंगदोषान् ।
उपेक्ष्य साक्षात्क्षणभंगमिच्छन्नहो महासाहसिकः परोऽसौ ।।[63]
( वी० स्तु० 18) इति ।

आर्हतानामिदमपि कथनमस्ति यद् क्षणिकत्वपक्षे एषो दोषः अपि अस्ति यद् ज्ञानकाले ज्ञेयस्यासत्त्वेन ज्ञेयकाले ज्ञानस्यासत्त्वेन च ग्राह्यग्राहकभावौ अनुत्पन्नौ । तयोः समसमयवर्तिता अपि न शंकनीया सव्येतरविषाणवत् कार्य-कारणासंभवेन अग्राह्यस्य आलम्बनप्रत्ययत्वानुपपत्तेः इति ।

क्षणभंगवादस्य प्रतिपादनाय बौद्धाः इदं कथयन्ति यत् ज्ञान-ज्ञेययोः अन्तरः नास्ति । अस्मिन् विषये आर्हतानां बौद्धैः सह वैमत्यम् अस्ति । भिन्नकालस्यापि ज्ञेयस्य ज्ञाने आकारार्पकत्वेन ज्ञानस्य यत् ग्राह्यत्वं बौद्धैः स्वीक्रियते, तदपि जैनानां मते अपेशलम् । क्षणिकस्य ज्ञानस्य आकारार्पकताऽभ्यतायाः दुर्वचत्वेन साकारज्ञानप्रत्यादेशात् ।

निराकारज्ञानवादेऽपि योग्यतावशेन प्रतिकर्मव्यवस्थायाः अपि स्थितत्वात् न तत् स्वीकार्यम् । ज्ञानस्य विषयाकार स्वीकृते सति च ज्ञानस्यार्थे दूरनिकटादिव्यवहाराय जलांचलिर्विधीयेत ।

एवं च उपजायमानं ज्ञानं यथा तस्य नीलाकारताम् अनुकरोति, तथा जडतामपि अनुकुर्यात् । एवं च ज्ञानस्यापि जडत्वं प्रसज्येत । जडत्वे सति च ज्ञानं न स्वप्रकाशकं नच परप्रकाशकं स्यात् । इत्येवं प्रकारेण आर्हतानां मतानुसारं बौद्धानां क्षणभंगवादः न समीचीनः । 'अनुस्मृतेश्च 'इति सूत्रस्य[64] भाष्ये भाष्यकारेण शंकराचार्येण एतत् प्रतिपादितं यत् आत्मनः क्षणिकत्वे स्वपक्षसिद्धिः परपक्षनिराकरणं चेत्युभयमपि न सिध्येत । तस्मादनुपपन्नो वैनाशिकसमयः ।

अत्र भाष्यस्य व्याख्याने वाचस्पतिः एवं कथयति - 'नानापदार्थसंभिन्नवाक्यार्थाभासस्तावदयं विकल्पः प्रथते । तत्रैते नानापदार्था न प्रथन्त इति ब्रुवाणः स्वसंवेदनं बाधयेत । न चैकस्य ज्ञानस्य नानाकारत्वं सम्भवति, एकत्वविरोधात् । नच तावन्त्येव ज्ञानानीति युक्तम्, तथासति प्रत्याकारं ज्ञानानां समाप्तेस्तेषां च परस्परवार्ताभावान्नानेत्येव न स्यात् । तस्मात् पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यम् । न चैतत्पूर्वापरक्षणावस्थायिनामेकं ज्ञातारं विनेति क्षणभंगप्रसंगः[65] । अतः अस्मिन् विषये उभयोः जैनाद्वैतदर्शनयोः साम्यमस्ति ।

### 1 3 2 (3) रत्नत्रयस्य मोक्षसाधनत्वम्

रत्नत्रयपदेन व्यवह्रियन्तानि सम्यक् दर्शनम्, सम्यक् ज्ञानम्, सम्यक् चरित्रयम् इत्येतानि त्रीणि मोक्षसाधनानि इति आर्हतानां सिद्धान्तः[66] ।

सम्यक् दर्शनमेव सम्यक् श्रद्धा इत्युच्यते । जैनमतानुसारं दर्शनस्यार्थः अस्ति श्रद्धा । अतः मोक्षमार्गस्य प्रथमं साधनं भवति श्रद्धा । अर्थात् तीर्थंकरैः प्रतिपादितेषु शास्त्रेषु श्रद्धा एव सम्यक् दर्शनम् ।

सम्यक्ज्ञानं द्विविधम् । प्रत्यक्षं परोक्षं च । यस्मिन् ज्ञाने सति आत्मा स्वयमेव कारणभूतः तज्ज्ञानम् प्रत्यक्षम् । यस्मिन् ज्ञाने इन्द्रियाणां मनसश्च साहाय्यम् अपेक्ष्यते तत् परोक्षम् । प्रत्यक्षस्य अवधिः मनः पर्याय केवल इति भेदाः । परोक्षस्य द्वौ भेदौ - मतिः श्रुतम् च ।

येन स्वभावेन जीवाः पदार्थाश्च व्यवस्थिताः सन्ति तस्य मोह-संशयरहितत्वेन अवगमः तथा शास्त्रप्रतिपादितानां सिद्धान्तानां तत्वानां च यथार्थः अनुभवः सम्यक् ज्ञानम् इत्युच्यते - यथोक्तम् -

''यथाऽवस्थिततत्वानाम् संक्षेपाद्विस्तरेण वा ।
योऽवबोधस्तमत्राहुः सम्यक् ज्ञानं मनीषिणः[67] । इति ।

एवम् उपर्युक्तप्रकारेण सम्यक् ज्ञानं पंचविधम् - 'मतिश्रुतावधिमनःपर्यायकेवल-भेदेन ।

इन्द्रियमनः सम्पर्कात् समुद्भूतं विषयज्ञानं मतिज्ञानम् इत्युच्यते । अस्य चत्वारः अवान्तरभेदाः सन्ति । अवग्रहः, ईहा, अवायः साधारणं च । ज्ञानावरणक्षयोपशमे सति मतिजनितं स्पष्टं ज्ञानं श्रुतम् । इदमेव ज्ञानं नैयायिकैः विकल्पकप्रत्यक्षत्वेन स्वीक्रियते । सम्यक्दर्शनादिगुणजनित क्षयोपशमनिमित्तम् अवच्छिन्नविषयं ज्ञानमवधिः । इदमेव ज्ञानं नैयायिकैः सविकल्पकप्रत्यक्षमित्युच्यते । ईर्ष्यान्तराय ज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं 'मनःपर्यायः । इदमेव ज्ञानं वैयायिकैः अलौकिकप्रत्यक्षत्वेन परिगण्यते ।

तपः क्रियाविशेषान्यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानसंपृक्तम् केवलम् ।

1 3 3 जैनमतानुसारिणी आचारमीमांसा

सम्यक् दर्शनस्य तथा सम्यक् ज्ञानस्य चरितार्थता सम्यक्चरित्रे एव संभवति जैनमतानुसारम् । सम्यक् चारित्र्यस्य सिद्ध्यर्थं पंचमहाव्रतानां पालनमावश्यकम् । पंचमहाव्रतानां स्वरूपमेवास्ति -

1 3 3 (1) अस्तेयव्रतम् - अपरस्य वस्तु तस्य आज्ञां बिना कदाप्यग्रहणमस्तेयः । तद्यथा - ''अनादानमदत्तस्यास्तेयव्रतमुदीरितम् । बाह्याः प्राणाः नृणामर्थो हरता तान् हता हि ते ।। अस्तेयव्रतस्य पंचभावना भवन्ति । तद्यथा शून्यस्थानेषु पर्वतगुहासु वा निवासः, अपरैः त्यक्तेषु स्थानेषु निवासः अपरेषां कार्येषु अविघ्नम् आचारशास्त्रानुसारं भिक्षाग्रहणम् स्वकीय परकीय भावनायाः परित्यागः ।

1 3 3 (2) ब्रह्मचर्यव्रतम् - वीर्यरक्षां कृत्वा नैष्ठिकजीवनयापनं ब्रह्मचर्यव्रतम् । तद्यथा -

'' दिव्यौदरिककामानां कृतानुमतकारितैः ।
मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम्'' ।।

ब्रह्मचर्यस्य भावनाः एताः सन्ति -

(अ) स्त्रीप्रेमणो वार्तानाम् अश्रवणम् ।
(आ) स्त्रीणां सुन्दरशारीरस्य अदर्शनम् ।
(इ) पूर्वकृतायाः रतेः विस्मरणम् ।
(ई) शक्तिवर्धकरसायनानाम् अग्रहणम् ।
(उ) आभूषणानां परित्यागः ।

1 3 3 (3) अपरिग्रहव्रतम्

कस्मिन्नपि पदार्थे आसक्तिं न कृत्वा तस्य अग्रहणम् अर्थात् तत् प्रति वैराग्य-धारणम् अपरिग्रहः । अपरिग्रहस्य भावनाः एताः सन्ति -

श्रोत्रेन्द्रियस्य शब्दं प्रति रागद्वेषाभावः रसनेन्द्रियस्य रसं प्रति रागद्वेषाभावः, चक्षुरिन्द्रियस्य रूपं प्रति रागद्वेषाभावः स्पर्शेन्द्रियस्य स्पर्शं प्रति रागद्वेषाभावः घ्राणेन्द्रियस्य गन्धं प्रति रागद्वेषाभावः ।

1 3 3 (4) अहिंसाव्रतम्, अहिंसाव्रतस्य स्वरूपमेवमस्ति -

न यत्प्रमादयोगेन जीवितव्यपरोपणम् ।
चराणां स्थावराणां च तदहिंसाव्रतम् मतम् ।। ''[68]

अस्य वाग्गुप्तिः प्रभृतयः पंचभावनाः भवन्ति ।

1 3 3 (5) सुनृतं व्रतम्

''प्रियं पथ्यं वचस्तथ्यं सुनृतं व्रतमुच्यते ।
तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् ।।''[69]

'' हास्यलोभभयक्रोध-प्रत्याख्यानैनिरन्तरम् ।
आलोच्य भाषणेनापि भावयेत्सुनृतं व्रतम् ।।''[70]

1.3.4 जैनमतानुसारिणी तत्वमीमांसा

आर्हतदार्शनिकाः तत्वमीमांसाविषये मतद्वयं प्रस्तावयन्ति । एकं मतं संक्षेपतः इदमस्ति यत् जीवाजीवाख्ये द्वे तत्वे स्तः । तत्र भूतात्मको जीवः अभूतात्मकस्तु अजीवः । पद्मनन्दिनः मतानुसारं जीवः चित्, अजीवश्च अचित् इत्युच्येते । तद्यथा -

'चिदचिद् द्वे परे तत्वे विवेकस्तदिवेचनम् ।
उपादेयमुपादेयं द्वेयं हेयं च कुर्वतः ।।''[71] अपरे जैनदार्शनिकाः

पुनः जीवाजीवयोः अपरं प्रपंचम् आचक्षते - जीव आकाश-धर्म-अधर्म-पुद्गलास्तिकायभेदात् । एतेषु पंचसु तत्वेषु कालत्रयसम्बन्धितया अस्तीति स्थितव्यपदेशः अनेकप्रदेशत्वेन शरीरवत्कायव्यपदेशः । एतेषां पंचतत्वानां विवरणं सर्वदर्शनसंग्रहकारेण निम्नलिखितक्रमेण निर्दिष्टम्—

''धर्माधर्माकाशास्तिकायाः ते एकत्वशालिनो निष्क्रियाश्च द्रव्यस्य देशान्तरप्राप्तिहेतवः । तत्र धर्माधर्मौ प्रसिद्धौ । आलोकेनावच्छिन्ने नभसि लोकाकाशपदवेदनीये तयोः सर्वत्रावस्थितिः । गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः । अत एव धर्मास्तिकायः प्रवृत्त्यनुमेयः । अधर्मास्तिकायः स्थित्यनुमेयः । अन्यवस्तुप्रदेशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहः । तदाकाशकृत्यम् । स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ( त० सू०- 5/24) । ते च द्विविधाः - अणवः( atomic ) स्कन्धाश्च (compound) भोक्तुमशक्या क्षणवः । द्व्यणुकादयः स्कन्धाः । तत्र द्व्यणुकादिस्कन्धभेदाद अण्वादिरुत्पद्यते । अण्वादिसंघाताद द्व्यणुकादिरुत्पद्यते । क्वचिद भेदसंघाताभ्यां स्कन्धोत्पत्तिः (त० सू० 5/26) अतएव पुरद्यान्ति गलन्तीति पुद्गलाः[73] ।

### 1.3.5 जैनमतानुसारणी ज्ञानमीमांसा

जैनाः सर्वत्र सप्तभंगीनयाख्यं न्यायमवतारयन्ति । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादिस्त च नास्ति चावक्तव्यः' इति । (स्याद्वादस्य सिद्धान्ते प्रत्यक्षम्, अनुमानमिति द्वे प्रमाणानि स्तः ।)

स्याद्वादशब्दे प्रयुक्तः 'स्याद्'-इत्यंशः निपातस्तिंगतप्रतिरूपकोऽनेकान्तद्योतकोऽस्ति[75] । स्याद्शब्दः अनेकान्त(अनिश्चयार्थ) द्योतकः । अतः 'स्यादस्ति'- इत्यस्मिन् वाक्येऽपि स्याद्पदम् अनर्थकं नास्ति । तथाहि -

'' स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधेः ।
सप्तभंगिनयापेक्षो हेयादेयविशेषकृत् ।।''[76]

वस्तुनः स्वभावः सत्वं वा असत्वं वा? अस्मिन् विषये जैनैः एतद कथ्यते यद सत्वमेव वस्तुनः स्वभावः नास्ति । घटोऽस्तीति अनयोः द्वयोः पदयोः युगपद्प्रयोगायोगाद । नास्ति इति प्रयोगविरोधाच्च । यथोक्तम् -

'घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः ।
नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्वयोः ।।''

स्याद्वादमंजर्यां मल्लिषेणेन इदमुक्तं यत् अस्ति नास्तिप्रभृति ज्ञानानां विषयभूतः पदार्थः अनेकान्तात्मकः (अनिश्चितः) भवति । किन्तु एकनिष्ठन्यायानां विषयभूतः पदार्थः नयः भवति । नयस्य विषये देवसूरिणः इदं कथनं ज्ञातव्यं वर्त्तते यत् ''नीयते येन श्रुताख्यप्रमाणाविषयीकृतस्यार्थस्य अंशतः तदितरांशौदासीन्यतः स प्रतिपत्तुः अभिप्रायविशेषो नयः'' । सप्तभंगीनयात्मकस्य स्याद्वादस्याभिप्रायः जैनानां मतानुसारम् अयमस्ति यत् अन्येषां दार्शनिकानां सिद्धान्तेषु वस्तुनः कस्याप्येकस्य पक्षस्यैव विचारः दृश्यते नतु सर्वेषां पक्षाणाम् । तेषामपेक्षया जैनानुमतः स्याद्वादः सर्वांगपूर्णः अस्ति । अतः तेषां मतानुसारं पक्षपातरहितत्वात् स्याद्वादः स्वीकरणियः । तथाहि - 'अन्योन्यपक्षप्रतिपक्षभावाद् यथा परे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन् न पक्षपाती समयस्तथार्हतः ।[77]

स्याद्वादः अन्यैः दार्शनिकैः न स्वीकृतः । अद्वैतवेदान्तनयेऽपि अस्य खण्डनं दृश्यते ।[78] 'नैकस्मिन्नसंभवात्' इत्यस्य सूत्रस्य भाष्ये भगवत्पादः शंकराचार्यः कथयति - नायमभ्युपगमो युक्त इति । कुतः ? एकस्मिन्नसम्भवात् । नह्येकस्मिन्धर्मिणि युगपत् सदसत्त्वादिविरुद्धधर्मसमावेशः संभवति, शीतोष्णवत् । अस्मिन् सन्दर्भे वाचस्पतेः कथनमपि ज्ञातव्यं वर्त्तते । तद्यथा - सत्यं यदस्ति वस्तुतः तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव । न नास्ति, यथा प्रत्यगात्मा ।[79]

अस्मिन् विषये कल्पतरुपरिमलकारेण यत् विश्लेषणं कृतं, तदपि उल्लेखनीयं वर्त्तते । तद्यथा- 'सत्वैकान्तपक्षः सांख्याद्यभिमतसत्कार्यवादः । असत्वैकान्तपक्षः शून्यवाद्यभिमतोऽसद्वादः । क्रमेण सदसत्वपक्षो वैशेषिकाद्यभिमतो घटादीनां मध्ये सतां पूर्वं पश्चाच्च प्रागभाव-प्रध्वंसप्रतियोगित्वरूपमसत्वमिति वादः ।[80] एवं प्रकारेण भामतीप्रस्थानानुसारम् स्याद्वादः स्वीकार्यो नास्ति ।

1.3.6 भामतीप्रस्थानानुसारं जैनमतस्यसमीक्षणम्

जैनानुमततत्वमीमांसायाः सन्दर्भे तथा जैनानुमतज्ञानमीमांसायाः विषये वाचस्पतिमिश्रेण यद विश्लेषणं कृतं तदतीव महत्वपूर्णं वर्त्तते । अस्मिन् सन्दर्भे सूत्रभाष्यप्रदर्शितः मार्ग एव वाचस्पतिना अनुसृतः । जैनैः स्वीया तत्वमीमांसा सप्तभंगीनयमाश्रित्य उपपादिता । जगतः व्यवहारः निश्चयात्मकबुद्ध्या तथा व्यवसायात्मिकया बुद्ध्या प्रचलति । नतु अनिश्चयात्मकेन ज्ञानेन । किन्तु सप्तभंगीनयमाश्रित्य जैनाः कस्मिन्नपि विषये निश्चितरूपेण किमपि कथयितुं न समर्थाः । सर्वाणि शास्त्राणि मोहनिवर्तकानि भावितव्यानि । किन्तु जैनशास्त्रं अस्य सिद्धान्तस्य विपरीतम् अनिश्चयात्मकं मोहम् उत्पादयति । अतः सप्तभंगीनयात्मकः जैनसिद्धान्तः भामतीप्रस्थानानुसारं स्वीकरणीयः नास्ति । सप्तभंगीनये अस्वीकृते सति अन्येऽपि जैनसिद्धान्ताः स्वतः एव निरस्ताः संजायन्ते । अस्मिन् विषये ब्रह्मसूत्रभाष्यभामत्यादिषु निर्दिष्टाः नैके आक्षेपाः द्रष्टव्याः वर्त्तन्ते । तद्यथा - 'नैकस्मिन्नसंभावात्'[8] इत्यस्य सूत्रस्य भाष्ये भगवत्पादः शंकराचार्यः कथयति -

विवसनसमयः इदानीं निरस्यते । सप्तैषां पदार्थाः संमता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम । संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते । तयोरिममपरं प्रपंचमाचक्षते पंचास्तिकाया नाम, जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्चेति । सर्वेषामप्येषामवान्तर प्रभेदान्बहुविधान्स्वसमयपरिकल्पितान् वर्णयन्ति । सर्वत्र चेमं सप्तभंगीनयं नाम न्यायमवतारयन्ति ।

शरीरपरिमाणो हि जीवः इति आर्हताः मन्यन्ते अस्य मतस्य उल्लेखनं 'एवं चात्माकात्स्न्यम्' इति सूत्रे एवं कृतम् दृश्यते[85]। तस्य भाष्ये च शंकरेण यद् कथितं तस्यानुसरणं वाचस्पतिना अपि विस्तरेण कृतम्। तद्यथा भाष्यम् -' शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत। शरीराणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित्कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्। पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नपुत्तिकाशरीरे संमीयेत।

अत्र भामती - शरीरपरिमाणत्वे ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम्। तथा चानित्यत्वम्। ये हि परिच्छिन्नास्ते सर्वेऽनित्या यथा घटादयस्तथा चात्मेति। तदेतदाह - यथैकस्मिन्धर्मिणीति। इदं चापरमकृत्स्नत्वेन सूचितमित्याह -शारीराणां चानवस्थितपरिमाणत्वादिति। मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्नुमर्हत्यत्यल्पत्वादित्यात्मनः कृत्स्नशरीरव्यापित्वादकात्स्न्यम्, तथा च न शरीरपरिमाणत्वमिति[86]। देहपरिमाणत्वम् आश्रित्यापि सूत्रभाष्यभामत्यादिषु जैनमतस्य खण्डनं दृश्यते। तद्यथा - 'न च पर्यायादप्यविरोधो विकारादिभ्यः[87]। 'न च पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं जीवस्याप्यविरोधेनोपपादयितुं शक्यते। कुतः ? विकारादिदोषप्रसंगात्। अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्वं तावदपरिहार्यम्। विक्रियावत्वे च चर्मादिवदनित्यत्वं प्रसज्येत। ततश्च बन्धमोक्षाभ्युपगमो बाध्येत इति[88]।

अत्र भामती ''किंचैते जीवावयवाः प्रत्येकं वा चेतयेरन्न समूहो वा। तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामेकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत। समूहचैतन्ये तु हस्तिशरीरस्य पुत्तिकाशरीरत्वे छिद्रवत्रावयवशेषो जीवो न चेतयेत। विगलितबहुसमूहिततया समूहस्य अभावात् पुत्तिकाशरीरे इति।''[89]

'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इत्यस्य सूत्रस्य भाष्ये भगवत्पादेन शंकराचार्येण एतदपि स्पष्टीकृतं यत् जीवः अणुर्महान् वा अभ्युपगन्तव्यः न तु शरीरपरिमाणः तद्यथा- 'अपिचान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः । तद्वत्पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गाच्च एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्तरप्राप्तिः । अथवान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात् । ततश्चाविशेषेण सर्वदैवाणुर्महान्वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः । अतः सौगतवदार्हतमपि मतमसंगतमित्युपेक्षितव्यम् ।

## । 4 0 न्यायवैशेषिकदर्शनं

न्यायदर्शनस्य प्रवर्तकः महर्षिः गौतमः । अस्य दर्शनस्य 'अक्षपाददर्शनम्' इति नामान्तरम् अक्षपादप्रणीते न्यायसूत्रे 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्ड-हेत्वाभास-छल-जाति निग्रहस्थानानि' इति षोडश पदार्थानां तत्वज्ञानात् निश्रेयसाधिगमः भवतीति प्रतिपादते । भामती प्रस्थाने यत्र तत्र न्यायवैशेषिक प्रवर्तितानां सिद्धान्तनामपि समालोचना दृश्यते । अतः तेषां संक्षेपरूपेणात्रोल्लेखः क्रियते ।

## । 4 । न्यायवैशेषिकदर्शनयोः प्रतिपादिताः प्रमुखाः विषयाः-

अक्षपादप्रणीते न्यायसूत्रे पंचाध्यायाः सन्ति । प्रत्यध्यायम् आह्निकद्वयं वर्तते । प्रथमाध्यायस्य प्रथमाह्निके षोडश पदार्थेषु प्रमाणादारभ्य निर्णयपर्यन्तं नवपदार्थाः विचार्यन्ते । द्वितीये तु वादादारभ्य निग्रहस्थानपर्यन्तं सप्तपदार्थाः विश्लिष्टाः विद्यन्ते ।

द्वितीयाद्ध्यायस्य प्रथमे आह्निके संशयस्य कारणं, तस्य स्वरूपं प्रत्यक्षानुमानोपमानशब्दप्रमाणानां प्रामाणिकत्वं च विचार्यन्ते । द्वितीये अर्थापत्यादीनां अन्तर्भावः कुत्रेति प्रतिपाद्यते । तृतीयाध्यायस्य प्रथमे आत्मनः स्वरूपम्, शरीरस्य लक्षणम्, इन्द्रियाणां भेदाः तेषां प्रयोजनमित्येते चत्वारः प्रमेयविषयाः परीक्षिताः ।

द्वितीये बुद्धेः एवं मनसः परीक्षणम् । चतुर्थाध्यायस्य प्रथमाह्निके प्रवृत्तिदोष - प्रेत्यभावः फल दुःख अपवर्गाणां विचारणा प्रस्तुता ।

एवं तृतीयाध्यायस्य आह्निकद्वये चतुर्थाध्यायस्य प्रथमाह्निके च केवलं प्रमेयविषयाणामेव परीक्षणं कृतम् । प्रमेयाः द्वादश भवन्ति ते यथा आत्मा-शरीर-इन्द्रियाणि-अर्थबुद्धि-मनः- प्रवृत्ति-दोष-प्रेत्यभाव- फलम् -दुःखम् -अपवर्गः इति ।

चतुर्थस्य द्वितीय आह्निके दोषाणां निरूपणं कृतम् परमाणोः निरवयत्वं च साधितम् । पंचमाध्यायस्य प्रथमे आह्निके जातेः निरूपणं कृतम् । द्वितीये निग्रह स्थानानां चर्चाः प्रस्तुतः । एवमस्ति पंचाध्यायात्मकस्य न्यायशास्त्रस्य सामान्यः परिचयः । तत्र च षोडश पदार्थानां निरूपणमेवमस्ति -

(1) प्रमाणम् -

षोडश पदार्थानां मध्ये एतत्प्रथमं भवति । 'मानाधीना मेयसिद्धिः अर्थात् अर्थस्य सिद्धिः प्रमाणाधीना भवतीति । प्रमायाः करणं प्रमाणमिति कथ्यते ।

तश्चतुर्विधम् प्रत्यक्ष - अनुमान- उपमान-शब्दभेदात् । विषयैः सह इन्द्रियाणां सन्निकर्षेण यत् ज्ञानं जन्यते तत् प्रत्यक्षमित्युच्यते । व्याप्तिमत् लिंगमित्युच्यते' तदेवानुमानम् । गोसदृशो गव्यपदवाच्यः इति ज्ञानमुपमितिः । शब्दात् जायमाना प्रतीतिः शब्दबोधः इत्युच्यते ।

2- प्रमेयः -

यथार्थरूपेण भासमानत्वेन यः पदार्थः अस्ति, सः प्रमेयः इति कथ्यते । न्यायमते आत्मनः ज्ञानाश्रयत्वं कल्प्यते । आत्मा तु जीवात्म-परमात्मरूपेण द्विधा । परमात्मा सर्वज्ञ एकश्च । प्रतिशरीरं भिन्नत्वात् जीवात्मनः अनेके । आत्मनः सुखादुःखोप भोगाय साधनभूतं यत् तत् शरीरमित्युच्यते । ज्ञानं बुद्धिरिति व्यवह्रियते । सुखादुःखादीनां ज्ञान-सम्पादनाय साधनभूतस्य इन्द्रियस्य नाम मनः इति । एतत् मनः अणुत्वेन नित्यत्वेन चांगीक्रियते ।

3 संशयः

अनिश्चयात्मकं ज्ञानं भवति संशयः । सः त्रिविधः साधारण-धर्मनिमित्तः, असाधारणधर्मनिमित्तः, विप्रतिपन्नधर्मनिमित्तश्चेति । साधारणधर्म निमित्तस्योदाहरणं तु स्थाणुर्वा पुरुषो वेति । अत्र स्थाणुपुरुषयोः उन्नतात्वं साधारणधर्मतया भासते ।

असाधारणधर्मनिमित्तस्योदाहरणं तु-पृथ्वी नित्यानित्येति' । तृतीयस्योदाहरणं तु शब्दः नित्यानित्यो वेति । शब्द नित्यः इति केचन वदन्ति । अन्ये वदन्ति शब्दः अनित्यः इति ।

4- प्रयोजनम्-
------------

यदुद्धिश्च कार्ये मनुष्यः प्रवर्त्तते, तत् प्रयोजनमित्युच्यते । प्रयोजनं द्विधा विभज्यते, दृष्टमदृष्टं च । दृष्टफलं नु अवधातात् मुषाविमोक्षः । स्वर्गफलमदृष्टमिति व्यवहारः । ''प्रयोजनलक्षणे गौतमवचनं यमर्थ/मधिकृत्य प्रवर्त्तते तत् प्रयोजनम् ।''[94]

5- दृष्टान्तः
------------

व्याप्तिज्ञानस्थलं दृष्टान्तः इतिव्यवहारः । यत्र यत्र धूमः तत्र तत्र वह्निः इति व्याप्तिः । यथा महानसः । अतः महानसः व्याप्तिज्ञापनस्थलं भवति । तथा च गौतमोक्तिः - ''लौकिक परीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ।[95]

6- सिद्धान्तः -
------------------

यः पदार्थः प्रमाणेन सिद्धो भवति सः सिद्धान्तः । सिद्धान्तश्चतुर्विधः । सर्वतन्त्र -प्रतितन्त्र- अभ्युपगमः - अधिकरणसिद्धान्तश्चेति । सर्वतन्त्रसिद्धान्तः - पंचज्ञानेन्द्रियाणि प्रतितन्त्रसिद्धान्तः - शब्दः अनित्य इति ।

स्वाभिमतसिद्धान्तस्य विरोधी सन्नपि कतिपयक्षणपर्यन्तं यः सिद्धान्तः स्वसिद्धान्तत्वेन स्वीक्रियते, स अभ्युपगमसिद्धान्तः इत्युच्यते ।

'क्षित्यादिकम् सकर्तृकम् इत्याद्यनुमान प्रमाणेन कर्ता ईश्वरः ''- इति अधिकरण सिद्धान्तः । स एव ईश्वरः अधिकरणेन सर्वज्ञ सर्वेश्वर सर्वशक्तिमान् इति च सिध्यति ।

7- अवयवः - पदार्थानुमानैकाव्यैक देशोऽवयवः । स पंचविधः प्रतिज्ञा, हेतूदाहरण उपनयन-मनभेदाश्च ।

8- तर्कः - व्याप्यारोपेण व्यापकारोपस्तर्कः । सूत्रकारस्तु अस्य लक्षणम् एवं प्रतिपादयति - 'अविज्ञाततत्वेऽर्थे कारणोपपत्तितस्तत्वज्ञानार्थमूहस्तर्कः'' [96] । इति

9- निर्णयः - तर्कविषये खण्डनमण्डनपद्धत्या यस्य समीचीनार्थस्य निश्चयः भवति स निर्णयः इति । 'विमृश्य प्रतिपक्षाशयाद् अर्थावधारणंनिर्णयः'' [79] इति । अयं साक्षात्कृतिः अनुमितिः, उपमितिः शब्दः इति चतुर्धा विभाज्यते ।

10- वादः - ~~वितण्डा~~

प्रमाणद्वारा स्वपक्षसाधनमेवं परपक्षखण्डनं वादः इत्युच्यते । किंच स्वीकृतः सिद्धान्तः पंचावयववाक्यैः उपपन्नश्च भवति । सः वादः इत्याभिधीयते । 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पंचावयवोपपन्नः पक्ष प्रतिपक्षपरिग्रहो वादः' इति गौतमवाक्यम् ।

11- जल्पः -

'यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः' इति सूत्रकारवचनाद परपक्ष खण्डनेन स्वपक्षसिद्धयर्थं छलजातिनिग्रहस्थानानां प्रयोगः यत्र कृतो भवति स जल्पः इति मण्यते ।

12- वितण्डा

''स्वप्रतिपक्षस्थापनाहीनो वितण्डा इति वचनाद य जल्पः यदा स्वपरपक्षस्थापनहीनो भवति स एव वितण्डावादः इति कथ्यते । अर्थाद् वितण्डायां स्वपक्षस्थापनं न करोति अपितु परपक्षखण्डने एव अस्य मुख्या प्रवृत्तिः ।

13- हेत्वाभासः

यत्र साध्यस्य साधकत्वेन हेतुः न भवति, तथापि यः हेतुः हेतुवद् भासते स हेत्वाभास इत्युच्यते। हेत्वाभासः पंचधा- असिद्धः-सव्यभिचारः - विरुद्धः-प्रकरणसमः-कालातीत इति भेदात्. यः हेतुः अन्यत्र व्यभिचरति सः सव्यभिचारः इति। अस्यापरं नाम अनैकान्तिकः इति। अस्योदाहरणं 'पर्वतो वह्निमान् प्रमेयत्वाद्' इति। प्रमेयत्वं जलेऽपि सत्वात् हेतुः अन्यत्र व्यभिचरति। यः हेतुः साध्याभावेन व्याप्तः सः विरुद्धः इति। यथा शब्दः नित्यः कृतकत्वात् इत्यादि। यत्र यत्र कृतकत्वं तत्र नित्यमनित्यतः हेतु विरुद्धः। यस्य प्रतिवादिनः अन्यः हेतुः विद्यते सः 'प्रकरणसमः' इति। प्रतिवादिपक्षे शब्दः नित्यः, शब्दे अनित्यधर्मोपलब्ध्याभावात् इति हेत्वन्तरप्रतिपादनेन गृहीतः पक्षः विचारेण निरस्तो न भवति। अतोऽयं हेतुः प्रकरणसमः इति।

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः कालातीतः अथवा कालात्ययापदिष्टः इति निश्चीयते। अस्य नाम बाधितः। यथा अग्निः शीतलः प्रमाश्रयत्वात्।

14- छलम् अस्य लक्षणं महर्षिणा गौतमेन एवं भणितम् - 'वचनविधातोऽर्थविकल्पोपपत्या छलम् इति।[97] शब्दावृत्तिव्यत्ययेन प्रतिबोध हेतुः छलम् इति अन्यत् लक्षणम्। एतत् छलं त्रिविधम् -वाक्छलम् सामान्यछलम्, उपचारछलमिति।

15- जातिः- ''साधर्म्यवैधर्म्याभ्याम् प्रत्यवस्थापनं जातिः'' इति गौतमसूत्रम्। साधर्म्यवैधर्म्याभ्यां यत्र साध्यस्य अनुपपत्तिः सा जातिरित्युच्यते। वादी साधर्म्योदाहरणेन साध्यस्योपपत्तिं साधयति प्रतिवादी वैधर्म्योदाहरणेन साध्यस्य अनुपपत्तिं च प्रदर्शयति। सा जातिरित्यभिधीयते। ''साधर्म्यवैधर्म्याभ्याम् प्रत्यवस्थापनं जातिः इति जातेः

लक्षणम् ।

जातिः चतुर्विंशति प्रकारात्मिका भवति । यथा साधर्म्यसमा, वैधर्म्यसमा, उत्कर्षसमा, अपकर्षसमा, वर्ण्यसमा, अवर्ण्यसमा, साध्यसमा, विकल्पसमा, अनुपपत्तिसमा; उपलब्धिसमा, अनुपलब्धिसमा, नित्यसमा, अनित्यसमा तथा कार्यसमा इति ।

16- निग्रहस्थानम् - वादी अथवा प्रतिवादी यस्मिन् स्थाने स्वपक्ष पराजयं मनुते तत्स्थानं निग्रहस्थानमिति कथ्यते । निग्रहस्थानं द्वाविंशति भेदेन उपन्यस्तं भवति । तद्यथा - प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्,प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम् अविज्ञातार्थम्, उपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्,अनुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासः इति ।

षोडशपदार्थतत्वज्ञानादेव मोक्षः इति नैयायिकाः मन्वते । उपर्युक्तानां षोडशपदार्थानामतिरिक्तं द्वादशप्रमेयाणामपि उल्लेखो वर्तते तद्यथा -

1 4 2 भामती प्रस्थानानुसारं न्यायमत समीक्षणम् ।

1 4 2(1)आत्मस्वरूपसमीक्षणम् -

द्वादशप्रमेयाणां मध्ये सर्वप्रथमो भवति आत्मा । आत्मा तु न्यायमते ज्ञानाश्रयत्वेन कथ्यते । '' आत्मत्वसामान्यवान् आत्मा इति । आत्मत्वनामक जातीनाम् आश्रयएव आत्मा । आत्मा शरीरेन्द्रियेभ्य विलक्षणो भवति ।

आत्मा जीवात्म-परमात्मरूपेण द्विविधः । परमात्मा सर्वज्ञः एकश्च । प्रतिशरीरं भिन्नत्वात् जीवात्मनः अनेके । ‘इच्छाद्वेषप्रयत्न-सुखदुःखज्ञानान्यात्मनो लिंगमिति’[९४] इति न्यायसूत्रानुसारं इच्छाद्वेष-प्रयत्न-सुख-दुःख-ज्ञानानि आत्मनः लिंगानि ।

जीवात्मनि सुखदुःखादीनां समवायिकारणतावच्छेदकतया आत्मत्वं सिद्धम् । परमात्मनि अपि आत्मत्वजातिरस्ति । ‘आत्मा वा अरे द्रष्टव्यः’ इत्यादि श्रुतौ आत्मशब्दव्यवहारात् । ईश्वरे सुखदुःखादीनां प्रसंगः नास्त्येव । तस्य सुखदुःखादीनां स्वरूपयोग्यकारणत्वे अपि अदृष्ट-शरीरादिरूपनिमित्तकारणाभावात् सुखादीनाम् अनुपपत्तेः ।

चार्वाकमतानुसारं चैतन्यविशिष्टो देह एवात्मा । पृथिव्यादि-भूतचतुष्टयस्य परिणामेन देहे चैतन्यं जायते । तस्य देहेन सहैव उत्पत्ति-विनाशांगीकारात् अनित्यत्वं सिद्धयति । केचित् चार्वाकैकदेशिनः इन्द्रिया-ण्येवात्मा इत्याहुः । अपरे च मनः एवात्मेति मन्वते । बौद्धेषु माध्यमिकानां मते शून्यमेवात्मा । योगाचारबौद्धानां मते विज्ञानस्वरूपः आत्मा । तस्य च प्रतिक्षणं भेदात् अनित्यत्वम् । जैनानां मते देहपरिमाणो देहातिरिक्तो आत्मा इति ।

न्यायवैशेषिकाणां मते तावत् देहेन्द्रियेभ्यो भिन्नो नित्यो विभुः आत्मा । तदुक्तम् - ‘जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च’ इति । आत्मनः परिमाणविषये दार्शनिकानां मतभेदोऽस्ति । रामानुजादीनां मते आत्मा अणुपरिमाणः । जैनानां मते आत्मा मध्यमपरिमाणः । सांख्यानाम् अद्वैतवेदान्तिनां च मते आत्मा विभुः । नैयायिकैरपि आत्मनो विभुत्वं स्वीकृतम् ।

जीवात्मा नित्योऽपि सन् प्रतिशरीरं भिन्नः सुखदुःखादेर्वैचित्र्यात् इति जीवात्मनो बहुत्वं नैयायिकानां सम्मतम् । सुखदुःखाद्यधिकरणभूतो जन्ममरणाद्यधीनश्च जीवः ।

वैशेषिकदर्शने आत्मनः अप्रत्यक्षत्वं स्वीकृतम् । उक्तं च महर्षिणा कणादेन 'तत्रात्मा मनश्चाप्रत्यक्षे' इति । प्रशस्तपादानां भाष्येऽपि सूक्ष्मत्वहेतोः आत्मनः प्रत्यक्षं न सम्भवति । गौतमपादानां न्यायभाष्यकाराणां वात्स्यायनपादानां मतेऽपि एवमेव । परन्तु उद्योतकराणाम् उदयनाचार्याणां च मते' अहं जाने' 'अहं सुखी' अहं दुःखी' इत्यादि सुखदुःखादीनां मानसप्रत्यक्षकाले आत्मनोऽपि प्रत्यक्षं भवति । विश्वनाथपादानामपि इदमेव मतम् । आत्मा तु धर्माणाम् अधर्माणाम् च आश्रयभूतः भवति । तस्य च आत्मनो योग्यविशेषगुणानां ज्ञानसुखादीनां सम्बन्धेन प्रत्यक्षत्वं सम्भवति । नत्वन्यथा 'अहं जाने' 'अहं करोमि' इत्यादि प्रतीतेः । प्रत्यक्षं चात्र मानसम्, नतु इन्द्रियान्तरजन्यम्; आत्मनः रूपाद्यभावेन इन्द्रियान्तरप्रत्यक्षायोग्यत्वात् । तदुक्तम् - 'मनोमात्रस्य गोचरः' इति । इन्द्रियाणां जनकतासम्बन्धेन, शरीरस्य च अवच्छेदकतासम्बन्धेन आत्मा अधिष्ठाता इत्यर्थः । इन्द्रियाणि शरीरं च चेतनाधिष्ठितानि, अचेतनत्वे सति ज्ञानत्वाद् इत्यनुमानप्रयोगः । इन्द्रियाणां करणत्वे सिद्धे तैः करणैश्च तेषां कर्ता अनुमीयते/स एव आत्मा ।

सुखदुःख- ज्ञानेच्छादिभ्योऽपि आत्मा अनुमीयते । सुखदुःखादयो गुणाः । गुणाश्च द्रव्याश्रिता इति सुखदुःखादीनां आश्रयभूतद्रव्यत्वेन आत्मा अनुमीयते । तदुक्तं प्रशस्तपादैः 'सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैः अनुमीयते इति ।

अनुमानप्रयोगश्च - शरीरं प्रयत्नवदधिष्ठितं प्रवृत्तिमत्वात् रथावत्' इति । यथा रथस्य कर्मणा सारथिः अनुमीयते, तथैव देहस्य चेष्टात्मकेन कर्मणा परमात्मा अनुमीयते इति भावः ।

शरीरमेव ज्ञानाधिकरणम् आत्मेति न वक्तव्यम् 'शरीरस्य न चैतन्यं, भूतेषु व्यभिचारतः' इति । ननु चक्षुरादीनाम् इन्द्रियाणामेव ज्ञानादिकं प्रति करणत्वं, कर्तृत्वं च अस्तु विरोधे साधकाभावात् । अत आहु चक्षुरादीनां चैतन्यं नास्ति ।

ननु चक्षुरादीनां चैतन्यं मास्तु, मनसस्तु नित्यस्य चैतन्यं स्यात् इति चेदुच्यते - मनस आत्मत्वे आत्मविशेषगुणानां ज्ञानेच्छादीनां प्रत्यक्षं न स्यात् । अतः 'देहेन्द्रियमनोव्यतिरिक्त आत्मा' इति सर्वथा उपपन्नम् इति नैयायिकानां सिद्धान्तः । आत्मनः भोगायतनं भवति शरीरं । चेष्टेन्द्रियार्थाश्रयः शरीरम् इति । शरीरे इन्द्रियसन्निकर्षादेव सुखदुःखानि अनुभूयन्ते ।

शरीरसंयुक्तं ज्ञानकारणं यदतीन्द्रियं कथितं तदिन्द्रियमिति । ज्ञानं बुद्धिरिति व्यवह्रियते । सुखदुःखादीनां ज्ञानसम्पादनाय साधनभूतस्य इन्द्रियस्य नाम मनः इति । एतन्मनः नानाप्रकारत्वेन वर्तमानं यत् अणुत्वेन नित्यत्वेन चाभिधीयते ।

वाचिक-मानसिक- शारीरक्रिया प्रवृत्तिरित्युच्यते । दोषास्तु 'प्रवर्तनालक्षणाः । प्रेत्यभावः तु पुनरुत्पत्तिरेव ।

## 1 4 2 (2) अपवर्गः (मोक्षः) स्वरूप समीक्षणम्

---

न्यायमते षोडशपदार्थेषु प्रमेयाणाम् अन्तर्भावः ।। प्रमेयाणां संख्या च द्वादश वर्त्तते । तेषु अपवर्गः अपि एकः वर्त्तते । अपवर्गस्य एव अपराणि नामानि मोक्षः, निःश्रेयस्, आत्यन्तिकदुःखाभावः, मुक्ति इति ।

यावत्पर्यन्तं जीवात्मा शरीरस्था भवति तावत् पर्यन्तं दुःखानां विनाशः संभावो नास्ति । इन्द्रियैः सह शरीरस्य सम्बन्धोऽपि यावत्पर्यन्तं वर्त्तते तावत्पर्यन्तं विषयैः सह शरीरस्य सम्पर्कं रोद्धुं न शक्यते ।

एवं प्रकारेण अपवर्गस्य इन्द्रियेभ्यश्च जीवात्मनः सम्बन्धविच्छेदः स्यात् । अपवर्गावस्थायां जीवात्मा शरीरेन्द्रियेभ्यः पूर्णतः मुक्तो भूत्वा सुखदुःखादपि असंपृक्तो जायते । सुखदुःखयोः नाशस्तु यत्किंचित् प्रगाढनिद्रायाः अवसरेऽपि जायते किन्तु तत् क्षणिकं भवति । अपवर्गावस्थायां दुःखस्य आत्यन्तिकः अन्तः संजायते । आत्मनः एषा एवं अवस्था अपवर्गः इत्याख्यायते ।

अपवर्गस्य प्राप्त्यर्थं न्यायशास्त्रपरिगणित षोडशपदार्थानां तत्वज्ञानम् आवश्यकम् अस्ति इति न्यायसूत्रस्य आरम्भे स्पष्टमेवोक्तम् न्यायशास्त्रप्रवर्तकेन अक्षपादगौतमेन ।

नैयायिकानां कथनस्य तात्पर्यम् इदमस्ति यत् पदार्थानां तत्वज्ञानेन सांसारिकविषयेषु दोषदर्शनं जायते । दोषदर्शनेन विरक्तिः भवति । यथा हि शरीरे यत् आत्मत्वम् अनुभूयते पुत्रे वा यथा आत्मत्वम् अनुभूयते तत्सर्वं तेषु दोषदर्शनात् अपगतो भवति । दोषाणाम् अपगमे सांसारिकप्रवृत्त्युत्पत्तिर्न भवति ।

(अपवर्गस्य विषये भामती प्रस्थानस्य आचार्याणां मत मत्र व्याख्यानं दीयते) ।

1 4 3 वैशेषिक प्रतिपादिनाः प्रमुखाः विषयाः

औलुक्य (वैशेषिक) दर्शनस्य प्रवर्तकः कणादः मन्यते । कणान् अत्ति इति पदद्वयात् निष्पन्नोऽयं कणादशब्दः । महात्मा कणादः प्रकृत्या स्वयं दरिद्रः सन् क्षेत्रे पतितान् अन्नकणान् गृहीत्वा स्वजीवननिर्वाहं कृतवान् इत्यतः अस्य शास्त्रस्य 'कणादशास्त्रम्' इति नाम प्रथितम् । शास्त्रस्य अस्य अन्यन्नाम भवति वैशेषिकदर्शनमिति । अस्मिन् दर्शने विशेषः पदार्थत्वेन स्वीक्रियते काणादम् अतिरित्य केनापि अन्येन दर्शनेन विशेषः न स्वीकृतः । अतः अस्य दर्शनस्य 'वैशेषिकम्' इत्यपि नाम वर्तते । अस्य दर्शनस्य अपरं नाम औलुक्यदर्शनम् अस्ति । यतः कणादस्य अपरं नाम भवति उलूकऋषिरिति ।

महर्षिः कणादः प्रमाणद्वयमंगीकरोति प्रत्यक्षमनुमानं चेति । अनुपलब्धिप्रमाणं प्रत्यक्षे अन्तर्भवति । एवं शेषाणि सर्वाणि प्रमाणानि अनुमाने अन्तर्भवन्ति इति वैशेषिकाणां मतम् ।

कणादः द्रव्यगुणकर्मसामान्यविशेष समवाय इति षड् भाव-पदार्थानां विवेचनं विस्तरेण वैशेषिकसूत्रस्य दशसु अध्यायेषु कृतवान् । प्रत्येकम् अध्याये आह्निकद्वयं वर्तते ।

प्रथमाध्यायस्य प्रथमे आह्निके द्रव्य-गुण कर्म इत्यादीनां विचारः कृतः । द्वितीये तु जातेः एवं विशेषस्य च निरूपणं कृतम् । द्वितीयस्य प्रथमे भूतानां विशेषप्रकारः, द्वितीये दिक्कालयोः विचारः कृतः ।

तृतीयाध्यायस्य प्रथमे आहनिके आत्मनः विचारः द्वितीये च अन्तःकरणस्य विचारः कृतः । चतुर्थाध्यायस्य प्रथमे आहनिके शरीरस्य प्रतिपादनं, द्वितीये शरीरविवेचनोपयोगि प्रदर्श्य परमाणुकारणत्वं तस्य विस्तृतः विचारः दृश्यते ।

पंचमस्य अध्यायस्य प्रथमे आहनिके शारीरकर्मणां, द्वितीये च मानसिककर्मणां विचाराः कृतः । षष्ठस्य अध्यायस्य प्रथमे आहनिके दान-परिग्रहयोः स्वरूपम् निरूपितम् । द्वितीये च आश्रमधर्माः प्रतिपादिता । सप्तमाध्यायस्य प्रथमे आहनिके बुद्धिविचारः, तस्या निरपेक्षस्वरूपम्, रसादिगुणानां विवेचनम् तथा द्वितीये सापेक्षबुद्धेः, द्वित्वस्य, परत्वा, परत्वपृथक्त्वादिगुणानां समवायस्य च विवेचनम् कृतम् । अष्टमाध्यायस्य प्रथम-द्वितीयाह्निकयोः प्रत्यक्ष प्रमाणस्य सविकल्प-निर्विकल्पात्मक रूपेण विवेचनं प्रस्तुतम् । नवमाध्यायस्य प्रथमे अभावविचारः, द्वितीये च हेतुविचारः कृतः । दशमाध्यास्य प्रथमद्वितीययोः आहनिकयोः अनुमानभेदाः सम्यक् प्रतिपादिताः ।

पदार्थस्वरूपम्- वैशेषिकमते पदार्थाः द्विविधाः । भावात्मकाः, अभावात्मकश्च । भावपदार्थेषु द्रव्यगुणकर्मसामान्यविशेषसमवायाः षड् स्वीक्रियन्ते । अभाव प्रागभाव-प्रध्वंसाभाव- अत्यन्ताभाव-अन्योन्याभावश्चेति चतुर्विधः ।

कणादिनापि ग्रन्थरचनायां उद्देश-लक्षण-परीक्षा पद्धति अनुसृता । एवं विषयप्रतिपादनावसरे प्रथमतः विषयस्य उद्देशं प्रस्तुय अनन्तरं तस्य लक्षणम् उपन्यस्य अन्ते विषयपरीक्षा कृता । नाममात्रेण वस्तुसंकीर्तनं भवति उद्देशः । यथा द्रव्यगुणादयः षट् पदार्थाः इति । एवं पदार्थानां नाममात्रेण निर्देशनम् उद्देशः इति व्यवहारः ।

असाधारणधर्मस्य निर्देशनं लक्षणमिति । 'यथा गन्धावती पृथ्वी' इत्यत्र पृथिव्याः असाधारणधर्मः यः गन्धः तेन लक्षणेन पृथ्वी साधिता भवति । लक्षिते पदार्थे लक्षणं युक्तं भवति वा न वेति या विचारणा क्रियते, सा परीक्षा इत्युत्यते ।

''क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्''[99] पदार्थाः षष्ठि प्रकारेण भिन्नाः सन्ति । एतेषां सर्वेषां साक्षाद परम्परया वा आश्रयभूतं द्रव्यमेव भवति । गुणानां कर्मणां च आश्रय-द्रव्यमेव द्रव्याश्रयत्वेनेव विशेषस्यापि निरूपणं क्रियते । समवायस्तु एक साक्षाव अपरत्र क्रियते । समवायस्तु एक साक्षात् अपरत्र गुणाक्रियादिषु परम्पराश्रयत्वेन द्रव्यमन्वेति । तस्माद पदार्थेषु द्रव्यस्य प्रथमस्थानं कृतं कणादेन ।

द्वितीयं स्थानं गुणस्य यतः गुणास्तु द्रव्यधर्माः भवन्ति । सर्वद्रव्येषु कर्म न भवति इति कृत्वा कर्म तृतीयत्वेन व्यवह्रियते । आकाश काल-दिगात्मसु कर्म सिध्यति । कणादेन षडेव पदार्थाः इति उक्तम् । षट्पदार्थानितिरिक्त्य अभावोऽपि एकः पदार्थः अस्तीति इति उत्तरवार्तिभिः वैशेषिकैरुक्तम् । कणादः भावपदार्थानां विचारमेव करोति नत्वभाव-पदार्थस्य ।

द्रव्याणि - ''क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्''
''पृथिव्यप्तेजोवाय्वाकाशम् कालोदिगात्ममन''[100] इति द्रव्याणि ।
पृथ्वी रूपरसगन्ध-स्पर्शवति पृथ्वी'' इति पृथ्वी लक्षणम् । नित्यानित्य-भेदेन पृथिवी द्विविधा । नित्या परमाणुरूपा अनित्या कार्यरूपा च ।

अप् - आप्त्व समान्ययुक्ता आपः इति आपः लक्षणमुक्तम् ।
अपः संख्या-परिणाम-पृथक्त्व- संयोग-विभाग परत्व-अपरत्व-वेग द्रवत्व आदि नवगुणाः वर्तन्ते ।

तेजः- नित्यानित्यभेदेन तेजः अपि द्विधा विभाज्यते । कार्यरूपं तेजः पुनः त्रिधा अपि द्विधा विभाज्यते शरीर-इन्द्रिय-विषयभेदेन । भौम-दिव्य-औदर्य-आकरजादि भेदेन विषयस्य चत्वारः अवान्तर भेदा अपि सन्ति । भौम-तेजः काष्ठाग्निः, दिव्यं तेजः विद्युत् औदर्यं तेजः जाठराग्निः, आकरजं तेजः सुवर्णादि च ।

वायुः- 'वायुत्वाभिसम्बन्धवान् वायुः । वायोः अष्टसामान्यगुणाः अपि वर्तन्ते । तद्यथा - संख्या-परिणाम-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-वेगादि भेदेन ।

वायुरपि नित्यानित्यभेदेन द्विधा । कार्यरूपो वायुः शरीर-इन्द्रिय-विषय प्राणभेदेन चतुर्धा वर्तते ।

आकाशः- ''शब्दगुणकम् आकाशम्' इति आकाशस्य लक्षणम् । तर्कसंग्रहे शब्द-संख्या- परिमाण-पृथक्त्व-संयोग-विभागादि गुणाः आकशस्य वर्तन्ते । एतेषु शब्दो विशेषगुणः शेषाश्च च समान्यगुणाः ।

कालः:— 'अतीतादि व्यवहारहेतुः कालः'' इति लक्षणम् । नित्य-पदार्थानां अभाव तथा अनित्यपदार्थानां कारणं काल इति । (नित्येष्व-भावादनित्येषु भावात् कारणे कालाख्येति ) ।

काल निरवयवत्वात् स्वतः नित्यः तथा एकश्च । किन्तु अखिल-पदार्थानां आधारभूतत्वात् कालस्य भूत-भविष्यत् -वर्तमान- इत्येवं रूपेण विभागाः कल्प्यन्ते । वर्तमानादयो वस्तुतः कार्यस्य विशेषणानि नतु कालस्य । लोकव्यवहारे समयस्य सूचनाय कालस्य कल्पना क्रियते । अतः कालस्य औपाधिकविभागाः भवन्ति भूत-वर्तमान-भविष्यदादयः ।

दिक् -- प्राच्यादिव्यवहारादहेतुर्दिक् इति । निरवयवत्वात् स्वतः नित्या तथा मूलतः एका च । किन्तु उपाधि भेदेन दिक् दशधा विभज्यते । पूर्व-पश्चिम-दक्षिण-उत्तर-अग्निकोण-नैर्ऋत्यकोणवायव्यकोण-ईशानकोण-ऊर्ध्व अधोक्रमेण ।

आत्मा- आत्मा एकं स्वतन्त्रद्रव्यं भवति । 'ज्ञानाधिकरणमात्मा' इति । तर्कसंग्रहे आत्मनः लक्षणमुक्तम् । 'आत्मत्वाभिसम्बन्धवान् आत्मा' इति तर्कभाषायाम् । आत्मनः असाधारणगुणस्तु न चैतन्यमेव । चैतन्यस्य आश्रयभूतं द्रव्यं भवति आत्मा । ''प्राणापाननिमेषोन्मेषजीवनामनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिंगानि'' इति ।

आत्मा द्विधा-जीवात्म-परमात्माभेदात् जीवात्मा अनित्यः, शरीरभेदेन अनन्तश्च । परमात्मा नित्यः एकश्च । जीवात्मनः संख्या-परिणाम-पृथक्त्व - संयोग-विभागक्रमेण पञ्च सामान्यगुणाः, तथा बुद्धि-सुख-दुःख-इच्छाद्वेष-प्रयत्न-भावना-धर्म-अधर्म-क्रमेण आहत्य नवविशेषगुणाः आहत्य चतुर्दश गुणाः सन्ति ।

मनः- मनस्त्वाभिसम्बन्धवान् मनः इति । विश्वनाथपंचाननः भाषा-परिच्छेदे 'साक्षात्कारे सुखादीनां करणं मन उच्यते इत्येवं क्रमेण मनसो लक्षणमुक्तवान् । मनसः संख्या-परिमाण पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-वेग क्रमेण अष्टै सामान्यः गुणाः सन्ति । वैशेषिकमतानुसारेण प्रत्येकं शरीरे एकं मनः अणुरूपेण विद्यते । अतः मनः निरवयवं अणुरूपं च । मनस्तु एकम् अन्तरिन्द्रियं भवति । मनसा आत्मा विषयान् गृह्णाति ।

गुणाः - समवायिकारणासमवेतत्वे सति असमवायिकारणाभिन्नसमवेतत्वेन साक्षात् व्यापकसत्ताका या सा गुणत्वेन कथ्यते । यदि लक्षणे साक्षात् व्यापकसत्ताका इति पदं न दीयते तर्हि ज्ञानत्वे अतिव्याप्तिः । यतः समवायिकारणं यद्द्रव्यं तस्मिन् ज्ञानत्वं समवायसम्बन्धेन न तिष्ठति । अतः समवायिकारणासमवेतत्वं ज्ञानत्वमिति सिद्धम् ।

चतुर्विंशति गुणाः वैशेषिकसूत्रानुसारं भवन्ति । यथा रूप-रस-गन्ध-स्पर्श-शब्द-संख्या-परिमाण-पृथक्त्व-संयोगः-विभाग-परत्व-अपरत्व-गुरुत्व-द्रवत्व-स्नेह-संस्कार-बुद्धि-प्रयत्न-सुख-दुःख इच्छा-द्वेष-धर्म-अधर्म चेति ।

कर्म - चलनात्मकं कर्मेति तर्कसंग्रहे कर्मलक्षणम् । या नित्यपदार्थे समवायसम्बन्धेन न तिष्ठति एवं साक्षात् व्यापकसत्ताका या जातिः तत्कर्मेत्युच्यते । नित्यद्रव्येषु आकाशपरमाण्वादिषु समवायसम्बन्धेन उक्तलक्षणं तिष्ठतीति अतिव्याप्तिदोष-परिहाराय नित्यासमवेतत्वमिति पदं दत्तम् । यतः कर्म कस्यापि द्रव्यस्य नित्यं न भवति । अतः कर्मत्वजातिः नित्यासमवेता इति साक्षात् व्यापकसत्ताका भवति ।

सामान्यम् - ''अनुवृत्ति प्रत्ययहेतुः सामान्यम् इति तर्कभाषायाम् । नित्यत्वे सति अनेकेषु समवायसम्बन्धेन वर्तमानत्वं सामान्यमिति । यथा गोत्वादयः । तत्र सामान्यं द्विविधम्-परमपरं च । द्रव्यगुणकर्मसु समवायसम्बन्धेन वर्तमाना या सत्ता सा परसामान्यसंज्ञा भवति । द्रव्यगुणादिषु अल्पदेशत्वेन वर्तमाना अपरसामान्या इति कथ्यते ।

विशेषः - नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः'' इति तर्कसंग्रहे' ( मू० 176) 'विशेषो नाम अन्योन्याभावविरोधि-सामान्यरहितः समवेतः [101] ।।'' द्रव्यगुणकर्माणि सामान्यं विना न तिष्ठन्तीति कृत्वा तद्व्यावृत्त्यै सामान्यभिन्नमिति विशेषण द्रव्यत्वादयः सामान्ययुक्ताः भविष्यन्ति तथा समवेतविशेषणेन समवायस्य व्यावृत्तिः भवति ।

समवायः - 'अयुतसिद्धयोः सम्बन्धः समवायः'' इति समवायलक्षणम् । 'स्वाश्रयोभयाश्रयावत्काल वृत्तित्वाश्रयापराश्रितस्वाश्रयैक्कद्वित्वा श्रयत्वम् अयुतसिद्धत्वम्'' इति नित्यसम्बन्धः समवायः इति तर्कसंग्रहे समवैति नित्यं सम्बध्नाति इति व्युत्पत्या नित्यसम्बन्धत्वम् समवायत्वम् इति । अयुतसिद्ध-सम्बन्धं समवायेत्युच्यते । घटे तथा घटत्वे समवायसम्बन्धम् एव वर्तते ।

युतसिद्धा(अनित्य) अनित्यसम्बन्धः संयोगइत्युच्यते । यथा अवयव-अवयविषु गुणगुणिषु-क्रिया-क्रियावत्सु जाति-व्यक्ति-आदिषु समवाय-सम्बन्धः दृश्यते ।

वैशेषिकः अभावस्य भावप्रतियोगित्वं कल्प्यते । अभावः द्विविधा- संसर्गाभावः, अन्योन्याभावश्च । पुनः संसर्गाभावः, प्रागभावः प्रध्वंसाभावः, अत्यन्ताभावः इति त्रिविधः ।

उत्पत्तेः पूर्वं कार्यस्य योऽभावः स एव प्रागभावः । घटोत्पत्तेः पूर्वं घटाभावः सादिरनन्तः प्रध्वंसः । उत्पत्त्यनन्तरं कार्यस्य' प्रध्वंसाभावः (तर्कसंग्रहे 179) घटविनाशानन्तरं तस्य अभावः ।

[102] त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः' इति । अत्यन्ताभावे वस्तुनः अभावो न किन्तु अस्य संसर्गस्य(समवायस्य) अभावः एव दृश्यते ।

''तादात्म्यसम्बन्धावच्छिन्न प्रतियोगिताको अन्योन्या भावः'' इति अन्योन्याभावस्य लक्षणम् । एकवस्तुनि अन्यवस्तुनः अभावः अन्योन्याभावः इत्याख्यायते ।

वैशेषिकदर्शने आत्मा अचेतनएव । यतः चैतन्यं आत्मनः आगन्तुकगुणः । अतः वैशेषिकाः आत्मनः चेतनत्वं खण्डयन्ति ।

न्यायदर्शनवत् वैशेषिकदर्शने अपि आरम्भवादश्च (असत्कार्यवादस्य) समर्थनम् विद्यते ।'' कार्योत्पादकं कारणत्वम्'' इति वैशेषिकानां राद्धान्मः । कारणं त्रिधा-

(अ) समवायिकारणम् ( ब) असमवायिकारणम्, (स) निमित्तकारणम् च। वैशेषिकमते परमाणोः नित्यंत्वं सत्यंत्वं च अतः परमाणुषु उत्पन्नं जगदपि सदेव ।

वैशेषिकाणां सृष्टिप्रक्रिया परमाणुषु आश्रिता। अतः वैशेषिकाणां सृष्टिप्रक्रिया ''परमाणुवादः' इत्युच्यते ।

''सप्तपदार्थानां सम्यग्ज्ञानेन भवति पुरुषार्थः'' अत्रेयं शंका उदेति, यत्र अभावेन वस्तुनिषेधः क्रियते नतु वस्तुनः प्रतिपादनम्' कथमयं पुरुषार्थहेतुरिति । अस्य समाधानम् - सर्वेषां मोक्षः परमपुरुषार्थः । ''दुःखात्यन्तोच्छेदः मोक्षः'' इति श्रुतेः स्वरूपम् । अत्यन्तोच्छेद इति पेदन अत्र अभाव स्वीकृतः । तस्मात् अभावः स्वयं पुरुषार्थस्वरूपः इति हेतोः अस्य आत्मभावस्य विवेचनं युक्तियुक्तमेव इति वैशेषिकाणां मतम् ।

## 144 भामती प्रस्थानानुसारं वैशेषिकमत समीक्षणम् ।

### परमाणुकारतावादखण्डनम्

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' (ब्र.सू.2.2.1.11) इत्यस्य सूत्रस्य भाष्ये भगवत्पादः शंकराचार्यः न्यायवैशेषिकसम्मतं 'परमाणुकारणतावादम्'[103] निराकरोति । पूर्वपक्षरूपेण वैशेषिकाणाम् अभ्युपगमः तेन एवं प्रस्तूयते -

(1) '' कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते, शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात् तद्विपर्ययादर्शनाच्च । तस्मात् चेतनस्य ब्रह्मणो जगत्कारणत्वे अभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात्, तददर्शनात् न चेतनं ब्रह्म जगत्कारणं भवितुमर्हति इति ।'' वैशेषिकाणाम् अभ्युपगमस्य निराकरणं भगवत्पादेन शंकरेण एवं कृतम् -

यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते महद्दीर्घं च त्र्यणुकादि न परिमण्डलम्, यथा वा द्व्यणुकादणोह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते नाणु नो ह्रस्वम्,[104] इति । तथा च - ''यथा चादिसर्गे निमित्ताभावात्संयोगोत्पत्त्यर्थं कर्म नाणूनां संभवत्येवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां संभवेत् । नहि तत्रापि किंचिन्नियतं तन्निमित्तं दृष्टमस्ति ।[105] अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थमित्यतो निमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म, अतश्च संयोगविभागाभावात् तदायत्तयोः सर्गप्रलययोरभावः प्रसज्येत । तस्मात् अनुपपन्नोऽयं परमाणुकारणवादः ।''

अत्र वाचस्पतिमिश्राः भामन्याम् एवं कथयन्ति - 'कारणगता गुणा न कार्ये समानजातीयं गुणान्तरम् आरभन्ते इत्येतावन्नैवप्रसिद्धौ न तत् हेत्वनुसरणे खेदनीयं मनः इति ------- न च परिमाणान्तरारम्भे व्यापृतता परिमाण्डल्यादीनां न च कारणबहुत्वादीनां सन्निधानात् असन्निधानं च पारिमाण्डल्यस्य[106] ।

''ननु अभिघातादयः प्रलयारम्भसमये कस्मात् विभागारम्भा-

कर्महेतवो न संभवन्ति इत्यत आह (भाष्यकारः) - नहि तत्रापि किंचित् नियतमिति । संभवन्ति अभिघातादयः कदाचित् क्वचित्, नत्वपर्यायेण सर्वस्मिन् नियमहेतोरभावादित्यर्थः[107] ।

अत्र वेदान्तकल्पतरुकारः अमलानन्दः स्पष्टयति यत् 'प्राक् प्रलयात् अभिघातादीनां हेतुत्वसम्भावादित्यर्थः । सर्वस्मिन् अणौ अपर्यायेण अभिघातादयोः न सम्भवन्ति । हेतुमाह( वाचस्पतिः ) नियमेति, सत्यपिरप्रयोजनकस्तस्मिन् पृथिव्यादिलयः पृथिव्यादौ शरीरादिलयादेषु दुःखच्छेदसिद्धौ ।

वैशेषिकैः एतत्प्रतिपाद्यते यत् परमाणुभिः जगतः आरम्भः भवति । अस्य सिद्धान्तस्य विपरीतं वेदान्तिनः एतत् उत्पन्तौ कथं समर्थाः स्युः ? अदृष्टमपि अस्य जगतः नियामकत्वेन स्वीकर्तुं न शक्यते । परमाणुषु प्रथमसंयोगस्य कृते यदि स्वाभाविकी गतिशीलता स्वीक्रियेत, तर्हि तेषु गति-हीनता प्रलयकालेऽपि न स्यात् । एवं सति च प्रलयः न स्यात् । अतः अद्वैतिनां मतानुसारं न्यायवैशेषिकाणां परमाणुवादः न समीचीनः[109] ।

अद्वैतवेदान्तिनां मते कार्यकारणयोः अनन्यत्वं दृश्यते । नेदं कारणम् एव कार्यं इति कार्य-कारणयोः अभेदः । अपितु कारणम् एव कार्य-रूपेण प्रकाशते इति कार्यस्य कारणव्यतिरेकेण अभावः इति । तथा च भाष्यकारः - ''कारणात् अनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते नाभावे । तद्यथा सत्यां मृदि घट उपलभ्यते सत्सु च तन्तुषु पटः - भामतीकारः वाचस्पतिमिश्रः एकमुदाहरणं दर्शयित्वा वेदान्तमतं स्पष्टयति । - 'पट इति हि प्रत्यक्षबुद्ध्या तन्तव एवातानवितानावस्था आलम्ब्यन्ते, नतु तदतिरिक्तः घटः प्रत्यक्षमुपलभ्यते । एकत्वं तु तन्तूनामेकप्रावरणलक्षणार्थ क्रियावच्छेदाद्बहूनामपि । यथैकदेशकालावच्छिन्ना धवखदिरपलाशादयो बहवोऽपि वनमिति'[111] अर्थात् तन्तूनाम् अवस्थाविशेष एव पटः इति ।

तन्तुतः भिन्नं पट-नामकं वस्तु नास्ति । सांख्यादयः पटादीनां सत्यत्वं वेदान्तिनः तेषां मिथ्यात्वं च मन्वते ।

एवं दधिघटकङ्कणकादधार्थिभिः क्षीरमृत्तिकासुवर्णादीनि प्रतिनियतानि कारणानि उपादीयन्ते । प्राक् कार्यस्य कारणे असत्वे नैतत् उत्पद्येत ।

1 4 4(2) मोक्षस्वरूपसमीक्षणम्
-----------------------------

निरतिशयसुखावाप्तिः शोकनिवृत्तिश्च मोक्षः । सुखं हि द्विविधम् - सातिशयं, निरतिशयं च । सातिशयं सुखं स्रक्चन्दनादिविषय-सम्बन्धजनितान्तःकरणवृत्तितारतम्यकृतः आनन्दलेशस्य आविर्भावविशेषः । निरतिशयसुखं च ब्रह्मैव । तद्यथा - आनन्दो ब्रह्मेति व्यजानात् विज्ञानम्[112] आनन्दं ब्रह्म[113] 'यदेष आकाशः आनन्द[114] इत्यादि । एवं निरतिशयानन्दात्मक-ब्रह्मावाप्तिः एव मोक्षः ।

'ब्रह्मैव सन् ब्रह्माप्येति[115] ' स वा एष महानज आत्मा अजरोऽमृतो[116] ब्रह्म' ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' 'आत्मैवेदं सर्वम्[117] ' इत्यादि श्रुतयः मोक्षसाधनपरकाणि भवन्ति ।

मोक्षसाधने कः कर्मणामुपयोगः इत्यत्र भामतीप्रस्थाने विवरणप्रस्थाने च मतभेदाः सन्ति । भामतीपरिस्थितानां मते कर्मणां विविदिषार्थत्वम् विवरणपरिस्थितानां मते कर्मणां विद्यार्थत्वम् । 'तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति श्रुतिवाक्यमत्र प्रमाणम् । अत्र यज्ञादीनां विविदिषार्थत्व-पक्षः भामतीकारसम्मतः । विवरणकारस्तु कर्मणां विद्यार्थत्वं वदन्ति ।

ब्रह्मणः अपरोक्ष साक्षात्कारादेव मोक्ष इति अद्वैतिनः । तस्मिन् निदिध्यासने ब्रह्मसाक्षात्कारे श्रवणमननानि निदिध्यासनानि अन्तरंग-साधनानि । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' इति बृहदारण्यकश्रुति अत्र प्रमाणत्वेन स्वीक्रियते । श्रवणमनननिदिध्यासनानां मध्ये

निदिध्यासनम् अंगि अपरे अंगभूते इति भामतीप्रस्थानः । श्रवणमंगि अपरे अंगभूते इति विवरणानुयायिनः ।

1 4 4 (ख) आत्मस्वरूपसमीक्षणम्

आत्मनः स्वरूपस्य विषये दार्शनिकानां मतभेदाः सन्ति । तद्यथा ब्रह्मसूत्रशांकरभाष्ये - 'देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यातिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे'[118] ।

अद्वैतवेदान्तिनां मतानुसारं जीवब्रह्मणोः ऐक्यमस्ति । आत्मा सच्चिदानन्दरूपः, नित्यः, शाश्वतः, कूटस्थः, नित्यमुक्तः, सर्वभूतेषु एकः । तद्यथा -एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः समीश्चेता केवलो निर्गुणाश्च '[119] ब्रह्मणः निर्गुणात्वात् आत्माऽपि स्वरूपतः निर्गुणः सुखादुःखादिरहितश्च वर्तते । तथापि उपाधियोगात् सगुणः इव प्रतीयते । आत्मनः कर्तृत्वभोक्तृत्वमपि नास्ति तथापि मनः प्रभृतीनां कर्तृत्वभोक्तृत्वादिकमात्मनि आरोप्य आत्मा कर्ता भोक्ता इत्यारोप्यते । अतः नित्यस्य आत्मनः कर्तृत्वभोक्तृत्वादिकम् आध्यासिकं नतु पारमार्थिकम् । यथा जपाकुसुमसन्निधिवशात् स्फटिके लौहित्यं प्रतीयते तद्वत् अन्तःकरणसन्निधिवशात् आत्मनि कर्तृत्वम् अध्यस्यते ।

स चात्मा विभुः, भूमास्वरूपः सर्वभूतः, देशकालादि परिच्छेदशून्यः, आकाशवत् सर्वव्यापी । नहि कूटस्थस्य नित्यस्य आत्मनः विकारः सम्भवति । आत्मनः विकारस्वीकार श्रुतिविरोधश्च स्यात् । ''पुरुषो हि विनाशहेत्व-

हेत्वभावाद् अविनाशी विक्रियहेत्वभावाश्च कूटस्थनित्यः । अत एव नित्य-शुद्धबुद्धमुक्तस्वभावः[120] ।

जीवस्य ब्रह्माभिन्नत्वात्, तत्वमस्यादिवाक्यैः जीवब्रह्मणोः त्रैकालिकैक्यप्रतिपादनात् ब्रह्माभिन्नस्य जीवस्य नित्यत्वम् । 'तत् सृष्टवा तदेवानुप्राविशत् इत्यादि श्रुतौ च अद्वयस्य ब्रह्मणः स्वरूपेण एव बुद्धयो जीवरूपेण प्रवेशश्रवणात् ।

'योऽयं विज्ञानमयः' 'प्रज्ञानघन एव' इत्यादि श्रुतयः आत्मनः चिद्रूपत्वं प्रतिपादयन्ति । चिद्रूपस्य एव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात्, नित्यत्वात् च आत्मा चिद्रूपः । तथा च सूत्रम् - 'ज्ञोऽत एव[123] 'विज्ञानमानन्दं ब्रह्म' 'सत्यज्ञानमनन्तं ब्रह्म इत्यादि श्रुतयः परमात्मनः चैतन्यस्वरूपत्वं श्रावयति । चिद्रूपत्वात् आत्मा स्वयं ज्योतिः भवति । तद्यथा श्रुति 'अत्रायं पुरुषः स्वयं-ज्योतिः[124] इति । यथोक्तं चित्सुखाचार्येण तत्त्वप्रदीपिकायां -

''चिद्रूपत्वादकर्मत्वात् स्वयं ज्योतिरिति श्रुतेः ।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः ।।[125]''

रामानुज- मध्वाचार्य-निम्बार्कादीनां वैष्णवेदान्तिनां मते जीवात्मा परमाणुस्वरूपः, जैनानां मते जीवात्मा देहपरिमाणः । अद्वैतवेदान्तिनां मते जीवः ब्रह्मणः अभिन्नः । ब्रह्म च आकाशवद् भूमास्वरूपम् विभुरूपं वा इति जीवात्मा अपि विभुरूपः । न तावत् जैनसम्मतम् आत्मनः देहपरिमाणत्वं स्वीकरणीयम् । वैष्णववेदान्तिनां मते आत्मा अणुपरिमाणः । तत्र च 'एषोऽणु-रात्मा चेतसा वेदितव्यः[127]'' अत्र 'बालाग्रशत भागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेयः[128] इत्यादि श्रुतिवाक्यानि प्रमाणत्वेन उपन्यस्यन्ते । अपि च श्रुतौ जीवात्मनः देहात् उत्क्रान्तिः, लोकान्तरगतिः इहलोके आगतिः - इत्यादिकं सविशदं वर्णितम् । तद्यथा - 'तेन प्रद्योतेन एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः[129] ।

अत्रोच्यते - जीवात्मनः अणुपरिमाणत्वे तेन शरीरं व्याप्य अवस्थितिः न सम्भवेत् इति तदीयधर्मस्य चैतन्यस्यापि सर्वशरीरे उपलब्धिर्न स्यात् । चैतन्यस्य सर्वशरीरं व्याप्य उपलब्धिः । तत्र धर्मस्य धर्मिव्यतिरेकेण स्थित्यभावात् आत्मनः सर्वशरीरव्यापित्वं स्वीकरणीयम् ।

यद्यपि श्रुतौ क्वचित् क्वचित् आत्मनः अणुपरिमाणत्वं दृश्यते, तथापि आत्मनः विभुत्वम् एव भूयशः अभ्यस्तम् । 'स वा एषा महानज आत्मा' (सत्यं ज्ञानमनन्तं ब्रह्म') आकाशवत् सर्वगतश्च नित्यः' 'नित्यं विभुं सर्वगतम्' इत्यादयः श्रुतयः जीवस्य विभुत्वं समर्थयन्ति । तस्मात् आत्मनः अणु-परिमाणत्वम् अपि न स्वीकरणीयम् इति तस्य विभुपरिमाणत्वमेव अभ्यु-पगन्तव्यम् । अवशिष्टे हि उत्पत्तेः प्राक् सर्वस्य सर्वत्रासत्वे कस्मात् क्षीरादेव दधिः उत्पद्येत, मृत्तिकायाः एव च कथं घट उत्पद्येत न क्षीरात्? तस्मात् स्वीकरणीयः कार्यस्य कारणे सत्भावः ।

नन्वेवं सति कारकव्यापारस्य अनर्थकत्वं प्रसज्येत । यथैव हि प्राक्-सिद्धत्वात् कारणस्वरूपसिद्धये न कश्चित् व्याप्रियते इति चेत् । न, कार्या-कारेण कारणं व्यवस्थापयतः कारकव्यापरस्य अर्थवत्त्वोपपत्तेः । कार्याकारः अपि कारणस्य आत्मभूतः, अनात्मभूतस्य आरभ्यत्वायोगात् । नच विशेष-दर्शनमात्रेण वस्तुनः भेदः स्वीकरणीयः । तस्मात् कार्यस्य कारणे सद्भावः नानुपपन्नः । अस्मिन् विषये सांख्यैः सह अद्वैतिनां मतभेदः नास्ति । परन्तु सांख्याः कारणस्य इव कार्यस्यापि सत्यत्वं स्वीकुर्वन्ति । अद्वैतिनां मते नु कार्यम् अनृतम्, कारणम् एव सत्यम् । अतः सांख्यानांमते सत्कार्यवादः/ वेदान्तिनां मते च सत्कारण-वादः इत्युच्यते ।

<u>समाहारः</u>- उपर्युक्तप्रकारेण स्वत स्पष्टं भवति यत् न्यायवैशेषिकसम्बद्धानां अधिकतर सिद्धान्तनां सामंजस्यम् अद्वैतवेदान्तसिद्धान्तैः सह न भवति । न्यायवैशेषिकाणां कार्य-कारण सिद्धान्तः, परमाणुवादः समवायसिद्धान्तः, जातिसिद्धान्तश्च भगवताभाष्यकारेण तथा भामतीकारेण वाचस्पतिमा अन्यैः भामतीप्रस्थानानुयाभिः आचार्यैः निराकृताः ।

## 1 5 0 सांख्ययोगदर्शनं

---

आस्तिकदर्शनेषु सांख्यदर्शनम् अत्यन्तप्राचीनं भवति । उपनिषत्स्वपि सांख्यसिद्धान्ताः दृश्यन्ते । किं च मनुस्मृतिसप्तशेषु ग्रन्थेष्वपि सांख्यसिद्धान्तानुसारेण सृष्टिप्रक्रिया वर्णिता दृश्यते । द्वादशाध्याये सांख्यशास्त्राभिमताः त्रयो गुणाः त्रीणि प्रमाणानि अन्ये च सिद्धान्ता निरूपिताः वर्तन्ते । तद्यथा - ''

'' सत्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान् ।
यैर्व्याप्येमान् स्थितोभावान् महान् सर्वानशेषतः ।।'' [31]
प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सिता ।।'' [32]

महाभारतस्य शान्तिपर्वण्यपि सांख्यदर्शनस्य मुख्यासिद्धान्ताः समुल्लिखिता दृश्यन्ते । एवंप्रकारेण सांख्यदर्शनस्य श्रुति- स्मृति-गीता महाभारताद्यपेक्षया प्राचीनत्वं सिद्ध्यति ।

## 1 5 1 सांख्य साहित्यम्

---

महामुनिः कपिलः आध्यात्मिक-आधिभौतिक-आधिदैविक इति त्रिविधदुःखानां निवारणार्थं तथा परमपुरुषार्थस्य साधनत्वेन तथा प्रकृतिपुरुषाविवेकज्ञानाय पंचविंशति तत्वानि स्वशिष्यम् आसुरिं प्रति उपदिदेश । आसुरिः पंचशिखाचार्यम् उपदिदेश । अनन्तरम् ईश्वरकृष्णाः मुमुक्षूणां कृते सांख्यसिद्धान्तान् संक्षेपेण सांख्यकारिकायां निर्दिष्टवान् ।

सांख्यशास्त्रानुसारं प्रकृतिपुरुषाविवेकज्ञानाम् कैवल्यं सिद्ध्यति । सांख्यशब्दः गणनां, ज्ञानं वा सूचयति । गणनावाचक संख्याशब्दादेव सांख्यशब्दनिष्पत्तिः । संख्यायन्ते गण्यन्ते तत्वानि येन तद् सांख्यम् । अपि च- 'संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । तत्वानि च चतुर्विंशत्तेन सांख्याः प्रकीर्तिताः ।। [33]
तथा -

''दोषाणं च गुणानां च प्रमाणं प्रविभागतः ।
कंचिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम् ।। 134

सम्यग् ख्यानम् संख्या संख्येव सांख्यं प्रकृतिपुरुषविवेकात्मकं विशिष्टम् ज्ञानम्' इति व्युत्पत्या सम्यकज्ञानम् अर्थात् प्रकृतिः, पुरुषः महद, अहंकारः, मनः, पंचज्ञानेन्द्रियाणि, पंचमहाभूतानि इति एतेषां पंचविंशतितत्वानां यथार्थज्ञानमेव सांख्यदर्शनस्य प्रतिपाद्यम् ।

पंचविंशतितत्वानां यथार्थज्ञानं बिना मोक्षः न प्राप्यते इति सांख्याः मन्वते । श्रीशंकराचार्यः 'विष्णुसहस्र नाम इत्यस्य ग्रन्थस्य भाष्ये सांख्यस्य तात्पर्यम् एवं वर्णयति - 'शुद्धात्मतत्वविज्ञानं सांख्यमित्यभिधीयते' इति । मत्स्यपुराणे अपि एवं दृश्यते - '' सांख्यं संख्यात्मकत्वाश्च कपिलादिभिरुच्यते'' इति । देवतीर्थस्वामिनः मतानुसारं '' सम्यक् क्रमपूर्वकं ख्यानं कथनं यस्याः सा संख्या क्रमपूर्वकविचारणा, तामधिकृत्य कृतं शास्त्रं सांख्यम्'' इति ।

सांख्यकारिकोपरि माठराचार्यः 'माठरवृत्तिम्' गौडपादाचार्यः 'गौडपादभाष्यम्', नारायणस्वामीतीर्थः 'सांख्यचन्द्रिकाम्', श्रीस्वामी शंकराचार्यः जयमंगलाम् तथा युक्तिदीपिकाम् च रचितवन्तः । एतेषु माठरवृत्तिः अत्यन्तप्राचीना इति कथ्यते ।

नवमशताब्दे षड्दर्शनवल्लभेन वाचस्पतिमिश्रेण सांख्यकारिकोपरि 'तत्वकौमुदी' नाम्नी विस्तृता टीका रचिता । आधुनिकटीकानां मध्ये बलरामोदासीनस्य 'विद्वन्तोषिणी' तथा श्रीकृष्णवल्लभाचार्यस्य 'किरणावली' च प्रसिद्धाः सन्ति ।

1 5 2 सांख्यदर्शनपरकः सेश्वरत्वनिरीश्वरत्वमिर्शः

''सांख्याः निरीश्वराः केचित् केचिदीश्वर - देवताः'' -इत्यनुसारेण सांख्यदर्शनस्य द्वौ विभागौ स्तः । सेश्वरनिरीश्वर-भेदेन । सेश्वरसांख्ये ईश्वरस्य जगन्नियन्तृत्वं, सेश्वरत्वं, सर्वव्यापकत्वं च कल्प्यते । उपनिषत्सु सांख्यदर्शनस्य यत् स्वरूपम् उपलभ्यते, तत् सेश्वरसांख्याम् इति उच्यते ।

किन्तु ईश्वर कृष्णद्वारा रचितायां सांख्यकारिकायां वर्णितं सांख्यं निरीश्वरमेव । निरीश्वर सांख्यानां मते सृष्टौ ईश्वरस्य आवश्यकता नास्ति । यथा मनुष्यशरीरात् केशलोमादयः उत्पद्यन्ते, तथैव प्रधानात् जगदुत्पद्यते इति सांख्यानां सिद्धान्तः । अतः सृष्टिप्रक्रियायाम् ईश्वरस्य आवश्यकता नास्ति । एतद् प्रतीयते यत् कपिलादारभ्य वार्षगण्यपर्यन्तं सर्वे आचार्याः ईश्वरवादिनः आसन् । किन्तु निरीश्वरसांख्यपरम्परा ईश्वरकृष्णात् आरब्धा । तस्य मते अचेतनं प्रधानं पुरुषस्य हिताय प्रवर्त्तते । यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्त्तते, यथा च जलमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्त्ते इति । ईश्वरस्य जगतः उपादानकारणत्वं, निमित्तकारणत्वं च कर्तुं न शक्यते। अपरिणामित्वात् उपादानकारणत्वं न युक्तम् । अचेतना प्रकृतिः चेतनस्य पुरुषस्य प्रयोजनाय प्रवर्त्तते । अतः सृष्टौ ईश्वरस्य निमितकारणत्वेनापि आवश्यकता नास्ति ।

परन्तु सेश्वरसांख्याः प्रकृति-पुरुषयोः संयोगाय ईश्वरम् अंगीकुर्वन्ति । तेषां मते प्रकृतिः जडेव । जडत्वात् पुरुष-प्रकृत्योः युगपत् प्रवर्तनं न युक्तम् ।

ईश्वरस्य विषये भामतीपस्थीनां मतमेवमस्ति यत् अन्तरकरणावच्छिन्नं चैतन्यं जीवः अविद्यावच्छिन्नं चैतन्यमीश्वरः इति ।

1 5 3 सांख्यशास्त्रीयं तत्वविवेचनम्

सांख्याचार्याः पंचविंशति तत्वानि स्वीकुर्वन्ति । पुरुष-प्रकृति-महत्-अहंकार मनः - पंचज्ञानेन्द्रियाणि- पंचतन्मात्राणि- पंचमहाभूतानि इति ।

पंचविशंति तत्वानि चतुर्षु वर्गेषु विभक्तानि वर्त्तन्ते । तद्यथा - केवलप्रकृतिः, केवलविकृतिः, प्रकृति- विकृतिः, प्रकृतिविकृतिरभिन्नम्र (अनुभयरूपं च) । प्रकरोति इति प्रकृतिः' इति व्युत्पत्या प्रकृतिः महदादि समस्ततत्वानां मूलकारणं भवति । अतः सा मूलप्रकृतिः इत्युच्यते ।

महत्- अहंकार- पंचतन्मात्राणि प्रकृति विकृतिरूपेण उभयकानि भवन्ति । महत् प्रधानाद उत्पद्यते, तथा स्वयम्र अहंकारमपि उत्पादयति । एवम्र अहंकारः महन्तत्वाव जायते तथा पंचतन्मात्राणि, एवम् एकादशेन्द्रियाणि चोत्पादयति । पंचतन्मात्राणि अहंकाराव उत्पद्यन्ते । पंचमहाभूतांश्च उत्पादयन्ति । अतः एतानि उभयात्मकानि ।

पंचज्ञानेन्द्रियाणि, पंचकर्मेन्द्रियाणि, पंचमहाभूतानि तथा मनश्च एतानि षोडशतत्वानि केवलं विकृतिः । यतः एतानि अहंकाराव उत्पदयन्ते । किन्तु स्वयम्र अन्येषां तत्वानां कारणं न भवन्ति । पुरुषः न प्रकृतिः नतु विकृतिः । अतः अनुभयात्मको भवति ।

चतुर्विंशंति तत्वानां विभागः अन्येषु त्रिषु रूपेषु अपि क्रियते । व्यक्त- अव्यक्त- ज्ञ भेदेन । महत्तत्वादारभ्य पृथ्वीपर्यन्तं त्रयोविंशति तत्वानि व्यक्तमित्यभिधीयन्ते । प्रकृतिः अव्यक्तः पुरुषश्च ज्ञ इत्युच्यते ।

पुरुषस्य संयोगात् अचेनाव प्रधानात् महत्तत्वं जायते । तस्य आन्तरिकं नाम बुद्धिः । बुद्धेः कार्यं तु अध्यवसायएव । सत्वगुणधिक्येन धर्म- ज्ञान- वैराग्य- ऐश्वमित्येते चत्वारः गुणाः उदयन्ति । किन्तु तमोगुणाधिक्ये सति अधर्म- अज्ञान- अवैराग्य- अनैश्वर्यम्र इति एते चत्वारो दोषाः जायन्ते । अहंकारस्य उत्पत्तिः महन्तवादेव । गुणाविषमतया अहंकारोऽपि त्रिधा- सात्विक- राजस- तामसभेदेन । तेषु सात्त्विकाव अहंकाराद पंचज्ञानेन्द्रियाणि, पंचकर्मेन्द्रियाणि मनश्च जायन्ते । राजसात् तामसाव अहंकारात् च पंचतन्मात्राणि उत्पद्यन्ते ।

सांख्यशास्त्रे सत्वरजतमोगुणानां साम्यावस्था भवति प्रकृतिः । सा अव्यक्तत्वात् मूलप्रकृतिरित्यपि उच्यते । सत्वगुणः सदा सुखजनकः, रजोगुणः दुःखात्मकः, तमोगुणश्च मोहात्मकः । एकैकोऽपि पदार्थः सुखदुःखमोहात्मकत्वेन तिष्ठति । यथा एका स्त्री स्वात्मगुणैः पत्युः सुखस्य कारणं भवति इत्यतः तस्यां सत्वगुणः शोभते । एवं सा एव सपत्नीनां प्रति दुःखकारणत्वेन तिष्ठति इति । एवमेव एकस्यामेव प्रकृतौ त्रयः गुणाः सन्ति ।

अत्रायं प्रश्नः उदेति यत् अचेतना इयं प्रकृतिः चेतनसाहाय्यं बिना महदादि कार्योत्पादने क्षमतां कथं प्राप्नोति? लोके अचेतनं चेतनं बिना न प्रवर्त्तते । यथा सारथिं बिना रथः स्वयमेव न चलति । अतः मूलप्रकृतेः प्रेरकत्वेन अधिष्ठाता सर्वार्थदर्शी एकः परमेश्वरः अभ्युपगन्तव्यः इति ।

किन्तु अस्य समाधानत्वेन सांख्याचार्याः एवं वदन्ति यत् अयं प्रश्नः न समीचीनः । कुतः इति चेत् चेतनसाहाय्यं बिना अचेतनस्य प्रवृत्तिः लोकेऽपि साधारणत्वेन दृश्यते । यथा वत्सस्य वृद्धये अचेतनस्य क्षीरस्य प्रवृत्तिः एवमेव चेतनसाहाय्यं बिना अचेतनो मेघः लोकोपकाराय जलवर्षणे प्रवृत्तो भवति । एवमेव त्रिगुणात्मिका अचेतना प्रकृतिरपि पुरुषस्य मुक्तये स्वयं प्रवृत्ता भवति।[133] यथा नर्तकी सुप्रीता भावलीलाविलासवती विविधालंकारशोभिता सती आत्मानं दर्शयित्वा नर्त्याद् निवर्तते, तथा प्रकृतिः पुरुषस्य समक्षम् आत्मानं प्रदर्श्य निवर्त्तते ।[134]

ननु यदि पुरुषोऽपरिणामी तर्हि तस्य मोक्षो न संभवति बन्धहेतुधर्मणां पुरुषेऽभावात् । अत एवास्य संसारोऽपि न भवितुमर्हति निष्क्रियत्वादिति कारिकायां यदुक्तं 'पुरुषस्य विमोक्षार्थं प्रधानं प्रवर्त्तते' इति तन्न युक्तमित्यत आह '- 'तस्मान्न बध्यतेऽद्धा ---- नाश्रया प्रकृतिः इति ।

भोगापवर्गयोः तत्फलानां च वस्तुतः प्रकृतावेव सत्त्वेऽपि प्रकृतिपुरुषयोर भेद-ज्ञानात् बन्धमोक्षसंख्यादीनि पुरुषे उपचर्यन्ते । पुरुषो बद्धः, पुरुषो मुक्तः, पुरुषः संसरतीति पुरुषे आरोपितं बन्धनादिकमाश्रित्य पुरुषस्य विमोक्षार्थं प्रधानं प्रवर्त्तते ।

सांख्यशास्त्रे मोक्षः आत्यन्तिकदुःखनिवृत्यात्मकः । आत्यन्तिक-दुःखनिवृत्तिस्तु प्रकृतिपुरुषविवेकज्ञानेन सिद्ध्यति । विवेकज्ञानं तु प्रकृतिज्ञानं बिना न जायते । अतः प्रकृतिज्ञानं प्रथमं सम्पादनीयम् ।

ईश्वरकृष्णः ' प्राप्ते शरीरभेदे चरितार्थत्वात् ---- कैवल्यमाप्नोति '' इति कारिकायां कैवल्यस्वरूपं प्रतिपादयति । व्यक्ताव्यक्तज्ञानानां विवेकेन तत्त्व-ज्ञाने जाते सति संचितकर्मणां दग्धतया बीजभावस्य विनाशात् प्रारब्धकर्मणां भोगेन प्रधाननिवृत्तौ पुरुषः आत्यन्तिकदुःखनिवृत्तिरूपं मोक्षं प्राप्नोति ।

। 54 सांख्यसम्मतस्य सत्कार्यवादस्य समीक्षणम् ।

''असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ।।''

ईश्वरकृष्णः अस्यां कारिकायां सत्कार्यवादं प्रतिपादयति । यदि कार्यमसत् स्यात्तर्हि कार्यस्य सत्त्वं साधयितुं न शक्येत, नहि कृष्णं रूपं शिल्पिसहस्रेणापि शुक्लं कर्तुं शक्यते । तस्मात् कारणव्यापारात् परमिव पूर्वमपि कार्यं सत् स्यात् । तथा च सतः कार्यस्यानभिव्यक्तस्य कारणव्यापारेणाभिव्युक्तिर्भवति, यथा दधि मन्थनेन नवनीतस्य, पीडनेन तैलस्य, अवघातेन धान्येषु तण्डुलस्य, दोहनेन सौरभेयीष्ठ पयसः अभिव्यक्तिर्भवति । तस्मात् कार्यं सत् इति सांख्याः ।

इह लोके यो यस्यार्थी सः तदुपादानग्रहणं करोति, यथा दध्यर्थी क्षीरस्यैव ग्रहणं करोति, तैलार्थी तिलानेव उपादन्ते, घटार्थी च कुलालो मृत्तिकामेवोपादत्ते । यदि च असत्कार्यं स्यात्तदा दध्यर्थी जलं गृह्णीयात्, तैलार्थी सिकताम् उपाददीत । घटार्थी तन्तूनाददीत, न तथा कुरुते कश्चित् । तस्मादुपादानग्रहणादपि ज्ञायते कारणे कार्यं सदस्तीति । सर्वेषां कार्याणां सर्वत्र सम्भवाभावात्, कारणेन सह सम्बद्धमेव कार्यमुत्पद्यते । सम्बन्धश्च सतोरेव भवति, नतु असतोः । कारणे असम्बद्धं कार्यं स्यात्तर्हि तन्तुभ्योऽपि घट उत्पद्येत । अतो यस्मिन् यत् सम्बद्धं वर्तते तस्मादेव तदुत्पद्यते ।

कार्यस्य कारणात्मकत्वादपि सत्कार्यम् । असत्त्वे हि सदसतोरभेदानुपपत्तिः । अपि च लोके यदात्मकं कार्यं तदात्मकं कारणं भवति, यथा व्रीहिभ्यो व्रीह्यः, तिलेभ्यः तैलम् च उत्पद्यते । तस्मात् कार्यस्य कारणभिन्नत्वात् कल्पयामो यत् कारणव्यापारानन्तरमिव कारणव्यापारात् पूर्वमपि प्रधाने महदादि कार्यं सद्रूपेण अस्तीति । तस्मात् सर्वथोपपन्नं कार्यं सदिति । एवं सांख्यशास्त्रे सत्कार्यवादस्य पंचकारणानि प्रतिपाद्यते ।

सांख्यप्रवर्तितः सत्कार्यवादसिद्धान्तः अद्वैतवेदान्तिभिः न स्वीक्रियते । अद्वैतवेदान्तिनां मते कार्यकारणयोरभेदः नास्ति । कारणम् एव कार्यरूपेण प्रकाशते । कारणव्यतिरेकेण कार्यस्याभावः । यत्र कार्यकारणयोः अनन्यत्वमुक्तं तत्रापि असौ एवार्थः ज्ञातव्यः यत् कारणव्यतिरेकेण कार्यस्य सत्ता नास्ति। अर्थात् कार्यकारणयोर्मध्ये कारणं सत्यं कार्यं तु आभासमात्रम् । कारणाद्भिन्नत्वे सति तस्यानृतत्वम् ।

अस्मिन् सन्दर्भे काश्चित् श्रुतयः अपि अद्वैतवेदान्तिभिः उद्धियन्ते
'सदेव सौम्येदमग्रमासीत् एकमेवाद्वितीयम्'
'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'

सांख्यैरिवाद्वैतिभिरपि एतत् स्वीक्रियते यत् उत्पत्तेः प्राक् कार्यस्य कारणे सद्भावः अस्तीति । किन्तु सांख्याः कारणस्यैव कार्यस्यापि सत्यत्वं स्वीकुर्वन्ति । अद्वैतवेदान्तिनां मते तु कारणमेव सत्यं कार्यम् तु अष्टतम् ।

'कार्यं' आकाशादिकं बहुप्रपंच जगत् । कारणं परं ब्रम तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते कुतः आरम्भण शब्दादिभ्यः । इति । शंकराचार्याः अभिप्रयन्ति[135] । भामतीकारेणापि अस्मिन् संदर्भे एवमेवोक्तम् यत् कार्यमसद् भवतीति । तद्यथा -

वाचारम्भणं विकारो नामधेयम् इत्यस्य व्याख्यानं कुर्वतः वाचस्पतिना उक्तं - वाचया केवलमारभ्यते विकारजातं न तु तत्त्वतोऽस्ति,यतो नामधेयमात्रमेतत् यथा पुरुषस्य चैतन्यं राहोः शिर इति विकल्पमात्रम्[136] । एवं प्रकारेण भामतीप्रस्थानां मतानुसारं सांख्यप्रवृत्तितः सत्कार्यवादः स्वीकार्य नास्ति ।

1.5.5 योगदर्शनम् साहित्यम्

भारतीयदर्शनेषु योगस्य अतीव महत्वं वर्त्तते । वस्तुतः योगस्य मान्यता व्यावहारिकदर्शनरूपेणापि अस्ति । युजिर् योगे इत्यस्मात् धातोः निष्पन्नोऽयं योग शब्दः, 'युज्यते अनेन इति योगः' इति व्युत्पत्या प्रथितो वर्त्तते । योगस्य अर्थः भवति - जीवब्रह्मणोः ऐक्यं, यत् योगशास्त्रे समाधिरिति शब्देनाभिधीयते । यथोक्तं भगवता पतंजलिना 'योगश्चित्तवृत्तिनिरोधः' इति । एवमेव च भाष्यकारः व्यासः कथयति - योगः समाधिः स सार्वभौमः चित्तधर्मः । ''. 37

योगस्य अन्येऽपि अनेके पर्यायाः दृश्यन्ते । तद्यथा-उपाय ध्यान-संगतियुक्त्यादयः । चित्तवृत्तिनिरोधः एव योगः । वृत्तयः पंचधा-प्रमाण-विपर्यय-विकल्प-निद्रा स्मृतयः । प्रत्यक्षानुमानागमा इति त्रीणि प्रमाणानि सन्ति । विपर्ययो नाम मिथ्याज्ञानमतद्रूपप्रतिष्ठम् इति । शब्दजन्यं ज्ञानं विकल्पः इत्युत्यते । निद्रा तु अभावप्रत्ययालम्बितावृत्तिरेव । अनुभूतविषयस्य ध्यानं स्मृतिरित्यभिधीयते । एतासां चित्तवृत्तीनां निरोधः अभ्यासेन वैराग्येण च भवति । चित्तस्य स्थिरावस्था अभ्यासः । ऐहिकपारलौकिक भोगेभ्यः विरक्तिः वैराग्यमित्युच्यते ।

योगदर्शनस्य प्रवर्तकः आचार्यः पतंजलिः । योगदर्शनं 'पातंजलदर्शनम्' इत्यपि अभिधीयते । पतंजलिप्रणीतं योगशास्त्रं पादचतुष्टयात्मकं भवति । तत्र प्रथमे समाधि पादे 'अथ योगानुशासनमिति योगशास्त्रारम्भस्योपक्रमं विधाय 'योगश्चित्तवृत्तिनिरोधः' इत्यादिना योगलक्षणमभिधाय समाधिं सप्रपंचं निरूपयति भगवान् पतंजलिः ।

द्वितीये साधनपादे' तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादीनि पंचबहिरंगानि साधनानि च विद्यन्ते । तृतीये विभूतिपादे देशबन्धश्चित्तस्य धारणेत्यादिना धारणाध्यानसमाधि त्रयमन्तः रंगं संयमपदवाच्यं तत्रावान्तरफलं विभूतिजातम् विश्लेषितम् चतुर्थे कैवल्यपादे जन्मौषधि मन्त्रतपः समाधिजाः । सिद्धाय इत्यादिना सिद्धिपंचक प्रपंचनपुरःसरं परमं प्रयोजनं कैवल्यम् निरूपितम् ।

पतंजलेः योगदर्शनम् अतिरित्य अन्येऽपि अनेके प्राचीनग्रन्थाः योगशास्त्रे वर्तन्ते । तद्यथा - 'योगप्रभा' 'योगप्रदीपः' कश्यपस्य 'योगरत्नाकरः' कौत्सस्य 'योगविलासः' मरीचेः 'योगसिद्धान्तः' 'भोगविलासः' सूर्यस्य योगमार्तण्डः ।

व्यासः योगशास्त्रमधिकृत्य 'योगभाष्यं रचितवान् । अनन्तरं तदधिकृत्य भोजराजः भोजवृत्तिं रचितवान् । तदनन्तरं वाचस्पतिना व्यासभाष्यमधिकृत्य 'तत्ववैशारदी' रचिता । विज्ञानभिक्षुणा प्रणीतं योगवार्तिकम् अपि योगदर्शनस्य एकः प्रमुखः ग्रन्थः अस्ति ।

### 1 5 6 योगदर्शनस्य प्रतिपाद्याः प्रमुखाः विषयाः

प्रकृतौ सत् जीवेषु चित् तथा ईश्वरे आनन्दश्च युगपद विद्यन्ते । अतः सः सच्चिदानन्दः इत्यभिधीयते । अस्मिन् संसारे बहिर्मुखीवृत्तिः अन्तर्मुखीवृत्तिः इति वृत्तिः द्विधा । अतः वृत्तीनां निरोधाय ईश्वरप्राप्त्यर्थं च चित्तवृत्तीनां निरोधः आवश्यकः ।

<u>समाधिः</u> चित्तवृत्तिनिरोधः । समाध्यवस्थायां मनसः अचंचलत्वं, जीवात्मपरमात्मनोः अभेदत्वं च संभाव्तः । पतंजलिः सम्प्रज्ञातसमाधिः ,असंप्रज्ञातसमाधिः इति समाधिद्वयं प्रतिपादयति ।

अंगानि -
---------

यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा ध्यान समाधिश्चेति अष्टांगो योगः । सत्यास्तेयाहिंसाब्रह्मचर्यापरिग्रहादीनां सम्मिलितावस्था भवति यमः । 'सर्वथा सर्वदा सर्वभूतानामभिद्रोहः अहिंसा । सत्यं यथार्थौ वाङ्मनसी यथा दृष्टं यथा श्रुतं तथा वाङ्मनश्चेति । स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्, तत्प्रतिषेधः पुनरस्पृष्टारूपमस्तेयमिति । ब्रह्मचर्यं गुप्तेन्द्रियोपस्थस्य संयमः । अहिंसादयः 'जातिदेशाकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' । नियमास्तु 'शौचसन्तोषतपः स्वाध्यायेश्वर प्रणिधानानि । तत्र शौचं मृज्जलादि जनितं मेध्याभ्यवहरणादि च बाह्यम् । संतोषः संनिहित-साधनादधिकस्यानुपादित्सा । तपो द्वन्दवसहनम् । स्वाध्यायः मोक्षशास्त्राणामध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणम् ।

'स्थिरसुखमासनम्' इति योगसूत्रे आसनलक्षणम् । तद्यथा पद्मासनं, वीरासनं,भद्रासनं, स्वस्तिकं, दण्डासनं,सोपाश्रयं,पर्यंकं,क्रौंचनिषदनं हस्तिनिषदनं, उष्ट्रनिषदनं, समसंस्थानं, स्थिरसुखं यथासुखं चेत्येवमादीनि । प्राणायामः श्वासप्रश्वासयोगीतिविच्छेदः । सन्यासनजये बाह्यस्य वायोराचमनं श्वासः । कौष्ठ्यस्य वायोर्निःसरणं प्रश्वासः । तयोः गतिविच्छेदः उभायाभाव प्राणायामः । बाह्य-आभ्यन्तर स्तम्भभेदेन प्राणायामः त्रिधा । यत्र प्रश्वासपूर्वको गत्यभावः स आभ्यन्तरः । तृतीयः स्तम्भवृत्तिर्यत्रोभयाभाव सकृत्प्रयत्नाद् भवति । 'प्राणायामाभ्यासादेव, प्रच्छर्दनविधारणाभ्यां वा प्राणस्य इति । पातंजलसूत्रेण प्राणायामो हि मनः स्थिरीकुर्वन् धारणासु योग्यं करोति इति प्रतिपादयते ।

स्वविषयसंप्रयोग चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' इति प्रत्याहारलक्षणम् । एतानि पंचबहिरंगानि साधनानि ।

अनन्तरं धारणादयः अन्तरंगसाधनानि नाभिचक्रे, हृदयपुण्डरीके मूर्ध्नि ज्योतिषि, नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्येषु वा विषये

चित्तस्य वृत्तिमात्रेण बन्धः धारणा । 'देशबन्धश्चित्तस्य धारणा' इति तत्त्ववैशारदी ।

" तत्र प्रत्ययैकतानता ध्यानम्' इति ध्यानलक्षणम् । तस्मिन्देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सदृशः प्रवाहः प्रत्ययान्तरेण अपरादृष्टो ध्यानमित्यर्थः ।

''तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः इति समाधेः लक्षणम् ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते । तदेदधारणाध्यानसमाधित्रय-मन्तरंग संप्रज्ञातसमाधेः पूर्वेभ्यो यमादिभ्यः पंचभ्यः साधनेभ्यः भवतीति । समाधिः संप्रज्ञातासंप्रज्ञातभेदेन द्विधा भवति ।

योगे अष्टसिद्धिनामतिमहत्त्वं वर्तते । तद्यथा -

''अणिमा ~~लघिमा~~ महिमा च लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता '' ।।
गुणेष्ववशी वशितां यत्कामस्तदवस्याति ।। इति ।

। 56(ख) योगदर्शन सम्मतं कैवल्यस्वरूपम्

पतंजलिः मोक्षशब्दस्य स्थाने कैवल्यशब्दं प्रयुङ्क्ते । पतंजलिः अन्यदार्शनिकानां मतं खण्डयित्वा 'आत्मा परिणामशून्यः सचेतनश्च इति सिद्धान्तं समर्थयति -

''पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं
स्वरूपप्रतिष्ठा वा चितिशक्तिरिति कैवल्यमिति ।[40]

स्वरूपप्रतिष्ठा बुद्धिसत्त्वानभिसम्बन्धात्पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानम् कैवल्यमिति । कैवल्यं पुरुषस्य उपचरितार्थमित्युक्तम् । तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः '' इति सांख्यकारिकायामपि स्पष्टम् ।

योगदर्शनस्यानुसारं चित्त भावितः निरुपाधिकरूपेण यदा स्वरूपे स्थिरा जायते सा एवावस्था कैवल्य पद वाच्या भवति । किन्तु अद्वैत-वेदान्तिनां मतभेदस्ति अस्ति यत्र मूलाज्ञानस्य विनाशानन्तरम् आत्मनः स्वरूप-प्राप्तिः अर्थात् आत्म साक्षात्कार एव मोक्ष इति कथ्यते - तद्यथा -

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।'
सालोक्यमथ सारूप्यं सार्ष्टिः सामीप्यमेव च ।
सायुज्यं चेतिमुनयो मुक्तिं पंचविधां विदुः ।।''

एतेषु पंचविधमोक्षेषु सायुज्यस्यैव मुख्यं मोक्षत्वम् । 'ब्रह्मविद् ब्रह्मैव भवतीत्यादि श्रुतेः । सालोक्यादिचतुष्टयानां तु बाह्यदुःखाभाव-मात्रसाम्यात् गौणात्वेन मोक्षात्वव्यपदेशात् ।

यद्यपि वेदान्तशास्त्रे पंचविधमुक्तीनामुल्लेखः दृष्यते तथापि सायुज्य-स्यैव वस्तुतः मुख्यत्वमस्ति । तद्यथा -

भामतीपथिनां मतानुसारं कर्मणां विविदिषाार्थत्वमस्ति मोक्षः ज्ञानैकसाध्यः । तथा मोक्षस्य कर्मसाध्यत्वे गते तस्यानित्यात्वमपि आपतेत । तथा च श्रुतिः 'तमेतविदित्वमतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे०-3-8)

**। 5 6(2) योगदर्शनसम्मतम् ईश्वरस्वरूपम्**

ईश्वरः अविद्यादि-पंचक्लेशैन-पुण्यापुण्यप्रकारेणा कर्मणा सुखादुःखा-जाति आयु प्रभृतिभिः विपाकैः तथा संस्काररूपेण आशयेन विनिर्मुक्तः भवति ।'' क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः '[139] इति । त्रीणि छित्वा कैवल्यं प्राप्नुवन्ति । यथा मुक्तस्य पूर्वा बन्धकोटिः संभाव्यते नैवमीश्वरस्य । यथा प्रकृतिलीनस्य बन्धकोटिः संभाव्यते नैवमीश्वरस्य । सतु सदैव मुक्तः सदैवेश्वरः इति ।

यथा पूर्वमप्युक्तम्, चार्वाकाः ईश्वरस्यावश्यकतां नानुभावन्ति । बौद्धा जैनाश्च स्वीयधर्मप्रवर्तकानामेवेश्वरत्वं निरूपयन्ति । निरीश्वर सांख्या अपि ईश्वरं न स्वीकुर्वन्ति । मीमांसकाः अदृष्ट भावितं, वैयाकरणश्च शब्दस्य परामवस्थां स्फोटम्' एव ईश्वर स्थाने स्थापयन्ति ।

योगदर्शनानुसारं ईश्वरः न संसारस्य निमित्तकारणं नवोपादानकारणम् किन्तु न्यायवैशेषिका ईश्वरस्य निमित्त कारणत्वं स्वीकुर्वन्ति । वेदान्तिनः ईश्वरस्य लूताक्त ईश्वरस्य निमित्त कारणत्वम् उपादानकारणत्वमुभयमपि प्रतिपादयन्ति ।

अद्वैतवेदान्ते ईश्वरस्वरूपविषये यदुच्यते तस्य सारः अयमस्ति -

'समष्टयज्ञानावच्छिन्नं मायावच्छिन्नं वा चैतन्यमीश्वरः । तथा च - समष्टयज्ञानोपलक्षितमीश्वरचैतन्यं सर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामि जंगत्कारणमिति च व्यपदिश्यते । 'यः सर्वज्ञ सर्वविद्, यः परः सा सर्वेश्वरः इत्यादि श्रुतीनामनुसारम् सर्वेषां जीवानमीशितृत्वेन कर्मानुरूपफलदातृत्वेन सः ईश्वरेत्युच्यते ।

## 1 5 7 भामतीप्रस्थानस्य परिप्रेक्ष्ये सांख्ययोगमतसमीक्षणम्

सांख्ययोगसिद्धान्तानां समीक्षणं ब्रह्मसूत्रेऽपि दृश्यते तथापि एतज्ज्ञातव्यमस्ति यत् सांख्ययोगयोर्मध्ये योगापेक्षया सांख्यस्य एव वेदान्तिभिः प्रमुखरूपेण निराकरणं कृतम् । तद्यथा - 'एतेन योगः प्रत्युक्तः' । सामान्यतः अस्य सूत्रस्याशयः अयमस्ति यद् सांख्यसिद्धान्तानां निराकरणेन योगमतस्यापि निराकरणं संजायते इति । अत्र भाष्यकारेण भगवता शंकराचार्येण एषा शंका उद्भाविता यद् ---- ''नन्वेवं सति समानन्यायत्वाद् पूर्वेणैव तद्गतं किमर्थं 'पुनरतिदिश्यते'' अस्याः शंकायाः प्रत्युत्तररूपेण भाष्यकारः कथयति - ''अस्ति ह्यत्राधिका शंका - सम्यग् दर्शनाभ्युपायो हि योगो वेदे विहितः

'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[140] 'त्रिरुन्नतं स्थाप्य समं शरीरम्'[141] चासनादिकल्पनापुरःसरं बहुप्रपंचं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते । लिंगानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते - 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' इति । 'विद्यामेतां योगविधिं च कृत्स्नम्'[143] इति चैवमादीनि[144] । योगशास्त्रेऽपि 'अथ तत्त्वदर्शनोपायो योगः' इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते । अतः संप्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भविष्यतीति - इयमभ्यधिकाशंका अतिदेशेन निवर्त्यते, अर्थैकदेशसंप्रतिपत्तावप्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात्[145] ।

अस्य कथनस्य सारः अयमस्ति यत् सांख्यस्य निराकरणेनैव योगस्यापि निराकरणं सम्पन्नं न भवति । यतः तथात्वे सति योगनिराकरणार्थं नवीनस्याधिकरणस्य आरम्भः सूत्रकारेण कथं कृतः स्यात्? अतः अद्वैतवेदान्तस्य सन्दर्भे अस्ति तावत् आवश्यकता सांख्यमतस्यातिरिक्तं योगमतस्यापि समीक्षायाः । अद्वैतवेदान्ताविरुद्धानां सांख्ययोगमतानां ग्राह्याग्राह्यत्व विमर्शः ।

अपि च वेदान्तवाक्येषु योगशास्त्रसम्बद्धानि श्रुतिवाक्यानि अपि पुष्कलमात्रायामुपलभ्यन्ते । तद्यथा - 'त्रिरुन्नतं स्थाप्य समं शरीरम्' 'तां योगमिति मन्यन्ते स्थिरमिन्द्रियधारणाम्' इमानि श्रुतिवाक्यानि आश्रित्य वेदान्तिनां मुमुक्षूणां वा चेतसि एषः सन्देहः भवितुं शक्नोति यत् ब्रह्मसाक्षात्काराय योगशास्त्रमप्यावश्यकम् । किन्तु ------ त्वं त्वौपनिषदं पृच्छामि नावेदविन् मनुते तं बृहन्तम् इत्यादि वेदान्त वाक्यानि एतद् साधयन्ति यत् ब्रह्मसाक्षात्काराय वेदान्तातिरिक्तनाम् अन्येषां शास्त्राणाम् आवश्यकता नास्ति । अतः योगस्यापि निराकरणम् आवश्यकम् ।

अत्र पुनः एषा शंका उदेति यत् किं योगशास्त्रस्य समग्रत्वेण निराकरणं कर्तव्यम्? अस्य समाधानं कुर्वता भाष्यकारेण उक्तम् ---यत् योगशास्त्रस्य

तस्मिन्नेवांशे निराकरणं कर्त्तव्यं यः अंशः वेदान्तविरुद्धः प्रतिभाति ।

अस्मिन् विषये वाचस्पतिमिश्रस्य मतमपि द्रष्टव्यं वर्त्तते । सः कथयति यत् यदि योगशास्त्रस्य अविरुद्धाः अंशाः अद्वैतवेदान्ते स्वीक्रियन्ते, तर्हि योगस्य प्रधानकारणतावादोऽपि स्वीकरणाय प्रसज्येत । अतः वेदान्तशास्त्रे योगशास्त्रस्य अविरुद्धाः अंशाः अपि प्रमाणात्वेन उपादेयत्वेन वा न स्वीकरणीयाः[148] ।

एवं च वेदान्तशास्त्रे यत्रकुत्रापि सांख्ययोगसम्बद्धाः यमनियम प्रभृतयः शब्दाः दृश्यन्ते । तत्र तेषां वेदान्तशास्त्रसम्बद्धा अर्थाः ग्राह्याः[149] ।

उपादेयांशानां स्वीकरणे विरुद्धांशानां निराकरणे सूत्रकारस्य आशयः एषोऽस्ति यत् विपक्षिभिः यदि किंचित् उपादेयं स्वीयशास्त्रेषु प्रस्तूयते तर्हि वेदान्तशास्त्रेऽपि तस्य ग्रहणे न कापि हानिः । किन्तु वाचस्पतिमिश्रस्य मतमेतदस्ति यत् विपक्षिणां कथनेषु ये केचन अद्वैतवेदान्तविरुद्धाः अंशाः वर्त्तन्ते तेषामपि ग्रहणं नोचितम् । अस्मिन् विषये वाचस्पतिः सम्भवतः कुमारिलभट्टस्य एतन्मतम् अनुमोदयति यत् स्वल्पे अवकाशे दत्ते सति विरोधिनः सम्पूर्णप्रवेशाय प्रयतिष्यन्ते ? अतः तेभ्यः स्वल्पः अवकाशः अपि न देयः । तद्यथा -

'प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ।।
क्वचिद् दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धामभिः ।
जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम् ।।

अद्वैतवेदान्तानुसारं ब्रह्मैव जगदुत्पत्तिस्थितिनाशकारणम् । किन्तु सांख्यानां मतानुसारं त्रिगुणमचेतनं प्रधानम् एव जगतः कारणम् । सांख्यानाम् इदं कथनमस्ति यत् यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेः ब्रह्मणो जगत्कारणत्वं प्रदर्शयन्ति तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते । सत्वरजसां साम्या-

वस्था प्रकृतिः '(सांख्यसूत्र 1-61) इत्यनुसारं गुणत्रयस्य साम्यावस्था एव प्रधानम् इत्युच्यते । सत्वं ज्ञानशक्तिः, रजः क्रियाशक्तिः, तमश्च अवरोधशक्तिः इत्यपि स्पष्टमेव ----- 'प्रकाशप्रवृत्तिनियमार्थाः गुणाः इत्यनेन[150] सांख्यकारिकावचनेन । एताः शक्तयः प्रधाने विद्यमानाः भवन्ति नतु ब्रह्मणि ब्रह्मणः निर्गुणत्वात् । एवंप्रकारेण प्रधानस्य त्रिगुणात्वात् सर्वज्ञानकारणभूतं सत्वं प्रधाने वर्त्तते नतु ब्रह्मणि । अस्य मतस्य सारः वाचस्पतिना भामत्याम् पूर्वपक्षरूपेण एवं निर्दिष्टः

'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः ।
न सर्वशक्तिविज्ञाने प्रधानेत्वस्ति संभवः ।।''[151]

वाचस्पतिना उपर्युक्तरूपेण पूर्वपक्षस्य (सांख्ययोगमतस्य) उपस्थापनं कृत्वा तस्य खण्डनं भामत्यां प्रबलरूपेण कृतम् । तद्यथा -

'' पार्वापर्यपरामर्शाद्यदाम्नायोऽभजसा भवेद ।
जगद्बीजं तदेवेष्टं चेतने च स आसमंजसः ।।''

अस्य स्पष्टीकरणं कुर्वता वेदान्तकल्पतरुकारेण यत् कथितम् तदप्युल्लेखनीयं वर्त्तते - एभिर्यदाम्नायोमुख्यवृत्त्या वदेतदेव जगद्बीजम्,सच आम्नायः मुख्यो न प्रधान इति ।

आम्नायः कः इत्यस्मिन् विषये 'ईक्षतेनीशब्दम्(ब्र0सू0 1-1-5) इत्यस्य सूत्रस्य भाष्ये शंकराचार्यस्य कथनं द्रष्टव्यं वर्त्तते तद्यथा -

'न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः

कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम्? ईक्षतेः ईक्षितृत्व श्रवणात्कारणस्य । कथम्? एवं हि श्रूयते - 'सदेव सौम्येदमग्रमासीदेकमेवाद्‌द्वितीयम् इत्युपक्रम्य'तदैक्षत बहुस्यां प्रजायेयेति तन्तेजोऽसृजम[154] इति ।

तत्रेदं शब्दवाच्यं नामरूपव्याकृतं जगत्प्रागुत्पत्तेः सदात्मनावधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्वकं तेजःप्रभृतेः सृष्टृत्वं दर्शयति । तथान्यत्र - 'आत्मा वा इदमेक एवाग्रासीत् । नान्यत्किंचनमिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाल्लोकानसृजत[155] इतीक्षा पूर्विकामेव सृष्टिमाचष्टे[156] ।

सत्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यति इत्यस्य सांख्यमतस्यापि खण्डनं वाचस्पतिः एवं करोति । तद्यथा- ''तन्नोपपद्यते । नहि प्रधानावस्थायां गुणसाम्यात्सत्वधर्मो ज्ञानं सम्भवति । ननूक्तं सर्वज्ञानशक्तिमत्वेन सर्वज्ञं भविष्यतीति । तदपि नोपपद्यते ------ नचाचेतनस्य प्रधानस्य साक्षित्वमस्ति । तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम् ।''

सांख्यकारिकायां ईश्वरकृष्णेन एतदुक्तं यत् जगतः कारणम् तदेव भवितुं शक्नोति, यत् जगतवत् त्रिगुणात्मकं जडं च स्यात् । तादृशं कारणत्वम् ब्रह्मणि न सिद्ध्यति -------

''अविवेकयादेः सिद्धिस्त्रैगुण्यात् तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ।।''

अस्याक्षेपस्य समाधानं कुर्वता वाचस्पतिमिश्रेण इदमुक्तं यत् जगत् ब्रह्मणः विवर्तः अस्ति नतु परिणामः । अतः जगत्रूपेण कार्येण सह तदधिष्ठान भूतस्य कारणात्मकस्य ब्रह्मणः समानता अपेक्षिता नास्ति ।

'अद्धा, विवर्तस्तु प्रपंचोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ।।''[157]

अपि च ------ न खलु बाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति, आन्तरादपि कामक्रोध भयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य तस्य विभ्रमस्य दर्शनात् । अपि च हेतुमति विभ्रमे तदभावानुयोगो युज्यते । अनाद्याविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हति । तस्मात् परमात्मविवर्ततया प्रपंचस्तद्योनिः भुजंग इव रज्जुविवर्ततयाः तद्योनिः, नतु तत्परिणामतया ।''

'अदृश्यत्वादिगुणको धर्मोक्तेः (ब्र०सू०2-1-2-2) इत्यस्य सूत्रस्य भाष्यं विवृण्वता वाचस्पतिना पुनरपि एतद् स्पष्टीकृतं यद चिदात्मना सह जडानां सारूप्यं नोपपद्यते । तद्यथा -

''परिणामो विकारो वा सरूपस्योपलभ्यते ।
चिदात्मना तु सारूप्यं जडानां नोपपद्यते [58] ।।
जाडं प्रधानमेवातो जगद्योनिः प्रतीयताम् ।
योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया [59] ।।''

एवं प्रकारेण भामतीप्रस्थानानुसारं जगतः कारणं ब्रह्म अस्ति नतु प्रधानम् ।

एवंप्रकारेण सांख्ययोगसिद्धान्तानाम् अद्वैतवेदान्तसिद्धान्तैः सह अनेकेषु पक्षेषु साम्यं वर्तते । तथापि उभयोर्मध्ये भेदोऽप्यास्ति । सांख्यमतानुसारं पुरुषाद अतिरिक्तं प्रकृतिरपि परमं तत्वं वर्तते । किन्तु अद्वैतवेदान्तनये ब्रह्म एव परमतत्वम् । अद्वैतवेदान्ते सत्वरजस्तमसां अस्तित्वं वृत्तित्वेन स्वीक्रियते नतु सांख्यवत् परमतत्वरूपेण । अपरं च सांख्यमतानुसारं जीवानामनेकत्वं वर्तते किन्तु अद्वैते आत्मनः एकत्वं स्वीक्रियते । सांख्याः परिणामवादमाश्रयन्ति, वेदान्तिनस्तु विवर्तवादम् । यद्यपि शंकराचार्येण एतदुक्तं यद सांख्यसिद्धान्ताः उपनिषत्सु न लभ्यन्ते तथापि अन्येषां विदुषां मतमिदमेव वर्तते यद् उपनिषत्सु सांख्यसिद्धान्ता अपि प्रचुरमात्रायां दृश्यन्ते । एवं प्रकारेण केषांचिद विदुषामिदं मतमस्ति यत् सत्यपि वैभिन्ये नैकेषां सांख्ययोगसिद्धान्तानाम् अद्वैतवेदान्तसिद्धान्तैः सह विविधेषु पक्षेषु साम्यमस्ति । किन्तु अस्माकं मतानुसारं भेदस्य तत्वानि अधिकानि सन्ति साम्यस्य अल्पानि ।

## 1 6 0 मीमांसादर्शनम्

### 1 6 1 मीमांसासाहित्यम्

मीमांसादर्शनस्य प्रवर्तकः महर्षिः जैमिनिरासीत् । शबरस्वामिना मीमांसासूत्रस्य भाष्यं लिखितम् । सूत्रस्य निर्माणं विक्रमात् पूर्वम् अभवदिति कथ्यते । शाबरभाष्यं द्वादशाध्यायेषु विभक्तम् । अतः मीमांसादर्शनस्य 'द्वादशलक्षणी' इत्यपरं नामधेयमपि वर्तते । अध्यायाः पादेषु पादाश्च अधिकरणेषु विभक्ताः वर्तन्ते । पादानां संख्या 60 अस्ति तथा अधिकरणानां संख्या 607 विद्यते । मीमांसासूत्रे आहत्य 2752 सूत्राणि सन्ति । मीमांसा सूत्रस्य अवशिष्टाः चत्वारः अध्यायाः संकर्षणकाण्डेत्याख्यया अथवा देवता-काण्डेत्याख्यया प्रसिद्धाः वर्तन्ते ।

### 1-6-2 मीमांसादर्शनस्य प्रतिपाद्याः प्रमुखाः विषयाः

द्वादशाध्यायेषु प्रथमाध्यायस्य प्रथमे पादे विधि-अर्थवाद-मन्त्र-स्मृति-प्रमाणविचारः दृश्यते । द्वितीये अपूर्वकर्मणः तस्य फलस्य, विधि निषेध प्रक्रियादीनां प्रतिपादनं च दृश्यते । तृतीये श्रुतिलिंग-वाक्यप्रकरणस्थानसमाख्यादीनां प्रामाण्यविवेचनम् उपलभ्यते । चतुर्थे नित्यनैमित्तिकयज्ञानां विचारः, पंचमाध्याये यज्ञश्रुतिवाक्यानां पूर्वापरसम्बन्धविचारः, षष्ठाध्याये कर्मणः अधिकारविषयिणी चर्चा, सप्तमे तथा अष्टमे च एकस्य यज्ञविधेः अन्यस्मिन् यज्ञे प्रयोगविचारः, नवमाध्याये मन्त्राणां प्रयोगविचारः, दशमे बाधसमुच्चयादीनां वर्णनं, एकादशाध्याये तन्त्राणां विचारः, द्वादशाध्याये शब्दस्य नित्यानित्यविषये सूक्ष्मविचारः । एवंप्रकारेण अनेके विषया विश्लेषिताः दृश्यन्ते मीमांसासूत्रे भाष्ये च । प्रत्येकम् अधिकरणं विषय-संशय पूर्वपक्षउत्तरपक्ष-सिद्धान्त इति पंचभागेषु विभक्तम् ।

'चोदनालक्षणो धर्मः' इति सूत्रात् आरभ्य 'अन्वाहार्ये च दर्शनात्' इत्यन्तं महर्षिणा जैमिनिना प्रणीतं मीमांसाशास्त्रम् अधिकृत्य शबरेण भाष्यं लिखितम् ।

मीमांसाशास्त्रम् आरम्भणीयमथवा अनारम्भणीयमित्यस्याः शंकायाः समाधानार्थं कथितं यत् 'स्वाध्यायोऽध्येतव्यः' इति । ननु अत्र विहितः अध्ययनविधिः दृष्टार्थः उत अदृष्टार्थः ? यदि अध्ययनविधिः अदृष्टार्थत्वेन मन्येत तर्हि विचारशास्त्रस्य आरम्भणम् आवश्यकं नास्ति । वेदमन्त्रोच्चारणेन न कस्यापि दृष्टार्थस्य सिद्धिः भविष्यति एवं च विधिशास्त्रं निरर्थकं जायेत । अतः विधिशास्त्रस्य स्वर्गादि साधनत्वं यददृष्टं, तत् फलत्वेन उच्यते । विचारैम् विना अर्थज्ञानं न सिध्यति । विधेः अनुकूलत्वेन विचारशास्त्रस्यास्य आवश्यकत्वात् शास्त्रमेतत् आरम्भणीयं भवति ।

शाब्दी भावनायाः ज्ञानेन स्वर्गादिफलप्रयुक्तेषु यागादिषु पुरुषस्य प्रवृत्तिरुत्पद्यते । अस्याः प्रवृत्तेः नाम आर्थीभावना इति । यस्मिन् क्रियाफलं तिष्ठति तत् उद्देश्यत्वेन भण्यते । एतदुद्देश्यं चतुर्धा भिद्यते-उत्पत्तिः-प्राप्तिः-विकार-संस्कारक्रमेण । उत्पत्तिः कुलालस्य क्रियानुसारं घटस्योत्पत्तिः जायते । गमनक्रियया देशान्तरस्य प्राप्तिः । पाकक्रियया तण्डुले पाकात्मको विकारः । लाक्षारसचेतनेन कार्पासबीजे गुणाधानद्वारा संस्कारः उदेति । अर्थनिर्धारणे शास्त्रस्यास्य महान् उपयोगः अस्ति । अतः एतत् मीमांसाशास्त्रम् अवश्यम् आरम्भणीयमिति । मीमांसाशास्त्राध्ययनेन अदृष्टात्मकं विशेषं फलं जायते । इत्यतः 'स्वाध्यायोऽध्येतव्यः' इति वाक्यं दृष्टादृष्टफलजनकत्वेन तिष्ठति ।

कुमारिलभट्टमतानुसारेण अधिकरणं पंचावयवात्मकं भवति । तद्यथा -

''विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।

संगतिश्चेति पंचागं प्राचाधिकरणं विदुः ।।'' इति ।

एवं पंचावयवात्मकस्य अधिकरणस्य स्वाध्यायोऽध्येतव्य इत्यादि श्रुतिपठितं वेदाध्ययनं विचारांगत्वेन विषयः भवति इति आचार्यस्य कुमारिलभट्टस्याभिप्रायः ।

## 1 6 3 मीमांसादर्शनसम्मतः प्रमाण-प्रामाण्य विचारः

मीमांसादर्शनमपि अन्यदर्शनवत् प्रमाणविचारं करोति । विभिन्न दर्शनिकाः स्वमतानुसारं प्रमाणस्यापि अनेकान् भेदान् मन्वते । यथा चार्वाकः प्रत्यक्षमेकं प्रमाणम्, वैशेषिकाः प्रत्यक्षम् अनुमानं च, प्रत्यक्षमनुमानशब्दाः त्रीणि प्रमाणानि इति सांख्याः , न्यायमते प्रत्यक्षानुमानोपमानशब्दाः इति चत्वारि, वेदान्ते प्रत्यक्षम्, उपमानं शब्दः अर्थापत्तिः , अनुपलब्धिश्चेति षड्प्रमाणानि स्वीक्रियन्ते ।

मीमांसादर्शनेऽपि मतभेदाः वर्त्तन्ते । सूत्रकारः जैमिनिः प्रत्यक्षानुमान-शब्दाः इति त्रीणि प्रमाणानि मनुते । किन्तु जैमिनेरनन्तरं प्राभाकरमीमांसकाः प्रत्यक्ष-अनुमान-उपमान-अर्थापत्तिः इति पंचप्रमाणानि स्वीकुर्वन्ति । कुमारिल-भट्टः अनुपलब्धिनामकं षष्टप्रमाणमपि स्वीकरोति । प्राभाकराः स्मृतिं नांगीकुर्वन्ति । प्रमाणं नु अनुभूतिजन्यज्ञानमेव । स्मृतिर्ज्ञानाम् भिन्नम् । स्मृतौ पूर्वज्ञानस्य आवश्यकता अस्ति । अतः स्मृतिः प्रमाणे अन्तर्भवितुं न शक्नोति ।

प्रमाणस्य भावः अर्थात् धर्मविशेषः प्रामाण्यम् इत्यभिधीयते । भारतीयदर्शनेषु स्वतः परतः इति भेदेन प्रामाण्यवादोऽपि दिवधा । तद्यथा -

''प्रमाणात्वाऽप्रमाणत्वे स्वतः सांख्याः समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ।।
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः ।
प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमणाताम् ।।''

सांख्यमतानुसारेण प्रमाणात्वम्,अप्रमाणत्वं च स्वतः, नैयायिकानां मते उभयं परतः ,बौद्धानां मते अप्रामाण्यं स्वतः , प्रामाण्यं च परतः , मीमांसकानां मते प्रामाण्यं स्वतः अप्रामाण्यं च परतः ।

मीमांसकैः प्रमाणविषयकाः ये सिद्धान्ताः निर्दिष्टाः तैः सह अद्वैत-वेदान्तिनां मतैक्यमस्ति । ज्ञानस्य स्वतः प्रामाण्यत्त्वविषये तथा स्वप्रकाशत्व-

विषयेऽपि मीमांसावेदान्तयोः मतैक्यमस्ति । किन्तु वैदिककर्मकाण्डस्यानुष्ठान-विषये मीमांसावेदान्तयोः मतभेदः अस्ति । मीमांसकानां मतानुसारं यज्ञादि कर्माणि सर्वेषां कृते आवश्यकानि वर्तन्ते । किन्तु वेदान्तिनां मतानुसारं यज्ञा-नुष्ठानादीनां महत्वं तावत्पर्यन्तमेव वर्तते यावत्पर्यन्तं कश्चित् जनः वेदान्ताध्ययनाय अधिकारि न भवति ।

## 1.6.4 भामतीप्रस्थानानुसारं मीमांसक मत समीक्षणम्

## 1.6.4(1) वेदानापौरुषेयत्वस्य प्रत्याख्यानम्

मीमांसकाः वेदवादिनः । जैमिनिनोक्तम् - आम्नायस्य, क्रियार्थत्वादा-नर्थक्यमतदर्थानाम्'[6] इत्येवं प्रकारेण वेदाः अपौरुषेयाः भवन्तीति मीमांसकाः । तत्र पौरुषेयत्वं नाम प्रमाणान्तरेण अर्थमुपलभ्य रचितत्वं तत् वेदे नास्ति । अतः अयं वेदः अपौरुषेयः इति । अनेनैव कारणेन वेदस्य स्वतःप्रामाण्यमपि सिध्यति । पुरुषसम्बन्धसम्भाविताः भ्रम प्रमादादयः अप्रामाण्यहेतवः वेदे न लभ्यन्ते । वेदस्य ब्रह्मस्वरूपत्वात् वेदे प्रतिपादितः 'वेदनारायणः एव पुरुषः इति वेदस्या-पौरुषेयत्वं सिद्धमिति एतेषां-सिद्धान्तः ।

''ईश्वरकृताः वेदाः' इति वैशेषिकाः नैयायिकाः वेदान्तिनश्च भणन्ति । तत्र कारणम् कण्ठताल्वाद्यभिधानजन्य-वर्णरूपाणां वेदानामपौरुषेयत्वासम्भवात् इति । ब्रह्मणः श्वासोच्छ्वासरूपेण वेदानामुत्पत्तिः इति श्रूयते ।

ईश्वरस्य निश्वासरूपेण स्थिताः वेदाः पौरुषेयाः इति सत्यपि लौकिक-पुरुषनिर्मितत्वाभावमात्रेण अपौरुषेयाः भवन्ति । यतः ब्रह्मणः लौकिक-पुरुषवत् जननमरणधर्मौ न स्तः । ईश्वरः अनादिः इत्युक्तत्वात् वेदोऽपि अनादि-रिति स्वयमेव सिद्धम् । अतएव वेदाः मीमांसाशास्त्रानुसारम् अपौरुषेयत्वं भजन्ति ।

1 6 4 (2) मोक्ष स्वरूपसमीक्षणम्

मोक्षविषये प्राभाकर-कुमारिलभट्टयोर्मध्ये मतभेदाः वर्तते । प्राभाकरमते आत्मनि ज्ञानसुखदुःखादि अनेकगुणाः विद्यन्ते । यदा विशेषगुणानां नाशः सम्भवति तदा आत्मा निजरूपे अवस्थीयते । इयमेव अवस्था मोक्षावस्था इत्युच्यते । मोक्षदशायां आत्मा आनन्दं नानुभवति । मीमांसायां चैतन्यम् आत्मनः गुणो नास्ति किन्तु आत्मा शरीरादि सम्बन्धेन सुखमनुभवति । मोक्षदशायां आत्मा शरीरात् विच्छिद्यते । सर्वदुःखात् परं विशुद्धरूपे आत्मनः विद्यमानत्वमेव मोक्षः । कुमारिलभाटटस्य मते मुक्तदशा एवं भावति -

'दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः ।
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः 162

दुःखनाशानन्तरं आत्मनि जायमानं सुखं यदा मनसा अनुभूयते तदेव मुक्तिः । अतः अस्माभिः एतत् ज्ञातव्यं वर्तते यत् कुमारिलभट्टः मुक्तावस्थायाम् आत्मनः आनन्दत्वमंगीकरोति । प्राभाकरमतेमुक्तयथा दुःखवत् सुखानां सर्वथा उच्छेदः सम्भावति । कुमारिलभाटटस्य मते मुक्तिः वेदान्तिनः मुक्तिवद् आनन्दमयी एव । काम्यकर्म- निषिद्धकर्मनित्यकर्म-नैमित्तककर्म-प्रारब्ध कर्मादि पंचविधाकर्मरूपाणि सन्ति । प्रारम्बधकर्मणां भोगादेव क्षयः इति ।

वेदान्तिनां मतानुसारं ब्रह्मात्मकोऽपि जीव स्वाविद्यया आवृतः स्वं रूपं ब्रह्मात्मकं न जानाति । यथा जीवस्य तत्वज्ञानोदयः जायते तथा अज्ञाननिवृत्या स्वरूपस्य ब्रह्मात्मैक्यस्य प्रकाशः भावति । स एव अज्ञाननिवृत्तिरूपः तत्वज्ञानोदयरूपः ब्रह्मावाप्तिस्वरूपः, ब्रह्मसाक्षात्कारः रूपः आत्मसाक्षात्कारः मोक्षः इत्युच्यते ।

1 6 4(3) अपूर्वं निरसनम्

जैमिनिराचार्योऽपि सिद्धान्तित्व अत्युपपत्तिभ्यामेव धर्मं फलदातारं मनुते । तथाहि 'स्वर्गकामो यजेत' इतिविधिः । श्रुतिविषयस्य यागस्य स्वर्गोत्पादकत्वमवगम्यते अन्यथा तदुपदेशवैयर्थ्यप्रसंगः । नन्वनुक्षणविनाशिनो यागस्य कथं फलदातृत्वमिति चेत्श्रुः श्रुतिप्रामाण्याततदुन्तरावस्थाप्रस्यापूर्वाख्य-व्यापारस्य कल्पनीयत्वादिति यागादि धर्म एव फलदात्ता । तस्मादीश्वरस्य अविचित्रस्य विचित्रफलदातृत्वस्वीकारे वैषम्यादि दोषप्रसंगाधर्माधनुष्टानवैयर्थ्या-पत्तेश्च धर्मादिव फलं भवतीति ।[163]

बादरायणास्त्वाचार्यः पूर्वोक्तमेवेश्वरं कर्मापेक्षं फलहेतुं मनुते, न स्वतन्त्रं कर्म,नाप्यपूर्वं वा । कुतः, हेतुव्यपदेशात् । 'एष ह्येव साधुकर्म कारयति तं यमद्यो निनीषते' अन्नादो वसुदानः' 'तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्' इत्यादि श्रुतिस्मृतिषु धर्माधर्मयोरपि कारयितृत्वेन तत्फलदातृत्वेन चेश्वरस्यैव हेतुत्वव्यपदेशात् ।

सूत्रकार-भाष्यकारयोः कथनानां सारः वाचस्पतिः प्रबलयुक्त्या स्पष्ट-यित्वा मीमांसकानां सिद्धान्तं खण्डयति । दृष्टस्याधारेण अदृष्टस्य कल्पना क्रियते । लोके कुलालादिचेतनपुरुषसाहाय्येन दण्डचक्रादिना घटस्य निर्माणं दृश्यते । तथा चेतनाधिष्टितानामचेतनानां कार्यारम्भकत्वं दृश्यते । तद्यथा -

''दृष्टानुसारिणी हि कल्पना युक्ता नान्यथा । नहि जातु मृत्पि-ण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभावतवन्ते दृष्टाः । नच विद्युत्पवनादिभिरप्रयत्नपूर्वं व्यभिचारः ----- तस्मादचेतनं कर्म वाऽपूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुमुत्सहते ।[164]

जडवस्तुनि ईश्वरप्रेरणया फलप्रदानगुणत्वं दृश्यते । तद्यथा तैत्तिरीयोपनिषदि -

''भीषास्माद्वातः पवते, भीषोदेति सूर्यः ।
भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति पंचमः ।। [165]

किंच ब्रह्मसूत्रस्य देवताधिकरणे अमुमेवसिद्धान्तः स्पष्टयति - [166]

प्रायः वेदप्रतिपादितप्रवृत्तिनिवृत्तिमार्गाणां पारस्परिकम् सन्तुलनं दृश्यते । अस्य कारणमिदमस्ति यत् धर्मार्थ काममोक्षाख्येषु चतुर्विधपुरुषार्थेषु प्रथमत्रयस्य अस्तित्वं प्रवृत्तिमार्गे तथा अन्तिमस्य मोक्षस्य अस्तित्वं निवृत्तिमार्गे आधारितं भवति । कामावचरस्य लोकाकाशस्य च प्राणिषु स्वाभाविकप्रवृत्तीनां प्रागल्भ्यम् उपलभ्यते । स्वाभाविकप्रवृत्तयः प्रवृत्तिमार्ग प्रति अनुसरन्ति । निरोधप्रवृत्यस्तु यत्र साध्याः भवन्ति । अतः व्यवस्थितायाः वैदिकमर्यादायाः ससीमाबन्धनम् प्रवृत्तिमार्गानुसारिणां प्राणिनां बाहुल्यात् सुरक्षितं नाभवत् । तथा कर्मप्रतिपादकप्रवृत्तिमार्गानुकूलो वेदभागः सर्वान् वर्णान् सर्वान् च आश्रमान् सर्वविषयत्वेन गृहीतवान् ।

पूर्वोत्तरमीमांसायोः बन्धनं वाचस्पतिना त्रोटितम् । ये जनाः वेदान्तदर्शनं कर्मानुष्ठानसीमातः नैव बहि स्थापयितुं वाञ्छन्ति तदीयः प्रबलविरोधः वाचस्पतिना कृतः । अत एव सः पुनः पुनः कर्मसमुच्चयवादस्य प्रतिरोधं कृत्वा परिव्राजकसम्प्रदायस्य निवृत्तिमार्गं पोषितवान् ।

वाचस्पतिः वेदान्तप्रतिपादितब्रह्मज्ञानं स्वतन्त्ररूपेण मोक्षस्य साधनमि त्यंगीकृत्य कर्मोपासनायां मोक्षसाधनतायाः समर्थनमपि अकरोत् । ब्रह्मज्ञानं मोक्षमार्गस्य साधनमस्ति इति विषये अनेकाः श्रुतयः सन्ति । 'तरति शोकमात्मवित्'[167] 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति'[168] ब्रह्मविदाप्नोति परम्[169] 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'[170] ''आत्मा वा अरे द्रष्टव्यः[171] 'एतावदरे खल्वमृतम्'[172] इत्यादि श्रुतीनां प्रमाणसमतायाः समर्थनं वाचस्पतिना कृतम् । ये जनाः एतानि वाक्यानि'द्रव्यसंस्कारकर्मसु परार्थत्वात्

परस्तुतिरर्थवादः स्यात्'[173] इति जैमिनीयसूत्राधारेण अर्थवादमात्रं मन्वते, तेषां मतं खण्डयन् सः उक्तवान् यत् वेदान्तवाक्येषु यस्य नित्यशुद्धमुक्तस्वभावं पुरुषात्वस्य प्रतिपादनमस्ति सः कर्मणः कर्ता नापि भवितुमर्हति । तदीयप्रतिपादक वेदान्तवाक्यानां समन्वयः कर्मकाण्डेन सह कथं भविष्यति? अतः स्तव् स्वीकर्तुं शक्यते यत् वेदान्तवाक्यं स्वतन्त्ररूपेण ब्रह्मणः स्वरूपस्य साक्षात्कारार्थं प्रवर्तयति ।

## 1 6 4 (4) वेदान्तवाक्यानां प्रतिपत्ति-विध्यंगत्वनिरसनम्

मीमांसामतप्रभाविताः केचिद् आचार्याः वेदान्तवाक्यानां उपयोगित्वं प्रतिपत्तिविधेरंगत्वेन निरूपयन्ति । भगवताशंकराचार्येण प्राभाकरमतस्यास्य खण्डनं कृतम् । तद्यथा-अत्रापरे प्रत्यवतिष्ठन्ते । यद्यपि शास्त्रप्रमाणकं ब्रह्म, तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । ----तस्माद् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति[174] । अत्राभिधीयते न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् ।

वेदान्तवाक्यानां प्रतिपत्तिविधेः अंगत्वं प्रतिपादयितुं प्राभाकरमीमांसकैः तदनुयायिमिश्च ये तर्काः प्रस्तूयन्ते, तेषां संग्रहः पूर्वपक्षरूपेण वाचस्पतिना एवं कृतः-

"अज्ञातसंगतित्वेन ज्ञ शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद ब्रह्मनिश्चयः[175] ।।

अस्यार्थः अयमस्ति यद् पूर्वपक्षिणां मतानुसारम् -

(1) न खलु वेदाः, सिद्धब्रह्मरूपपरा भक्तुमर्हन्ति, तत्रविदित-संगतित्वाद् ।

(2) वेदान्तनां वेदत्वात् शास्त्रत्वप्रसिद्धिरस्ति । शास्त्रत्वं तु तेषामेव सन्दर्भानां वर्तते एषां प्रवृत्तिनिवृत्तिपरता अस्ति । तद्यथा-

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत, तच्छास्त्रमभिधीयते ।।[176]

(3) यदि श्रुतब्रह्मणो भवति सांसारिकनिवृत्तिः, कस्माद् पुनः श्रवणस्योपरि मननादयः श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसंगादपि न ब्रह्मस्वरूपपरा वेदान्ताः,

किंत्वात्मप्रतिपत्तिविषयकार्यपराः[177] ।

एवंप्रकारेण पूर्वपक्षीयाणां मतस्य सारः अयमस्ति यत् वेदान्तवाक्यानां ब्रह्मस्वरूपबोधकत्वं न अपितु आत्मज्ञानविधिविषयककार्यपरकत्वं स्वीकरणीयमिति । उपर्युक्तानां तर्काणां खण्डनं वाचस्पतिमिश्रेण एवं कृतम् -

(1) सिद्धार्थेऽपि पदानां संगतिग्रहणं लोकेऽपि दृश्यते । 'रज्जुरियं नैष भुजंग' इत्यादि वाक्यानि सिद्धार्थपरकाणि एव नतु कार्यार्थपरकाणि । यतः तानि कमपि कार्यप्रवृत्तिं न जनयन्ति । अतः सिद्धब्रह्मबोधकत्वेऽपि वेषाम् अर्थवत्ता न हीयते ।

(2) सिद्धब्रह्मविषयकवेदान्तवाक्यानां श्रवणात् संसारनिवृत्तिमोक्षप्राप्तिपरकं प्रयोजनं सिद्धमेव इति अनुभावसिद्धम् । अतः वेदान्तवाक्यानां हितसाधनत्वरूपं शास्त्रत्वं स्वतः स्पष्टम् ।

(3) यत् पुनरुक्तं श्रवणात्परचीनयोर्मननिदिध्यासनयोर्दर्शनाद्व विधिशेषत्वं न ब्रह्मणो स्वरूपपर्यवसायित्वमिति । न, अवगत्यर्थत्वात्मनननिदिध्यासनयोः (ब्र०सू०शा०भा० । । 4 ) अत्र भामती - मनननिदिध्यासनयोरपि न विधिस्तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात् । तदिदमुक्तम् (भाष्यं) अवगत्यर्थत्वादिति । अत्रायं संग्राहकः श्लोकः -

'कार्यबोधे यथा चेष्टा लिंगहर्षादयस्तथा ।[179]

सिद्धबोधेऽर्थवन्तैवं शास्त्रत्वं हितशासनात् ।।

भामतीपरस्थिभिः वेदान्तवाक्यानां विध्येकवाक्यताऽपि नांगीकृता । मीमांसकानां पूर्वपक्षः अयमस्ति यत् यदि विधिसंस्पर्शं विना अपि वेदान्तवाक्यानां प्रामाण्यं स्वीक्रियते तर्हि अर्थवादपरकानि वाक्यान्यपि विधिवाक्यैः सह एकवाक्यतां बिना प्रमाणत्वेन स्वीकरणीयानि स्युः । एवं सति च'विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः इत्यस्य मीमांसासूत्रस्य एवमेव अर्थवादाधिकरणस्यानर्थक्यमापतेता ।

अस्याः शङ्कायाः निवारणं कुर्वता वाचस्पतिना एवमुक्तं यत् अर्थवादवाक्येषु प्रयाजनाकाङ्क्षा भवति । किन्तु वेदान्तवाक्यानां मोक्षात्वसंप्रयोजनं स्वतः। सद्धा वर्तते । अतउः अर्थवादवाक्यानां तथा वेदान्तवाक्यानां मध्ये मतभेदो वर्तते ।

वेदान्तवाक्यानि उपासनाविधिना सहापि एकवाक्यतां नापेक्ष्यन्ते । वाचस्पतेः मतानुसारं ब्रह्मविद्यायाः फलं नित्यः निरतिशयः मोक्षः वर्तते । मोक्षः उपासनाविधेः फलं न भवितुं न शक्नोति । नित्यत्वे सति अकार्यत्वात् । तथाहि - त्त्वाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धात्वादिब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्यावस्थीयते । सा चोपासनाविषयस्य विधेर्न फलम्, नित्यत्वादकार्यत्वात् ।

## 1.7.0 अध्यायस्य सारः समाहारश्च

अस्मिन्नध्याये चार्वाकदर्शनादारभ्य मीमांसादर्शनपर्यन्तं त्रयाणां नास्तिकदर्शनानां तथा पंच आस्तिकदर्शनानां स्वरूपपरिचयः प्रस्तुतः । एतेषां दर्शनानां प्रमुखरूपेण यत् यत् प्रतिपाद्यमस्ति तत्तदपि संक्षेपेणात्र निरूपितम् । भामतीप्रस्थानस्य सन्दर्भे यथाशक्यं समीक्षणमप्यत्रकृतम् ।

भामतीपन्थिनां मतनासारः एवमस्ति - चार्वाकाः देहव्यतिरिक्तस्य आत्मनः अस्तित्वं न स्वीकुर्वन्ति, किन्तु भामतीपन्थिनां मतानुसारं देहव्यतिरिक्तस्य आत्मनः अस्तित्वमस्ति , यतः चैतन्येच्छाद्वेषप्रभृतिगुणानाश्रित्य आत्मा अनुमातुं शक्यते । भामतीपन्थिनामेतदपि कथनमस्ति यत् बौद्धप्रवर्तिताः शून्यवाद- क्षणभङ्गवाद-विज्ञानवादास्तु प्रमाणविरुद्धात्वान्न स्वीकरणीयाः । चैतन्यस्य सहयोगं विना पृथिव्यादिप्रत्ययाः सम्मील्यापि कार्योत्पादने असमर्थाः ३ । अतः बौद्धप्रवर्तितः प्रतीत्यसमुत्पादवादो पि न अंजसः । जैनानां सप्तभङ्गीनयस्तु अद्वैतवेदान्तिनां मतानुसारमनिश्चयात्मकं मोहमेव जनयति । जीवस्य शरीरपरिणामत्वाविषयकसिद्धान्ते अपि वाचस्पतिमिश्रादीनां विप्रतिपत्तिरस्ति ।

न्यायवैशेषिकप्रवर्तितः परमाणुकारणतावादः सामान्यस्य सिद्धान्तः परतःप्रमाण्यवादप्रभृतयः अपि अद्वैतवेदान्तिभिः : नाङ्गीक्रियते । नैयायिकमता -

नुसारमात्मा ज्ञानस्याधिकरणमस्ति । किन्तु वेदान्तिनां मतानुसारमात्मनः चैतन्यस्य-चैक्यमस्ति । सांख्यप्रवर्तितः सत्कार्यवादः अद्वैतवेदान्तिभिः न स्वीक्रियते । भामतीपन्थिनः अपि विवर्तवादमेवानुसरन्ति । अतःसांख्यसम्मतः परिणामवादः तैः न स्वीक्रियते । मीमांसकानामेतत्कथनमस्ति यत् वेदान्तवाक्यानां ब्रह्मस्वरूपबोधकत्वं न , अपि तु आत्मज्ञानविधिविषयककार्यपरकत्वमस्तीति । किन्तु भामतीपन्थिभिः एतत् कथ्यते यत् वेदान्तवाक्यानां श्रवणात् संसारनिवृत्तिमोक्षप्राप्तिपरकं परकं प्रयोजनं सिद्ध्यत्येव । अतः वेदान्तवाक्यानां हितसाधनत्वरूपं शास्त्रत्वं स्वतः स्पष्टमस्ति ।

उपर्युक्तप्रकारेण वेदान्तेतरदर्शनेषु तत्त्वमीमांसापरकाः ज्ञानमीमांसापरकाः वा ये सिद्धान्ताः पूर्वसूरिभिः निरूपिताः , तेषां सम्यगालोचनं भामतीप्रस्थाने दृश्यते । वस्तुतः वेदान्तसूत्रे अपि सर्वेषामेव दर्शनानां प्रमुखाः विषयाः चर्चिताः दृश्यन्ते । अतः ब्र वेदान्तेतरदर्शनानां ये सिद्धान्ताः सन्ति तेषामुल्लेखं विना भामतीप्रस्थानस्य सिद्धान्तानां तुलनात्मकं समीक्षणं कर्तुम् न शक्यते । अतः एव अस्मिन्नध्याये वेदान्तेतरदर्शनानां प्रमुखसिद्धान्तैः सह भामतीप्रस्थाने चर्चितानां प्रमुखसिद्धान्तानां तुलनात्मकं निरूपणमस्माभिः अत्र संक्षेपेण कृतम् ।

***************

1- ईशावास्योपनिषद्, 15

2- चारुः वाकः (वच ) वाक्यं यस्य इति व्युत्पत्ति माश्रित्य चार्वाक शब्द अकारान्तरूपेण अस्मिन्न शोध ग्रन्थे प्रयुक्तः । केषांचिन्मतानुसारं चारुर्वाक् यस्य सः चार्वाक् इति व्युत्पत्या चार्वाक् शब्दस्य प्रयोग हलन्त पुलिंग रूपेणापि कर्तुं शक्यते ।

3- बृ० उ० ( 1-4-12)

4- स०द०सं० (चार्वाक द०)

5- तदेव

6- स०द०स० (चा०)

7- अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः । (सर्व द०सं० पृ० 7)

8- स०द०सं० पृष्ठ 21 ( श्रुति सं०)

9- ब्र०सू०शा०भा० 3-3-53 पृष्ठ 852

10- ब्र०सू०शा०भा० 3-3-54

11- भामती पृ० 851 ( ब्र०सू०शा०भा० 3-3-53)

12- भामती पृ० 852 ब्र० सू० 3-3-53

13- BC 560 DasGupta Page: 81 History of Indian Philosophy Vol. I

14- ब्र०शा०भा० 2-2-31 भा० पृ० 557

15- धम्मपद - पृ० 146

16- आनन्दमयोऽभ्यासात् ( 1-1-12) तद्धेतुव्यपदेशाच्च ( 1-1-14)

17- सर्व द० सं० पृ० 36

18- सर्व द० सं० पृ० 38

19- कृतप्रणाशाकृतकर्मभोगभवप्रमोक्षस्मृतिभंगदोषान् । उपेक्ष्य साक्षात्क्षणभंगमिच्छन् अहो महासाहसिकः परस्ते '' । (स्या०मश्लो 18)

20- न्यायमंजरी पृ० 39

21- ब्र०सू०शा०भा० 2-2-25

22- भामती पृ0 535

23- ब्र 0 सू0 शा0 भा0 2-2-25

24- वे0 कल्पतरु, पृ0 535

25- ब्र0 सू0 2-2-26

26- ब्र0 सू0 शा0भा0 2-2-26

27- भामती पृ0 539-40

28- ब्र0सू0 2-2-27

29- ब्र0 सू0 शा0भा0 2-2-27

30- ब्र0सू0 2-2-28

31- ,, ,, 2-2-29

32- ,, ,, 2-2-30

33- ,, ,, 2-2-31

34- ,, ,,2-2-32

35- ,, ,, शा0भा0 2-2-28

36- ,, ,, 2-2-29

37- ब्र0सू0 शा0भा0 2-2-30

38- ,, ,, ,, ,, 2-2-31

39- ,, ,, ,, ,, 2-2-32

40- I am led to think that Sankara's Philosophy is largely compound of Vijnanavada and Sanyavada buddhism with the Upanisad notion of the Permanence of self superadded (Explained Vedanta Vo,.I)

41- ब्र0सू0शा0भा0 2-2-28

42- ,, ,, ,, 2-2-28

43- भामती पृ0 557

44- वे0 क0 पृ0 557

45- ब्र0सू0शा0भा0 2-2-28

46- ब्र0 सू0भास्कर भाष्यम् 2-2-25

47- ,, ,, 2-2-29

48- अध्यासभाष्य-भामती पृ0 22

49- Prateetya Samuthpadavada is the theory propounded by the Buddhist regarding the evaluation of universe.

50- ब्र0 सू0 2-2-18

51- ,, ,, 2-2-19

52- ,, ,, 2-2-20

53- भामती पृ0 526

54- वेदान्तकल्पतरु पृ0 526

55- ,, पृ0 526

56- भामती पृ0 526

57- भामती पृ0 526

58- भामती 2-2-19 पृ0 526

59- ब्र0सू0शा0भा0 2-2-19

60- भामती पृ0 530

61- भा0 पृ0 8-18

62- सर्व सं0 पृ0 106

63- सर्व द0 सं0 पृ0 112

64- शां0भा0 2-2-25

65- भामती 2-2-25

66- तत्वार्थसूत्रम् 1-1

67- सर्व द0 सं0 पृ0 137

68- सर्व ~~द~~ सं0 पृ0 141

69- ,, ,, ,,141

70- ,, ,, ,, 142

71- पूरणगलनान्वर्थसंज्ञत्वात् पुद्गलाः ।(तत्वार्थराजवार्तिक 5-1-14)

72- सर्व द0 सं0 पृ0 144

73- सर्व द0 सं0 पृ0 152-153

74- तत्वार्थसूत्र 10/2

75- वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् ।

स्यादन्निपातोऽर्थ योगित्वात्तइन्तप्रतिसमकः ''(सर्वद0सं0पृ0 172)

76- सर्व द० सं० 173

77- हेमचन्द्रकृत द्वितीयद्वात्रिंशिका वी० स्तु०श्लोक 30

78- ब्र०सू० 2-2-33

79- भामती पृ० 561

80- The first bahnga is the reply to the Samkhya realist. Beecause the patter works, the jar cannot be said to have its existence necessarily. The second is the reply to the Sanyavadi nihilist. Why should the potter work at all? The third is the reply to the Vaisiska, according to whom a thing was non-existent first; but afterwords, which as the Jaina think, is applicable. The fourth is the reply to the Vedantis who says that things are real or unreal or anirvacariya. The fifth, sixth and seventh modes of reasoning arise out of the combinations of the first and the fourth, the second and the fifth and the third and the fourth respectively.

The purport of Sankara's views on Saptabanginaya is that the reasoning itself is faulty's for it is impossible that controdictory attitudes that like heart and cold, may belonged to the something at one and the sometime. (Vedanta explained: page 325 vol.I)

81- ब्र०सू० 2-2-33

82- ब्र०सू०शा०भा० 2-2-33

83- भामती पृ० 562

84- भामती पृ० 562

85- ब्र०सू० 2-2-34

86- भामती पृ० 562-63

87- बृ०सू० 2-2-35

88- ब्र०सू०शा०भा० 2-2-36

89- भामती -सू० 2-2-35 पृ० 563

90- ब्र०सू० 2-2-36

91- भामती 2-2-36 पृ० 564-65

92- वे०क० पृ० 563

93- ब्र०सू० 2-2-35

94- न्यायसूत्रम् 1-2-28

95- " 2-2-53

96- न्यायसूत्रम् 2-2-80

97- न्याय सू० 1-2-10

98- न्यायसूत्रम् 1-1-10

99- वैशेषिकसूत्रम् 1-1-15

100- वै० सू० 1-1-5

101- सर्व द० संग्रहे पृ० 407

102- तर्क सं० पृ० 180

103- ब्र० सू० शा० भा० 2-2-11 पृ० 504

104- भामती पृ० 506

105- ब्र०सू० शा० भा० पृ० 510

106- भामती पृ० 506-507 (2-2-11)

107- तै०-उ०-3-6 भामती पृ० 510

108- बृ०उ०-2-9-28 वेदान्तकल्पतरु पृ० 511

109- भारतीयदर्शन(बलदेव उपाध्याय, पृ० 355

110- भाष्य 2-1-15

111- भामती 2-1-15( पृ० 464)

112- तै० उ० 3-6

113- बृ०उ० 3-9-28

114- बृ०-उ०-2-9-28 तै० 2-7

115- बृ०उ० 4-4-6

116- बृ० उ० 4-4-25

117- छा०उ० 7-25-2

118- ब्र0 सू0 शा0भा0 1-1-1
119- श्वे - 6-11
120- ब्र0सू0 शा0भा0 1-1-4
121- तै0 उ0 2-6
122- बृ0उ0 4-3-7, 4-4-22
123- बृ0उ0 4-15-16
124- ब्र0सू0 2-3-18
125- बृ0उ0 4-3-9
126- चि0 सू0 38
127- मु0 उ0 6-1-9
128- श्वे0 उ0 5-6
129- बृ0 उ0 6-4-2
130- भामती 2-2-11 , दास गुप्ता इण्डियन फिलोसफी पृ0 492
131- मनुस्मृतिः 12-14
132- मनुस्मृति 12-105
133- महाभारत 12-306-43
134- महाभारत(शान्तिपर्व )
133- सांख्यकारिका 57
134- सांख्यकारिका 59
135- सू0 शा0 2-1-14
136- भामती 2-1-14
137- यो0 सू0
138- समाधिपाद- सू0 9)
139- यो0 स्द0 2-34
140- पातजंलयोगसूत्रम् 4-33
141 पा0 यो0 सू0 1-24
140- बृहदारण्यकोपनिषद् 2-4-5
141- श्वे0 2-8

142- का० 2-6-11

143- का० 2-6-18

144- ब्र० सू० शा०भा० पृ० 438

145- ,, ,, पृ० 439

146- का० 2-6-11

147- बृ० 3-9-26

148- ब्र०सू० शा०भा० पृ० 438

149- भामती 2-1-3 पृ० 439

150- सांख्यकारिका - 12

151- भामती पृ० 162

152- वेदान्तकल्पतरु पृ० 165

153- छा० 6-2-1

154- छा० 6-2-3

155- ऐते० 1-1-1

156- ब्र० शा०भा० 1-1-5 पृ० 169

157- सांख्यकारिका - 14

158- भामती पृ० 255-257

159- कल्पतरु 258

160- दासगुप्ता , पृष्ठ 493, हिस्ट्री आफ इण्डियन फिलोसफी ।

160- मीमांसासूत्रम् 1-1-1

161- मीमांसासूत्रम् 12-4-47

161- जै० सू० 1-2-1

163- मानमेयोदयः पृ० 212

164- ब्र० सू० 3-2-40

164- भामती 3-2-41 पृ० 731-32

165- तै० उ० 2-8-1

166- ब्र० सू० 1-3- 26-27

167- छा० 7-1-3

168- मुण्डo 3-2-9

169- तैo 2-1

170- छाo 3-7-1

171- बृo 4-5-15

172- बृo 4-5-15

173- जैम सूo 4-3-1

174- ब्रo सूo शाo भाo 1-1-4 पृष्ठ 113

175- भामती पृo 1-1-4 108-109

176- श्लोo वाo 5/4-उद्धृत भामती पृo 109

177- भामती 1-1-4 पृo 209

178- भामती 1-1-4 पृo सं0 130

179- भामती पृo सं0 131

180- भामती पृo 114

## द्वितीयोध्यायः

### वेदान्तपरम्परायाः सन्दर्भे भामतीप्रस्थानस्य स्वरूपपरिचयः

भामतीप्रस्थानस्य स्वरूपावबोधार्थं समग्रायाः वेदान्तपरम्परायाः स्वरूपपरिचयः आवश्यकः, इति कृत्वात्र संक्षिप्तरूपेण किंचिदुच्यते । वेदान्तपरम्परायाः इतिहासस्य विभाजनं त्रिधा कर्तुं शक्यते । तद्यथा -

(क) आर्षवेदान्तः (अर्थात् गौडपादात् पूर्वं प्रवर्तितानां सिद्धान्तानां परम्परा ।

(ख) गौडपादप्रवर्तितः अद्वैतवादः ।

(ग) वैष्णववेदान्तः ।

सामान्यतः एतदुच्यते यत् भगवता शंकराचार्येण ब्रह्मसूत्रम्, उपनिषदः, गीतां चाश्रित्य यानि भाष्याणि रचितानि तानि एव अद्वैतवेदान्तस्य आधारभूतानि सन्तीति । किन्तु बहुत्र एतत् निरूप्यते यत् अद्वैतवेदान्तस्य (सिद्धान्तरूपेण) उद्भावकः शंकराचार्यस्य परमगुरुः गौडपाद आसीत् । यद्यपि अद्वैतवेदान्तस्य ये प्रमुखाः सिद्धान्ताः सन्ति तेषां यत् किंचिदुल्लेखः स्वरूपान्तरेण गौडपादपूर्ववर्तिनि वेदान्तसाहित्येऽपि यत् किंचिदुपलब्धुं शक्यते तथापि गौडपादेन माण्डूक्यकारिकायां येन प्रकारेण अद्वैतवादस्य प्रवर्तनं कृतं तेनप्रकारेण ततः पूर्वं नोपलभ्यते । अ उत्तरकालिकवैष्णववेदान्तस्य स्वरूपज्ञानाय तस्य उल्लेखोऽप्यत्रावश्यकः ।

अस्मिन् अध्याये दीयमानेन विश्लेषणेन एतत्प्रतिपादयितुमिष्यते यत् आर्षवेदान्ताचार्यैः ये सिद्धान्ताः प्रवर्तिताः तेषामुल्लेखः ब्रह्मसूत्रशांकरभाष्यप्रभृतिष्वप्युपलभ्यते । वाचस्पतिना भामत्यां प्रायः सूत्रभाष्याश्रितः पन्था एव अनुसृतः । किन्तु स्थाने स्थाने तेन विशिष्टं विश्लेषणमपि एतेषां सिद्धान्तानां कृतम् । एतत्सर्वं अस्मिन्नेवाध्याये यथास्थाने द्रष्टुं शक्यते ।

'वेदान्तः' इत्यस्मिन् शब्दे पदद्वयं वर्त्तते वेदः, अन्तश्च । अतः सामान्यतया वेदानाम् अन्तः वेदान्तः इत्येवं प्रकारेण वेदान्तशब्दस्य विग्रहः क्रियते । अन्तः पदस्य कः अर्थः? इत्यस्मिन् विषये मतबाहुल्यं वर्तते । केषांचित् मतानुसारम् ईशोपनिषद् वेदानाम् अन्तिमभागे तिष्ठति । अतः उपनिषदो वेदान्त शब्देन अभिधीयन्ते । ''वेदान्तो नाम उपनिषद् प्रमाणं तदुपकारीणि च शारीरकसूत्राणि इत्येवं प्रकारेण सदानन्दयतिना यद् कथितं तदनुसारं तदेव शास्त्रं वेदान्तपदवाचि वर्तते, यस्य आधारभूताः सिद्धान्ताः उपनिषद्सुपलभ्यन्ते। वेदस्यार्थ ज्ञानमित्यपि भवति । एवं प्रकारेण तच्छास्त्रं वेदान्त इति नाम्ना व्यपदिश्यते यत्र ज्ञानस्य पर्यवसानम् अर्थात् चरमसंप्राप्तिः भवति ।

शंकराचार्येण तथा आनन्दगिरिणा गीताभाष्ये एतदप्युक्तं यद् यस्मिन् शास्त्रे त्वं पदार्थस्य(आत्मनः) तद पदार्थस्य (आत्मनः) तद पदार्थस्य (ब्रह्मणः) च ऐक्यं प्रतिपाद्यते । तदेव शास्त्रं वेदान्तः इति कथ्यते ।

अस्मिन् अध्याये शंकराचार्यपूर्ववर्तिनाम् आद्यवेदान्ताचार्याणां तथा शंकरोत्तरवर्तिवेदान्ताचार्याणां परिचयेन सह वैष्णववेदान्तिनां परिचयः अपि दातुम् इष्यते येन वेदान्तपरम्परायाः समग्रा रूपरेखा अत्र द्रष्टुं शक्यते । यद्यपि वैष्णववेदान्तिनां सिद्धान्तैः सह भामतीप्रस्थानप्रतिपादितानां सिद्धान्तानां तुलना सामान्यतः शक्या नास्ति, तथापि वेदान्त परम्परायाः समग्रस्य स्वरूपस्य ज्ञानाय वैष्णववेदान्तपरम्परायाः अपि उल्लेखः आवश्यकः इति मत्वा संक्षिप्त-रूपेण अत्र किंचिदुच्यते ।

2 । 0 शंकराचार्यपूर्ववर्तिनो वेदान्ताचार्याः तेषां सिद्धान्ताश्च ।

उपनिषत्सु, ब्रह्मसूत्रे, भगवद्गीतासु, महाभारते, अष्टादशपुराणेषु काव्येषु तथा आगमेष्वपि अद्वैतदर्शनस्य तत्वानि उपलभ्यन्ते ।

अपि च व्याससूत्रात्पूर्वतने सांख्यसूत्रे प्रथमाध्याये 'नाविद्यातोऽप्यवस्तुना बन्धायोगात् वस्तुत्वे सिद्धान्तहानिः' इत्यादि अद्वैतप्रतिक्षेपपराणि सूत्राणि अद्वैतस्य अतिप्राचीनत्वं द्योतयन्ति । एवमेव वैशेषिकसूत्रे तृतीयाध्याये द्वितीयाह्निके ''सुखदुःखज्ञाननिष्पत्यविशेषादैकात्म्यं सर्वशरीराणामिति एकात्मवादं पूर्वपक्षयित्वा 'नानात्मनो व्यवस्थातः' इति स्वाभिप्रेतमात्मभेदमाह तत्र भगवान् कणादः । एषु ग्रन्थेष्वपि दृश्यमानत्वेन अद्वैतस्य अतिप्राचीनत्वं सुव्यक्तम् ।

मीमांसाश्लोकवार्तिके 'स्वयं च शुद्धरूपत्वादभावाच्चान्यवस्तुनः । स्वप्नादिवदविद्याया प्रवृत्तिस्तस्य किं कृता'' इत्यादि स्थलेषु अपि पूर्वपक्षत्वेन उल्लिखितस्य अद्वैतस्य प्राचीनत्वं द्योत्यते ।

भगवद्गीतासु अपि अद्वैतस्य प्राधान्यं दृश्यते । तथाहि 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्'' इत्यत्र प्रपंचमिथ्यात्वं स्वरसतः प्रतीयते ।

गौडपादप्रवर्तितः तथा श्रीशंकराचार्यैः पोषितः विस्तारितश्च सोऽयम् अद्वैतवादः नूतनः, अपितु वेदप्रभृतिसकलप्रमाणग्रन्थमूलक एव । गौडपादात् पूर्वम् अनेके वेदान्ताचार्याः अभूवन् येषां नामानि ब्रह्मसूत्रे अनेकेषु स्थलेषु उपलभ्यन्ते ।

(1) बादरिः तस्य निर्विशेषाद्वैतवादश्च ।

बादरेः सिद्धान्तः निर्विशेषब्रह्मद्वैतवादः इत्याख्यायते । अनेन छान्देग्यश्रुत्यर्थविचारावसरे परं ब्रह्म निर्गुणं तथा अपरं ब्रह्म सगुणामित्युक्तम् । निर्विशेषब्रह्माद्वैतवादे अस्य पक्षपातः आसीद् इति प्रतीयते । 'कार्यं बादरिरस्य गत्युपपत्तेः'[1] अस्य सूत्रस्य भाष्ये शंकरः अस्य मतं जीवात्मनोर्चिरादिगतिविषये इत्थमाह - 'स एनान् ब्रह्म गमयति'[2] इत्यत्र विचिकित्स्यते - ' किं कार्यमपरं ब्रह्म गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति' कुतः संशयः ? ब्रह्मशब्दप्रयोगाद् गतिश्रुतेश्च । तत्र कार्यमेव सगुणमपरं ब्रह्मैतान् गमयत्यमानवः पुरुषः इति बादरिराचार्यो मन्यते । कुतः अस्य गत्युपपत्तेः । अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्वाद् । नतु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वावकल्प्यते । सर्वगतत्वाद् प्रत्यगात्मत्वाच्च गन्तृणाम्'' ।

अयं भावो यद् अर्चिरादिमार्गप्रवृत्तस्य पुरुषस्य कृते छान्दोग्योपनिषदि 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति''[3] अनया छान्दोग्यश्रुत्या अर्चिराद्यभिमानी देव अतिवाहिको वा देवः सुकृतिनः एनान् ब्रह्म गमयतीति ज्ञाप्यते । अत्र ब्रह्म पदेन परं ब्रह्म अपरं ब्रह्म वा ग्राह्यम् इत्यत्र बादरिराचार्योऽत्र श्रुतौ ब्रह्मपदस्य अर्थम् अपरं ब्रह्म करोति तथा अपरब्रह्मणो विशेषणं सगुणमिति ब्रवीति । अतोऽस्य मते परं ब्रह्म निर्गुणम् । अनेनायं निर्विशेषब्रह्माद्वैतवादी संलक्ष्यते ।

अस्य सूत्रस्य भामत्यां वाचस्पतिना 'अयं बादरिः 'तत्वदर्शी' 'साधुत्वदर्शी' चेति विशेषणाभ्यां सम्मानितस्तस्य निर्विशेषाद्वैतसिद्धान्तोऽपि प्रदर्शितः । अस्य मते अपि 'तत्वमसि' इति महावाक्येन ब्रह्मसाक्षात्कारात्मकः अविद्यानिवृत्तिरेव मोक्षः ।

1- ब्र० सू० 4-3-7

2- छा०उ० 4-15-5

3- छा० उ० 4-15-5

तस्मात् कार्यं बादरिः"[4] इत्येष एव स्थितः पक्षः । अविद्योपाध्यवच्छिन्नः आत्मैव जीवः विगलितनिखिलप्रपंचाभासविभ्रमम्, एकमेव ब्रह्म जीवब्रह्मणोश्चाभेदः । यथा "तत्वदर्शी बादरिर्ददर्श -कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गति । प्राप्ये ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ।। तत्वमसिवाक्यार्थसाक्षात्कारात्प्राक्किल जीवात्माऽविद्याकर्मवासनाद्युपाध्यवच्छेदादवस्तुतोऽनवच्छिन्नोऽवच्छिन्नमिवाभिन्नोऽपि लोकेभ्यो भिन्नमिवात्मानमभिमन्यमानः स्वस्मादन्यास्मिल्लास्त्वानर्चिरादीत्लोकान्गत्याऽऽप्नोतीति युज्यते । अद्वैतब्रह्मतत्वसाक्षात्कारवतस्तु विगलितनिखिलप्रपंचाभासविभ्रमस्य न गन्तव्यं न गतिर्न गमयितार इति किं केन संगतम्?"[5] इत्यादि । अत्रैव भामत्यां पुनरग्रे उक्तम् "एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयं विजृम्भितमविद्यायाः समुत्पन्नाद्वैततत्वसाक्षात्कारी न विद्वानभिमन्यते"[6]। अतोऽग्रे पुनरपि भामत्यामुक्तम् -- 'तस्मात्साधुदर्शी स भगवान्बादरिरसाधुदर्शी जैमिनिरिति सिद्धम् ।"[7]

ब्रह्मसूत्रे कृतान्ययाधिकरणेऽपि बादरेर्मतमुल्लिखितम्[8] तत्रेष्टकारिणश्चन्द्रमण्डलमधिरुह्य यावद् भोगकालं तत्रोषित्वा सानुशयाः (अवशिष्टकर्मणः) चन्द्रमण्डलतः पुनरावर्तन्ते । अत्रानुशयशब्दार्थो विचार्यते" । "तद् य इह रमणीयचरण अभ्याशायो हयत्ते कपूयां योनिमापद्येरन्"[9] इत्यत्र उक्ताचरणशब्दार्थो अनुशयः । बादरिराचार्यः चरणशब्दार्थं सुकृतं दुष्कृतं च मनुते । यथाहतुः महर्षिः 'बादरायणो भगवान्शंकरश्च 'सुकृतदुष्कृते एवेति तु बादरिः"[10]। बादरिः

------------------------------

4- ब्र० सू० शा०भा० 4-3-4

5- भामती 4-3-7 -994

6- भामती पृ० 994

7- भामती पृ० 996

8- ब्र०सू० 4-3-7

9- छा०उ० 5-10-7

10- ब्र०सू० 3-1-11

सुकृद्दुष्कृते एव 'चरण'शब्देन प्रत्याय्यते इति मन्यते । चरणमनुष्ठानं कर्मेत्य - नर्थान्तरम् । तथा हि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते । यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति । आचारोऽपि च धर्मविशेष एव । तस्मात् रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणाः निन्दाकर्माणि इति निर्णयः । बादरिमते अपरिच्छिन्नोऽपि परमेश्वरः प्रादेशमात्रहृदयप्रतिष्ठितेन मनसा स्मर्यते । अतः प्रदेशमात्र उच्यते । एवं बादरिः निर्विशेषब्रह्मादैवतवादी आसीत् ।

(2) काष्र्णाजिनिः, तस्य अनुशयसिद्धान्तश्च ।

आचार्यः काष्र्णाजिनिः कालः बादरायणस्य कालादनन्तरमेव । अस्य मतम् अद्वैतवादी द्वैतवादी वेति स्पष्टं न प्रतीयते । केवलम् आत्मनः पुनर्जन्म विषये अस्य मतमुपलभ्यते । पुनर्जन्मनः कारणविषये अयं कथयति यत् 'अनुशयः' एव पुनर्जन्मकारणं नतु शीलमाचारो वा । अनुशयो नाम भुक्तं कर्म, 'चरणादिति चेन्नोपलक्षणार्थेति काष्र्णाजिनिः''[11] । अस्य सूत्रस्य भाष्ये भगवता श्रीशंकरेणास्य मतमित्थमुल्लिखितम् -अथापि स्यात् । या श्रुतिरनुशयसद्भावप्रतिपादनायो-दाहृता । 'तद् य इह इह रमणीयचरणा[12]'' सा खलु चरणाद् योन्यापत्तिं दर्शयति नानुशयात् । अन्यच्चरणमन्योऽनुशयः । चरणं चारित्रमाचारः शील-मित्यनर्थान्तरम् । अनुशयस्तु भुक्तफलात्कर्मणो अतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति यथाकारी यथाचारी तथा भवति[13]'' इति यान्यवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यति[14]'' इति च । तस्माच्चरणाद् योन्यापत्ति श्रुते नानुशय-सिद्धिरिति चेत् । नैव दोषः । अतो अनुशयोपलक्षणार्थैवेषा चरणश्रुतिरिति काष्र्णाजिनिराचार्यो मन्यते । भगवता बादरायणेन स्वमतस्य पोषणे तथा

---

11- ब्र० सू० 3-1-9

12- छा० 5-10-7

13- बृ० उ० 4-4-5

14- तै० उ० 1-1-2

जैमिनिमतस्य खण्डने अस्य मतस्य उपयोगः कृतः । अयं बादरिमतस्य समर्थकः पोषकश्चासीत् ।

अत्र वाचस्पतिमिश्राः भामत्यामेवं कथयन्ति - 'शीलमाचारोऽनुशयादिभिन्नः तथाप्यस्यानुशयांगतया अनुशयोपलक्षणत्वं कार्ष्णाजिनिराचार्यो मेने । तथा च रमणीयचरणाः कपूयाचरणा इत्यनेनानुशयोपलक्षणात् सिद्धं सानुशयमेवावरोहणमिति ।''[15]

3- आचार्यः आत्रेयः तदीयः फलश्रुतिसिद्धान्तश्च ।

आत्रेयः पूर्वमीमांसायां प्रखाण्डः विद्वान् आसीत् । आत्रेयस्य नाम उपासनायाः फलप्राप्तिविषये उल्लिखितं वर्तते । ऋत्विक् यजमानयोर्मध्ये यजमान एव उपासनायाः फलभाग् भवतीति आत्रेयमतम् । 'स्वामिनः फलश्रुतेरित्यात्रेयः '[16] अत्र भाष्ये तस्मात्स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते' इति ।

अत्र भामती - 'प्रथमे काण्डे शेषलक्षणे तथाकाम इत्यत्रार्त्विक्सम्बन्धी कर्मणः सिद्धौ किं कामो याजमान उतार्त्विज्य इति संशय्यार्त्विज्येऽपि कर्मणि यजमान एव कामो गुणफलेष्विति निर्णीतम्, इह त्वेवंजातीयकानि चांगसबद्धानि उपासनानि किं याजमानान्येवोतार्त्विज्यानीति विचार्यत इति न पुनरुक्तम् ।''[17]

4- औडुलोमिः तस्य द्वैताद्वैतवादश्च ।

आश्मरथ्यवत् अयमपि द्वैताद्वैतवादी भेदाभेदवादी चासीत् । संसारिकदशायां जीवो ब्रह्मणः सर्वथा भिन्नः । देहेन्द्रियादिसम्पर्काज्जीवः कालुष्यं प्राप्नोति ज्ञानादिसाधनैर्मलमपनीयते ब्रह्मणा सह जीवैक्यं भवति । अस्यां मुक्तदशायां ब्रह्मजीवयोरभेदः । मुक्तस्य चात्मनश्चैतन्यरूपेण अभिव्यक्तिर्भवति सर्वज्ञत्वरूपेणाथवा सर्वेश्वरत्वरूपेण न भवति । यथाह भगवान्शंकराचार्यः-

15- भा० 3-4-44

16- ब्र० सू० 3-4-44

17- भामती पृ० 913

''विज्ञानात्म एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसम्पर्कात् कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात् सम्प्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेरिदमभेदेन उपक्रमणमित्यौडुलोमिराचार्यो मन्यते ।''[18]

भामत्याम् अत्रत्यमौडुलोमिमतम् अतीव स्फुटं दृश्यते । जीवो हि परमात्मनोऽत्यन्तं भिन्न एव सन् देहेन्द्रियमनोबुद्ध्युपधान संपर्कात्सर्वदा कलुषः, तस्य च ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहेन्द्रियादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदभेदेनोपक्रमणम् । एतदुक्तं भवति - भविष्यन्तमभेदमुपादाय भेदकालेऽप्यभेद उक्तः । यथाहुः पांचरात्रिकाः - आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः '' ।।[19]

अत्र रत्नप्रभायाम् - संसारदशायां भेद एव मुक्तावदाभेद इत्यौडुलोमिमतम् ।''[20] 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः'[21] इत्यस्य सूत्रस्य भाष्ये शंकराचार्यः आह - 'यद्यप्यपहतपात्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते, तथापि शब्दविकल्पणा एवैते । पात्मत्वादिनिवृत्तिमात्रं हि तत्र गम्यते । चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेण अभिनिष्पत्तिर्युक्ता । तथा श्रुतिः ''एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव''[22] इत्येवं जातीयकानुगृहीता भविष्यति ।

अत्र भामत्यामेवमुक्तं वाचस्पतिना - 'अनेकाकारतैकस्य नैकत्वान्नैकता भवेत् । परस्परविरोधेन न भेदाभेदसम्भवः ।। नह्येकस्य आत्मनः पारमार्थिकानेकधर्मसंभवः । ते चेदात्मनो भिद्यन्ते द्वैतापत्तेरद्वैतश्रुतयो व्याकुप्येरन् । अथ न भिद्यन्ते तत एकस्मादात्मनोऽभेदान्मिथोऽपि न भिद्येरन् । आत्मस्वरूपवत् । आत्मरूपं वा भिद्येत । भिन्नेभ्योऽनन्यत्वान्नीलपीतत्वात् । नच धर्मिणा आत्मनो न भिद्यन्ते मिथस्तु भिद्यन्त इति - साम्प्रतम्, धर्म्यभेदेन तदनन्यत्वेन

---

18- ब्र0सू0शा0भा0 1-4-21

19- भामती पृ0 416

20- रत्नप्रभा - 1,4-21

21- ब्र0 सू0 4-4-6

22- बृ0उ0 4-5-13

तेषामप्यभेदप्रसंगात् । भेदे वा धर्मिणोऽपि भेदप्रसंगादित्युक्तम् । भेदाभेदौ च परस्परविरोधादेकत्राभावान्न सम्भावत इत्युपपादितं प्रथमे सूत्रे । अभावस्माणामद्वैताविहन्तृत्वेऽपि तस्य पात्मादेः काल्पनिकतया तदधीननिरूपणतया तेषामपि काल्पनिकत्वमिति न तात्त्विकी तद्धर्मता शिलष्यते । एतेनसत्यकामसर्वज्ञसर्वेश्वरत्वादयोऽप्यौपाधिकाः व्याख्याताः, तस्मान्निरस्ताशेषप्रपञ्चेषनाव्यपदेश्येन चैतन्यमात्रात्मनाऽभिनिष्पद्यमानस्य मुक्तत्वात्मनोऽर्थशून्यैरेवाविहतपात्मसत्यकामादभिशाब्दैर्व्यपदेश इत्यौडुलोमिर्मेने'[23] । एवं च संसारिकदशायां जीवब्रह्मणोः भेदेन मुक्तिदशायामभेदेनास्य सिद्धान्तो भेदाभेदवादः इति सिद्धयति ।

अत्र कल्पतरु -' एते नेति भेदाभेदनिषेधात् भेदे च भावसत्त्वे सत्यकामत्वादीनां भावत्येवाद्वैतविघातकत्वम् । तस्मात् सत्यकामत्वादयोऽप्यौपाधिका विकल्पस्था इत्यर्थः ।'[24]

5- आचार्यः आश्मरथ्यः ; तस्य भेदाभेदवादश्च

आश्मरथ्यस्य समयः जैमिनेः तथा बादरायणात् पूर्वमेव आसीत् । अस्य मते विज्ञानात्म-परमात्मनोः मध्ये भेदाभेदसम्बन्धः वर्तते इति ।

'परमेश्वरस्य प्रादेशमात्रत्वम् इत्यस्य अर्थनिर्णये आचार्यस्य आश्मरथ्यस्यायं निर्णयो यत् परमेश्वरो वस्तुतोऽनन्तस्तथापि भावतान् अनुगृहीतुं

---

23- भामती पृ० 1009

24- वेदान्तकल्पतरु पृ० 10099

प्रादेशमात्रमात्मानमभिव्यनक्ति । अथवा स परमात्मा स्थानविशेषे अभिव्यज्यते । तस्याभिव्यक्तिस्थानं हृदयमस्ति । अतः प्रादेशमात्रमुच्यते - 'अभिव्यक्तेरित्याश्मरथ्यः'[25] । प्रदेशमात्रपरिमाणः परमेश्वरः उपासकानां कृते अभिव्यज्यते । प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेण अभिव्यज्यते । अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते[26] ।

अयं भेदाभेदवादी अथवा द्वैताद्वैतवादी आसीत् । अयं कथयति यत् मुक्तेः पूर्वं ब्रह्मजीवयोर्भेदो भवति । मुक्तेरनन्तरमुभयोरभेदो भवति । 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतिरपि आश्मरथ्यमतस्य तात्पर्यं समर्थयति । यथा च सूत्रम् 'प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः'[27] । अत्र भगवान् शंकराचार्यः- 'अस्त्यत्र प्रतिज्ञा - 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' 'इदं सर्वं यदयमात्मा इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिंगं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत । तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ।'[28]

अत्र भामतीकारः एवमाह - 'यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिंगा न वह्नेरत्यन्तं भिद्यन्ते । तद्रूपनिरूपणत्वात् । नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्त्यभावप्रसंगात् । तथा जीवात्मनोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसंगात् ।'[29]

आश्मरथ्यसिद्धान्तविषये भगवता शंकराचार्येणानास्था प्रकटिता - 'आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्, तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते[30] ।'

---

25- ब्र०सू० 1-2-29
26- ब्र०सू० 1-2-29
27- ब्र०सू० 1-4-20
28- ब्र०सू० शा०भा० 1-4-20
29- भामिती पृ० 415
30- ब्र०सू० शा०भा० 1-4-22

अत्र कियान् इत्यस्यार्थः- अभेदवद्भेदोऽपीति रत्नप्रभायाम् । पुनश्चाग्रे अनास्था प्रकटिता -' ये तु निर्बन्धं कुर्वन्ति । ते वेदान्तार्थं बाध्यमानाः श्रेयाद्वारं सम्यग्दर्शनमेव बाधन्ते कृतकमनित्यं च मोक्षं कल्पयन्ति न्यायेन च न संगच्छन्ते '[31] ।

एवं शांकरभाष्यभामतीरत्नप्रभात्यायनिर्णयानुसारम् आश्मरथ्याभिप्रेतो भेदाभेदवादः भवतीति निश्चीयते । श्रीरामानुजकृत श्रीभाष्यस्य टीकाकारः श्रीसुदर्शनाचार्यः कथयति यत् अस्यैवाश्मरथ्यस्य भेदाभेदवादं श्रीयादवप्रकाशोऽङ्गीकृतवान्[32] ।

अतः एतत् प्रतीयते यत् आश्मरथ्य एव भेदाभेदवादस्य सर्वप्राचीनः आचार्यः मासीत् इति ।

(6) आचार्यः काशकृत्स्नः ; तस्य निर्विशेष ब्रह्माद्वैतवादश्च ।

काशकृत्स्नः निर्विशेषब्रह्माद्वैतवाद्यासीत् । अस्येदं मतं यत् ब्रह्मणेव जीवात्मरूपेण जीवलोके अवस्थीयते इति । यथा पृथिव्यादीनां सृष्टिः ब्रह्मणः श्रूयते तथा जीवोत्पत्तिः न श्रूयते अतो जीवो न ब्रह्मणो विकारः ।

''अवस्थितेरिति काशकृत्स्नः'[33] अस्य सूत्रस्य भाष्ये भगवता शंकरेण इत्थं निरूपितम् -'अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदम भेदाभिधानमति काशकृत्स्न आचार्यो मन्यते ।''[34] तथा च ब्राह्मणम्- अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणवाणि[35]' इत्येवं जातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति ।

आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्, तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभि-

31- श्रीशंकरात्प्रागद्वैतवादः पृ 87

32- श्रीशंकरात्प्रागद्वैतवादः पृ0 86-87
33- ब्र0सू0 1-4-22
34- ब्र0 सू0 शा0भा0 1-4-22
35- छा0 उ0 6-3-2

प्रेत इति गम्यते । औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्यते, प्रतिपिपादयिषितार्थानुसारात् 'तत्वमसि' इत्यादि श्रुतिभ्यः ''[36] ।

अत्र भामतीकारोऽपि काशकृत्स्नाचार्यप्रतिपादितस्य सिद्धान्तस्य प्रामाण्यं व्यनक्ति । मतत्रयमुक्त्वा काशकृत्स्नीयमतं साधुत्वेन निर्धारयति । तद्यथा - 'कस्मात् पुनः काशकृत्स्नीयस्य मतस्य श्रुतिप्रबन्धोपन्यासेन पुनः श्रुतिमत्त्वं स्मृतिमत्त्वं चोपसंहारोपक्रमणमाह- अतश्चेति'[37] ।

अत्र रत्नप्रभायामार्षविदान्तेषु काशकृत्स्नमतस्यैव प्रामाण्यमाह- ''आर्षेषु पक्षेषु काशकृत्स्नपक्षस्यैव उपादेयत्वे किं बीजं तदाह दर्शितमिति ।

सूत्रभाष्यादि पर्यालोचनया आचार्यकाशकृत्सनमते जीवब्रह्मणोः पारमार्थिकोऽभेदो अविद्यया कात्यनिको भेदः, तत्वमस्यादिमहावाक्यजज्ञानेन स्वस्वरूपावगमो मोक्ष इति निर्विशेषब्रह्माद्वैतसिद्धान्तः पर्यवसीयते ।

अत एव निर्विशेषाद्वैतवादी भागवान् शंकरः काशकृत्स्नसिद्धान्तं प्रति स्वीयं पक्षपातं समदर्शयत् ।

7- आचार्यः जैमिनिः; तस्य निर्विशेषब्रह्माद्वैतवादश्च

बादरायणः जैमिनिश्च समकालिकौ आस्ताम् । अयं जैमिनि पूर्वमीमांसायाः सूत्रप्रणेतृत्वेन कर्ममीमांसायाः आचार्यत्वेन च प्रथितः । ब्रह्मसूत्रे एकादशसु सूत्रेषु जैमिनिसिद्धान्ताः उपपादिताः । वेदान्तसिद्धान्तानां सन्दर्भे निर्विशेषब्रह्माद्वैतवाद्यासीत् इति कथयितुं शक्यते । एतेषु एकादशसु सूत्रेषु केवलं चत्वारि सूत्राणि''[38] परिहाय शेषेषु सूत्रेषु पूर्णतो अंशतो वा निर्विशेषब्रह्माद्वैतसिद्धान्ताः उपलभ्यन्ते । उदाहरणतया ''साक्षादप्यविरोधम् जैमिनि'[39] इति सूत्रस्य शांकरभाष्ये भामत्यां च जीवपरमात्मनोरैक्यमित्थमुक्तम्''-

36- ब्र०सू० 1-4-22
37- भामती पृ० 418-419
38- ब्र०सू० 1-3-31, 3-2-40, 3-4-18, 3-4-40
39- ब्र०सू० 1-2-28

निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहो तद्विषय एव वैश्वानरशब्दः केनचिद् योगेन वर्तिष्यते । "विश्वश्चायं नरश्चेति, विश्वेषां वा अयं नरः, विश्वे वा नरा अस्येति विश्वनरः परमात्मा सर्वात्मकत्वाद् विश्वनर एव वैश्वानरः"। तद्धितोऽनन्यार्थः राक्षसवायसादिवद्''[40]। अत्र परमात्मा सर्वात्मकत्वाद् इत्युक्त्या जीवब्रह्मणोरभेदः प्रतिपादितः ।

अत्र भामत्याभिमतोऽपि स्पष्टम् -'' वैश्वानरः परमात्मा चराचरसाक्षीति । पूर्वपक्षिणोऽनुशयमुन्मूलयति - निश्चिते चेति । विश्वात्मकत्वाद् वैश्वानरः प्रत्यगात्मा विश्वेषां वायं नरः, तद्विकारत्वाद्विश्वप्रपंचस्य । विश्वे नरा जीवा वात्मनोऽस्य तादात्म्येनेति''[41] ।

एवमेव 'संपत्तेरिति जैमिनिस्तथाहि दर्शयति'[42] अस्य सूत्रस्य भाष्ये भामत्यां च त्रैलोक्यस्य परमात्मनश्चैकत्वप्रतिपादनद्वारा एकमेवाद्वैतं तत्त्वं ब्रह्मेति निरूपितम्- 'द्युप्रभृतीन्पृथ्वीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयन्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति ''। [43]

अन्यस्मिन् स्थले निर्विशेषाद्वैतपक्षः प्रसाधितः । 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके''[44] । अत्र शांकरभाष्ये जैमिनिमतेन जीवालिंगेन ब्रह्म गृह्यत इत्युक्त्वा जीवब्रह्मणोः अभेदोऽभ्यधायि । यथा शांकरभाष्यम्- 'अपि च नैवात्र विवदितव्यं जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति'[45] ।

जैमिनिमते मोक्षविषयेऽयं विशेषो यदयं मुक्तिपुरुषस्य सेन्द्रियशरीरसत्तां मन्यते यथा -''भावं जैमिनिर्विकल्पामननाद्'[46] इत्यस्य भाष्ये शंकरेण स्पष्टीकृतम् -जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति

----------------------------

40- ब्र०सू० 1-2-28
41- ब्र०सू०शा०भा० 1-2-28
41- भामती पृ० 266
42- ब्र०सू० 1-2-31
43- ब्र०सू० शा०भा० 1-2-31
44- ब्र०सू० 1-4-18
45- ब्र०सू०शा०भा० 1-4-18
46- ब्र० सू० 4-4-11

मन्यते । यतः 'सः एकधा भवति त्रिधा भवति'[47] इत्यादिना अनेकधा-भावविकल्पमामनन्ति । न ह्यनेकविधाता विना शरीरभेदेन अञ्जसी स्यात् । अयमेवार्थः भामत्यामपि - "शरीरेन्द्रियभेदे हि ज्ञानाभावः समञ्जसः ।
न चार्थसम्भवे युक्तं स्तुतिमात्रमनर्थकम् ।।"

ब्रहमसूत्रम्

उपनिषद निबद्धाः गूढतमभावाः उपनिषदर्थाः सर्वैः ज्ञातुं न शक्यन्ते इति कृत्वा सर्वेषां सम्यगवबोधानाय सूत्ररूपेण प्रणीताः भगवता बादरायणेन। ब्रहमसूत्रे चत्वारः अध्यायाः सन्ति । तेषां नामानि समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायश्च ।

प्रथमे सर्वासां वेदान्तश्रुतीनां ब्रहमण्येव समन्वयः। द्वितीये विरोधितर्काणां निराकरणेन वेदान्तमतस्य स्थापनम्, तृतीये ब्रहमविद्या कथं साधयितुं शक्यते तथा तस्याः साधनं किमिति निरूपितम् । चतुर्थे साधनानन्तरं ब्रहमविद्यायाः किं फलं भविष्यतीति प्रतिपादितम् ।

अनेके आचार्याः स्वमतानुसारं तस्य भाष्यं रचयित्वा वेदान्तसम्प्रदायान् प्रवर्तितवन्तः । तद्यथा -

| भाष्यकारस्य नाम | रचनाकालः | भाष्यस्यनाम | मतम् |
|---|---|---|---|
| (1) शंकराचार्यः - | 800 ई० - | शारीरकभाष्यं | अद्वैतम् |
| (2) भास्कराचार्यः - | 1000 ई०- | भास्करभाष्यं | भेदाभेदम् |
| (3) रामानुजाचार्यः - | 1200 ई०- | श्रीभाष्यम् | विशिष्टाद्वैतम् |
| (4) मध्वाचार्यः- | 1300 ई०- | पूर्णप्रज्ञभाष्यम्- | द्वैतम् |
| (5) निम्बार्काचार्यः | 1300 ई०- | वेदान्तपरिजातभाष्यं | द्वैताद्वैतम् |
| (6) श्रीकण्ठाचार्यः | 1300 ई०- | शैवभाष्यम्- | शैवविशिष्टाद्वैतम् |
| (7) वल्लभाचार्यः | 1500 ई०- | अणुभाष्यम्- | शुद्धाद्वैतम् |
| (8) विज्ञानभिक्षुः - | 1600 ई०- | विज्ञानामृतभाष्यम् | अविभागद्वैतम् |
| (9) बलदेवस्वामी- | 1700 ई०- | गोविन्दभाष्यम् | अचिन्त्यभेदाभेदः |

47- छा० उ० 7-26-2

8- आचार्यः काश्यपः; तस्य भेदवादः

काश्यपः वेदान्तस्य प्राचीनाचार्यः अभवत् । शाण्डिल्येन 'भक्तिसूत्रे' काश्यपस्य तथा बादरायणस्य च मते उल्लिखिते । सूत्रकारस्य शाण्डिल्यस्य मतानुसारेण काश्यपः भेदवादी तथा बादरायणः अभेदवादी अस्ताम् ।

9- भगवान् बादरायणः; तस्य वेदान्तसूत्रं च

वेदान्तदर्शनस्य प्रणेता भगवान् वेदव्यासः एव । व्यासः 'बादरायणः' कृष्णद्वैपायनः', सन्यरत आदयः अपरनाम्ना अभिधीयते । बादराणेन महाभारतम्, अष्टादशपुराणानि, ब्रह्मसूत्रं, च रचितानि । वेदान्तक्षेत्रे ब्रह्मसूत्रस्य स्थानम् अद्वितीयं भवति ।

10- आचार्यः भर्तृप्रपंचः; तस्य ज्ञानकर्मसमुच्चयवादश्च

आचार्यः भर्तृप्रपंचः कठोपनिषद् बृहदारण्यकोपनिषद् चाधिकृत्य भाष्यं रचितवान् । भर्तृप्रपंचः 'ज्ञानकर्मसमुच्चयवादी' आसीत् । दार्शनिकदृष्ट्या अस्य मतं द्वैताद्वैतम्, भेदाभेदः, अनैकान्तम् इत्यादिक्रमेणापि अभिधीयते । तस्य मते ब्रह्मणः एकत्वं, जगतः नानात्वं च भवति ज्ञानकर्मणश्च सार्थकता अंगिक्रियते । तस्य मते जीवः मोक्षात्पूर्वं हिरण्यगर्भभावं प्राप्नोति । हिरण्यगर्भत्वम् न मोक्षावस्था, किन्तु मोक्षस्य पूर्वकाले वर्तमानम् अन्तरालत्वम् अवस्थामात्रांच वा वर्तते ।

11- भर्तृहरिः तस्य शब्दाद्वैतवादश्च ।

भर्तृहरेः नाम यामुनाचार्यस्य ग्रन्थेषु दृश्यते । तस्य वेदान्तग्रन्थाः नोपलभ्यन्ते । भर्तृहरेः शब्दब्रह्मवादम् आश्रित्य मण्डनमिश्रेण 'ब्रह्मसिद्धिः, इति नाम्ना ग्रन्थो लिखितः । पुनः ब्रह्मसिद्धेरुपरि वाचस्पतिमिश्रः 'ब्रह्मतत्वसमीक्षां' रचितवान् शान्तरक्षितकृते 'तत्वसंग्रहे' विमुक्तात्मरचितायाम् 'इष्टसिद्धौ' जयन्तभटटविरचितायां 'न्यायमंजर्याम्' च शब्दाद्वयवादस्य उल्लेखो दृष्टुं शक्यते । भर्तृहरेः तस्यानुयायिनश्च 'पश्यन्ती' नाम्न्याः वाचः शब्दब्रह्मरूपत्वं मन्वते ।

ब्रह्मसूत्रस्य दहराधिकरणभाष्ये भगवता शंकरेण शब्दाद्वैतवादस्य खण्डनं कृतम् । भर्तृहरिणा एतव प्रतिपादितं यत् 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । विवर्तोऽर्थभावेन प्रक्रिया जगतो यतः[48] । वैयाकरणानां मतानुसारं शब्दब्रह्म एव परमतत्वम् । एतदेव स्फोट इति नाम्ना व्यह्रियते । जगत् शब्दब्रह्मणः विवर्तत्वेन भासते । किन्तु शंकराचार्येण एतत्स्पष्टीकृतं यत् ''वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोटकल्पना अनर्थिका'' । भगवता शंकराचार्येण एतदप्युक्तं यत् वर्णगतवैचित्र्यस्य कारणम् वर्णगतस्वरूपभेदो न अपितु अभिव्यंजकवैचित्र्यमेव तन्निमित्तम् ।

भामतीप्रस्थानेऽपि शब्दाद्वैतवादस्य(स्फोटवादस्य) खण्डनं दृश्यते । अस्य विशेषणम् अग्रे यथास्थाने द्रष्टव्यम् ।

12- आचार्यः ब्रह्मदत्तः तस्य जीवानित्यत्वसिद्धान्तश्च ।

ब्रह्मदत्तः शंकराचार्यपूर्ववर्ती एकः अतिप्रसिद्धो वेदान्ताचार्यः अभवत् । ब्रह्मदत्तस्य मते जीवः अनित्यः ब्रह्म एव एकमात्रं नित्य पदार्थः । तथाचोक्तम्- ''एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभाग् इत्याम्नातम्, तेन जीवोऽपि अचिदिन जनिमान्'' । तस्य मते जीवजगदश्च उभयमपि ब्रह्मणः उत्पद्य ब्रह्मणि लीयते । किं च उपनिषदां यथार्थतात्पर्यं तत्वमसि प्रभृति महावाक्येषु न अपितु 'आत्मा वा अरे द्रष्टव्यः'' इत्यादि नियोगवाक्येष्वेव द्रष्टव्यः इति अभिप्रयति ब्रह्मदत्तः ।

शंकराचार्यस्य मते महावाक्यजनितज्ञानादेव अविद्यानिवृत्तिः । तस्य मते उपासना ज्ञानाद्भिन्ना भवति । किन्तु सः उपासनायाः विषये एव विधिम् अंगीकरोति नतु ज्ञानविषये । अविद्यानिवृत्यर्थकं तत्वज्ञानं वस्तुतन्त्रमेव । अतः आत्मज्ञानाय विधिं नांगीक्रियते । पूर्वमीमांसायां कर्मविधेः तथा उत्तरमीमांसायां भावना विधेः प्रामुख्यम् । अतः उपनिषत्सु 'आत्मा वा अरे' इत्यादि विधिवाक्यैरेव अधिकं महत्वं नतु 'तत्वमसि' वाक्यस्य । वस्तुनः स्वरूपज्ञानं विना भावना

---

48- वाक्यप्रदीयम् ब्रह्मकाण्ड- ।
49- न्यायसि० तत्वमुक्ताकलापः- सर्वार्थसिद्धिवृत्तौ 2- 16 पृ० 175

दोषादिवर्जितः ।। देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ।।[51]

भामत्यां वाचस्पतिः 'ब्रह्मविदां गाथा' इत्यादिक्रमेण एतेषां श्लोकानामुल्लेखं करोति । सुन्दरपाण्ड्यस्य कालः 707 विक्रमाब्द आसीद् इति प्रतीयते सः शैववेदान्ती आसीत् ।

उपर्युक्तेभ्यः अतिरिक्ता अपि अनेके वेदान्ताचार्याः अभूवन् । तेषां नामानि यामुनाचार्येण वेदार्थसंग्रहे, तथा श्रीनिवासदासेन यतीन्द्रमतदीपिकायां परिगणितानि ।

एतेषाम् अपरेषां च वेदान्ताचार्याणां नामानि सम्प्रदायानुसारं ब्रह्मसूत्रभाष्याद्यनुसारं च परिज्ञायन्ते । तेषु उपवर्षः, गुहदेव-कपर्दी भारुचिः, ब्रह्मानन्दि, टंकः, द्रविडः, भर्तृमित्रः प्रमुखाः सन्ति । एषु केनचित् वेदान्त-विषयकं सूत्रं केनचित् भाष्यम्, केनचित्, केनचिद् कारिका, केनचिद् व्याख्यानादीनां रचना कृता ।

एषु व्यासः ब्रह्मसूत्रकर्तृत्वेन प्रसिद्धः । तस्याभिमताद्वैतवादस्य स्वरूपं कीदृशमिति निश्चेतम् उत्तरवर्तिभिः वेदान्तिभिः स्व स्वमतानुसारं ब्रह्मसूत्र-भाष्यप्रभृतिषु ग्रन्थेषु विभिन्नाः विचाराः प्रकटिताः ।

अद्वैतवादसम्प्रदायस्य अर्वाचीनेषु आचार्येषु सर्वप्रमुखोऽस्ति भगवान् शंकराचार्यः । सः प्रायः अन्येषां मतानि खण्डयित्वा स्वसिद्धान्ते स्थापयति । शंकराद्वैतवादस्य आधारभूतानि तत्वानि गौडपादकारिकायां दृष्टुं शक्यन्ते ।

## 14- आचार्यः गौडपादः तस्य अद्वैतवादश्च ।

शंकराचार्यस्य कथनेषु गौडपादसिद्धान्तस्य महान् प्रभावः संलक्ष्यते । अयं गौडपादाचार्यः श्रीशंकरस्य परमगुरुः आसीत् । श्रीगौडपादनिर्मित माण्डूक्यकारि-कायाः भाष्यस्यावसाने परमगुरुत्वेन सः नमस्कृतः-

''यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि''[52] ।

---

51- ब्र०सू० शा०भा० 1-1-4

52- मा०का० शा०भा०(अन्ते)

शंकरेण ब्रह्मसूत्रभाष्येऽपि महतादरेणास्य नाम गृहीतम् । अस्य गौडपादाचार्यस्य शिष्यः श्रीगोविन्दपादाचार्यस्तथा गोविन्दपादाचार्यस्य शिष्यः भगवत्पादः शंकराचार्यश्च आसीत् । श्रीशंकराचार्यस्य सम्प्रदायपरम्परायां गुरु-वन्दनम् एवं क्रियते -

''नारायणं पद्मभवं वशिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ।।
श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तत्तोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि'' इति ।

गौडपादाचार्यस्य ग्रन्थेषु बौद्धमतम् अधिकृत्य किंचित् न दृश्यते । अतः एतद् कथयितुं शक्यते यत् तस्य काले बौद्धमतस्य प्रचारो नासीत् इति ।

माण्डूक्यकारिका गौडपादाचार्यस्य प्रमुखः ग्रन्थो भवति । शंकराचार्यः माण्डूक्यकारिकायाः भाष्यं रचितवान् । गौडपादप्रणीतं सांख्यकारिकाभाष्यमपि वर्तते । तेन उत्तरगीताभाष्यमपि लिखितम् ।

अस्य कालविषये ऐतिहासिकानाम् ऐकमत्यं नास्ति । ईशापूर्वाष्टमशतकादा-रभ्य ईशोत्तरसप्तमशतकपर्यन्तमस्य कालो दोलायमानोऽस्ति । किन्तु ईशोत्तर-मष्टकं शतकमस्य काल इति निर्णये आधुनिकानां बहूनां विदुषां सम्मतिर्वर्तते । एवमेव यथास्य कालनिर्णये विवादस्तथैवास्य तथैवास्य ग्रन्थविषयेऽपि विवादः । अस्य कृतित्वेन इमे ग्रन्थाः उदाह्रियते -

(1) माण्डूक्योपनिषत्कारिका(आगमशास्त्रम्)

(2) सांख्यकारिकाभाष्यम्

(3) नृसिंहोत्तरतापन्युपनिषद्व्याख्या

(4) श्रीदुर्गासप्तशतीटीका ।

(5) सुभगोदयः

(6) श्रीविद्यारत्नसूत्रम् ।

एषु 'माण्डूक्योपनिषद्कारिकाग्रन्थः श्रीगौडपादाचार्यस्य प्रसिद्धा कृतिः । गौडपादाचार्यस्य प्रसिद्धो माण्डूक्यकारिकाग्रन्थो बौद्धदर्शनसमानानि वाक्यानि शब्दाः सिद्धान्तश्चोपलभ्यन्ते । अस्य माण्डूक्योपनिषद्कारिका 'आगमशास्त्रम्' इत्यपि कथ्यते । अस्मिन् आगमशास्त्रे चत्वारि प्रकरणानि सन्ति । आगमप्रकरणम् वैतथ्यप्रकरणम्- अद्वैतप्रकरणम्-अलातशान्तिप्रकरणं च ।

प्रथमं प्रकरणम् आगमाख्यम् । अत्र जाग्रताद्यवस्थात्रितयचिन्तनं, ब्रह्मचिन्तनं, तत्प्रत्युपायप्रणवचिन्तनं च । अत एवास्यागमप्रकरणां नाम मुख्यं उपेयोपायचिन्तनम् । उपेयः आत्मा । उपायः प्रणवोपासनम् अत्र एकोनत्रिंशत् कारिकाः, सन्ति । तत्राष्टदशासु उपास आत्मा चिन्तितः । अवशिष्टेष्वेकादशासु उपायः प्रणवोपासनं चिन्तितम् । अयमात्मा शरीरे स्थितत्रिविधामवस्थामनुभवति जाग्रत्स्वप्नसुषुप्त्याख्याम् । जाग्रदावस्थापन्नः सः तैजसः उच्यते, सुषुप्त्यवस्थापन्नः प्राज्ञ इत्युच्यते । इदं तुरीयमेव आत्मनो मुख्यं स्वाभाविकं रूपम् । विश्वः प्रथमः चक्षुषि वर्तते । बाह्यविषयाननुभवति, अतः बाह्यप्रज्ञः स्थूलभुक् उच्यते । तैजसः द्वितीयः । मनसि वर्तते अन्तस्थितान् विषयान् अनुभवति । अतः अन्तःप्रज्ञ उच्यते ।

तुरीयावस्थां वर्णयन् आचार्य आह - ''अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ।।'' [53]

द्वितीयप्रकरणं वैतथ्यप्रकरणम् । प्रथमप्रकरणस्य अन्तिमकारिकायां द्वैतस्योपशमः शिवः'' [54] इत्युक्तम् । अतः पूर्वं -'ज्ञाते द्वैतं न विद्यते'' [55] इत्युक्तम् । एवमेव 'मायामात्रमिदं द्वैतम्'' इत्युक्त्या द्वैतस्य मिथ्यात्वं प्रतिपादितम् । प्रपंचस्य मिथ्यात्वं साधयितुकामः आचार्यः इदं वैतथ्यप्रकरणम् आरब्धवान् । अस्मिन् प्रकरणे अष्टाविंशत्कारिका आसन् । अत्र चोक्तं तेन विश्वमिदं स्वप्नमिव माया इव गन्धर्वनगरमिव ।

---

53- मा०का० 1-16
54- मा०का० 1-19
55- मा०का० 1-15
56- मा०का० 1-17

इदं वैतथ्यप्रकरणं विभिन्नसृष्टिवादिनां मतानुदृत्य अद्वैतमाहात्म्यम्, अद्वैतावस्थापन्नमाहात्म्यं च वर्णयति ।

अद्वैतनामके तृतीयप्रकरणे षटत्रिंशत् कारिकाः सन्ति । अस्मिन् प्रकरणे अद्वैतप्राप्तिरुपदिष्टा । तथात्माद्वैतमेव परमार्थं तत्वमिति निश्चितम् श्रुतिभिः सिद्धोऽप्यद्वैते तर्केण साधयितुकामः आचार्यः गौडपादः तृतीयाम् अद्वैताख्यं प्रकरणम् आरब्धवान् ।

अलातशान्तिनामके चतुर्थे प्रकरणे अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिपादयितुमुक्तमप्यजातवादं पुनर्विशदयितुम्,अद्वैतं द्रढयितुं चतुर्थमलातशान्त्याख्यं प्रकरणमारब्धवान् । अलातशान्तिरित्यस्य अलातशान्ति दृष्टान्तोपलक्षितं प्रकरणमित्यर्थः अलातं नाम भ्रमदङ्गारः ।

एवं श्रीगौडपदाचार्यः अद्वैतवेदान्तस्य सम्प्रदायानुसारी सर्वप्रथमः आचार्यः आसीत् । अद्वैतवेदान्तस्य मूर्धन्य आचार्यः भागवत्पादः शंकराचार्योऽपि य वेदान्तसम्प्रदायविदनिराचार्यैः 'तथा च सम्प्रदायविदो वदन्ति' इत्याद्यादरसूचकैः वाक्यैः तं समपूजयत् । श्रीसुरेश्वरो हि 'एवं गौडेन्द्रविडैर्न पूज्यैरयमर्थः प्रकाशितः इति वाक्येन तस्य पूज्यत्वं प्रथितवान् । अस्मिन् मते द्वैतमेव प्रपंचः । प्रपंच एव संसारः । प्रपंचाभाव एव मोक्षः ।

15- आचार्यः गोविन्दपादः तस्याद्वैतसिद्धान्तश्च ।

आचार्यः गोविन्दभागवत्पादः गौडपादाचार्यस्य शिष्यः तथा शंकराचार्यस्य गुरुश्चासीत् । तस्य ग्रन्थः अद्य नोपलभ्यते । तथापि शंकरस्य गुरुत्वेण गोविन्द भागवत्पादः अद्वैते प्रथितः ।

## 220 शंकराचार्यस्तदुत्तरवर्तिनः अद्वैताचार्याः तेषां सिद्धान्ताश्च ।

### (1) भगवान् शंकराचार्यः, तस्य अद्वैतसिद्धान्तश्च

अद्वैतवादस्य प्रवर्तकः यद्यपि गौडपादः आसीत् तथापि अस्य प्रमुखः प्रतिष्ठापकः शंकराचार्यः आसीत् । अतः अद्वैतदर्शनं 'शांकरदर्शनम्, इति नाम्ना अपि अभिधीयते । 'ब्रह्मसूत्रम्' 'भगवद्गीता' 'उपनिषदः' चाधिकृत्य भाष्याणि रचितवान् । ब्रह्मसूत्रं, भगवद्गीता, उपनिषदश्च वेदान्ते 'प्रस्थानत्रयी' इत्येवं रूपेण प्रथिताः वर्तन्ते ।

किं च उपदेशसाहस्री, शतश्लोकी, दक्षिणामूर्तिस्तोत्रम् 'आनन्दलहरी, 'सौन्दर्यलहरी प्रभृतयः अन्येऽपि ग्रन्थाः रचिताः भगवत्पादेन शंकराचार्येण ।

वेदान्तदर्शनस्य, अद्वैतवादस्य वा प्रवर्तनं भारते बहोः कालात्पूर्वम- भवत् । किन्तु प्रस्थानत्रयिम् अतिरिच्य भगवत्पादशंकराचार्यद्वारा रचितं शांकरभाष्यम् एवास्य मतस्य प्रमुखः आधारग्रन्थो वर्तते । ब्रह्मसूत्रम् आश्रित्य यानि भाष्यानि अद्यावति उपलभ्यन्ते । तेषु शारीरकभाष्यमेव सर्वाधिकम् आद्रियते । भगवत्पादस्य जीवनसम्बन्धिनी या सामग्री उपलभ्यते तामाश्रित्य एतत् कथयितुं शक्यते यत् शंकराचार्यपादाः अद्भुतयोगैश्वर्यसम्पन्नाः प्रकाण्डपण्डिताः महात्मानः आसन् । तेषां वाण्यां सरस्वती स्वयं विराजतेस्म । एतदेव कारणं यत्तैः द्वात्रिंशत् वर्षपरिमितायां आयुषि अनेके महान्तो ग्रन्थाः विरचिताः । समस्ते भारते भ्रमणं कृत्वा स्थाने स्थाने विरोधिनः पराजिताः भारतस्य चतुर्दिक्षु चत्वारो मठाः स्थापिताः । एतत् दृष्टवा एवश्लोकानाम् एषा धारणा संजाता यत् वस्तुतः शंकराचार्यः भगवतः शंकरस्य अवतारभूतः आसीत् इति ।

भगवतः शंकराचार्यस्य जीवनवृत्तं आनन्दगिरिकृते 'शंकरदिग्विजये' 'चिद्विलासयतिकृते 'शंकरदिग्विजये' तथा माधावाचार्यविरचिते संक्षिप्ते शंकरविजये' यत् किंचिदुपलभ्यते । किन्तु ऐतिहासिकदृष्टया एतेषु ग्रन्थेषु कोऽपि प्रमाणिकतां न भजते ।

भगवतः शंकराचार्यस्य जन्म क्रैस्तवषष्ठशताब्दयाः आरभ्य क्रैस्तवनवम- शताब्दयाः पूर्वं कस्मिश्चित्समये अभवत् इति प्रायः सर्वैः स्वीक्रियते । किन्तु एतेषां वास्तविकी जन्मतिथिः काऽस्ति इत्यस्मिन् विषये अधुनापि ऐकमत्यं नास्ति

एकं मतमिदमस्ति यत् शंकराचार्यस्य जन्म 2593 वर्षे अभवत् तथा मृत्युः 2625 कलिवर्षे 32 वर्षावस्थायाम् अभवत् । कांची मठे द्वारिका मठे च ये गुरुपरम्परे स्वीक्रियेते, तयोः अनुसारम् अपि शंकराचार्यस्य जन्म कलिकालस्य सप्तविंशति शताब्दयाम् अभवत् । पाश्चात्यविदुषां मतानुसारं शंकराचार्यस्य कालः निम्नलिखितप्रकारेण अनुमातुं शक्यते । मैक्समुल्लर महोदयः 788 क्रैस्तवर्षे मैकडानल महाभागः 788 क्रैस्तवर्षे, कीथ महोदयः 820 क्रैस्तववर्षे मन्यते किन्तु तिलकमहाभागाः शंकराचार्यस्य जन्मकालः 688 क्रैस्तववर्षे स्वीकुर्वन्ति । भगवतः शंकराचार्यस्य समयविषये कांचि-कामकोटिद्वारका गोवर्धनपीठानाम आम्नायेष्वपि मतैक्यं नास्ति । तथापि आधुनिकाः इतिहासविदः अष्टमक्रैस्तवशताब्दयाम एव भगवतः शंकराचार्यस्य जन्मः अभवदीति मन्वते ।

(2) पद्मपादः (सनन्दनः)

पदमपादः शंकराचार्यस्य प्रथमो शिष्यः आसीत्[57] । अस्य जन्म दक्षिणभारतस्य चोलदेशे अभवत् । अस्य यथार्थनाम 'सनन्दनः' आसीद् । असौ गोवर्धनमठस्याधिपतिः आसीत् । 'पंचपादिका' नाम ग्रन्थस्य कर्ता भवति पद्मपादः । पंचपादिकोपरि प्रकाशात्मयतिना 'विवरण' नाम्नी टीका रचिता अस्यां तेन प्रतिबिम्बवादस्य प्रतिपादनं कृतम् । किंच अखण्डानन्देन 'तत्वदीपनम्' विद्यारण्यमुनिना 'विवरणप्रमेयसंग्रहः' नाम्न्यः टीकाः रचिताः । पदमपादेन 'आत्मानात्मविवेकः' 'प्रपंचसारः' लघुवार्तिकटीका एते त्रयो ग्रन्थाः अपि रचिताः । भामती पन्थिभिः विवरणप्रस्थानसम्मतस्य प्रतिबिम्बवादस्य खण्डनं कृतम् ।

असौ गुरोरन्यः भक्तः आज्ञानुवर्ती चासीत् । शंकराचार्यः एवं स्वयमेव स्वभाष्याणि पाठयति स्म । गुरोराह्वानं श्रुत्वा विना साधनं नदीं तर्तुं प्रवृत्तस्यास्य पादयोरधः पद्मानि उद्गतानि अतः असौ पदमपाद इति नाम्ना प्रख्यातोऽभवत् ।

---

57-

एकः कापालिकः यदा शंकराचार्यस्य वधं कर्तुमैच्छत् तदा पद्मपादेन एव तस्य वधः कृतः ।

3 श्रीसुरेश्वराचार्यः ; तस्य आभासवादश्च ।

सुरेश्वरस्य जन्म महिष्मती नगरेऽभवत् । राजगृहस्यैवापरं नाम महीष्मती आसीत् इति केषांचित् मतम् । सः प्रथमं कुमारिलभट्टस्य शिष्यः आसीत् । पश्चात् शंकराचार्यस्य शिष्यः संजातः इति केषांचित् मतम् । किन्तु नैकेषां विदुषाम् मतमिदमस्ति यत् मण्डनमिश्र-सुरेश्वरयोः भिन्नत्वमस्तीति ।

सुरेश्वराचार्येण सन्यासग्रहणात्पूर्वं आपस्तम्बीयमण्डनकारिका 'भावना-विवेकः' 'काशीमोक्षनिर्णयादयः ग्रन्थाः लिखिताः । सन्यासग्रहणानन्तरं ' 'तैत्तिरीय श्रुतिवार्तिकम्' 'नैष्कर्म्यसिद्धिः' 'इष्टसिद्धिः' 'स्वाराज्यसिद्धिः, पंचीकरणवर्तिकम्, बृहदारण्यकोपनिषतवार्तिकम्' 'ब्रह्मसिद्धिः ब्रह्मसूत्रभाष्यवार्तिकम्, विधि विवेकः, मानसोल्लासः' वार्तिकसारः, वार्तिकसारसंग्रहः, प्रभृतयः अनेके ग्रन्थाः रचिताः । येषां विदुषां मतानुसारं सुरेश्वरमण्डनयोः भिन्नत्वमस्ति तेषां कथनमस्ति यत् सुरेश्वरराचार्यस्य सिद्धान्ताः मण्डनमिश्रस्य सिद्धान्तेभ्यः भिन्नाः वर्तन्ते इति ।

भगवता शंकरेण शृंगेरी मठस्य स्थापना कृता । तस्य मठस्य अध्यक्षः सुरेश्वराचार्यः आसीत् । अपरे कथयति यत् एषा नगरी नर्मदानदीतटे वर्तमान-इन्दौर नगरस्य समीपे कुत्रचित् आसीत् ।

सुरेश्वराचार्यः आभासवादस्य प्रवर्तकः आसीत् । सुरेश्वरस्य प्रवर्तितस्य प्रस्थानस्य विश्लेषणं उपरिष्टात् दृष्टव्यम् ।

भामतीपरिस्थिभिः आभासवादस्य खण्डनं कृतं तथा अवच्छेदवादस्य समर्थनं कृतम् । अस्य विवरणं यथास्थाने अग्रे दृष्टव्यम् ।

4- सर्वज्ञात्ममुनिः-

अस्य यथार्थ नाम नित्यबोधाचार्यः इत्यासीत् । ईशवीयस्य अष्टम-शतकस्य उत्तरार्धे सः शृंगेरी मठस्य अधिपतिः आसीत् । 'संक्षेपशारीरक'नामक ग्रन्थः अनेन प्रणीतः । अस्य स्थितिकालः 814-905 ख्रिस्ताब्दयोर्मध्ये एव

वर्तते इति पण्डितानां मतम् । अस्य गुरोः नाम देवेश्वराचार्यः आसीत् ।

अनेन ब्रह्मसूत्रमाश्रित्य 'संक्षेपशारीरकम्' लिखितम् । यथा भगवतः शंकराचार्यस्य शारीरकभाष्यम् चतुर्षु अध्यायेषु विभक्तमस्ति तथैव संक्षेपशारीरके अपि चत्वारः अध्यायाः वर्तन्ते । विषयाणां क्रमोऽपि समान एव । प्रथमे अध्याये 562ः द्वितीये 248, तृतीये 365 चतुर्थे च 53 श्लोकाः सन्ति । सर्वज्ञात्ममुनिना असौ ग्रन्थः 'प्रकरणवार्तिकम्' इत्येवं रूपेणापि आरव्यापितः । श्रीमता मधुसूदनसरस्वतिना श्रीरामतीर्थेन च अस्योपरि टीके लिखिते ।

5- वाचस्पतिमिश्रः

वाचस्पतिमिश्रस्य जन्मदेशः मिथिला आसीत्[58] । अस्य गुरुः त्रिलोचनः आसीत् । अस्य प्रथमो ग्रन्थो भवति 'न्यायसूचीनिबन्धः' न्यायसूचीनिबन्धस्य रचनायाः विषये वाचस्पतिः स्वयमेवोद्घोषयति -

'न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे । श्रीवाचस्पतिमिश्रेण वस्वंकवसुवत्सरे'' इति । ज्योतिशास्त्रानुसारेण वसु= 8 अंक= 9, वसुः =8 अर्थात् 398 तमे वैक्रमे वर्षे वाचस्पतिमिश्रः, 'न्यायसूचीनिबन्ध नाम्न' ग्रन्थस्य निर्माणम् अकरोत् इति अस्माभिः सप्रमाणं ज्ञातुं शक्यते ।

वाचस्पति षड्दर्शनव्याख्याकारः आसीत् । न्यायकणिका वाचस्पतिना पूर्वमीमांसाम् अधिकृत्य रचिता । अनन्तरं मण्डनमिश्रस्य ब्रह्मसिद्धिमाश्रित्य सः ब्रह्मतत्वसमीक्षाम् अरचयत् । भाट्टमतमनुसृत्य तेन'तत्वबिन्दुः ( रचिता । उद्योतकरस्य न्यायवार्तिकमाश्रित्य सः 'न्यायवार्तिकतात्पर्यटीकां,विरचितवान् । न्यायशास्त्रे वाचस्पतेः द्वितीया कृतिः भवति 'न्यायसूचीनिबन्धः' । सः सांख्यसूत्रोपरि 'सांख्यतत्वकौमुदी' नामकं ग्रन्थम्, योगशास्त्रे व्यासभाष्यमधिकृत्य 'तत्ववैशारदीम्' च अरचयत् । वाचस्पतेः अष्टमा कृतिः भवति 'भामती' । वेदान्तसूत्रस्य शांकरभाष्यमधिकृत्य रचितेयं 'भामती'व्याख्या वाचस्पतेः सर्वतन्त्रस्वतन्त्रत्वं प्रमाणयति । वाचस्पतिः भामत्यां स्वयमेव लिखति -

---

-)

58-

''आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गंगाप्रवाहपातः पवित्रयति'' इति । वाचस्पतिमिश्ररचितां भामतीमाश्रित्य अद्वैतवेदान्तशास्त्रे अवच्छेदवादनामकं एकं नूतनप्रस्थानं प्रवर्तितमभूव । वाचस्पतिमिश्रस्य विषये विस्तृतं विवरणम् अग्रे यथास्थाने दीयते ।

6- प्रकाशात्मयतिः

वेदान्तदर्शने प्रकाशात्मयतेः नाम सुप्रख्यातमेव । सः शांकरभाष्यस्य पंचमपादिकायाः विशेषं व्याख्यानं कृत्वा स्वमतं स्थापयति । अस्य जन्म दशम-शताब्दयाम् अभवत् । अस्य गुरोः नाम अनन्यानुभवः आसीत् । प्रकाशात्मयतिना पदमपादाचार्यस्य 'पंचपादिकाम् आश्रित्य 'विवरणम्' नाम्नी टीका लिखिता । अद्वैतवेदान्ते असौ 'विवरणप्रस्थानम्' इत्यस्य नूतनप्रस्थानस्य आविर्भावम् अकरोत् । अस्यापरं नाम प्रकाशानुभवः आसीत् । अद्वैतसम्प्रदाये विवरण टीकायाः अतीव महत्वं वर्तते ।

7- अद्वैतानन्दः

अस्य जन्म 1206 विक्रमसंवत्सरे दक्षिणभारते कावेरीतटे कस्मिश्चित् स्थाने अभवत् । अस्य पितुः नाम प्रेमनाथः ,मातुः पार्वतीदेवी आस्ताम् । अस्य यथार्थं नाम सीतानाथः आसीत् । अस्य गुरोः नाम भूमानन्दसरस्वती आसीत् । असौ कांचीकामकोटिपीठस्य अध्यक्षः आसीत् । असौ सप्तदशे वर्षे सन्यासी जातः । गुरुः स्वस्थाने एनं मठाधीशपदे नियोज्य काशीं गतः । गुरोः वाराणसी गमनानन्तरम् अनेन रामानन्दसरस्वती नाम्नो महात्मनः सकाशात् ब्रह्मसूत्रशारीरकभाष्यस्य अधीत्य अध्ययनं कृतम् । अद्वैतस्य अध्ययनानन्तरम् अनेन त्रयः प्रसिद्धाः ग्रन्थाः लिखिताः । तद्यथा'ब्रह्मविद्याभरणम्' ''शान्तिविवरणम्''गुरुप्रदीपः' च । गुरुप्रदीपः शांकरभाष्यस्य वृत्तिरूपेण प्रसिद्धो वर्तते ।

8- श्रीहर्षमिश्रः

श्रीहर्षः न केवलं संस्कृतसाहित्ये सुप्रसिद्धो महाकविः आसीदपि तु अद्वैत-वेदान्ते अपि निष्णातः आसीत् । श्रीहर्षस्य जन्म द्वादशे शताब्दे अभवत् । श्रीहर्षः नैयायिकानां वैष्णवानां च सिद्धान्तान् अखण्डयत् ।

श्रीहर्षस्य 'खण्डनखण्डखाद्यम्'प्रसिद्धो ग्रन्थो वर्तते । किं च 'नैषधीयचरितम्' अर्णवर्णनम्' 'शिवशक्तिसिद्धिः', 'नवसाहसांकचम्पू, छन्दप्रशस्ति, गौडोवर्शिकुलप्रशस्ति, विजयप्रशस्तिः, स्थैर्यविचार्यप्रकरणादयः अपि अस्य अन्ये प्रसिद्धाः ग्रन्थाः सन्ति । असौ विशेषतः उदयनस्य न्यायमतं खण्डयित्वा अद्वैतमतं स्थापयामास ।

9- आनन्दबोध भट्टाचार्यः (आनन्दबोधयति)

अस्य जन्म त्रयोदशविक्रमशताब्दे अभवत् [60] । अस्य न्यायमकरन्दनामके ग्रन्थे वाचस्पतिमिश्रस्य प्रकाशानन्दस्य नाम्नी उपलभ्येते । अतः अस्य जन्मकालः तेषाम् अनन्तरमेव आसीत् इति सिद्धयति । अस्य प्रसिद्धाः त्रयो ग्रन्थाः- 'न्यायमकरन्दः' 'प्रमाणमाला' न्यायदीपावली' च । त्रिष्वपि ग्रन्थेषु अद्वैतमतस्य विवेचनं क्रियते । 'न्यायमकरन्दः अद्वैतस्य प्रामाणिको ग्रन्थः भवति ।

10- आचार्यः अमलानन्दः

अमलानन्दस्य जन्मः दक्षिणभारते अभवत् । सः यादववंशीयस्य राज्ञो महादेवस्य तथा रामचन्द्रस्य समकालिक आसीत् । अस्यगुरोः नाम अनुभवानन्दः आसीत् । अस्य कालः त्रयोदशतमे क्रैस्तवे शताब्दे स्वीक्रियते । अमलानन्देन वाचस्पतिमिश्ररचितं भामतीमाश्रित्य 'वेदान्तकल्पतरु'नाम्नी टीका लिखिता । केषांचित् विदुषाम् इदमपि मतमस्ति यत् पंचपादिकामाश्रित्य'पंचपादिकादर्पणम्'इत्येषः ग्रन्थोऽपि अमलानन्देन लिखितः । अमलानन्दस्य समयः त्रयोदश तमे क्रैस्तवशताब्दे आसीत् ।

11- श्रीचित्सुखाचार्यः

अस्य जन्मसमयः त्रयोदश शताब्दे वर्तते । अस्य प्रमुखो ग्रन्थः 'तत्वप्रदीपिका' वर्तते । 'तत्वप्रदीपिकायाः मंगलश्लोकात् चित्सुखस्य गुरुः 'ज्ञानोत्तमः'आसीत् इति ज्ञातुं शक्यते । सः न्यायमतस्य खण्डनं कृत्वा शांकरमतं स्थापयामास ।

---

60-

61-

चित्सुखी व्यासतीर्थेन प्रणीतस्य 'न्यायमकरन्दस्य'टीका भवति । तदतिरिक्तम् अनेन शारीरकभाष्योपरि 'भावप्रकाशिका' ब्रह्मसिद्धेरुपरि 'अभिप्रायप्रकाशिका' नैष्कर्म्यसिद्धेरुपरि 'भावतत्त्वप्रकाशिका' च रचिताः । अनेन त्रयोदशशताब्दयां संजातस्य 'न्यायलीलावतीकारस्य वल्लभाचार्यस्य तथा श्रीहर्षस्य उल्लेखः कृतः तथा चतुर्दशशताब्दयां समुत्पन्नेन विद्यारण्यस्वामिना अस्य उल्लेखः कृतः । अतः अस्य जन्म त्रयोदशशताब्ध्याम् अभवत् इति सिध्यति ।

12- आचार्यः भारतीतीर्थः

भारतीतीर्थस्य जीवनकालः त्रयोदश विक्रमशताब्दे आसीत् । वैयसिकन्यायमालायाम् अनेन विद्यातीर्थः स्वगुरुत्वेन निर्दिष्टः । केषांचित्मतानुसारं भारतीतीर्थस्य एव अपरं नाम विद्यारण्यः आसीत् । किन्तु जैमिनीय न्यायमालायाः विस्तरनाम्न्यां टीकायां विद्यारण्येन भारतीतीर्थः स्वगुरुत्वेन निर्दिष्टः ।

असौ शंकरस्यानुयायी आसीत् । वैयासिकन्यायमाला पद्यबद्धः सरलो ग्रन्थो वर्तते । ब्रह्मसूत्रस्य चतुर्णाम् अध्यायानां सारः चतुर्षु श्लोकेषु अपि निबद्धं वर्तते । तद्यथा प्रथमाध्यायस्य तात्पर्यम्-

''समन्वयो स्पष्टलिंगमस्पष्टत्वेऽप्युपास्यगम् ।
ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ।।''

द्वितीयाध्यायस्य तात्पर्यम् -

'द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिंगश्रुतेरप्यविरुद्धता ।।

तृतीयाध्यायस्य तात्पर्यम्-

'तृतीये विरतिस्तत्त्वं पदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानबहिरंगादिसाधनम् ।।''

चतुर्थाध्यायस्य तात्पर्यम्

'चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ।
ब्रह्मप्राप्ति ब्रह्मलोकाविति पदार्थसंग्रहः '' ।।

13- आचार्यः शंकरानन्दः

आचार्यः शंकरानन्दः विद्यारण्यस्वामिनः शिक्षागुरुरासीत् । विद्यारण्यः 'पंचदशी' नामके ग्रन्थे तथा विवरणप्रमेयसंग्रहे (मंगलश्लोके) शंकरानन्दं गुरुरूपेण स्वीकरोति । असौ शांकरवेदान्तस्य परिपोषकः आसीत् । अनेन 'ब्रह्मसूत्रदीपिका' 'गीताटीका' उपनिषद्ग्रन्थानां टीका च लिखिताः ।

14- माधवाचार्यः (विद्यारण्यस्वामी)

अस्य जन्म 1324 विक्रमसंवत्सरे तुंगभद्रायास्तटे हम्पी नगरस्य पार्श्ववर्तिनि अभवत् । माधवाचार्यस्य अपरं नाम विद्यारण्यस्वामी आसीत् । अस्य कुलनामः सायणः इत्यासीत् । विद्यातीर्थः 'भारतीतीर्थः' 'शंकरानन्दः' एते त्रयः अस्य गुरवः आसन् । विशिष्टाद्वैतवादस्यानुयायी वेदान्तदेशिकाचार्यः माधवाचार्यस्य समकालिकः बालसखा च आसीत् । श्रृंगेरी मठस्याध्यक्षपदवीं स अलंचकार । अस्य पितुः नाम मायणः मातुः नाम श्रीमती तथा भ्रातुः नाम सायणः आसन् । व्याकरणपुराण उपनिषद् प्रभृतीन् अनेकविषयानधिकृत्य षोडश ग्रन्थाः अनेन लिखिताः ।

अद्वैतवेदान्ते 'पंचदशी' 'विवरणप्रमेयसंग्रह' 'अनुभूतिप्रकाश' 'अपरोक्षानुभूतिटीका' 'जीवन्मुक्तिविवेकादयः' ग्रन्थाः अनेन रचिताः । श्रीमाधवाचार्यः विजयनगरराज्यस्य संस्थापकः आसीत् । 1392 तमे विक्रमसंवत्सरे वीरबुक्कं राजसिंहासने नियोज्य स स्वयं प्रधानमन्त्रिपदमलंचकार । अस्य प्रसिद्धाः ग्रन्थाः (1) माधवीयधातुवृत्तिः, (2) जैमिनीयन्यायमाला, अस्या टीका विवरणम् च । (3) पंचदशी (4) अनुभूतिप्रकाशः, अपरोक्षानुभूतस्य टीका, सर्वदर्शनसंग्रहः, जीवन्मुक्तिविवेक, ऐतरेयोपनिषद्दीपिका, तैत्तिरीयोपनिषद्दीपिका, छान्दोग्योपनिषद्दीपिका, बृहदारण्यकवार्तिकसारः शंकरदिग्विजयम्, कालमाधवः ।

15- आनन्दगिरिः

आचार्यः आनन्दगिरिः शांकरभाष्यस्य टीकाकारत्वेन प्रसिद्धो वर्तते । सः शंकराचार्यस्य वेदान्तसूत्रभाष्योपरि 'न्यायनिर्णयं' नाम्नीं टीकां लिखितवान् । अस्य गुरः श्रीशुद्धानन्दस्वामी आसीत् । अस्य समयः पंचदशशताब्दे एव आसीत् । अस्य-समयः-च टीकातिखितं 'शांकरदिग्विजयम्' इति ग्रन्थोऽप्यनेन रचितः ।

सः 'आनन्दज्ञानः' इत्यपरे नाम्नापि अभिधीयते । आनन्दगिरिः शंकराचार्यकृतम् उपनिषद्भाष्यम्, गीताभाष्यम्, शारीरकभाष्यम्, शतश्लोकी तथा श्री सुरेश्वराचार्यकृतं तैत्तिरीयोपनिषत्वार्तिकं, बृहदारण्यकोपनिषद्भाष्यवार्तिकम् च अधिकृत्य टीकाः रचितवान् । एवंप्रकारेण आनन्दगिरिः वेदान्तदर्शनक्षेत्रे टीकाकाररूपेण सुप्रसिद्धो वर्तते ।

16- प्रकाशानन्दः

आचार्यः प्रकाशानन्दः वेदान्तसिद्धान्तमुक्तावली ग्रन्थस्य कर्ता भवति । असौ अप्पयदीक्षितस्य पूर्ववर्ती तथा विद्यारण्यस्य परवर्ती आसीत् इत्यनुमीयते । अस्य गुरुः आचार्यः ज्ञानानन्दः भवति । 'वेदान्तसिद्धान्तमुक्तावली' वेदान्तशास्त्रे सुप्रसिद्धो ग्रन्थो भवति । तस्योपरि अप्पयदीक्षितः 'सिद्धान्तदीपिका नाम्नी वृत्तिं लिखितवान् ।

17- अखण्डानन्दः

अखण्डानन्दस्य स्थितिकालः पंचदशशताब्दः आसीत् । अस्य गुरुः 'अखण्डानुभूतिः प्रकाशात्मयतेः पंचपादिका विवरणोपरि असौ तत्वदीपनम् नामकं निबन्धं रचितवान् । अप्पय्यदीक्षितेनापि 'सिद्धान्तलेशसंग्रहे' अस्य मतं समुद्धृतम् ।

विवरणमतमाश्रित्य भावप्रकाशिनी एका टीका नृसिंहाश्रमेण 1593 विक्रमांके लिखिता । भावप्रकाशिकायां तत्वदीपनस्य उल्लेखो वर्तते । अस्य समयः 16 विक्रम शताब्दः आसीत् ।

18- भाल्लनाराध्यः

षोडश विक्रमशताब्दे अस्य जन्म दक्षिणभारते अभवत् । अनेन 'अद्वैतरत्नम्' तथा अभेदरत्नम् इत्येतौ द्वौ ग्रन्थौ रचितौ । किं च अद्वैतरत्नोपरि तत्वदीपनम्' इति नाम्नी टीका अपि लिखिता ।

19- नृसिंहाश्रमः

अस्य गुरुः श्रीजगन्नाथाश्रमजी आसीत् । अस्य समयः षोडश शताब्दे आसीत्[62] । तत्वविवेकः' 'भेदधिक्कारः', 'अद्वैतदीपिका', 'वैदिकसिद्धान्तसंग्रहः', 'तत्वबोधिनीम्' एते अस्य प्रसिद्धाः ग्रन्थाः सन्ति ।

20- नारायणाश्रमः

असौ नृसिंहाश्रमस्य शिष्यः तथा समकालिकः चासीत् । सः स्वगुरोः ग्रन्थस्योपरि 'भेदधिक्कार सत्क्रिया' नाम्नी टीकां रचितवान् । अस्य प्रमुखोद्देश्यं द्वैतवादस्य खण्डनमासीत् ।

21- रंगराजाध्वरी

आचार्यः रंगराजाध्वरी अप्पय्यदीक्षितस्य पिता आसीत् । अस्य निवासस्थलं कांची आसीत् । 'वक्षस्थलाचार्यः' इति अपरनामधेयमपि अस्य वर्तते । असौ राजः कृष्णदेवरायस्य सभापण्डितः आसीत् । सः 'अद्वैतविद्यामुकुरम्' 'विवरणदर्पणम्' प्रभृति ग्रन्थान् रचितवान् । अनेन न्यायवैशेषिकसांख्यादीनां मतानि निराकृत्य अद्वैतमतस्य पुष्टिः कृता ।

22- अप्पयदीक्षितः

अप्पयदीक्षितः सर्वेषु विषयेषु प्रकाण्डः आसीत् । पितुः सकाशादेव असौ वेदान्ताध्ययनम् अकरोत् । अस्य स्थितिकालः मुगलशासनकाले अभवत्[63] । अस्य जन्म

62-

63-

1608 विक्रमसंवत्सरे तथा मृत्युः 1680 तमे विक्रमसंवत्सरे 72 वर्षावस्थायामभवत् । अस्य पितुः नाम 'रंगराजाध्वरी' पितामहस्य नाम आचार्यः दीक्षितः कनिष्टस्य भ्रातुः नाम अच्चानदीक्षितः । असौ सर्वतन्त्रस्वतन्त्रः विद्वान् सर्वेषु क्षेत्रेषु निष्णातः आसीत् । अस्य ग्रन्थाः निम्नलिखिताः सन्ति ।

अलंकारग्रन्थाः - कुवलयानन्दम्, चित्रमीमांसा, 'वृत्तिवार्तिकम्, नामसंग्रहमाला ।

व्याकरणग्रन्थाः - नक्षत्रपदावलिः (पाणिनीतन्त्रवादनक्षत्रवादमाला) प्राकृतचन्द्रिका ।

मीमांसाग्रन्थाः -

चित्रपुटम्, विधिरसायनम्-सुखोपयोजनीः उपक्रमपराक्रमः, वादनाक्षत्रमाला च ।

वेदान्तग्रन्थाः - परिमलः, न्यायरक्षामणिः, सिद्धान्तलेशसंग्रहः, मतसारार्थसंग्रहः, न्यायमंजरी, न्यायमुक्तावली, नियमयूथमालिका, शिवार्कमणिदीपिका, रत्नत्रयपरीक्षा, मणिमालिका, शिखरिणीमाला, शिवतत्वविवेकः, शिवतर्कस्तवः, ब्रह्मतर्कस्तवः, शिवार्चनचन्द्रिका, शिवध्यानपद्धतिः, आदित्यस्तवरत्नम्, मध्वतन्त्रमुखमर्दनम्, यादवाभ्युदयभाष्यम् ।

23- भट्टोजिदीक्षितः -

आचार्यः भट्टोजिदीक्षितः सुप्रसिद्धः वैयाकरणः आसीत् । सः वेदान्तशास्त्रे अप्पय्यदीक्षितस्य शिष्यः अभवत् । तस्य व्याकरणशास्त्रस्य गुरुः श्रीकृष्णदीक्षितः आसीत् । 'सिद्धान्तकौमुदी' 'प्रौढमनोरमा' आदि तस्य प्रसिद्धाः व्याकरणग्रन्थाः सन्ति । वेदान्तविषये अनेन 'तत्वकौस्तुभः तथा 'वेदान्ततत्वविवेकटीकाविवरणम्' इत्येतौ द्वौ ग्रन्थौ प्रणीतौ ।

24- सदाशिवब्रह्मेन्द्रः

भट्टोजिदीक्षितस्य समकालिकः असौ कांचीकामकोटि-मठाधिपतिः आसीत् । 'अद्वैतविद्याविलासः, बोधायात्मनिर्वेदः, 'गुरुरत्नमालिका, 'ब्रह्मकीर्तननतरंगिणी प्रभृतिग्रन्थाः अनेन लिखिताः ।

25- सदानन्दयोगीन्द्रः

स्वामी सदानन्दयोगीन्द्रः वेदान्तसारस्य कर्ता भवति । वेदान्तसारः अद्वैतशास्त्रस्य अतीव सरलः प्रकरणग्रन्थः वर्तते । अपर ग्रन्थः 'शांकरदिग्विजयः' अपि अनेन लिखितः ।

अस्य जीवनकालः षोड्शशताब्दयाः पूर्वभागः आसीत् । वेदान्तसारम् आश्रित्य श्रीनृसिंहस्वामिना 'सुबोधिनी' नाम्नी टीका लिखिता ।

26- नृसिंहसरस्वतीः -

नृसिंहसरस्वती वेदान्तसारस्य 'सुबोधिनी' नाम्नः टीका ग्रन्थस्य कर्ता भवति । तस्य गुरुः श्रीकृष्णानन्दस्वामी अभवत् ।

27- मधुसूदनसरस्वती

अद्वैते अस्य स्थानम् अद्वितीयमेव भवति । असौ वंगदेशीयः आसीत्[64] । असौ आजन्म ब्रह्मचारी आसीत् ।

विद्याध्ययनानन्तरमसौ वाराणसीं गतः । तत्र बहवः पण्डिता अनेन शास्त्रार्थ पराजिताः । असौ शाजहाम सम्राजः समकालिकः आसीत् । अस्य विद्यागुरुः श्रीमाधव-सरस्वती तथा दीक्षागुरुः श्रीविश्वेश्वरसरस्वतीः आस्ताम् । असौ अद्वैतसम्प्रदायस्य युगनिर्माता आसीत् । अस्य 'युक्तिकौशलम्' अप्रतिमम् ।

अनेन अद्वैतसिद्धान्तानां स्पष्टं प्रतिपादनम् कृतम् । अस्य प्रमुखाः ग्रन्थाः एते सन्ति - 'सिद्धान्तबिन्दुः, 'संक्षेपशारीरकव्याख्या' 'अद्वैतसिद्धिः' 'अद्वैत-रत्नरक्षणम्' 'वेदान्तकल्पलतिका' 'गूढार्थदीपिका' 'प्रस्थानभेदः' 'महिम्नस्तोत्र-टीका' 'भक्तिरसायनम्' च ।

28- धर्मराजाध्वरीन्द्रः

धर्मराजाध्वरीन्द्रः 'वेदान्तपरिभाषा' नाम्नः ग्रन्थस्य कर्ता भवति । अस्य परमगुरुः 'नृसिंहाश्रमः आसीत् । अस्य परमगुरुः 'नृसिंहाश्रमः 'आसीत् । यथा वेदान्तपरिभाषायाः मंगलश्लोके तेन स्वयमेव लिखितम् । 'यदन्तेवासिपंचास्यैनिरस्ता भेदिवारणाः । तं प्रणौमि नृसिंहाख्यं यतीन्द्र परमं गुरुम् ।।''

अस्य गुरुः वेङ्कटनाथः आसीत् । अस्य ग्रन्थेषु 'वेदान्तपरिभाषा' प्रमुखतां भजते । गंगेशोपाध्यायस्य 'तत्वचिन्तामणिः' नाम्नः ग्रन्थस्योपरि ~~अपि~~ अनेन 'तर्कचूडामणि' नाम्नी टीका रचिता ।

29- रामतीर्थः

श्रीरामतीर्थस्वामी वेदान्तसारस्य टीकाकारः भवति । अस्य स्थितिकालः सप्तदशशताब्द्याम् आसीत् । स्वामी रामतीर्थः 'संक्षेपशारीरकोपरि 'अन्वयार्थ-प्रकाशिका' 'शंकराचार्यस्य उपदेशासाहस्री ग्रन्थोपरि 'पदयोजनिका' वेदान्तसारोपरि 'विद्वन्मनोरञ्जिनी' च रचितवान् ।

30- आपदेवः-

आपदेवः सुप्रसिद्धो मीमांसक आसीत् । अस्य 'मीमांसान्यायप्रकाशः' 'पूर्व-मीमांसायाः एक प्रामाणिका ग्रन्थो भवति । अनेन वेदान्तसारस्योपरि 'बालबोधिनी' नाम्नी टीका ~~टीका~~ अपि रचिता ।

31- गोविन्दानन्दः

आचार्यः गोविन्दानन्दः शारीरकभाष्यस्य टीकायाः 'रत्नप्रभायाः कर्ता भवति । सः कथयति यत् भाष्यम् अकान्तुम् इयं टीका तेन रचिता । तद्यथा-
''विस्तृत ग्रन्थ वीक्षायामलसं यस्य मानसम् ।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ।।''

32- रामानन्दसरस्वतीः-

श्रीरामानन्दसरस्वती रत्नप्रभाकारस्य गोविन्दानन्दस्वामिनः शिष्यः आसीत् । सः ब्रह्मसूत्रमधिकृत्य 'ब्रह्मामृतवर्षिणी नाम्नीं टीकां तथा पंचपादिकाविवरणोपरि 'विवरणोपन्यासम्' रचितवान् ।

33- काशमीरकसदानन्दयतिः- काश्मीरक सदान्नन्दयतिः 'अद्वैतब्रह्मसिद्धिः' नाम्नः प्रकरणग्रन्थस्य कर्ता भवति । अद्वैतब्रह्मसिद्धिः अद्वैतमतस्य प्रामाणिको ग्रन्थो भवति । अस्य स्थितिकालः सप्तदशशताब्द्याम् आसीत् ।

34- रंगनाथः- रंगनाथेन ब्रह्मसूत्रशांकरभाष्यमधिकृत्य वृत्तिः रचिता । असौ शांकरमतस्य पोषकः आसीत् ।

35- ब्रह्मानन्दसरस्वतीः-

ब्रह्मानन्द सरस्वतीः अद्वैतसिद्धेः टीकाकारः भवति । मधुसूदनसरस्वती अस्य समकालिकः आसीत् । अद्वैतसिद्धेः उपरि 'लघुचन्द्रिका' नाम्नी टीका अनेन रचिता । तथा सिद्धान्तबिन्दुमधिकृत्य 'रत्नावली' 'न्यायमुक्तावली' द्वौ ग्रन्थौ लिखितौ । अस्य स्थितिकालः सप्तदशशताब्दयाम् आसीत् । अस्य दीक्षागुरुः श्रीपरमानन्दसरस्वतीः तथा विद्यागुरुः श्रीनारायणतीर्थः' आस्ताम् ।

36- अच्युत कृष्णानन्दतीर्थः

श्री अच्युतकृष्णानन्दतीर्थः अप्पययदीक्षितेन रचितस्य सिद्धान्तलेशसंग्रहस्य टीकाकारः आसीत् । किं च तैत्तिरीयोपनिषदः शांकरभाष्योपरि अनेन 'वनमाला' नाम्नी टीका अपि रचिता । सः दृढः कृष्णभक्तः अभवत् ।

37- महादेव सरस्वती

महादेव सरस्वतीः श्री स्वयं प्रकाशानन्दस्य शिष्यः आसीत् । अनेन 'तत्वानुसन्धानम्' इति टीका रचिता । अस्य स्थितिकालः अष्टादश शताब्दयाम् आसीत् ।

38- श्रीसदाशिवेन्द्रसरस्वती

अस्य स्थितिकालः अष्टादशशताब्दयाः आरम्भे दक्षिण भारते आसीत् । असौ ब्रह्मतत्वप्रकाशिका' ग्रन्थस्य कर्ता भवति । द्वादशोपनिषधिकृत्य अनेन टीकाः रचिताः इति कथ्यते । किन्तु अस्य टीकाग्रन्थाः अद्य नोपलभ्यते । योगसुधाकरः, आत्मविद्याविलासः, कविताकल्पवल्ली' अद्वैतरसमंजरी, प्रभृतयः ग्रन्थाः अपि अनेन लिखिताः ।

39- आयन्न दीक्षितः-

आयन्नदीक्षितः श्रीवंकटेशस्य शिष्यः आसीत् । सः व्यासतात्पर्यनिणर्य' इति नाम्नो ग्रन्थस्य कर्ता भवति । तेन 'अक्षयषष्ठिः' दायशतकम् इति द्वौ अन्यौ ग्रन्थौ रचितौ । अस्य स्थितिकालः अष्टादशशताब्दयाम् आसीत् ।

उपर्युक्तानामतिरिक्तम् अन्ये पि आचार्याः अद्वैतवेदान्तशास्त्रे अनेकान् ग्रन्थान् रचितवन्तः तथापि कालक्रमात् ते ग्रन्थाः विनष्टाः जाताः । अतः अत्र तेषामेव आचार्याणाम् उल्लेखः कृतः एषां विषये यत् किंचित् विवरणमुपलब्धुं शक्यं जातम् ।

2.3 0 वैष्णव वेदान्तपरम्परायां आचार्यास्तेषां सिद्धान्ताश्च ।

2.3.1 रामानुजाचार्यः तस्य विशिष्टाद्वैतवादश्च

श्रीरामानुजस्य जन्म 1074 विक्रमाब्दे दक्षिणभारतस्य वर्तमान पेरंम्बूरं नाम्नि स्थाने अभवत् । अस्य पितुः नाम केशवसोयमाजी तथा मातुः नाम कान्तिमती आस्ताम् । आरम्भे अस्य गुरुः यादवप्रकाशः आसीत् । किन्तु कालान्तरे यादवप्रकाशस्य विद्वेषकारणात् उभयोः पार्थक्यं संजातम् । एतद् कथ्यते यत् यामुनाचार्यः स्वकीयं मृत्युं समीपं ज्ञात्वा रामानुजार्यम् आह्वयत् । यामुनाचार्यस्य देहावसाने तस्य अंगुलित्रयं कुञ्चितमासीत् । तदानीं रामुनाजार्येण एषा प्रतिज्ञा कृता यत् स (1) ब्रह्मसूत्रस्य भाष्यं रचयिष्यति । (2) दिल्लीस्थस्य मुस्लिम शासकस्य सकाशात् श्रीराममूर्तेः उद्धारं करिष्यति । तथा (3) दिग्विजयपूर्वकम् विशिष्टाद्वैतस्य प्रचारं करिष्यति । एतत् श्रूयते यत् अस्याः प्रतिज्ञायाः अनन्तरं यामुनाजाचार्यस्य मृतदेहस्य अंगुलित्रयं ऋजु संजातम् ।

रामानुजाचार्यस्य वैवाहिकं जीवनं सुखापूर्णं नासीत् । अतः स वीतरागो भूत्वा सन्यासं गृहीतवान् । सन्यासानन्तरं तस्य अनेके शिष्याः संजाताः । यादवप्रकाशोऽपि तस्य शिष्यः संजातः । रामानुजाचार्येण श्रीरंगे आगत्य गोष्ठिपूर्णादपि दीक्षा गृहीता ।

रामानुजाचार्येण ब्रह्मसूत्र भाष्यम्, वेदान्तसंग्रहः, वेदान्तदीपः, वेदान्ततत्वसारः, गीताभाष्यम् प्रभृतिग्रन्थाः विरचिताः । रामुनाजाचार्यस्य मतं 'विशिष्टाद्वैतम् इत्येवं रूपेण प्रथितं वर्तते ।

विशिष्टाद्वैतस्यार्थ - 'विशिष्टयोः अद्वैतम् अर्थात् विशिष्टस्य कारणस्य विशिष्टस्य कार्यस्य चैक्यं विशाष्टाद्वैतम्' । रामानुजस्य मतानुसारं ब्रह्माण्डे त्रीणि तत्वानि सन्ति । चित् (जीवः ) अचित् (जड़) तथा ईश्वरः (ब्रह्म) तत्त्वम् ईश्वरयोर्मध्ये नास्ति भेद । यतः रामानुजस्य मतानुसारं ब्रह्म सदैव सगुणं, सविशेषं च भवति (नतु अद्वैतवेदान्तिनां मतानुसारं निर्गुणं सगुणं च) एषु त्रिषु तत्वेषु ईश्वरतत्वस्य प्राधान्यं विद्यते । जीवः भोक्ता तथा जगत् भोग्यम् इत्युभयमपि नित्यम् । यतः ईश्वरः अन्तर्यामिरूपेण अनयोः आभ्यन्तरः अस्ति । एवं प्रकारेण च चित् एवम् अचित् ईश्वरस्य शरीरत्वेन

परिगण्यन्ते । प्रलयकाले ब्रह्म सूक्ष्मचिदचित् विशिष्टं भवति । सृष्टिकाले च स्थूल-चिदचिद् विशिष्टम् । अर्थात् स सर्वथा चिदचिद् विशिष्टं वर्तते । अतः एतन्मतं विशिष्टाद्वैतमित्युच्यते ।

अद्वैतवादानुसारं ब्रह्म एव सत्यम् । विशिष्टाद्वैतवादानुसारं जीवः सत्यम् जगद् चापि सत्यम् । अद्वैतवादिनः ब्रह्मणः निर्गुणत्वं स्वीकृत्य ईश्वरः तस्य मायो-पाधिकं सगुणं रूपमिति कथयन्ति । किन्तु रामानुजस्य मतानुसारम् ईश्वरब्रह्मणोर्-मध्ये नास्ति कोऽपि भेदः । शंकरस्य मतानुसारम् ईश्वरोऽपि ब्रह्मणः विवर्तः किन्तु रामानुजस्य मतानुसारम् ईश्वरः ब्रह्मणः पर्यायः । अद्वैतमतानुसारम् आत्मब्रह्मणोरभि-न्नत्वम् । ब्रह्मैव आत्मा । किन्तु रामानुजः आत्मब्रह्मणोः भेदं प्रतिपादयति । शंकरः मायावादं प्रतिपादयति, रामानुजः मायावादस्य खण्डनं करोति । शंकरस्य मतानुसारं जगत् ब्रह्मणः विवर्तमात्रं, किन्तु रामानुजः एतद् कथयति यद् विश्वं ब्रह्मणः चिदचिद्रूपयोः परिणामः । अतः तदपि ब्रह्मैव सत्यं वर्तते । अद्वैतमतानुसारं ब्रह्म उपासनाया विषयः नास्ति । ज्ञानमेव एकमात्रं मोक्षसाधनम् । अर्थात् 'जीवो ब्रह्मैव नापरः' इति ज्ञाते एव बन्धनाद् विमुक्तिः । किन्तु रामानुजस्य मतानुसारं ज्ञानेन सह कर्मणः भक्तेः ईश्वरकृपायाश्च मोक्षार्थमावश्यकता वर्तते । शंकराचार्यः जीवन्मुक्तिसिद्धान्तमपि स्वीकरोति, किन्तु रामानुजः केवलं विदेहमुक्तिम् एव स्वीकरोति । शंकराचार्यस्य मतानुसारम् आत्मब्रह्मणोः ऐक्यमेव मोक्षः किन्तु रा-मानुजाचार्यः उभयोः ऐक्यं नापितु सदृश्यमेव मोक्ष इति[65] प्रतिपादयति ।

## 2 3 2 मध्वाचार्यः तस्य द्वैतवादश्च ।

वेदान्तपरम्परायां मध्वाचार्यस्यापि विशिष्टं महत्वं वर्तते । तस्य अपरानि नामानि 'पूर्णबोधः', 'पूर्णप्रज्ञः', 'आनन्दतीर्थश्च' आसन् । तेन यः सम्प्रदायः प्रचलितः स माध्वसम्प्रदायः तथा ब्रह्मसम्प्रदाय इत्येवं प्रकारेणापि प्रथितः । मध्वाचार्यस्य जीवन-कालः 1239 वर्षतः आरभ्य 1317 वर्षपर्यन्तमस्ति[66] । अस्य जन्म मैसूर राज्यस्य कन्नड मण्डलान्तर्गते उडुपि नाम्नि ग्रामे अभवत् । रामानुजस्य विशिष्टाद्वैतमतकैः कतिपय-

65- भारतीयदर्शन-गगनदेवगिरि खण्ड-2 पृष्ठ 275

66- भारतीयदर्शन(गगनदेवगिरि) द्वितीय खण्ड पृ० 312

सिद्धान्तैः सह अस्य मतभेदः आसीत् । अतः अनेन प्रस्थानत्रय्याः स्वकीयभाष्यानां माध्यमेन द्वैतवादस्य प्रतिपादनं कृतम् ।

मध्वाचार्यप्रवर्तितद्वैतवादानुसारं विष्णुरेव परमतत्वम् । जगत् सत्यम् (न तु मायिकं) व्यावहारिकसत्तामात्रं वा) जीवब्रह्मणोर्भेदः वास्तविकः, जीवः विष्णोः अनुचरः, दासः वा । जीवब्रह्मणोः ईश्वरजडयोः, जीवजडयोः, ~~जीवजीवयोः~~ जीव जीवयोः, जड़-जडयोः, भेदपरिज्ञानम् एव मुक्तेः साधनम् । मुक्तिस्तु सुखानुभूतिः । मुक्तिः साध्याः भक्तिः साधनम् । प्रत्यक्षानुमानशब्दाः इति त्रीणि प्रमाणानि वेदानां प्रतिपाद्यं हरिरेव । अस्य मतस्य सारः संक्षिप्तरूपेण एवमस्ति -

''श्रीमन्मध्वमते हरिः परतमः, सत्यं जगत्, तत्वतो भेदो, जीवगणा हरेरनुचरा नीचोच्चभावं गतः । मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत् साधनम् अक्षादित्रितयं प्रमाणमखिलाम्, नायैकवेद्यो हरि ।

2 3 3 निम्बार्काचार्यः तस्य द्वैतद्वैतवादश्च ।

निम्बर्काचार्यस्य जीवनविषये प्रामाणिकरूपेण किमपि कथयितुं न शक्यते तथापि प्रायः एतत् कथ्यते यत् निम्बार्काचार्यस्य अपरं नाम 'नियमानन्दः' आसीत् । केचित् विद्वांसः इदमपि कथयन्ति यत् निम्बार्कस्यैव पूर्वं ' नाम भास्कराचार्यः आसीत् । निम्बार्कः निम्बादित्यरूपेणापि प्रथितः वर्तते । यतः केषांचित् मतानुसारं सः सूर्यस्य अवतारः आसीत् । अपरेषाम् इदं कथनमस्ति यत् कस्यचित् दण्डिनः कृते भोजनस्य सौविध्याय अनेन सूर्यस्य गतिः अवरोधिता । सूर्यश्च समीपस्थे निम्बवृक्षे स्थितः इव अलक्ष्यत । अतः तस्मात् दिवसादारभ्य भास्करस्य नाम निम्बादित्यः, निम्बार्काचार्यः ' वा संजातः ।

निम्बार्कस्य एकः एव ग्रन्थो उपलभ्यते 'वेदान्तपारिजातसौरभम्' इति नाम्ना प्रख्यातं, 'वेदान्तभाष्यमिति ' । केषांचितं मतानुसारं दशश्लोकी तथा कृष्णस्तवराजः इत्येतौ द्वौ ग्रन्थावपि अनेन रचितौ ।

निम्बार्कस्य मतं 'द्वैताद्वैतवादः ' इत्येवं प्रकारेण प्रथितं वर्तते । प्रकारान्तरेण द्वैताद्वैतवादः, भेदाभेदवादः एव वर्तते । रामानुजाचार्यस्यविशिष्टाद्वैतवादेन सहापि अस्य द्वैताद्वैतवादस्य यत् किंचित् सदृश्यं वर्तते ।

निम्बार्कस्य मतानुसारं जीवः (चित्) प्रकृतिः (अचित्) तथा ब्रह्म एतानि त्रीणि तत्वानि सन्ति । एतेषां पारस्परिको भेदः अप्यस्ति, अभेदः अप्यस्ति । ब्रह्मणः लक्षणम् वेदान्तपारिजातसौरभे एवं प्रकारेण निरूपितं दृश्यते- 'अचिन्त्य विचित्र संस्थानसम्पन्नस्यासंख्येय नामरूपादि विशेषाश्रयस्य चिदचिद्रूपस्य विश्वस्य स्थितिलया यस्मात् भवन्ति तदेव अनिर्वचनीयं विषयं ब्रह्मेति ।[67]

अस्य तात्पर्यमिदमस्ति यत् ब्रह्म अनिर्वचनीयं तत्वमस्ति । जगत् ब्रह्मणः शक्तिपरिणामो अस्ति नतु स्वरूपपरिणामः । यथा लूता तन्तोः निर्माणं स्व शक्त्या करोति नतु स्वकीयस्वरूपेण तथैव ब्रह्म स्वशक्त्या जगत् सृजति । सृष्ट्यवस्था ब्रह्मणः अचित् शक्तेः मूर्तरूपमस्ति । प्रलयकाले जगत् शक्तिरूपेण, सूक्ष्मरूपेण वा ब्रह्मणि स्थीयते । जगत् शक्तेः परिणामः अस्ति । अतः तत् ब्रह्मणा स्वरूपं न दूषयति -'न प्रकृतस्य ब्रह्मणः दोषयोगः ।

निम्बार्कस्य मतानुसारं जीवब्रह्मणोर्मध्ये अंशांशिभावः, अस्ति । 'अंशो हि शक्तिरूपोग्राह्यः' । (अस्यार्थः अयमस्ति यत् ब्रह्मणा सह जीवस्य भेदः अप्यस्ति अभेदः अप्यस्ति अथवा न पूर्णतः भेदः अस्ति, न पूर्णतः अभेदः अस्ति) यथा वृक्षात्पत्राणाम्, प्रदीपवत् वा प्रभायाः । यथा सूर्यः स्वकीयकिरणानां दोषैः दूषितः न भवति तथैव ब्रह्म स्वकीयांशिभूतस्य जीवस्य दोषैः दूषितः न भवति -अकर्मवश्यत्वात् सर्वान्तरवर्तिनोऽपि परमात्मनस्तत्र तत्र दोषाः न सम्भवन्ति इति ।[68]

निम्बार्कस्य मतानुसारम् अज्ञानवशात् जीवः यत् कर्म करोति तत् एव बन्धः इत्युच्यते । हरेः अनुग्रहात् तस्य स्वरूप ज्ञाने सति बन्धनात् निवृत्तिः जायते । सा एव अवस्था मोक्षः इत्युच्यते । हरेरनुग्रहात् तत्वरूपात् मोक्षः' इति ।[69] मोक्षस्य साधनं हरेः अनुग्रहम् अस्ति, स च अनुग्रहः शरणागत्या प्रपत्या सम्भवति । शरणागतेः स्वरूपम् इत्थमस्ति -

''अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः ।
त्वमेवोपायभूतो मे भवति प्रार्थनामिति ।[70]
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।।

---

67- वेदान्तपारिजातसौरभम् ।-।-2
68- वे०पा०सौ० 3-2-।।
69- निम्बार्क भाष्यम्
70- अहिर्बुध्न्य संहिता

अत्र एतद् ज्ञातव्यं वर्तते यद् शंकरस्य मतानुसारं जीवजगतो ब्रह्मणा सह भेदो नास्ति । रामानुजः यद्यपि भेदाभेदं च स्वीकरोति तथापि तस्य मते भेदः गौणः अभेदः मुख्यः । मध्वाचार्यस्य मते भेदस्यैव प्राधान्यम् । किन्तु निम्बार्काचार्यस्य मते भेदस्य अभेदस्य च समानरूपेण महत्वं वर्तते । चिदचिदोः पूर्णरूपेण पृथक्त्वे स्वीकृते सति ब्रह्मणः नियन्तृत्वस्य सर्वव्यापकत्वस्य वा हानिः । अतः पूर्णरूपेण भेदः नास्ति । ब्रह्मणा सह चिदचितोः पूर्णतः अभेदः अपि नास्ति । तथात्वे स्वीकृते सति चिदचितोः दोषैः ब्रह्मणः अपि दूषणीयत्वं प्रसज्येत । अतः जगद् जीवयोः ब्रह्मणा सह न पूर्णतः भेदः (द्वैतः) न वा पूर्णतः अभेदः (अद्वैतः)-'मूर्तामूर्तादिकं विश्वं ब्रह्मणि भिन्नाभिन्न सम्बन्धेन स्थातुमर्हति ।[71]

2 3 4 वल्लभाचार्यः तस्य शुद्धाद्वैतवादश्च ।

वेदान्तपरम्परायां शुद्धाद्वैतवादस्य प्रवर्तकः वल्लभाचार्यः 1536 तमे विक्रम-संवत्सरे 'चम्पारण्यस्य' रायपुर क्षेत्रे जन्म लेभे । अस्य पूर्वजाः दक्षिणभारतस्य कांकर-वाड ग्रामाद् रायपुरक्षेत्रे आगताः तैलंगब्राह्मणाः आसन् । अस्य पितुः नाम लक्ष्मण भट्टजी आसीद् तथा मातुः नाम श्री इल्लम्मागारू आसीद् ।

वल्लभाचार्येण ब्रह्मसूत्रस्य अणुभाष्यम्, भागवतस्य सुबोधिनीव्याख्यां, सिद्धान्तरहस्यम्', भगवतशीलारहस्यम्' प्रभृति ग्रन्थानां माध्यमेन'शुद्धाद्वैतमतस्य' उपस्थापनं कृतम् । शुद्धाद्वैतमतस्य सारः अयमस्ति ——

ब्रह्म एव एकमात्रं तत्वम् । मायासम्बन्धरहितत्वात् तद् शुद्धमित्युच्यते । अत्र एतद् ज्ञातव्यं वर्तते यद् भगवता शंकरेण यस्याद्वैतवादस्य प्रवर्तनं कृतं तस्मिन् ब्रह्मणा सह मायायाः अस्तित्वं स्वीक्रियते । किन्तु वल्लभाचार्यस्य मतानुसारं मायायाः सत्ता न स्वीक्रियते । किन्तु वल्लभाचार्यस्य मतानुसारं मायायाः सत्ता न स्वीक्रियते । अतः वल्लभस्य मतानुसारं शंकरस्याद्वैतं शुद्धं नास्ति । तस्य विपरीतं माया सम्बन्धरहित-त्वात् वल्लभाचार्यप्रवर्तितः सिद्धान्तः शुद्धः अस्ति । अर्थात् ब्रह्मणः स्वरूपमत्र मायासम्बन्धरहितमिति निरूपितं वर्तते । तद्यथा मायासम्बन्धरहितं शुद्धमित्युच्यते ।[72]

71- वे० पा० सं० 3-2-27

72- अणुभाष्यम् 1-1-3

वल्लभस्य मतानुसारं जीवस्य उद्गमः ब्रह्मणः, तथैव भवति यथा विस्फुलिंगानाम् उद्गमः अग्नेर्भवति- 'अग्नेर्यथा विस्फुलिंगः तथा जीवोद्गमः' अस्य आशयः अयमस्ति यद् जीवस्योत्पत्तिः न भवति । शंकरस्य मतानुसारम् अविद्यायाः कारणाद् जीवस्योत्पत्ति र्भवति । किन्तु वल्लभाचार्येण अस्य मतस्य प्रत्याख्यानं कृत्वा जीवस्योदगमः स्वीकृतः नतु उत्पत्तिः । जीवः ब्रह्मणः अंशः तथा अणुरूपः वर्तते । ब्रह्मणः अंशत्वाद् जीव शुद्धः तथा चेतनमस्ति ।

वल्लभाचार्यस्य मतानुसारं ब्रह्म कारणं जगश्च कार्यं वर्तते । कार्यकारणयोरभेदत्वाद जगदपि सत्यम् । जगद मायिकं नास्ति । यदा जगतः आविर्भावः भवति तदा कार्यरूपेण यदा तिरोभावः भवति तदा कारणरूपेण तस्यास्तित्वं स्वीकरणीयम् । क्रीडार्थमिव ब्रह्म जगद्रूपेण विलसति । एतद कथ्यते यद ब्रह्मत्वेन जगतः सत्यत्वम्[73] ।

मुक्तिः ब्रह्मणः अनुग्रहात् भवति । तदर्थं वल्लभाचार्येण पुष्टिमार्गस्य उपस्थापनं कृतम् । तस्य मतानुसारं शमदमादीनि बहिरंगसाधनानि सन्ति तथा श्रवण-मनन-निदिध्यासनानि सन्ति । भगवतः अनुग्रहः पुष्टिः इत्युच्यते ।

वल्लभाचार्यस्य मतानुसारं शास्त्रब्रह्मणोर्मध्ये प्रतिपाद्यप्रतिपादकसम्बन्धो वर्तते । शंकरोऽपि इत्थमेव कथयति । किन्तु शंकरस्य मतानुसारं ज्ञानोदयानन्तरं शास्त्रस्य सार्थकता नास्ति । शास्त्रं तु ब्रह्मणः निषेधात्मकरूपेण निर्देशं करोति । शंकरस्य विपरीतं वल्लभाचार्यस्य एतद कथनमस्ति यत् ब्रह्मणः वेदान्तप्रतिपाद्यं शास्त्रैकगम्यं सत् शब्दस्य विषयः अस्ति । 'तत्वमसि' इत्यनेन वाक्येन अंशांशिभावयोरभेदः सिद्धयति ।

## 2 3 5 चैतन्य महाप्रभुः तस्याचिन्त्यभेदाभेदवादश्च

बंगीय चैतन्यसम्प्रदायस्य अथवा गौडीय वैष्णव समाजस्य मतम् 'अचिन्त्य-भेदाभेदवादः' इत्येवं रूपेण प्रथितं वर्तते । श्री चैतन्यः महाप्रभुः अस्य सम्प्रदायस्य न केवलं प्रवर्तकः अपितु उपास्यः अप्यस्ति । अस्य सम्प्रदायस्य अयं विश्वासः अस्ति यद श्रीचैतन्यदेवः भगवतः श्रीकृष्णस्य प्रेमावतारः आसीद । श्रीचैतन्यस्य आविर्भावः 1542 विक्रमे संवत्सरे तथा तिरोभावः 1590 विक्रमे संवत्सरे अष्टाचत्वारिंशद वर्षस्य अवस्थायाम् अभवत् । अस्य जन्म बंगप्रदेशस्य नवद्वीपस्थाने अभवत् । अनेन स्वयं कोऽपि

73- अणुभाष्यम् 1-4-23

ग्रन्थाः न लिखितः । रूपगोस्वामी सनातनगोस्वामी-तथा जीवगोस्वामी प्रभृतिभिः ये ग्रन्थाः लिखिताः तेषु चैतन्यमतस्य निरूपणं दृश्यते । अष्टादशशताब्दयां बलदेवविध्याभूषणेन अचिन्त्यभेदाभेदवादमाश्रित्य ब्रह्मसूत्रोपरि गोविन्दभाष्यं लिखितम् । अतः अद्वैतवेदान्तस्य सन्दर्भे बलदेवविध्याभूषणरचितं 'गोविन्दभाष्यमेव' विशेषतः समीक्षणीयं वर्तते ।

बलदेवविध्याभूषणस्य मतानुसारं तत्वानि पंच सन्ति । तदयथा-(।) ब्रह्म- जगतः - कर्ता अस्ति । अविचिन्त्य शक्त्या ब्रह्म एव जगद रूपेण परिणमते । जीवः अणुचैतन्यम् । जीवः ईश्वरश्च शक्तिः । यदयपि जीवः ब्रह्मणः भिन्नः तथापि जीवः गुणः ब्रह्म गुणी । अतः गुणगुणी रूपेण तयोरभिन्नत्वमप्यास्ति । अतएव एतन्मतं अचिन्त्यभेदाभेदः इत्युच्यते ।

मुक्तिः भागवतः कृपया भवति । मुक्तावस्थायामपि जीव ब्रह्मणोः पृथक्त्वमस्ति । प्रकृतिः अपि ब्रह्मणः शक्तिः । जगद सत्यं किन्तु अनित्यं वर्तते । कालः नित्यः किन्तु ईश्वराधीनः । कर्मापि ईश्वरस्य शक्तिः ।

बलदेवविदयाभूषणस्य मतानुसारं तत्वमसि एतद वाक्यमखण्डार्थस्य बोधकं न अपितु 'तस्य त्वमसि एवं प्रकारेणास्ति'। तश्च जीवब्रह्मणोः भिन्नत्वं सूचयति । केषांचिद विदुषां मतानुसारं चैतन्यमतं माध्वम तस्यैव एका शाखा वर्तते । चैतन्यसम्प्रदायस्य उपासनपरक सिदधान्तानं सारः श्रीविश्वनाथचक्रवर्तिना एवं निर्दिष्टः-
''आराध्यो भगवान व्रजेशतनयस्तदधामवृन्दावनं रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता । शास्त्रं भागवतं प्रमाणममलं प्रेमा पुमर्थो महान श्रीचैतन्य-महाप्रभोर्मतमिदं तत्रादरो न परः ॥''

वस्तुतः वैष्णववेदान्तिभिः ये सिदधान्ताः प्रवर्तिताः तेषामपि बीजानि आर्षवेदान्ते उपलब्धुं शक्यन्ते । तदयथा-रामानुजाचार्यस्य विशिष्टादवैतवादस्य बादरेः तथा काशकृत्स्नस्य निर्विशेषब्रह्मादवैतवादेन सह यद किंचित् साम्यं कल्पयितुं शक्यते । एवं प्रकारेण निम्बार्कस्य भेदाभेदवादः,औडुलोमेः द्वैतादवैतवादेन सह तथा आश्मरथ्यस्य भेदाभेदवादेन सह साम्यं धारयति । एवमेव मध्वाचार्यस्य द्वैतवादः काश्यपस्य भेदवादेन सह साम्यं भजति । एवंप्रकारेण एतद कथयितुं शक्यते यत् यदयपि भामत्यां वैष्णववेदान्तिनां सिदधान्ताः प्रत्यक्षतया नालोचिताः,तथापि तेषु

यानि मूलभूतानि तत्वानि सन्ति तेषां समीक्षणं तु आर्षवेदान्तसिद्धान्तानां समीक्षणावसरे भाष्यमूलकत्यामपि कृतमेव । एवं च वेदान्तकल्पतरुपरिमलरत्नप्रभा प्रभृतिषु व्याख्यानेषु यथासन्दर्भं एतेषाम् अ उत्तरवर्तिनां वैष्णवेदान्तिनां सिद्धान्ताः अपि समालोचिताः दृश्यन्ते ।

2 4 0 वेदान्तस्याधारभूतायाः प्रस्थानत्रय्याः स्वरूपपरिचयः

वेदान्तस्य आधारभूताः ग्रन्थाः 'प्रस्थानत्रयी' इत्येवं प्रकारेण प्रख्याताः सन्ति । प्रस्थानत्रय्याम् 'उपनिषदः', 'ब्रह्मसूत्रं' तथा 'श्रीमद्भगवद्गीता' इत्येतेषां गणना भवति । उपनिषदसु ईशा-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्तिरीय ऐतरेय-छान्दोग्य -बृहदारण्यकश्वेताश्वतर नाम्ना प्रसिद्धानाम् उपनिषदां प्राधान्यमस्ति । एतासु उपनिषत्सु वेदान्तस्य मूलतत्वानि समाहितानि वर्तन्ते । उपनिषदां श्रुतिप्रस्थानम् इत्यस्ति ।

वेदान्तस्य द्वितीयः आधारः ब्रह्मसूत्रमस्ति । ब्रह्मसूत्रस्य अपराणि नामानि 'वेदान्तसूत्रम्-'शारीरकमीमांसा'उत्तरमीमांसा' इत्येतान्यपि सन्ति । अस्य सूत्रग्रन्थस्य प्रणेता भगवान् वेदव्यासः आसीत् । तस्यैवापराणि नामानि कृष्णद्वैपायनः-बादरायणः, वेदव्यासः इत्येतान्यपि सन्ति । ब्रह्मसूत्रमेव न्यायप्रस्थानम् इत्येतत् नाम्ना अपि अभिधीयते ।

वेदान्तस्य तृतीयः आधारः श्रीमद्भगवद्गीता वर्त्तते । गीतायाः (उल्लेखः भगवता शंकराचार्येण स्मृतिरूपेण कृतः। अतः) भगवद्गीता 'स्मृतिप्रस्थानमित्यनेन 'नाम्नाऽपि वेदान्तशास्त्रे अभिधीयते ।

एवं प्रकारेण प्रस्थानत्रयाम् येषां ग्रन्थानां समावेश भवति, ते सन्ति-उपनिषदः ब्रह्मसूत्रम्, भगवद्गीता 'प्रतितिष्ठति ब्रह्मविद्या येषु तत् प्रस्थानम्' इति । वेदान्तदर्शनस्य ब्रह्मविद्या प्रस्थानम् (त्रय्या) अन्तर्भवति ।

2.4 । श्रुतिप्रस्थानम् (उपनिषदः)

भगवता शंकराचार्येण 'उप'-'नि'- इति उपसर्गद्वयपूर्वकात् 'विशरण-गत्यवसादन' इति अर्थकात् 'षद्लृ' धातोः निष्पन्नस्य क्विप् प्रत्ययान्तस्य उपनिषद् शब्दस्य व्याख्यानम् एवं कृतम्- 'यस्मादात्मनः स्थावरजंगमं जगदिदमग्नि-विस्फुलिंगवद्व्युच्चरन्त्यनिशं यस्मिन्नेव च प्रलीयते जलबुद्बुदवद्यदात्मकं च वर्तते स्थिति-काले तस्यास्यात्मनो ब्रह्मण उपनिषादुपसमीपं निगमयतीत्यभिधायकः शब्द उपनि-षदित्युच्यते । शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषोऽवसीयत उपनिगमयितृत्वं नाम'[74] । किंच 'य इमां ब्रह्मविद्यामुपनन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषद् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात्'[75] । सामान्यतः तत् ज्ञानम् उपनिषदिति कथ्यते, यत् शिष्येण गुरोः समीपे स्थित्वा प्राप्यते[76] । एवंप्रकारेण यद्यपि उपनिषद् शब्दस्य मुख्यः अर्थः ब्रह्मविद्या इत्येवमस्ति, तथापि गौणरूपेण ब्रह्मविद्यायाः व्युत्पादकाः ग्रन्थाअपि उपनिषद् पदवाच्याः भवन्ति । तद्यथा -

''यथोक्त-विद्याबोधित्वाद् ग्रन्थोऽपि तदभेदतः ।
भवेदुपनिषन्नामा लांगाले जीवनं यतः ॥[77]

एकस्याद्वितीयस्य नित्यस्य शुद्धस्य मुक्तस्वभावस्य ब्रह्मणः स्वरूपनिरूपणमेव उपनिषदां मुख्यं प्रतिपाद्यमस्ति । ब्रह्मणः परिज्ञानात् जीवब्रह्मणोः ऐक्यज्ञानात् मोक्षः भवति । तद्यथा - (1)' जगतश्च यन्मूलं तत्परिज्ञानात्परं श्रेय इति सर्वो-पनिषदां निश्चितोऽर्थः[78] ।'' 'सर्वासामुपनिषदात्मयाथात्म्यनिरूपणेनैवोपक्षयात् ।'' ''सर्वोपनिषदामाह मुक्तिमात्रं प्रयोजनम्[79] '।

74- बृ० उ०शा० भा० पृ० 2 तथा 2-1-20 पृ० 252

75- मु० उ० शा० भा० पृ० 4

76- उपेत्य वा निषण्णं तच्छ्रेयं आत्यन्तिकं यतः ।

77- तस्मादुपनिषज्ज्ञेया । ----- तै० भा० वा० 35-36, पृ० 11-12

78- सम्बन्ध वार्तिक 8, पृ० 9

प्र० उ० शा०भा० पृ० 54

79- ई० उ० शा०भा० पृ० 1-3

भगवता शंकरेण ब्रह्मसूत्रभाष्ये एतद् स्पष्टीकृतं यत् उपनिषद्वाक्यानां प्रवृत्तिः द्विधा[80] - (अ) परमात्मस्वरूपनिरूपणपरा (आ) विज्ञानात्मनः परमात्मैकत्वोपदेशपरा । तद्यथा - 'द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः, क्वचित्परमात्मस्वरूपनिरूपणपरा, क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा'[81] ।'' स्वरूपप्रतिपादकेषु श्रुतिवाक्येषु कानिचिद् निर्गुणस्य ब्रह्मणः स्वरूपप्रतिपादनं कुर्वन्ति भावमुखेन, अभावमुखेन च । भावमुखेन यथा - '

(1) सत्यं ज्ञानमनन्तं ब्रह्म ।'' ( तै० उ० 2-1-1)

(2) विज्ञानमानन्दं ब्रह्म( बृ० 3-9-10)

(3) यः आत्मापहतपाप्मा (छा० 8-7-1)

(4) यतो यतस्त्वाददीत लवणमेव, एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव( बृ० 2-4-12)

अभावमुखेन यथा -

(1)अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमो अवायवनाकाशमसंगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनो तेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम्' ।(बृ०3-8-8)

भामतीप्रस्थानस्य सन्दर्भे यद्यपि तत्सर्वं ज्ञातव्यमस्ति यद् उपनिषत्सु समाहितमस्ति, तथापि गौरवभयादत्र स्थालीपुलाकन्यायेन कानीचिद् तानि श्रुतिवाक्यानि उद्घ्रियन्ते यानि भामतीप्रस्थानप्रतिपादितस्य अवच्छेदवादस्य आधारत्वेन परिगणयितुं शक्यन्ते । तद्यथा -

(1) आकाशशरीरं ब्रह्म' ( तै० उ० 1-6-2)

(2) अथ हैनं गार्गी वाचक्नवी प्रपच्छ; याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतं प्रोतं च, कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति, कस्मिन्नु खलु वायु ओतश्च प्रोताश्चेति अन्तरिक्षलोकेषु गार्गीति ----(बृ० उ० 3-6-1)

(3) आकाशवत्सर्वगतश्च नित्यः( छा० उ० 3-2-5)

---

80- स० वा० पृ० 10

81- ब्र० सू० शा० भा० 1-3-25

## 2 4 2 न्यायप्रस्थानम् (ब्रह्मसूत्रम्)

वेदान्तशास्त्रस्य प्रतिपाद्यं प्रमुखतः तदेवास्ति यद उपनिषदसु प्रतिपादितं वर्तते । अतः वेदान्तो नाम उपनिषत्प्रमाणम् इत्युच्यते । यत्र समस्तवेदमन्त्राणां लक्ष्यत्वेन अन्तिमं तत्वमेकं वर्णितं भवति तत् 'वेदान्तशास्त्रमित्युच्यते ।' उपनिषत्मन्त्रसमूहस्यापि 'वेदान्तः' इति संज्ञा । यतः समस्तवेदानां परमलक्ष्यात्मकं तत्वम् उपनिषत्सु निगदितमस्ति । ब्रह्मणः सम्पूर्णं विवेचनं सर्वप्रथममुपनिषत्स्वेव उपलभ्यते ।

पुरुषस्य धर्मार्थकाममोक्षाख्याः चत्वारः पुरुषार्थाः सन्ति । किन्तु अन्तिमः मोक्षः परमसुखात्मकत्वाद परमपुरुषार्थः इति कथ्यते । ब्रह्मसत्वाद मोक्षः नित्य इति शास्त्रेषु प्रतिपाद्यते । अद्वैतमतानुसारं जगतः मूलकारणं ब्रह्मैव । तस्य सम्पूर्णं विवेचनं प्रथमतः उपनिषत्सु एव लभ्यते नान्यत्र । अतः वेदानामन्तिमरहस्यम् उपनिषत्सु वर्तते इति उपनिषदः वेदान्त इति पदेनाभिधीयन्ते । उपनिषदां गूढतमा भावाः सर्वैः ज्ञातुं न शक्यन्ते । अतः भगवान् वेदव्यासः सर्वेषां सम्यगवबोधानाय उपनिषदां सारभूतानर्थान् एकीकृत्य सूत्ररूपेण रचितवान् । सः ग्रन्थः ब्रह्मसूत्रमित्युच्यते । कालान्तरे विभिन्नैः आचार्यैः ब्रह्मसूत्रमाश्रित्य~~मित्युच्यते । कालान्तरे विभिन्नैः आच~~ स्वस्वमतानुसारं व्याख्यानानि कृतानि ।

## 2 4 2 (1) ब्रह्मसूत्रस्य अध्यायाः पादाश्च ।

भगवत्पादस्य शंकराचार्यस्य 'ब्रह्मसूत्रभाष्यम्' तेषु प्रमुखमस्ति । अस्मिन् भाष्ये चत्वारः, अध्यायाः, प्रत्येकमध्याये च चत्वारः पादाः सन्ति । प्रथमाध्याये एकोनचत्वारिंशदधिकरणानि, एकशतोत्तर चतुस्त्रिंशद संख्याकानि सूत्राणि, द्वितीयाध्याय सप्तचत्वारिंशदधि करणानि सप्तपंचाशदधिकैकशतसूत्राणि, तृतीयाध्याये एकषष्ठ्युयाधिकरणानि, एवमेव एकशतोत्तरषडशीति सूत्राणि, चतुर्थाध्याये अष्टत्रिंशदधिकरणानि, अष्टसप्ततिसंख्याकानि सूत्राणि च वर्तन्ते ।

तत्र प्रथमाध्यायः समन्वयाध्यायो नाम इत्युच्यते । प्रथमे पादे स्पष्टब्रह्मलिंग वाक्यजातं, द्वितीये पादे अस्पष्टब्रह्मलिंगमुपास्यविषयं, तृतीये पादे तादृशं ज्ञेयविषयं, चतुर्थे पादे अव्यक्तानां अजादिपदानां सन्दिग्धं पदजातमिति च प्रतिपाद्यविषयाः ।

द्वितीयाध्यायस्य 'अविरोधाध्यायः इति संज्ञा । अस्य प्रथमे पादे सांख्य-योग-कणादादिमतपरिहारः । द्वितीये सांख्यादिमतानां दुष्टत्वनिरूपणम् । तृतीये पंचमहाभूतश्रुतीनां जीवश्रुतीनां च विचारः, चतुर्थे लिंगशरीरश्रुतीनां विरोधपरिहारः ।

तृतीयस्य साधनाध्यायस्य प्रथमे पादे जीवस्य परलोकगमनागमनविचारपुरस्सरं वैराग्यसम्पादन विचारः, द्वितीये त्वं पद तात्पर्यपरिशोधनम् । तृतीये पादे सगुणविद्यासु गुणोपसंहारविचारः, चतुर्थे निर्गुणब्रह्मविद्यायाः बहिरंगाश्रमयज्ञादि साधनानां विचारः ।

चतुर्थाध्यायस्य फलाध्यायस्य प्रथमे पादे ब्रह्मसाक्षात्कारेण जीवस्य पापपुण्यक्लेशवैधुर्यलक्षणमुक्तिविचारः, द्वितीये-मरणोत्क्रमणप्रकारः, तृतीये सगुणब्रह्मोपासकस्य उत्तरमार्गविधानम्, चतुर्थे निर्गुणसगुणब्रह्मविदः विदेहकैवल्यब्रह्मलोकावस्थानानि निरूपितानि ।

## 2 4 2 (2) ब्रह्मसूत्रस्य अधिकरणानि

ब्रह्मसूत्रस्य प्रथमाध्यायस्य प्रथमे पादे एकादशाधिकरणानि सन्ति । जिज्ञासा-जन्म-शास्त्रयोनित्व समन्वय-ईक्षत-आनन्दमय-अन्तस्तद्धर्म-आकाशप्राण-ज्योतिश्चरण इन्द्रप्रतर्दन । अस्मिन् पादे 31 सूत्राणि सन्ति ।

द्वितीयपादे सर्वत्रप्रसिद्धा अन्तृ-गुहाम्प्रविष्टा अन्तरा-अन्तर्यामि-अदृश्यत्व-वैश्वानरादि सप्ताधिकरणानि 32 सूत्राणि च सन्ति । तृतीयपादे धुम्वादि-अक्षर-ईक्षति-कर्मव्यपदेश-दहर-अनुकृति-प्रमित-देवता-अपशूद्र-कम्पन-ज्योति-अर्थान्तरत्व-व्यपदेश-सुषुप्त्युत्क्रान्तिरिति त्रयोदश अधिकरणानि एवं 43 सूत्राणि च सन्ति ।

चतुर्थपादे आनुमानिक-चमस-सांख्योपसंग्रहकारणत्व-बालाकि-वाक्यान्वय-प्रकृति-सर्वव्याख्यानादि अष्टौ अधिकरणानि तथा आहृत्य 28 सूत्राणि च सन्ति ।

द्वितीयाध्यायस्य प्रथमे पादे स्मृति-योगप्रत्युक्तनविलक्षणत्व-शिष्टा-परिग्रह-भोक्तापत्ति-आरम्भण-इतरव्यपदेश-उपसंहारदर्शन-कृत्स्नप्रसक्ति-सर्वोपेत-प्रयोजनवत्व-वैषम्य सर्वधर्मोपपत्तिरिति त्रयोदशाधिकरणानि 37 सूत्राणि च सन्ति ।

द्वितीयपादे रचनानुपपत्ति-महदधीर्घ परमाणुजगत्कारणत्व-समुदाय-अभाव-एकस्मिन्नसम्भावपाशुपत-उत्पत्त्यसंभवादि अष्टौ अधिकरणानि, तथा आहृत्य

45 सूत्राणि भवन्ति ।

तृतीये वियत्-मातरिश्व असम्भव-तेज-अप-पृथिव्यधिकार-तदभिधान-विपर्यय अन्तराविज्ञान-चराचरव्यपाश्रय-आत्म-ज्ञ उत्क्रान्तिगति कर्ता-तक्षा-परायत्ता अंशादि सप्तदशाधिकरणानि आहत्य 53 सूत्राणि सन्ति ।

चतुर्थपादे-प्राणोत्पत्ति-सप्तगति-प्राणाणुत्व प्राणश्रैष्ठ्य कम्पि इति नव अधिकरणानि तथा वायुक्रिया-श्रेष्ठाणुत्व ज्योति-इन्द्रिय संज्ञामूर्ति इति नवाधिकरणानि तथा 22 सूत्राणि अन्तर्भवन्ति ।

तृतीयाध्यायस्य प्रथमे पादे तदन्तरप्रतिपत्ति कृतात्यय-अनिष्टादिकार्य-साभाव्यापत्तिनातिचिर-अन्यधिष्ठादि-इति षढ अधिकरणानि तथा 27 सूत्राणि च सन्ति ।

द्वितीयपादे सन्ध्य-तदभावकर्मानुस्मृति-शब्दविधिमुग्धार्धसम्पत्ति-उभयलिंग-प्रकृतैतावत्वापरा-फलम् इति अष्टौ अधिकरणानि तथा 41 सूत्राणि च सन्ति ।

तृतीये पादे सर्ववेदान्तप्रत्यय उपसंहार-अन्यथात्व-व्याप्ति-सर्वाभेद-आनन्दादि आध्यान-आत्मगृहीति-कार्याख्यान-समान सम्बन्धः सम्भृति-पुरुषविद्या-वेद्यादि-हानि-साम्परायगतेरर्थवत्व-अनियम-यावदधिकार-अक्षरादि-इयत्-अन्तरत्वव्यतिहार-सत्यादि कामादि आदरादि तन्निर्धारण-प्रदान-लिंगभूयस्त्व-ऐकात्म्य अंगवबद्धा-भूमज्यायस्त्व-शब्दादि भेद-विकल्प काम्य यथाश्रयभाव-षटत्रिंशाधिकरणानि अत्र 66 सूत्राणि सन्ति ।

तृतीयाध्यायस्य तुरीयपादे पुरुषार्थ परामर्शस्तुतिमात्र-पारिप्लव-अग्निन्धनादि सर्वापेक्षा-सर्वान्नानुमिति-आश्रयकर्मविधुरतद्भूत-अधिकारिक-बहिः-स्वामी सहकार्यान्तरविधिः-अनाविष्कार-ऐहिक-मुक्तिफल इति सप्तश अधिकरणानि । अस्मिन् पादे 52 सूत्राणि च सन्ति ।

चतुर्थाध्यायस्य प्रथमे पादे आवृत्ति-आत्मत्वोपासन-प्रतीक-ब्रह्मदृष्टि आदित्यादिति आसीन एकाग्रता-आप्रायण-तदधिगम-इतरासंश्लेष-अनारब्ध-अग्निहोत्रादि विद्याज्ञानसाधन-इतरक्षपण इति चतुर्दश अधिकरणानि 19 सूत्राणि च वर्तन्ते ।

द्वितीये पादे वाक्-मन-अध्यक्ष-आसृत्युपक्रम-संसारव्यपदेश-प्रतिषेध-वागादि लय-अविभाग-तदोक-रश्मि-दक्षिणायन इति एकादश अधिकरणानि तथा अस्मिन् पादे 2। सूत्राणि वर्तन्ते । चतुर्थाध्यायस्य तृतीये पादे अर्चिरादि-वायु तडित्-अतिवाहिक-कार्य-अप्रतीकालम्बनम् इति षड अधिकरणानि तथा षोडश सूत्राणि च सन्ति ।

चतुर्थाध्यायस्य चतुर्थे पादे सम्पद्याविर्भाव-अविभागेन दृष्टत्व-बाह्य-संकल्प-अभाव-प्रदीप-जगद्व्यापार इति सप्ताधिकरणानि तथा 22 सूत्राणि च सन्ति ।

एवं प्रकारेण ब्रह्मसूत्रस्य चतुर्षु अध्यायेषु भगवता बादरायणेन यत् कथितं तस्यैव भाष्य भामती कल्पतरुपरिमल प्रभृतिग्रन्थेषु उपलभ्यमानं विश्लेषणमाश्रित्यैव भामती प्रस्थानस्य उद्भावो विकासश्च संजातः ।

यद्यपि भामतीप्रस्थानस्य सन्दर्भो समग्रमेव ब्रह्मसूत्रमवधेयं वर्तते, तथापि स्थालीपुलाकन्यायेन ब्रह्मसूत्रस्य कानिचित् सूत्राणि अत्र उदाह्रियन्ते । एषां सम्बन्धः भामतिप्रतिपादितेन अवच्छेदवादेन सह विशेषतः विद्यते ।

'ईक्षतेर्नाशब्दम्' (ब्र०सू० 1-1-5) 'स्मृतेश्च' (1-2-6) 'स्थित्यदनाभ्यां च' (1-3-7) 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् (2-1-13) 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (2-1-14) 'अंशो नानाव्यपदेशान्यथा चापि दाशाकितवादित्वमधीयत एके' (2-3-43) ।

2-4-3 श्रीमद्भगवद्गीता (स्मृतिप्रस्थानम्)

प्रस्थानत्रयाः द्वितीयांगत्वेन प्रथिता श्रीमद्भगवद्गीता' महाभारतस्य अंशभूता वर्तते । अष्टादशाध्यायेषु सप्तशतश्लोकसमन्विता इयं गीता वस्तुतः वेदार्थसारसंग्रहभूता उपनिषद सारभूता च वर्तते । गीतायाः अध्यायानामन्ते 'ॐ तत्सदिति श्रीमद्भगवद्गीतासुपनिषत्सु ब्रह्मविद्यायाम' इत्येवं प्रकारेण प्रदत्ताभिः पुष्पिकाभिः एतत् सिद्धयति यत् गीतायाः प्रतिपाद्यमपि ब्रह्मविद्या एवास्ति । परमतत्वस्य निर्गुणरूपम् अक्षरब्रह्म तथा सगुणरूपं पुरुषोत्तम' इत्येवं रूपेण निरूप्यते । अक्षरब्रह्म एव परब्रह्म । गीतायां कृष्णः पुरुषोत्तमः ~~अक्षर~~ ईश्वरः आस्ति ।

गीतायां माया तथा प्रकृतिः इत्यनयोः शब्दयोः समानार्थकत्वेन प्रयोगो दृश्यते ।

जीवः यथा ज्ञानेन मायायाः अज्ञानस्य वा क्षयं करोति तथा ज्ञानस्वरूपस्य ब्रह्मणः साक्षात्कारात् जन्ममरणपुरावृत्तिरहितं मोक्षं प्राप्नोति । अस्मिन् सन्दर्भे गीतायाः निम्नलिखिताः श्लोकाः उल्लेखनीयाः वर्तन्ते ।-

(1) अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।' (भ0गी0 8-3)

(2) उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

(3) यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।(15-17)

ज्ञानेन तु तदज्ञानं येषां नाशिमात्मनः ।

तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम् ।।( गी0- 5-16)

(4) तदबुद्धयस्तदात्मानस्तन्निष्टास्तत्परायणाः ।

गच्छन्त्युपनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ।। (गीता- 5-17)

भामतीप्रस्थानस्य सन्दर्भे यद्यपि सामान्यतः समग्रं गीताशास्त्रम् अवधेयं वर्त्तते, तथापि अत्र स्थाली- पुलाकन्यायेन गीतायाः कानिचित् तानि वचनानि उदाह्रियन्ते । एषां सम्बन्धः भामतीप्रस्थानप्रतिपादितेन अवच्छेदवादेन सह विद्यते । तद्यथा-'विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्[82] 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः[83] । सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ।।'' 'ममैवांशो जीवलोके जीवभूतस्नातनः' ।

अत्र भगवत्पादविरचितं भाष्यमपि द्रष्टव्यं भवति -'ननु निरवयवस्य परमात्मनः कुतः अवयवः, एकदेशः अंश इति सावयवत्वे च विनाशप्रसंग अवयवविभागात् । नैष दोषः, अविद्याकृतोपाधिपरिच्छन्नः एकदेशः अंश इव कल्पितो यतः[84] ।

2-43-(1) भागवद्गीताया अध्यायाः तेषु प्रतिपादिता विषयाश्चः

भागवदगीतायाः अष्टादशाध्यायेषु चर्चितानां विषयाणां सारेखा संक्षिप्तरूपेण निम्नलिखितास्ति ।

---

82- गीता- 10-42

83- गीता- 6-31

84- गीता- 15-7

85- गीता- 15-7

भगवद्गीतायाः प्रथमाध्याये अर्जुनविषादोपन्यासः, द्वितीये सांख्य-योगबुद्धिमुपदिश्च सांख्यदृष्ट्या निष्क्रियात्मकत्वोपदेशः कृतः, योगदृष्ट्या च संगफलत्यागपूर्वकं कर्मानुष्ठानं, सांख्यानां ब्रह्मनिर्वाणाख्यं फलं चोपदिष्टम् ।
तृतीये- निष्ठाद्वयमेतदधिकारिभेदेन प्रोक्तमिति, कर्मारम्भ एव तु नैष्कर्म्यनिष्ठोपायः इति चाभिहितम् ।
चतुर्थे- अजस्याव्ययस्यापि परमेश्वरस्य धर्मोद्धारार्थं मायया जन्म संभवतीत्युपपाद्य ज्ञानिनः कर्मबन्धाभाव इति चोक्तम् । पंचमे- कर्मानुष्ठानकर्मसन्यासयोरुभयोरपि श्रेयस्कारणत्वे सत्यपि साधकानां कर्मनिष्ठैव सुकरेत्युक्तम् । षष्ठे- कर्मध्यानयोर्योगांगत्वे विशेषः, ध्यानयोगानुष्ठानप्रकार, तत्फलमात्मदर्शनम्, तस्य नियतफलत्वं च प्रतिपादयते ।
सप्तमे- भगवतः परापरप्रकृतिस्वरूपम्, सर्वस्यापि जगतः तत्तद्गुणविशिष्टे भगवति प्रोतत्वम्, भगवत्प्राप्तेर्मायातरणोपायत्वम्, प्रपन्नानां मध्ये ज्ञानिभक्तश्रैष्ठ्यम्, नैसर्गिकद्वन्द्वमोहस्य ज्ञानप्रतिबन्धकत्वं च । अष्टमे- ओंकारोपासकानां धारणायोगेनाग्न्याद्युपलक्षितमार्गेण गतिः, क्रमेणाक्षरब्रह्मप्राप्तिश्च, तदन्येषां तु कृष्णगतिः पुनरावृत्तिश्च । नवमे- परमात्मतत्वाभिवर्णनपूर्वकं प्रत्यक्षावगमफल आत्मदर्शनप्रकारः उक्तः । भगवद्भजनप्रकाराः, भगवद्विभूतयः कश्चित् भगवदेकपरायणानां तत्प्राप्तिश्च । दशमे- उपासनार्थं विस्तरेण भगवद्विभूतिकथनम् । कृत्स्नं जगद् भगवदंशत्वेन जानीयादित्युपदेशेनाध्यायोपसंहारश्च । एकादशे- अर्जुनप्रार्थितेन भगवता विश्वरूपप्रदर्शनम्, अर्जुनकर्तृका भगवत्स्तुतिः, भक्त्यैकलभ्यत्वद विश्वरूपभगवत्प्राप्तेः साधकेन भगवदेकपरायणेन भवितव्यमित्युपदेशश्च । द्वादशे- विश्वरूपोपासकानाम् अक्षरोपासकानां च मध्ये विश्वरूपोपासकानामेव युक्ततमत्वं साधने क्लेशाल्पत्वाद् इत्युक्तिः, विश्वरूपोपासकानाम् उत्तरोत्तरं सुकरत्वेन विश्वरूपैकचिन्तनाभ्यासयोग-भगवत्कर्मानुष्ठान-सर्वकर्मफलत्यागानामुपदेशः, अक्षरोपासकानामद्वेष्टत्वादिलक्षणानि च । त्रयोदशे- क्षेत्रक्षेत्रज्ञविवेचनपूर्वकं सर्वशरीरेष्वपि क्षेत्रज्ञस्य भगवदनन्यत्वम्, आत्मदर्शनोपायविकल्पाः, सम्यक् दर्शनप्रपचमनं च । चतुर्दशे- सत्वरजस्तमसां प्रकृतिगुणानां बन्धनप्रकाराः तत्तद्गुणविवृद्धयवस्थाविशेषज्ञानार्थं लिंगविशेषाः, तत्तद्गुणविवृद्धिफलम्, गुणातीतलक्षणं च । पंचदशे- संसारस्वरूपवर्णनम्, तदुच्छेदायासंगत्वोपदेशः, परमपदं प्राप्तस्यपुन-

-रावृत्तिः, संसारिण्येवात्मदर्शनम्, परमात्मविभूतिसंक्षेपः, भगवतः क्षराक्षरविलक्षणत्वेनोत्तमपुरुषाख्यत्वम्, तज्ज्ञानस्तुतिश्च । षोडशे-दैवासुरसंपदविभागः, कार्याकार्यव्यवस्थितौ शास्त्रस्यैव प्रामाण्यम् । सप्तदशे-आहारयज्ञतपोदानां सत्त्विकत्वादिविभागकर्मसाद्गुण्यार्थं ओंतत्सदिति निर्देशोपदेशश्च । अष्टादशे-यज्ञदानतपसां संगफलत्यागपूर्वकं कर्तव्यता, कर्मसंन्यासिनामनिष्टादि फलाप्राप्तिः, आत्मनोऽकर्तृत्वम् । ज्ञानकर्मकर्तृबुद्धिधृतिसुखानां सात्विकादिभेदाः, ब्राह्मणादीनां कर्माणि, स्वकर्मणा भगवदर्चनेन सिद्धिः सिद्धिं प्राप्तस्य ब्रह्मप्राप्त्यर्थम् अनुष्ठेयसाधनम्, भगवच्छरणतोपदेशश्चेति ।

2 5 0 द्वितीयाध्यायस्य सारः समाहारश्च ।
--------------------------------------

वेदान्तपरम्परायाः सन्दर्भे भामतीप्रस्थानस्य स्वरूपपरिचयाय तथा तुलनात्मकाध्ययनाय अत्र अस्माभिः शंकराचार्यपूर्ववर्तिनां वेदान्ताचार्याणां शंकरसमकालिकानां आचार्याणां तथा शंकरोत्तरवर्तिनां वेदान्ताचार्याणां संक्षिप्तः परिचयः दत्तः । विभिन्नैः आचार्यैः ये सिद्धान्ताः प्रवर्तिताः, तेषां स्वरूपं परिचयः अपि अत्र निबद्धः । एवं प्रकारेण च वेदान्तपरम्परायाः इतिहासः सोपानत्रये विभक्तुं शक्यते इति अस्मदीयं मतम् संकेतितम् ।

सिद्धान्तनां विकासक्रमे बादरेः निर्विशेषाद्वैतवादः, औडुलोमेः द्वैताद्वैतसिद्धान्तः, आश्मरथ्यस्य भेदाभेदवादः, काशकृत्स्नस्य निर्विशेषाद्वैतवादः, काश्यपस्य भेदवादश्च अतीव महत्वं धारयन्ति । वस्तुतः शंकराचार्य-समकालिकैः आचार्यैः तथा वैष्णववेदान्तपरम्परायाः आचार्यैः ये सिद्धान्ताः उपन्यस्ता, तेषामपि मूलभूतानि तत्वानि आद्यवेदान्ताचार्याणां कथनेषु उपलभ्यन्ते इति अस्माभिरत्र स्पष्टीकृतम् ।

अद्वैतवेदान्ते भगवतः शंकराचार्यस्य सर्वाधिकं महत्वं विद्यते । वस्तुतः प्रस्थानत्रय्याः शंकरकृतभाष्येषु एव अद्वैतवेदान्तस्य प्रामाणिकी रूपरेखा द्रष्टुं शक्यते । अतः अद्वैतवेदान्तपरकस्य कस्यापि ग्रन्थस्य ~~कस्यापि ग्रन्थस्य~~ प्रबन्धस्य वा रचना शंकराचार्यस्य कथनानाम् उल्लेखं विना कर्तुं न शक्यते । भामत्या रचना वाचस्पतिमिश्रेण शारीरकभाष्यस्य टीकात्वेन कृता । अतः भामतीप्रस्थाने ये सिद्धान्ताः वाचस्पतिमिश्रप्रभृतिभिः प्रवर्तिताः, तेषां तुलनात्मकाय आकलनाय

शांकरभाष्याणां समाकलनमपि आवश्यकम् इति कृत्वा अस्माभिरत्र शंकराचार्यस्य संक्षिप्तः परिचयोऽपि अस्माभिरत्र दत्तः ।

भामत्याः विस्तृतं विश्लेषणम् उत्तरवर्तिषु अध्यायेषु दीयते । तत्र सुधीभिः यथा स्थानं द्रष्टव्यम् । वाचस्पतिमिश्रेण अवच्छेदवादस्य प्रवर्त्तनं कृतम् । किन्तु यावत्पर्यन्तं सुरेश्वराचार्यद्वारा प्रवर्तितेन आभासवादेन सह तथा पद्मपाद(प्रकाशात्मयति)प्रवर्तितेन प्रतिबिम्बवादेन सह तस्य तुलना न क्रियते, तावत्पर्यन्तम् अवच्छेदवादस्य तुलनात्मकम् आकलनं कर्तुं न शक्यते अतः सुरेश्वराचार्यप्रभृतीनां संक्षिप्तः परिचयः अपि अस्मिन् अध्याये निरूपितो वर्तते । अस्मिन् सन्दर्भे संक्षेपतः इदं कथयितुं शक्यते यत् शांकरोत्तरवर्तिषु अद्वैतवेदान्तपरम्परायाः आचार्येषु वाचस्पतिमिश्रस्य स्थानम् अप्रतिमं वर्त्तते ।

भामतीप्रस्थानस्य सम्यगाकलनाय वैष्णववेदान्तपरम्परायाः आचार्यणामुल्लेखः तैः प्रवर्तितानां सिद्धान्तानां समावेशः अपि अस्मिन् अध्याये कृतः । यतः तेषामुल्लेखां बिना वेदान्तस्य व्यावहारिक्याः उपयोगितायाः अवबोधनं कर्तुं न शक्यते । एवं प्रकारेण अद्वैतवेदान्तस्य न केवलं शास्त्रीयं महत्वं वर्त्तते, अपितु तस्य व्यावहारिकः उपयोगोऽप्यस्ति इत्यस्माकं मतम् ।

अद्वैतवेदान्तस्य आधारः प्रस्थानत्रयी वर्त्तते । यद्यपि भामती न्याय-प्रस्थान(ब्रह्मसूत्रम्) परकस्य शारीरकभाष्यस्य टीकात्वेन प्रथिता वर्तते, तथापि श्रुतिप्रस्थानस्य(उपनिषदां) तथा स्मृतिप्रस्थानस्य(गीतायाः )अपि सन्दर्भाः भामत्यां दृश्यते । अतः एतत् स्पष्टं वर्तते, यत् भामतीप्रस्थानस्य तुलनात्मकाय समा-कलनाय श्रुतिस्मृतिप्रस्थानयोरपि उपेक्षा कर्तुं न शक्यते ।

संकल्पनानां विकासस्य दृष्ट्या अस्मिन् अध्याये अस्माभिः यदुक्तं तस्य सारः अयमस्ति-

(1) भामतीप्रस्थानस्योपबृंहणं यद्यपि वाचस्पतिना कृतं, तथापि तस्य तत्वानि मण्डनमिश्रप्रभृतिपूर्वाचार्याणां ग्रन्थेष्वपि उपलभ्यन्ते ।

(2) यद्यपि अद्वैतवेदान्तस्योपबृंहणं भगवता शंकराचार्येण कृतं, तथापि तस्य तत्वानि आद्यवेदान्ताचार्याणां कथनेषु सम्यग् दृश्यते । एवमेव गौडपादेन यन्मतं प्रवर्तितं तस्य तत्वानि आद्यवेदान्ताचार्याणां कथनेष्वपि उपलभ्यन्ते ।

(3) भामतीपरिस्थिभिः ये विचाराः प्रस्तुताः, तेषां स्वरूपनिर्धारणाय अवबोधाय च वार्तिकप्रस्थानानुयायिभिः विवरणानुयायिभि च सिद्धान्तानां नवीनैः आचार्यैश्च प्रवर्तितानां, परिचयः आवश्यको वर्तते । प्रकारान्तरेण इदमपि कथयितुं शक्यते यत् वाचस्पतिप्रभृतीनाम् आचार्याणां कथनेषु अन्येषामाचार्याणामपि भूयान्प्रभावः विद्यते ।

## तृतीयोध्यायः

### सुरेश्वर-भास्कर-पद्मपाद(प्रकाशात्मयति)- प्रवर्तितानां वार्तिकप्रभृतिप्रस्थानानां सन्दर्भे भामती प्रस्थानस्य तुलनात्मकं समीक्षणम् ।

### ३-१-० सुरेश्वराचार्यस्य वार्तिकप्रस्थानम्

अद्वैतवेदान्ते प्रमुखतया वार्तिकप्रस्थानं,भामतीप्रस्थानं, विवरणप्रस्थानं चेति प्रस्थानत्रयस्य प्रामुख्यं वर्तते । किन्तु सन्ति तत्र अन्यानि अपि प्रस्थानानि येषु भास्करप्रस्थानंप्रामुख्यं भाजते । यद्यपि मण्डनमिश्रेण यद् कथितं तस्य समावेशः भामतीप्रस्थाने संजात, तथा सुरेश्वराचार्येण यदुक्तं तस्य सन्निवेशः विवरण-प्रस्थाने दृश्यते तथापि सुरेश्वराचार्यस्य आभासवादः भास्कराचार्यस्य भेदाभेदवादः अन्ये च कतिपयसिद्धान्ताः स्वीयवैशिष्ट्येन स्वकीयत्वं भजन्ते । अतः वार्तिकप्रस्थान-स्यापि पृथक् विश्लेषणम् अनुपपन्नं नास्ति । एवमेव भामत्याः सन्दर्भे भेदा-भेदप्रस्थानस्यापि विश्लेषणमप्रासंगिकं नास्ति । भगवतः शंकराचार्यस्य उत्तर-वर्तिनः आचार्याः यद्यपि शंकराचार्यस्य भाष्याण्यधिकृत्य स्वीयान् ग्रन्थान् रचित-वन्तः तथापि तेषां सिद्धान्तेषु किंचिद् वैभिन्यमपि दृश्यते । शंकरोत्तरवर्तिषु आचार्येषु सुरेश्वराचार्यस्य महत्वपूर्णं स्थानं वर्तते । सुरेश्वराचार्यः वार्तिककार इति नाम्ना प्रथितः वर्तते । एवमेव भास्कराचार्यस्य भेदाभेदवादोऽपि भामत्याः सन्दर्भे विशेषणीयो वर्तते ।

सुरेश्वराचार्यः शंकरस्योत्तरवर्ती समकालिको वा वाचस्पतेः समकालिकः पूर्ववर्ती वा आसीत् । अतः तस्य समयः नवमशताब्दी आसीत् इति कथयितुं शक्यते । तेन निम्नलिखिताः ग्रन्थाः लिखिताः ।

'बृहदारण्यकभाष्यवार्तिकम्, 'तैत्तिरीयभाष्यवार्तिकम्' 'नैष्कर्म्यसिद्धिः', 'दक्षिणामूर्तिस्तोत्रम्' 'मानसोल्लासः' 'पंचीकरणवार्तिकं च । सुरेश्वराचार्यस्य वार्तिकम् आश्रित्यैव वार्तिकप्रस्थानस्य आरम्भः अभवत् ।

केचिद् विद्वांसः मण्डनसुरेश्वरयोः समानत्वम् अपरे तु विभिन्नत्वमिति मतं स्वीकुर्वन्ति । अस्माकं कथनम् तु एतदेवास्ति यद् विचारपरम्परायाः दृष्ट्या वार्तिकग्रन्थेषु प्रतिपादितानां सिद्धान्तानां तेभ्यः सिद्धान्तेभ्यः निश्चितरूपेणैव

वैभिन्न्यं वर्तते । ये मण्डनमिश्ररचितेषु ग्रन्थेषु उपलभ्यन्ते । गृहस्थाश्रमे यः मण्डनमिश्रः मीमांसकः आसीत्, स एव सन्यासाश्रमे सुरेश्वरनाम्ना वेदान्ती संजातः । एवं च समानेऽपि देहे व्यक्तेः पृथगत्वम् आश्रमेण संजायते । अतः द्वयोः पार्थक्यं स्वीकृत्यैव अस्माभिः व्यवहर्तव्यम् ।

एतन्तु सुप्रसिद्धमेव यत् भागवत्पादस्य शंकरस्य चत्वारः प्रमुखाः शिष्याः आसन् । तेषु च सुरेश्वरः अन्यतमः आसीत् । अन्ये शिष्याः पद्मपादाचार्यः, हस्तमलकाचार्यः, तोटकाचार्यश्च आसन् । 'संन्यासोत्पत्तिं' नाम्नि ग्रन्थे सुरेश्वरस्य पूर्वं नाम स्वरूपाचार्यः आसीत् इति समुल्लिखितमस्ति । केषांचित् विदुषां मतानुसारं मण्डनः विश्वरूपः, उम्बेकः, भावभूतिः, इत्येतानि नामान्यपि एकस्यैव विदुषः सन्ति । किन्तु अस्य कथनस्य समर्थनाय समुचितप्रमाणानामभावः वर्तते ।

मण्डनसुरेश्वरयोः वैभिन्न्यस्य सन्दर्भे श्रीमता कुप्पुस्वामिशास्त्रिणा ये तर्काः प्रस्तुताः तेषां सारः अयमस्ति- ब्रह्मसिद्धौ मण्डनमिश्रः कुमारिलभट्टप्रतिपादितस्य विपरीतख्यातिसिद्धान्तस्य औचित्यं प्रतिपादयति । किन्तु सुरेश्वरः अन्यथाख्यातिसिद्धान्तं खण्डयति¹ । ब्रह्मसिद्धौ मण्डनः स्फोटवादं तथा शब्दाद्वैतवादं समर्थयन् इव प्रतिभाति । किन्तु सुरेश्वरः न स्वीकरोति ।

मण्डनः अविद्याद्वयं (अग्रहणं तथा अन्यथाग्रहणं) प्रतिपादयति । किन्तु सुरेश्वरः अविद्यायाः एकत्वं स्वीकरोति । मण्डनस्य मतानुसारमविद्यायाः आश्रयः जीवः, विषयश्च ब्रह्म । किन्तु सुरेश्वरः कथयति यत् ब्रह्म एव अविद्यायाः आश्रयः विषयश्च । एवं प्रकारेण अस्मिन् सन्दर्भे भामतीप्रस्थानस्य मण्डनमतेन सह साम्यं वर्तते सुरेश्वर मतेन सह वैषम्यं वर्तते । तथा च विवरणमतस्य मण्डनमतेन सह वैषम्यं, सुरेश्वरमतेन च साम्यं वर्तते ।

ज्ञानं मोक्षस्य साधनम् इति मन्यमानाः अपि केचित् आचार्याः इत्थं कथयन्ति यत् ज्ञानं तथैव मोक्षस्य साधनं भवितुं शक्नोति, यदा ज्ञानस्य कर्मणा सह समुच्चयः स्यात् । एतादृशेषु आचार्येषु ब्रह्मदत्तः, मण्डनः तथा भर्तृप्रपंचः, अपि परिगण्यन्ते । एतेषां कथनमिदमस्ति यत् अज्ञानस्य निवृत्तिः भावनाजन्येन साक्षात्कारा-

---

1- ब्रह्मसिद्धिः पृ० 150 भाग- 1, बृ०भा०वा० पृ० 484 भाग 3-पृ0484

त्मकज्ञानेन सम्भवति नतु वेदान्तवाक्यजन्यज्ञानेन - अतः उपनिषदां वास्तविकं तात्पर्यं तत्वमस्यादि महावाक्येषु न । अपितु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः निदिध्यासितव्यः'' इत्यादि नियोगसूचकवाक्येषु एव निहितं वर्तते । मण्डनेनापि उपासनायाम् उपनिषद्वाक्यानां तात्पर्यं मत्वा 'तत्वमसि' इत्यादि वाक्यानां विधिसंश्लिष्टत्वं प्रतिपादितम् । तस्य इदं कथनमस्ति यत् वेदान्तवाक्यैः उत्पन्नं ज्ञानं संसर्गात्मकं भवति । तेन संसर्गात्मकज्ञानेन यद्यपि संसर्गशून्यस्यात्मनः वास्तविकं स्वरूपं ज्ञातुं न शक्यते तथापि संसर्गात्मकस्य ज्ञानस्य प्रसंख्यानेन (निरन्तराभ्यासेन) संसर्गशून्यायाः अवाक्यार्थात्मिकायाः प्रज्ञायाः उदयः भवति । एवंप्रकारेण मण्डनेन ब्रह्मदत्तवत् प्रसंख्यानस्य ब्रह्मज्ञाने उपयोगित्वं स्वीकृतम् । ब्रह्मदत्तस्यानुसारं प्रसंख्यानं स्वयमेव मोक्षस्य कारणम् । किन्तु मण्डनस्य मतानुसारं प्रसंख्यानपरिमार्जितं ज्ञानं मोक्षस्य कारणम् । वाचस्पतिना भामत्यां मण्डनसम्मतस्य प्रसंख्यान विषयक-मतस्य समर्थनं कृतम् । ''विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इत्यस्या बृहदारण्यक श्रुतेः तात्पर्यं विवृण्वन् वाचस्पतिः कथयति - ''विज्ञाय- तर्कोपकरणेन शब्देन प्रज्ञां भावनां कुर्वीत ।'' अमलानन्दस्य कथनेनापि एतत् सिद्ध्यति यत् वाचस्पतिः मण्डनसम्मतस्य प्रसंख्यान विषयकमतस्य समर्थक आसीत् । तद्यथा- 'अपि संराधने सूत्राच्छास्त्रार्थध्यानम् प्रमा । शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः [2] ।।'' अस्य सारः अयमस्ति यत् तत्वमस्यादि-वाक्यैः उत्पन्नं ज्ञानं परोक्षमेव भवति । तच्च परोक्षं ज्ञानं सततामभ्यस्यमानया उपासनया (भावनया) अर्थात् ध्यानेन, अर्थात् प्रसंख्यानेन, ब्रह्माभेदात्मके अपरोक्षज्ञाने पर्यवसितम् जायते । अतः ज्ञानेन (तत्वमसि-वाक्यजन्येन) सह कर्मणः (भावनायाः अर्थात् प्रसंख्यानस्य) समुच्चयेन मोक्षः भवति इति मण्डनस्य मतम् ।

किन्तु सुरेश्वराचार्यः अस्य मतस्य खण्डनं करोति । तद्यथा -

'अभ्यासोपचयाद् बुद्धेर्यत्स्यादेकाग्र्यमेव तत् ।

नहि प्रमाणान्यभ्यासात् कुर्वन्त्यर्थाविबोधनम् ।। [3]

---

2- वे०क० 1-1, 28- पृ० 218

3- नै०सि० अ० 3, का० 90

''प्रज्ञायाश्च समाप्तत्वादविद्यायाश्च निराकृतेः
पुरुषार्थस्य चाप्तत्वात् किमर्थं विधिशासनम्? [4]

विद्या चाविद्यां च-इत्यादि ईशावास्योपनिषद्श्रुतेः व्याख्यानेऽपि सुरेश्वर-मण्डनयोः भिन्नत्वं दृश्यते । तद्यथा -मण्डनः-'अविद्यया कर्मणा अग्निहोत्रादिना, मृत्युं स्वाभाविकं कर्म' ज्ञानं च मृत्युशब्दवाच्यमुभयम्, तीर्त्वा अतिक्रम्य विद्यया देवताज्ञनेन, अमृतं देवतात्मभावमश्नुते प्राप्नोति । तद्ध्यमृतमुच्यते यद्देवतात्मगमनम् ।

सुरेश्वरः- आविद्यया मृत्युमित्यत्र विहिताकरणं निषिद्धसेवा च मृत्युः, तद्धेतुत्वात्, अग्निहोत्रादि शास्त्रीयं कर्म विद्यां चेत्यत्र विद्या, एतेनाविद्ययेन्यपि व्याख्यातम् । तस्य धी शुद्धिद्वारा तद्धेतुत्वात् अशास्त्रीयं स्वाभाविकं कर्म मृत्युशब्दोक्तम्, अविद्यां चेत्यविद्या, तत्कार्यत्वात्, निवर्त्यनिवर्तकभावेन च तयोः सहोक्तिरित्यर्थः ।''

(5) मण्डनमिश्रः भावदैतवादस्य समर्थकः तस्य मतानुसारम् एकमात्रं ब्रह्म एव भावरूपम् । प्रपंचादीनाम् अभावत्वसिद्धाया भावरूपस्य ब्रह्मणः अद्वितीयतायां कोऽपि व्याघातः न जायते । शब्देन प्रपंचस्य विलयः न प्रतिपाद्यते, अपितु प्रपंचस्य अभावः प्रतिपाद्यते । तद्यथा -

'प्रपंचस्य प्रतिलयः शब्देन प्रतिपाद्यते ।
किं तर्हि शब्देन प्रतिपाद्यते प्रपंचाभावः ।।''

किन्तु सुरेश्वराचार्यः भावाद्वैतवादसिद्धान्तं खण्डयति तद्यथा -'नाभावनिष्ठोऽन्यत्रापि निषेधः किमुताश्रये।(बृ0भा0 वा) इति ।

(6) मण्डनः जीवन्मुक्ते सिद्धान्तं न स्वीकरोति । तस्य मतानुसारं देहपातानन्तरमेव मुक्तिः भवति किन्तु सुरेश्वरः एवं कथयति यत् -'बन्धस्य कारणम् अविद्या अस्ति नतु शरीरम् । देहादौ अहंत्वभावनारूपायाः अविद्यायाः निवृत्तौ, मनुष्यः मुक्तः जायते किन्तु प्रारब्धकर्मणामपि यावत्पर्यन्तं क्षय न भवति, तावत्पर्यन्तं देहस्यावस्थितिः आवश्यकी । अतः सुरेश्वराचार्यस्य मतानुसारं जीवन्मुक्तिः सम्भवति ।

---

1- ब्रह्मसिद्धि भाग 1- पृ0 122

(7) सम्प्रदायपरम्परायामपि मण्डनसुरेश्वरयोः पार्थक्यमेव प्रायः स्वीकृतं दृश्यते । संक्षेपशारीरिके सर्वज्ञात्ममुनिना शंकरप्रस्थानात् मण्डनप्रस्थानस्य भिन्नत्वं प्रतिपादितम् । संक्षेपशारीरकस्य टीकाकारः अपि एतत् कथितं यत् सुरेश्वरः शंकरस्यानुयायी वर्तते, किन्तु मण्डनप्रस्थानं शंकरप्रस्थानाद् भिन्नम्[5] । कल्पतरुकारः अमलानन्दः मण्डनसुरेश्वरयोः भेदं निरूपयति[6] विवरणप्रमेयसंग्रहे विद्यारण्यमुनि सुरेश्वरस्योल्लेखं विश्वरूपाचार्यः इत्येवं प्रकारेण करोति तथा मण्डनस्योल्लेखं ब्रह्म-सिद्धिकारः इत्येवं प्रकारेण करोति । उपर्युक्तरूपेण एतत् सिद्ध्यति यत् मण्डन-सुरेश्वरयोः भिन्नत्वमस्ति । एवं च भामतीप्रस्थाने वाचस्पतिप्रभृतिभिः यानि मतानि प्रतिपादितानि तेषामाधारः मण्डनस्य ग्रन्थेषु दृष्टुं शक्यते । तथा च विवरणप्रस्थाने प्रकाशात्मयतिप्रभृतिभिः ये सिद्धान्ताः प्रतिपादिताः तेषां पूर्व-पीठिका सुरेश्वराचार्यस्य ग्रन्थेषु उपलभ्यते । इत्थमुत्तरवर्तिप्रस्थानानां दृष्ट्याऽपि मण्डनसुरेश्वरयोः वैभिन्यमेव सिद्ध्यति ।

अस्मिन् सन्दर्भे अड्यारग्रन्थालयपत्रिकायाः चतुरशीति तमे वर्षे प्रकाशिते अंके प्रो० ई०आर० श्रीकृष्णशर्ममहोदयेन स्वकीये शोधनिबन्धे एतत् प्रतिपादितं यत् अनेकेषु स्थलेषु मण्डनसुरेश्वरयोः विचारेषु वाक्येषु च साम्यं वर्तते । तेन तयोः ऐक्यम् सिद्ध्यति । प्रोफेसर श्रीकृष्णशर्ममहोदयस्य एतत् कथनं विद्वद्भिः विचारणीयं वर्तते ।

## 3-1-1 वार्तिकप्रस्थानस्य प्रमुखाः सिद्धान्ताः

वार्तिकप्रस्थाने सुरेश्वराचार्येण यानि मतानि उपस्थापितानि तेषां सारः संक्षिप्तरूपेण अधो लिख्यते ।

### 3-1-1(1) अविद्यायाः ज्ञानाभावरूपत्वम्

शंकराचार्यस्य मतानुसारमध्यासो मिथ्याप्रत्ययरूपः । तस्यैव मिथ्या-ज्ञानस्य अविद्यात्वम् उक्तम् । किन्तु सुरेश्वराचार्यः अस्मिन् विषये एवं कथयति

5- सं०शा० श्लो० 174, विश्ववेदकृता सिद्धान्तदीप नाम्नि संक्षेपशारीरकटीका

6- वे०क० पृ० 92।

यत्र अविवेकस्य ज्ञानाभावरूपस्य अविद्यात्वम् । तद्यथा -

'आत्मात्मवत्वसम्बन्धा आत्मात्मज्ञानयोर्मतः ।
परोऽविवेको भूतानात्मविद्येति कथ्यते ॥'[7]

'यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु ।
कारणेतररूपेण तयोरव्यभिचारितः ॥'[8]

'अज्ञानं संशयत्वान्नो मिथ्याज्ञानत्तथैव च ।
तयोस्तत्वविवक्षायाम् अज्ञानस्तत्वमुच्यते ॥'[9]

शंकराचार्यस्य मतानुसारम् 'अस्य (अध्यासस्य अर्थात् अविद्यायाः) अनर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताः आरभ्यन्ते' । किन्तु वार्तिककारः अस्य मतस्य विपरीतमेतद्घोषयति यत्र -

'मित्युत्पत्तावनुत्पत्तिविरोधाद् बाध्यते यतः ।
तद्बाधो नाप्यपेक्षास्ति मिथ्याधीबाधनं प्रति ॥
मिथ्याधियोऽपि बाध्यत्वमज्ञानेकसमन्वयात् ।
मूलध्वस्तौ हतं तच्चेन्मिथ्या धीः किं करोति नः ॥'[10]

3-1-1(2) अविद्याया आश्रयविषययोरैकत्वम्

अविद्यायाः आश्रयः कः ? इत्यस्मिन् विषये शंकराचार्यस्य कथनानि अवधेयानि वर्त्तन्ते । तद्यथा -

(1) कस्य पुनरयमप्रबोध इति चेत्,यस्त्वं पृच्छसि तस्य त प्रति वदामः । नन्वहमीश्वर एवोक्तः श्रुत्या, यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदवबोधः ॥[11]

(2) 'अत्राह- सा अविद्या कस्य? इति । यस्य दृश्यते स एव । कस्य दृश्यते तस्य एव । कस्य दृश्यते इति? अत्र उच्यते- 'अविद्या कस्य दृश्यते'' इति प्रश्नः निरर्थकः । कथं?- दृश्यते चेत् अविद्या,तद्वन्तमपि पश्यसि । नच तद्वति उपलभ्यमाने 'सा कस्य'' इति प्रश्नो युक्तः'' ।[12]

---

7- वा0 1-4-381
8- ,, 1-4-386
9- ,, 1-4-440
10- वा0 1-4-437,438
11- ब्र0सू0 भा0 4-1-3 पृ0 938
12- भगवद्गीताभाष्यम्

शंकराचार्येण विवेकचूडामणि नाम्नि ग्रन्थे मायायाः अनिर्वचनीयत्वं प्रतिपादितम्[13]। एवं चाविद्यामाययोः अभिन्नत्वं साधितम्। तद्यथा- अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रयाः मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः तदेतदव्यक्तं क्वचिद् आकाशशब्द-निर्दिष्टम्'' इति। स्थाने स्थाने भगवता शंकराचार्येण अविद्यायाः अनिर्वचनीयत्वं अनादित्वं, त्रिगुणात्मकत्वं, भावरूपत्वं, नैसर्गिकत्वं च प्रतिपादितम्। एवं च अविद्यात्मिकायाः बीजशक्तेः आश्रयः परमेश्वरः अस्ति।

यद्यपि अविद्या परमेश्वरस्य शक्तिरूपेण परमेश्वराश्रिता वर्तते। तथापि तदविद्या आत्मनः स्वाभाविक धर्मः न[15]। शंकराचार्येण अविद्यामाययोर्मध्ये कोपि भेदः न कृतः। एवं चाविद्यायाः पर्यायत्वेन मोह-महासुप्ति, अव्याकृत अनवबोध-अप्रतिबोध-अनवगतिप्रभृति शब्दानां प्रयोगः कृतः। तद्यथा-'मोहस्तु विपरीतप्रत्ययप्रभवो अविवेको भ्रमः सा चाविद्या सर्वस्यानर्थस्य प्रसवबीजम्'[16] (बृ० उ०-भा० ३-५-१) विज्ञानधातुरविद्ययामायया मायाविवदनिकधा विभाव्यते।

---

13- ''सन्नाप्यसन्नाप्युभयात्मिको नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
संगाप्यसंगाप्युभयात्मिको नो महादभुतानिर्वचनीयरूपा ।।
(वि० चू० श्लोक ।। ब्र०सू० शा० भा० 2-1-4)

14- ब्र० सू० शा० भा० 1-4-3, बृ० उ० ३-८ ।।

15- While Sankara uses avidya and maya indiscreminately, later adaitins draw a distinction between the two. ( The Adaitavedanta of Sankara by Radhakrishnan page 235)

16- ब्र० सू० शा० भा० 1-3-19)

आभासात्मकस्य सम्बन्धस्य चर्चापि सुरेश्वरेण कृता । अस्य कृते तेन आत्मात्मवत्वम् इत्यस्य शब्दस्यापि प्रयोगः कृतः । आत्मना सह अविद्यायाः सम्बन्धः अविद्या-प्रकल्पितः, अविद्योत्संगसंस्थः, तथा च अविचारित संसिद्धः अस्ति । अविद्यायाः संसर्गः कूटस्थेन सह कथं सम्भवति इत्यस्मिन् विषये सुरेश्वरस्य एतद् कथनमस्ति यद्-

'प्रत्याख्याताऽऽभनैवेयं प्रत्यगात्मानमेकलम् ।
अविद्याऽऽलिंगते वह्निं ध्रुवो ल्वणम् ।।''[25]

प्रतिबिम्बवादिनः आचार्याः अविद्यामाययोरैक्त्वं प्रतिपादयति[26] । सुरेश्वराचार्यः अपि माया-अविद्ययोः पर्यायत्वेन प्रयोगं करोति[27] । प्रतिबिम्बवाद-आभासवादयोः विपरीतम् अवच्छेदवादे वाचस्पतिना माया-अविद्ययोर्मध्ये भेदं मत्वा अविद्याप्रतिजीवं भिन्ना इति प्रतिपादितम् - न वयं प्रधानवदविद्याम् सर्वजीवेष्वेकयमाचक्ष्महे येनेवं, उपालभेमहि, किन्तु इयं प्रतिजीवं भिद्यते[28] ।

3-1-1(3) अविद्याया द्वैविध्यराहित्यम्

सुरेश्वराचार्येण बृहदारण्यकभाष्यवार्तिके अग्रहण-मिथ्याग्रहण रूपेण एकस्य अविद्याद्वयपरकमतस्य उल्लेखं कृत्वा तथा नैसर्गिकी आगन्तुकीरित्येवं प्रकारेण अपरस्य अविद्याद्वयपरकस्योल्लेखं कृत्वा तयोः खण्डनं कृतम्[29] । सुरेश्वरस्य मतानुसारम् अग्रहण-मिथ्याग्रहणे अज्ञानात् पृथग् स्वीकर्तुं न शक्येते । ते तु अज्ञानस्य कार्ये । यतः अविद्यायाः आश्रयः विषयश्च प्रत्यगात्मा एव । अतः अविद्यायाः द्वैविध्यं दुर्घटम्[30] । एवमेव सुरेश्वराचार्यस्य एतद् कथनमप्यस्ति यद् मिथ्याज्ञानात्मिकायाः अविद्यायाः प्रत्यगात्मैकगोचरत्वे स्वीकृते सति तस्य अद्वयत्वं स्वतः सिद्धम्[31] ।

---

25- बृ० अ० 4, ब्रा० 3, वा० पृ० ।180

26- पं० पा० पृ० 98

27- बृ० भा० वा० 4-3-1244, 4-3-919

28- भामती पृ० 297

29- बृ०भा० वा० अ० 4, ब्रा० 4, वा० 481-491

30- ''यदाऽसाधारणाऽविद्या प्रत्यगात्मैकगोचरा ।।
अज्ञानाद्यात्मिका सिद्धा द्वैविध्यं स्यात्तदा कृतः ।।
(बृ० उ० भा० वा० अ० 4, ब्रा० 4 वा०892

31- बृ० भा० वा० अ० । ब्रा० 4, ब्रा० 36

शांकराचार्यस्य कथनानां सारः अयमस्ति यत् अन्यवस्तुनि अन्यवस्तुनः धर्मस्य आरोपः अध्यासः । अध्यासः एवाविद्या । यथा शुक्तौ रजतबुद्धिः, स्थाणौ पुरुषबुद्धिः अनात्मनि देहादौ आत्मबुद्धिः- 'तमेतमेवं लक्षणमध्यासं पण्डिताविद्येति मन्यते ।[17] तथा च देहेष्वनात्मसु अहमस्मीत्यात्मबुद्धिरविद्या ।[18]

आनन्दरूपः आत्मा अविद्यया परिच्छिन्नः इव प्रतीयते । किन्तु वस्तुतः आत्मा सर्वगतः नित्यः एकश्चास्ति । तद्यथा- 'पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते यथा 'घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते तद्वत्'[19]

सुरेश्वराचार्यस्य मतानुसारमपि अविद्या अविचारितसंसिर तथा दुस्थितसिद्धा वर्तते । अतः प्रकारान्तरेण सुरेश्वरः अपि अविद्यायाः अनिर्वचनीयत्वम्, अनादित्वं निर्हेतुकत्वं च स्वीकरोति ।[20]

अविद्या कस्य इत्यस्मिन् विषये सुरेश्वराचार्यस्य मतमिदमस्ति यत् अविद्यायाः आश्रयः विषयश्च एकमेव । अस्य विपरीतं वाचस्पतिः अविद्यायाः आश्रयः जीव तथा अस्य विषय ब्रह्म इति प्रतिपादयति । एवमेव सुरेश्वराचार्यस्य कथनानुसारंमविद्या प्रत्यक्चैतन्या वर्तते । अविद्यायाः जडत्वे अपि तस्याः प्रत्यक्चैतन्याश्रयत्वे न कोपि विरोधः । कूटस्थाभासयुक्तत्वात् । तद्यथा - 'आसाधारणमज्ञानं प्रतीच्येवं यतः स्थितम्'[21] । किं विषयं पुनस्तदात्मनोऽज्ञानम् । आत्मविषयम् इति ब्रूमः ।'[22]

'मोहतत्कार्यनीडो यस्यस्याज्ञानसमन्वयात् ।
प्रत्यगात्माऽपि तद्ब्रह्म परोक्षमभावन्मृषा ।।''[23]

अविद्यायाः ब्रह्मणा सह कीदृशः सम्बन्धः वर्तते? इत्यस्मिन् विषये सुरेश्वरस्य इदं मतमस्ति यदविद्या-ब्रह्मणोः मध्ये आश्रयाश्रयिता तथा विषयिविषयः एतौ द्वौ सम्बन्धौ वर्तेते नैसर्गिकरूपेण । अनयोः द्वयोः सम्बन्धयोरतिरिक्तम्

-----------------------------

16- ब्र० सू० शा०भा० 1-3-19
17- अध्या०भा० पृ० 19
18- ब्र०सू० शा०भा० 1-3-2
19- ब्र० सू० शा०भा० 1-2-6( पृ० 165)
20- बृ०उ० भा०वा० अ० 1, ब्रा० 4, वा० 332-33, 1170
निर्हेत्वविद्याकल्प्तौ तु दोषः कश्चिन्न विद्यते ।। (वार्तिकम्, वा० 158)
21- बृ०भा० अ० 1, ब्रा० 4, वा० 179
22- नै० सि० अ० पृ० 3, 106
23- नै०सि० अ० 2, ब्रा० 4 वा० 434
24- अमित्रवदविद्येति सत्यैवं घटते सदा(तै०उ०भा०वा० ब्रह्मवली, वा०79, पृ०83

3-1-1(4) ईश्वरस्य चिदाभासत्वम्

सुरेश्वराचार्यैः चेतनाचेतनरूपेण आभासस्य द्वैविध्यम् अंगीकरोति । अविद्यागतः यः चिदाभासः स एव ईश्वरः । अस्य आशयः अयमस्ति यद् अज्ञानेन सह तादात्म्यापन्नस्य अज्ञानोपाहितस्य आत्मनः स्वाविविक्त अज्ञानाख्योपाधौ यः आभासः स एव ईश्वरः । अद्वैतवेदान्तपरम्परायाम् आभासवादिनाम् आचार्याणाम् ईश्वरविषयक लक्षणानि एवं प्रकारेण कर्तुं शक्यामि । तद्यथा -

(1) चिदाभासविशिष्टाऽविद्यासंवलित ईश्वरः ।

(2) अज्ञानोपहिताऽज्ञानतादात्म्यापन्ना तद्गतस्वाभास अविविक्ता चिदीश्वरः ।

(3) अज्ञानोपहितात्मनोऽज्ञानतादात्म्यापन्नस्य आत्माविविक्ताज्ञानोपाध्यान्तर्गताभास ईश्वरः ।[32]

अद्वैतवेदान्ते ईश्वरः साक्षी अन्तर्यामि एते त्रयः व्यपदेशाः प्रायः पर्यायत्वेन परिगण्यन्ते । अस्मिन् सन्दर्भे सुरेश्वराचार्यस्य निम्नलिखितानि कथनानि द्रष्टव्यानि भवन्ति । -

(1) चिदाभासं स्वमज्ञानं संनिपत्य तदक्षरम्?
कारणं सत्स्वकार्येषु नियन्तृत्वं प्रपद्यते ।।[33]
कूटस्थो दृष्टितन्मोहो दृष्टयाभासश्च तत्त्रयम् ।
कारणं जगतः साक्षी नियन्तेति च भाण्यते ।।[34]

ईश्वरः- मूलाज्ञाने अर्थाद् समष्टज्ञानाख्योपाधौ निविष्टः कारणचिदाभासः अवस्थात्रयानुसारमीश्वरः सूत्रात्मा तथा विराट इत्येवं प्रकारेण अभिधीयते । यद्यपि ईश्वरः सूत्रात्मा तथा विराट इत्येते शब्दाः पर्यायत्वेनापि प्रयुज्यन्ते तथापि वस्तुतः एतैः कारणाचिदाभासस्य अवस्थात्रयं निर्दिशन्ति । सुषुप्त्यवस्थायाः अभिमानी कारण चिदाभासः ईश्वरः । तद्यथा -

'आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम् ।
तत्स्वमायासमावेशाद् बीजमव्याकृतात्मकम् ।।'[35]

---

32- Lights on Vedanta page 114 (VI) Upadyaya.

33- बृ० उ० अ० 3 ब्रा० 9, वा० 3

34- ,, ,, 3, ब्रा० 4, वा० 90

35- पंचीकरणवार्तिकम् 2- ।।

'सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः ।

जगज्जनिस्थितिध्वंस हेतुरेष सदेश्वरः ॥ [36]

स्वप्नस्थानस्य अभिमानी कारण चिदाभासः सूत्रात्मा इत्युच्यते । बुद्धेः तथा क्रियाशक्तेः प्राधान्येन असौ एव हिरण्यगर्भः तथा प्राणः इत्युच्यते । सूत्रात्मनः अपरं नाम विरिंच इत्यप्यस्ति । अस्मिन् सन्दर्भे सुरेश्वराचार्यस्य निम्नलिखितानि कथनानि उल्लेखनानि वर्तन्ते -

बुद्ध्याय हिरण्यगर्भत्वं बुद्ध्युपाधिः स एव तु ॥ [37]

''बुद्ध्यात्मनोभिनिर्हृत्तिर्व्यवसायात्मनस्तत ।

हिरण्यगर्भं यं प्राहुस्तमादानं जगद्धियाम् ॥'' [38]

विराट- जाग्रतावस्थायाः अभिमानी कारण चिदाभासः विराट इत्यच्यते । तद्यथा -

''वैराजं स्थानमसाद्यं क्षमादिदेशविभागवान् ।

देवताकरणो देव एष एवोच्यते विराट ॥'' [39]

''विराडपि ततो जातस्त्रैलोक्यात्मक देहवान्'' । [40]

अवस्थात्रयाभिमानिनः उपर्युक्ताः आभासात् प्रत्यगात्मनः विकल्पाः सन्ति । एते आत्मनि तथैव क्लृप्ताः सन्ति यथा रज्वौ सर्पः । तद्यथा-

''यथोक्ततत्त्वकाख्येव रज्वां क्लृप्तवस्तुवत् ।

सूत्रं विराड देवता च यावत्किंचिश्च वस्त्वद ॥ [41]

-----------------------

36- बृ० उ० भा० वा० 1-4-376, 3-7-44

37- बृ०भा० वा० 1-4-152

38- ,, ,, ,, 1-4-510

39- ,, ,, ,, 1-4-511

40- ,, '' ,, 1-4-19

41- ,, ,, ,, 1-4-1143

3 । । (5) जगतः (सृष्टिक्रमस्य) अवस्थात्रयम्

सुरेश्वरस्य मतानुसारमविद्या कामः - (सिसृक्षा) तथा कर्म एतानि त्रीणि सृष्टेः बीजानि सन्ति । सृष्टेः विभागः (1) अव्याकृतावस्था (2) व्याकृतसूक्ष्मावस्था तथा व्याकृतस्थूलावस्था इत्येवं प्रकारेण कर्तुं शक्यते । एतासाम् अवस्थानाम् अपराणि नामानि अव्याकृतावस्था, अमूर्तावस्था तथा मूर्तावस्था इत्येवं प्रकारेणापि सन्ति ।

(1) अव्याकृतावस्था :- सृष्टेः पूर्वं (प्रलयकाले) सूक्ष्मायाः तथा स्थूलायाः सृष्टेः बीजभूता चिदाभासविशिष्टा अविद्या अव्याकृतावस्था वर्तते ।

(2) व्याकृतसूक्ष्मावस्था - सृष्टेः सूक्ष्मावस्थायाः प्रारम्भे अपंचीकृत पंचमहाभूतैः ज्ञानक्रियाशक्त्यात्मकस्य अन्तःकरणपदव्यपदेशस्य उत्पत्त्यवस्था एव 'व्याकृत-सूक्ष्मावस्था' उच्यते । अस्यामवस्थायां यद् अन्तःकरणपदव्यपदेश्यं सूक्ष्मं द्रव्यं व्याकृतं भवति तद् अहंकारचित्तमनबुद्धीनां संपिण्डितम् अविभक्तमतिसूक्ष्मं रूपं भवति । अस्य पिण्डस्य ज्ञानशक्तिप्रधानः अंशः अन्तःकरणम् तथा क्रियाशक्ति-प्रधानः अंशः प्राणः इत्युच्यते । एवं प्रकारेण अपंचीकृतमहाभूतैः समुत्पन्नसमष्टि ज्ञानक्रियाशक्त्योः अभिमानी हिरण्यगर्भः अनेकव्यष्टयन्तःकरणमनोबुद्धिप्राणानां कारणत्वेन परिगण्यते ।

(3) व्याकृतस्थूलावस्था :- सुरेश्वरस्य मतानुसारं पंचीकृतभूतैः व्याकृतस्य भूतभौतिकादि संघातस्य उत्पत्ति भवति । एषा एवावस्था व्यक्ता स्थूलावस्था इत्युच्यते । उपर्युक्ताव्याकृत,सूक्ष्मव्याकृत तथा स्थूलव्याकृतावस्थासु या सृष्टिः भवति सा एव जगतिदित्युच्यते ।

सुरेश्वरस्य मतानुसारम् अविद्यागतः चिदाभासः यः कारणाभासः अथवा ईश्वरः इत्यप्युच्यते स एव सृष्टेः उपादानं तत्वमस्ति । यद्यपि चिदाभास(कारणा-भास) एव जगतः कारणमतथापि ब्रह्मचिदाभासयोर्मध्ये भेदस्य प्रतीतेरभावाद ब्रह्मणि सृष्टेः कारणता प्रतीयते । किन्तु वस्तुतः निरासंगे निष्प्रपंचे ब्रह्मणि कारणता कथमपि नोपपद्यते । एवं प्रकारेण सुरेश्वराचार्यः कथयति यद अविद्यागतः चिदाभासः अथवा चिदाभासविशिष्टः ब्रह्म जगतः कारणम् ।

प्रत्यगवभासवती अविद्या समुत्थिता सृष्टिः वस्तुतः सत्या नास्ति । अतः साऽपि आभासरूपः वर्तते । अस्मिन् सन्दर्भे सुरेश्वराचार्यस्य कथनानि अवधेयानि वर्तन्ते । तद्यथा -

' युक्त्या नैव उपपद्यन्ते जगत्सृष्ट्यादयो यतः ।
प्रत्यगज्ञानमात्रेत्था जगत्सृष्ट्यादयस्ततः ।।'' [42]

'किं नश्यसि संसारं तवैवाज्ञान कल्पितम् ।।
अनात्मवस्तु यत्किंचित् तद्ब्रह्मनानवबोधतः
ब्रह्मण्येव समुदयस्तं शुक्तिकाररजतादिवत ।। [43]

'तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि

3-1-1(6) जीवस्य-आभासरूपत्वम्

सुरेश्वराचार्यस्य ग्रन्थेष्वपि जीवस्यपि त्रिविधानि लक्षणानि उपलभ्यन्ते ।

(क) चिदाभासविशिष्टव्यष्टि बुद्ध्युपहितो जीवः '' तद्यथा

''बुद्धितत्कारणोपाधी क्षेत्रज्ञेश्वरसंज्ञको' । [44]

तदेव ज्ञातृतामेति बुद्ध्युपाधिमाश्रयात् । [45]

(ख) बुद्ध्युपहितात्मनो बुद्धितादात्म्यापन्नस्य आत्माऽविविक्त बुद्ध्युपाधान्तर्गताभासो जीवः ।

बुद्ध्युपाध्यविविक्तश्च विज्ञानमय उच्यते ।' [46]

(ग) बुद्ध्युपहिता बुद्धिगतस्वाभासाऽविविक्ता
बुद्धितादात्म्यापन्ना चित्त जीवः ।।'' तद्यथा -

'अविद्याकार्य बुद्धिस्थ प्रत्यगाभासरूपवत् ।
बोद्धेत्यादि समुत्थानं भण्यते परमात्मनः ।।'' [47]

एतेषु त्रिषु लक्षणेषु तृतीयं लक्षणं सुरेश्वरस्य नाम्ना वेदान्तपरम्परायाम् अधिकं प्रसिद्धम् अस्ति ।

---

42- बृ०भा० वा० 1-4-625 तथा तै०उ० भा० वा० 43-45,75

43- बृ०उ०भा०वा० अं- 1-4-1279-80,2-1-380)
,, ,, ,, ,, 1-4-421

44- बृ०उ० 1-ब्रा० 4 वा० 616

45- ,, ,, ब्रा० 2-वा 7

46- बृ०उ०4 ब्रा० 3 वा० 210

47- ब्रा० 2 ब्रा० 4 वा० 427

(अ) जीवैक्यवादः

सुरेश्वरस्य मतानुसारं जीवः प्रत्यगात्मनः आभासः अस्ति । चिदाभासा वस्तुतः एक एव । किन्तु अतः स्वरूपतः जीवः एक एव । किन्तु चिदाभासः यथा नानाविधासु अन्तःकरणवृत्तिषु आश्रितः भवति तथा भेदभावापन्नः सन् स जीवस्वरूपतां प्राप्नोति तथा काल्पनिकम् अनेकत्वमधिगच्छति । एवंप्रकारेण जीवः (चिदाभासैः) एकः एव किन्तु स्वं अन्तःकरणवृत्तीनाम् अनेकत्वात् तस्मिन् नानात्वम् आरोप्यते ।[48]

(आ) जीवस्य -अवस्थाभेदाः-

अज्ञानकार्यभूतान्तःकरणरूपोपाधौ आहितः चिदाभासात्मकः जीवः सुषुप्ति स्वप्नजाग्रदवस्थासु विभिन्नरूपेण व्यपदिश्यते । तद्यथा -

(क) प्राज्ञः चिदाभासविशिष्टायामविद्यायां विश्रमार्थं जीवस्य यदवस्थानं तत् सुषुप्तिरित्युच्यते । तस्यामवस्थायां स्थितः जीवः प्राज्ञ इत्युच्यते ।

(ख) तैजसः-

यदा जीवः जाग्रदवस्थातः स्वप्नावस्थायां संचरन् स्थूलदेहस्य सचेष्टतायाः रहित सन् स्वप्नावस्थायाः अनुभवं करोति तदा सा तैजसमित्युच्यते । तद्यथा -

'जाग्रत्मल प्रयोगस्य यदा कर्म प्रहीयते ।
व्युत्थानहेत्वसद्भावात्तदा कर्तं सुषुप्सति ।।[49]
''जाग्रत्कर्मक्षयादात्मा बाह्यदेहाभिमानतः ।
व्युत्थाय स्वप्रधानः सत्स्वप्नमायां समीक्षते ।।''[50]

ग) विश्वः- अन्तःकरणस्य-अविद्या-स्थूलशरीरा-भिमानी जीवः विश्वः इत्युच्यते । तद्यथा -

''बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः ।
स्वं स्वं च विषयज्ञानं तज्जागरितमुच्यते ।।[51]

---

48- बृ० अ० 2 ब्रा० 4 वा 425, बृ० वा० वा० 2-4-425

49- बृ० उ० भा० वा० 2-1-219

50- बृ० उ० भा० वा० 4-3-860

51- बृ० पंचीकरणवार्तिक वा० 29, पृ० 26

3 । । (7) बन्धस्य अविद्याजन्यत्वम्

सुरेश्वराचार्यस्य मतानुसारम् अविद्या एव बन्धः । सा एव च सकलानर्थानां कारणम् । यद्यपि अविद्यायाः अतिरिक्तम् अन्यबन्धहेतूनामपि उल्लेखः दृश्यते तथापि मूलभूतः बन्धहेतुः अविद्या एव । यतः पूर्वपूर्वहेतवः उत्तरोत्तरहेतूनां बीजानि । तद्यथा - ' न चाविद्यातिरेकेण कुतर्बन्धोऽन्य इष्यते ॥[52]
अविद्या हेतवः कामः काममूलाः प्रवृत्तयः । धर्माधर्मौ च तन्मूलौ देहोऽनर्थास्ततः ॥[53]

एवं प्रकारेण सुरेश्वराचार्यस्य अयं विचारः अस्ति यत् अविद्याकामप्रवर्तिनधर्माधर्मादिप्रभूतिपाशैः बद्धः जीवः जन्ममरणभाजनं भवति । जन्ममरणभाजनता एव च बन्धः । तद्यथा -

'घटीयन्त्रवद्भ्रान्ता एवमेव पुनः पुनः ।
परिवर्तन्ति संसारे कर्मवायुसमीरिताः ।'[54]

3-1-1(8) मोक्षे कर्मणामनुपयोगित्वम्

सुरेश्वराचार्यस्य मतानुसारं मोक्षस्य साधनानि क्रमशः अधो लिखितानि सन्ति । तद्यथा -

(1) नित्यनैमित्तककर्मानुष्ठान (2) चित्तसंशुद्धि (3) संसारासारता ज्ञान
(4) संसारपरिजिहीर्षा (5) एषणात्रयत्याग (6) विविदिषा (7) विविदिषा सन्यास
(8) श्रवणमननिदिध्यासनम् । (9) ब्रह्मसाक्षात्कारः (10) मोक्षः ।

(अ) कर्मणां विद्यार्थकत्वनिरसनम्

मोक्षस्य कृते कर्मणामुपयोगः अस्ति न वा इति? अस्मिन् सन्दर्भे एतत् ज्ञातव्यं वर्तते यत् मीमांसकानां मतानुसारं कर्मभिः एव मोक्षः लभ्यते । काम्यानां निषिद्धानां च कर्मणां त्यागे कृते सत्यपि नित्यनैमित्तककर्मणामनुष्टानं कर्तव्यम् । सुरेश्वराचार्यः कथयति यत् कर्मभिः मोक्षः प्राप्तुं न शक्यते ।

52- बृ० उ०भा० वा० 3-3-23

53- तै० उ० भा० वा० 25 पृ० 27।

54- बृ० उ० भा० वा० 6-2- वा० 155

वाचस्पतिना एतत् कथितं यत् उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा 'विविदिषन्ति यज्ञेन' इति श्रुतेः । पंचपादिकाविवरणकारः अपि इत्थं कथयति यत् ब्रह्मविद्यायां कर्मणः साहाय्यमस्ति किन्तु तत् परोक्षरूपेण वर्तते न तु प्रत्यक्षरूपेण । सुरेश्वराचार्यस्तु कर्मणां विविदिषार्थत्वं भामतीप्रस्थानवत् स्वीकरोति किन्तु तेषां विद्यार्थकत्वं निषेधयति । मोक्षप्राप्तौ ब्रह्मज्ञाने वा विधीनामुपयोगः सुरेश्वराचार्येण न स्वीकृतः । श्रवणमनननिदिध्यासनानां ब्रह्मसाक्षात्कारे साधनत्वं, भामतीप्रस्थानेऽपि स्वीकृतं वर्तते । तद्यथा - 'ब्रह्मसाक्षात्कारश्चान्तः करणवृत्तिभेदः श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गन्धर्वशास्त्रश्रवणाध्याससंस्कृतमनोयोनि ।'..[55] विवरणकारस्तु श्रवणस्य अंगित्व (प्रधानत्वम्) मनननिदिध्यासनयोश्च श्रवणस्य अंगत्वमिति स्वीकुर्वन्ति । अर्थात् श्रवणं ब्रह्मसाक्षात्कारस्य अव्यवहितं कारणम् श्रवणानिदिध्यासने च व्यवहितकारणे । तद्यथा - 'मनननिदिध्यासनयोश्चश्रवणांगत्वमुत्तरत्र वक्ष्यामः[56] । किन्तु सुरेश्वराचार्यस्य मतमेतदस्ति यत् निदिध्यासनं ब्रह्मसाक्षात्कारस्य साक्षात्साधनं श्रवणमनने च परम्परया कारणत्वं भजते ।

(आ) ज्ञानकर्मसमुच्चयवादनिरसनम् - ज्ञानं ब्रह्मसाक्षात्कारस्य साधनम् तदेव भवितुं शक्नोति तथा ज्ञानेन सह कर्मणः समुच्चयः स्यात् । असौ सिद्धान्तः ज्ञानकर्मसमुच्चयवादः इत्युच्यते । सुरेश्वरेण अस्य मतस्य खण्डनं कृतम् । तद्यथा -

'अभ्यासोपचयादबुद्धेर्यर्थत्स्यादेकाग्र्यमेवतत् ।
नहि प्रमाणान्यभ्यासात्कुर्वन्त्यर्थावबोधनम् ।।[57]
अभ्यासोपचिता कृत्स्नं भावनायेन्न निवर्तयेत् ।
नैकान्तिकी निवृत्तिस्यादभावनाजं हि तत्फलम् ।''[58]

संक्षेपतः सुरेश्वरस्य एतन्मतमस्ति यत् अविद्यानाशव्यतिरेकेण मोक्षान्तरं नास्त्येव -

मुक्तौ तमोऽतिरेकेण वान्तरायोऽन्य इष्यते ।
यतोऽतोज्ञानविध्वस्तौ मुक्तः सन्ना विमुच्यते ।।[59] (वा)

---

55- भामती पृ० 94-पंक्ति ,6-7
56- पं० पा० वि० प्रथमवर्णक पृ० 30
57- नै० सि० अ० 3 का० 90 पृ० 160
58- अ० उ० का० 91 पृ० 160

आभासवादे मोक्षस्य स्वरूपमेवमुक्तम् यत् - अविद्याव्युच्छित्त्यनन्तर जीवस्य स्वात्मावस्थितत्वमेव मोक्षः - 'तस्मादविद्याव्युच्छित्तौ स्यादवस्थानमात्मनि'[60]। 'स्वरूप आत्मनः स्थानमाहुर्निःश्रेयसं बुधाः ।। '' 61।

सुरेश्वराचार्यस्य मतानुसारं मोक्षः स्वतः सिद्धाः अनारभ्यश्च । मोक्ष प्राप्तिः औपचारिकी । आत्मस्वरूपः जीवः सदैव मुक्तः किन्तु अविद्यायाः कारणात् अमुक्तवत् प्रतिभासते । तद्यथा -

'मुक्तं चातः स्वतस्तत्वं मुक्तमित्युपचर्यते ।
तदविद्याविध्वंसान्निर्वृतः शपथाभ्यहम् ।।[62]

उपासनानां वैविध्यात् मुक्तेः वैविध्यम् आभासप्रस्थानेऽपि निरूपितम् । तद्यथा - क्रममुक्तिः (2) जीवन्मुक्तिः (3) विदेहमुक्तिः ।

3-1-2 सुरेश्वराचार्य-प्रवर्तितस्य आभासवादस्य स्वरूपम्

आभासवादस्य प्रवर्तक सुरेश्वराचार्यः आसीत् इति प्रायः सर्वैः स्वीक्रियते । आभासः वस्तुतः कः इत्यस्मिन् विषये विस्तृतं लक्षणम् नोपलभ्यते । संक्षिप्तरूपेण इदं कथयितुं शक्यते यत् आभासः कारणतायाः काल्पनिकं तत्वमस्ति यस्याभावे नित्यशुद्धमुक्तस्वभावस्य निष्क्रियस्य निरंजनस्य निर्लिप्तस्य ब्रह्मणः अनेके नाम-रूपात्मकप्रपंचे अवभासनं सम्भावं नास्ति ।

अस्मिन् सन्दर्भे सुरेश्वराचार्यस्य निम्नलिखितानि कथनानि द्रष्टव्यानि सन्ति -

'अविचारित संसिद्धितमोवत्स्यात्तमोवत्स्यात्तदभावम् ।
कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भावेच्छिति ।। ''[63]

'स्वाभासकलकार्द्ध स्तदज्ञानज भूमिषु ।
तत्स्थोऽपि तदसम्बन्धा ईश्वराद्यात्मतां गतः ।।[64]

---

60- तै० उ० भा० वा० 33 पृ० ।।
61- सं० वा० 109
62- बृ० उ०भा० वा० 8-4-303
63- बृ० उ० भा० वा० 2 अ० । ब्रा० 4 वा०. 1329
64- बृ० उ० भा० वा० अ० । ब्रा० 3 वा० 53

''कार्यकारणयोस्तत्वं प्रत्यगात्मा चितिर्यतः ।
तस्मान्नित्यश्चिदाभासो बुद्ध्यायो तत्प्रत्ययेषु च ।। 65

3-1-2(1) अज्ञानेन सह आभासस्य सम्बन्धः

सुरेश्वराचार्यस्य मतानुसारम् अज्ञानाभासयोः सम्बन्धः आश्रिताश्रयित्वरूपः अस्ति । अज्ञानम् आश्रयः आभासश्च आश्रितः । क्वचित् एवमपि कथितं यत् आभास अज्ञानस्य उपदानत्वेन जनकः तथा अज्ञानम् आभासस्य निमित्तत्वेन जनकम् । एवं च अज्ञानम् आभासरूपम् आभासश्च अज्ञानस्वरूपः ।

सुरेश्वराचार्येण एवमपि स्पष्टीकृतं यत् आभासः अज्ञानम् च उभौ एव पूर्णतः काल्पनिकौ । अविचारितसंसिद्धौ तथा तत्वज्ञानानपोह्यौ वर्तेते । तथापि अनयोः मध्ये अन्तरः अपि कथयितुं शक्यः । तद्यथा - अज्ञानं स्वरूपतः जडं निष्क्रियं मोहमान्ध्यादिरूपं च वर्तते । अस्य विपरीतम् आभासः आत्मवत् सन्तस्फुर्तिप्रदः, अवभासकश्च विद्यते । अज्ञानस्य कारणात् प्रपंचः जाड्यस्थौल्यनानात्वादिरूपेण प्रतीयते । किन्तु आभासस्य कारणात् प्रपंचः आत्मवत् प्रोत्भासितः इवावभासते । जगतः कारणातायाः दृष्टया आभासः कर्ता अस्ति अज्ञानं च तस्य भूमिः । 66

3-1-2(2) ब्रह्मणा सह आभासस्य सम्बन्धः -

सुरेश्वराचार्यः चिदाभासः, चैतन्याभासः, स्वात्माभासः इत्यादि पदानां प्रयोगं करोति । अतः आभासस्य चैतन्येन सह कः सम्बन्धः अस्ति असौ प्रश्नः अपि विचारणीय अस्ति । यद्यपि पारमार्थिकदृष्टया कूटस्थेन चैतन्येन सह आभासस्य सम्बन्धः भवितुं न शक्नोति तथापि व्यावहारिकदृष्टया एतत् कथयितुं शक्यते यत् आभासवादे आभासस्य ब्रह्मणः सह तादृशः सम्बन्धः वर्तते यादृशः सम्बन्धः प्रतिबिम्बस्य बिम्बेन सह प्रतिबिम्बप्रस्थाने वर्तते । एवं प्रकारेण यद्यपि सामान्यतः

---

65- बृ0 उ0 3-4- 151

66- बृ0 भा0 वा0 अध्याय - । ब्रा0 2 वार्तिक 126,
अद्वैतवेदान्त में आभासवाद - डा0 सत्यदेवमिश्र । पृ0 76

एतद् प्रतीयते यद् चैतन्य-आभासयोर्मध्ये-जन्यजनकत्वसम्बन्धः वर्तते तथापि एतद् ज्ञातव्यं वर्तते यद् प्रतिबिम्बवादानुसारं प्रतिबिम्बः बिम्बादभिन्नः इति स्वीक्रियते किन्तु आभासवादानुसारं आभासः चिदभिन्नः अनिर्वचनीयश्च वर्तते ।

असंगस्य ब्रह्मणः सृष्टौ आभासः कथं सम्भवति इत्यस्मिन् विषये सुरेश्वराचार्यस्य एतद् कथनमस्ति यद् यथा अज्ञाने प्रत्यगात्मनः आभासाख्यः प्रवेशः स्वीक्रियते तदेव अज्ञानजन्यसृष्टौ अपि ब्रह्मणः आभासात्मकः प्रवेशः सम्भवति । अत्र एतद् ज्ञातव्यमस्ति यद् प्रतिबिम्बवादिनां मतानुसारं सृष्टिः बिम्बभूताद् ब्रह्मणः अभिन्नः । किन्तु आभासवादिनां मतानुसारं सृष्टिः आभासरूपा,काल्पनिका,अनिर्वचनीया च वर्तते । तदयथा -

'स्वात्माभासप्रवेशो यः प्रत्यह मोहनिबन्धनः ।
तज्जेष्वपि स एव स्यान्न मरुद्बुदधायादिमिषु '' [67]

'सूत्रादि स्थाणुपर्यन्तं जगत्सृष्ट्वात्मगया स्वाभासैक सहायात्मा तदेव प्राविशद्धारिः ।[68]

3-1-2(3) आभासवाद-प्रतिबिम्बवादयोर्भेदः

1) प्रतिबिम्बः वस्तुतः बिम्बरूपः एव नतु वस्त्वन्तरम् । आभासस्तु बिम्बान्न भिन्नः, मिथ्यारूपः अनिर्वचनीयश्च ।
2) चैतन्यहीनः आभासः अज्ञानोपाधिनां भेदाद् कारणाभासः, कार्याभासश्च इति रूपदवये आभासते । आभासकं चैतन्यमन्योर्दवयोरेवातिक्रमणं करोति किन्तु प्रतिबिम्बवादिनां मतानुसारं बिम्बः स्वरूपभूतस्य प्रतिबिम्बस्यातिक्रमो न भवति ।[69]
3) आभासाय गुणस्य प्रकारस्य वा अपेक्षा भवति प्रतिबिम्बनाय तु द्रव्यस्य ।
4) आभासवादानुसारं 'तत्त्वमसि' महावाक्ये अखण्डार्थबोधार्थं 'तद' त्वं' पदयोर्मध्ये बाधा सामानाधिकरण्याय जहल्लक्षणा स्वीकरणीया भवति ।

---

67- बृ0 उ0 भा0 वा0 1-4-508
68- ,, ,, ,, ,, 1-4-514
69- सि0 बिन्दुः पृ0 18 अभ्यंकर

किन्तु प्रतिबिम्बवादिनां मतानुसारम् अत्र तत्त्वं पदयोः अभेदसामानाधिकरण्याय जहद-जहल्लक्षणा स्वीकरणीया ।

एवंप्रकारेण आभासवादस्य विश्लेषणं प्रमुखतः प्रतिबिम्बवादेन सह तस्य तुलनया एव कर्तुं शक्यते ।

सुरेश्वराचार्यस्य ग्रन्थेषु आभासस्य किमपि लक्षणं नोपलभ्यते । तथापि बृहदारण्यकभाष्यवार्तिके यदुक्तं तद्ज्ञातव्यमस्ति । तद्यथा - तदन्यद् यत् तदाभासम्[70] । तेन इदमप्युक्तं यत् प्रत्यंकमात्रचेतनव्यतिरिक्तमन्यत्सर्वं नामरूपात्मकं जगत् चिदाभासम् । एवं च चिदाभासः न वास्तविकः न अवास्तविकः न चैतन्यव्यतिरिक्तः, न चैतन्या-व्यतिरिक्तः । आभासः अविचारितसंसिद्धतम इव अविचारितसंसिद्धः वर्तते । तद्यथा -

अविचारितसंसिद्धितमोवत्स्यात्तदुद्भवम् ।
कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेदिति ।[71]

सुरेश्वराचार्येण आभासस्य पर्यायत्वेन स्वाभासः, चिदाभासः, चैतन्या-भासः, स्वात्माभासः, आत्माभासः कूटस्थाभासः, प्रत्यगाभासः तथा दृष्ट्या-भासः, अवभासः इत्यादि शब्दानामपि प्रयोगः कृतः । आत्माभासस्य अज्ञानजस्य कर्याविभासितस्य आत्माभासस्य कार्याभासकारणाभासरूपेण द्वौ भेदावपि सुरेश्वरेण प्रदर्शितौ । कारणाभासः चेतनाभासः इत्यपि कथ्यते । एवमेव कार्या-भासः अचेतनाभासः इत्यपि कथ्यते ।

3-1-2(4) आभासवाद-अवच्छेदवादयोर्भेदः

भामतीप्रस्थानस्य सन्दर्भे आभासवादस्य समीक्षणम् अग्रेऽपि यथास्थाने करिष्यते । तथापि उभयोर्मध्ये यः भेदः वर्तते तस्योल्लेखः संक्षिप्तरूपेण एवं कर्तुं शक्यते -

---

70- बृ० भा० वा० 1-91
71- ,, ,, 2-1-4 पृ० । 329

1) अवच्छेदः कल्पितः स्यात्, अवच्छेद्यं तु वास्तवम् । अर्थात् चैतन्यं तात्त्विकं वर्तते । अवच्छेदः कल्पितः अस्ति ।

2) अवच्छेदे अवच्छिद्ये च सर्वथैव भेदः वर्तते । किन्तु आभासे तथा उपाधौ अन्तरस्य प्रतीतिर्न भवति ।

3) अवच्छेदवादानुसारं उपाधिभिः अवच्छिद्यस्य एकदेशीयः अवच्छेदः भवति । अस्य विपरीतम् आभासवादानुसारं चैतन्याभासः सर्वात्मनैव उपाधिस्तु जायते ।

3-2-0 भास्करप्रस्थानं भेदाभेदवादश्च ।

3-2-1 भास्करप्रस्थानस्य प्रमुखाः सिद्धान्ताः

वेदान्तदर्शनपरम्परायां भास्कराचार्यः एकस्य नवीनस्य प्रस्थानस्योद्भावकः आसीत् । तेन अनेके भाष्यमेव केवलम् उपलभ्यते-म- ग्रन्थाः लिखिताः स्युः किन्तु अद्यावधि तस्य ब्रह्मसूत्रभाष्यमेव केवलम् उपलभ्यते । भास्कराचार्यः भेदाभेदवादस्य प्रवर्तकः आसीत् । तेन पदे पदे शांकरसिद्धान्तानां खण्डनं कृत्वा स्वमतस्य मण्डनं कृतम् । तेन न केवलं शंकराचार्यस्य सिद्धान्ताः खण्डिताः, अपितु नैकेषु स्थलेषु शारीरक भाष्यान्तर्गत-वाक्यानां शब्दानां च शंकरकृताः व्याख्याः अपि निरस्ताः । एवं प्रकारेण तेन एको नवीनः वादः स्थापितः । भास्करभाष्ये पंचपादिकायाः अपि यत्र-तत्र खण्डनं दृश्यते । अतः एतत् सिद्ध्यति यत् भास्कराचार्यः पद्मपादाचार्यस्य अनन्तरम् अभवत् अथवा तस्य समकालिकः आसीत् । भास्करस्य मतं खण्डयित्वा शंकरस्य मतं स्थापितम् । अतः भास्करस्य समयः वाचस्पतेः पूर्वम् अष्टम नवम क्रैस्तवशताब्दयोर्मध्ये आसीत् इति कथयितुं शक्यते । भास्कराचार्येण शांकरभाष्यब्रह्मसिद्धि पंचपादिकाप्रभृतिग्रन्थेषु निरूपितानां सिद्धान्तानां विमर्शपूर्वकं खण्डनं कृत्वा भेदाभेदवादः प्रवर्तितः । यद्यपि भास्करनाम्ना अनेके ग्रन्थकर्तारः प्रसिद्धाः । तथापि ते सर्वे वेदान्तिनः नासन् ।

अर्वाचीनवेदान्तग्रन्थेषु उपनिषदव्याख्यानेषु भगवद्गीताव्याख्यानेषु च भास्करीयमतस्योल्लेखाः वर्तन्ते, तानाश्रित्य एतत् कथयितुं शक्यते यत् भास्कराचार्येण

प्रस्थानत्रय्यानां भाष्यानि रचितानि ।

एतत् प्रतीयते यत् भास्कराचार्यः शंकराचार्यस्य कनिष्टः समकालिकः आसीत् केषांचित् विदुषामिदिमपि कथनं वर्तते यत् शंकराचार्यः अपि आरम्भे भेदाभेदवादी आसीत् इति । किन्तु कालान्तरे स गौडपादस्य प्रभावात् अद्वैतवादं समाश्रयत् ।[72]

यद्यपि भर्तृप्रपंचः अपि भेदाभेदवादी आचार्यः आसीदिति कथ्यते तथापि भर्तृप्रपंच भास्करयोर्मध्ये सर्वदा मतैक्यं नासीत् ।

उदाहरणतया भर्तृप्रपंचः परमात्मविज्ञप्तिविकारत्वं जीवस्येति, मनुते किन्तु भास्करमते तु भिन्नाभिन्नत्वं जीवब्रह्मणोरनादित्वंचाभ्युपेतम् । एवमपि कथयितुं शक्यते यत् भेदाभेदवादेऽपि अवान्तरबादविकल्पाः आसन् । यथान्य-सम्प्रदायानां पुरस्कर्तारः तदीयभाष्यकारेभ्यः पूर्वमभूवन् तथैव भास्करभाष्यात्पूर्व-मपि भेदाभेदवादस्य अनेके पुरस्कर्तारः अभवन् । भास्कराचार्यः स्वयमेव कथयन्ति यत् अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां सम्प्रदायमतः समाश्रितः ।

भास्करसम्मतवाक्यकारवृत्तिकारौ किं भर्तृप्रपंचप्रक्रियानुगन्तारौ किं वा नेति विषये किमपि पुष्टं प्रमाणमद्यावधि नोपलभ्यते ।

3-2-1(1) अविद्यास्वरूपविषयकं भास्करीयं मतम् वाचस्पतिद्वारातन्निरसनंच

भगवत्पादसम्मतम् अविद्याध्यासयोः स्वरूपं भास्करेण नांगीकृतम् । सः लोकव्यव-हारस्य अविद्याकृतत्वमपि नांगीकरोति ।

'कस्येयमविद्या? न तावज्जीवस्य । वस्तुभूतस्य तस्यानभ्युपगमात् । नापीश्व-रस्य । नित्यविज्ञानप्रकाशात्वात् । अज्ञानं विरुध्यते । यदि च तस्य संसारित्वम्, तदा ईश्वरत्वं विरुध्यते । सुखादुःखामोहादिरहितत्वं हि ईश्वरत्व, तद्योगित्वं च संसारि-त्वम् । तदत्र संसारित्वासंसारित्वयोरविद्याविद्यात्वयोर्बन्धमोक्षयोश्च एकस्मिन्ना-त्मनि समवायविरोधात्, शीतोष्णयोरिव अन्यतरपरित्यागो बलात् प्राप्नोति । ईश्वर-श्चेत्, न संसारी, संसारि चेत्, नेश्वर इति ।[73] ...

72- Bhaskara was a near contemporary of Sankara ...Encyclopædia of Indians Philosophers Vo. II Advaita Vedanta page 40

73- भास्करस्य भाष्यम् 1-4-21 पा० 82

अविद्या एका अस्ति अनेका वा इति विकल्प्य भास्कराचार्यः कथयति- 'यद्यनेका ततो अर्थत्वं प्राप्नोति, नत्वातत्वाभ्याम् अनिर्वचनीयेति हीयते । एकत्वे च युगपत् सर्वमुक्ति प्रसंगः ।।''[74]

अविद्या निवृत्तिमधिकृत्य भास्करणे दोषः उद्भावितः । तद्यथा - 1) भेदविज्ञानमविद्या भवतोऽभिप्रेता । न तद्ध्रियमाण शरीरस्य कस्यचिद् भेद-ज्ञानं विनिवर्तते चक्षुरादीनां तन्निमित्तत्वात् । नच निमित्ते सति नैमित्तिकं न भवति । कर्मणां तद्भोगार्थत्वात् । कथं भोगार्थत्वम् ? देहेन्द्रियविषयविभाग-ज्ञानहेतुत्वात् । अपि च इतरेतरहेतुत्वम् । अविद्याकामकर्मणां बीजांकुरवत् ।[75]

भास्करसिद्धान्तस्य विपरीतं वाचस्पतिः कथयति यदविद्याद्वयं प्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वम्[76] अविद्याद्वितयमनिर्वचनीयम्[77] कारण-भूतयालय लक्षणया विद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नामरूपं तदेव माया । न स्वतोऽपूर्वोत्पादेन'[78] । अविद्यायाः आश्रयविषये वाचस्पते मतमस्ति यत् अविद्याऽश्रयः जीवः' ।

3-2-1(3) शास्त्रतर्कसम्बन्धविषयकं भास्करीयमतं वाचस्पतिद्वारातन्निरसनम्

शास्त्रतर्कयोः सम्बन्धविषये भास्करस्य मतमिदमस्ति - 1) तस्मादागमेन बन्धमोक्ष व्यवस्था कर्तव्या न तर्केण, अनवस्थितत्वात् । अपि च- 'यदुक्तं मन्तव्यः इति तर्कस्यानुप्रवेशं श्रुतिः श्रावयतीति नैवानयाश्रुत्या शुष्कतार्कोऽभ्य-नुज्ञायते, किं तर्हि, आगमानुसारी यस्तर्कः, तदुपपत्यर्थं स एवानुज्ञायत इति ।

वाचस्पतेः मतमेतदस्ति यत् वेदान्तवाक्यमीमांसा तदविरोधि तर्कोपकरणा सति निःश्रेयस प्रयोजना इति भाष्यवाक्यानुसारं श्रुत्यनुगृहीततर्कस्यानुभावगत्यात् तथा श्रुत्यविरुद्धतर्कस्य लोकसिद्धस्यापि श्रुत्यविरोधतर्कोपबृंहणे विनियोगित्वात् तर्कः निःश्रेयसहेतुः । वेदान्तवाक्यातापाततो ब्रह्मास्तित्वसिद्धौ विचारेण तत्स्वरूप-निर्धारणे तर्कः उपयोगी भवति ।[79]

74- भास्करभाष्यम्- पृ0 19
75- भास्करसूत्र- 1-1-4
76- भामती पृ0 494-
77- भामती मंगलश्लोकम्
78- भामती पृ0 494
79- भास्करीय सूत्र 2-1-4

भास्कराचार्यः शांकरमतस्य विपरीतं ब्रह्मपरिणाम एव जगत इति प्रतिपादयति । एवं च कार्य कारण्योरपि सत्यन्चं तयोर्भेदाभेदाश्च इति मतं प्रतिपादयति । तद् यथा - ' कार्यकारणयोरत्यन्तं भेदः, कारणं मृत्पिण्डः शरावादिकार्यं भेदेन उपलभ्यते । कार्यस्य च उदकाहरणादि कार्यं, न मृत्पिण्डस्य । अतो अनयोर्भेदः । असच्च कार्यमुत्पद्यते इति वैशेषिका मन्यन्ते । तन्निराकरणायाह '[80]

3-2-1(3) कार्यस्य मिथ्यात्व विषयकं भास्करीयं मतं वाचस्पतिद्वारा तन्निरसनं च

भास्कराचार्यः भेदाभेदप्रतिपादनप्रसंगे कार्यस्य मिथ्यात्वं खण्डयति । आगमादपि मिथ्यात्वस्य सिद्धिर्नभवति । एवमुपपादयितुं भास्कराचार्यः कथयति (अथ) आगमात् प्रपंचस्य मिथ्यात्वमुच्यते । तदयुक्तम् । श्रोतृप्रभावस्य ज्ञानस्य मिथ्यात्वात्, वर्णात्मकस्य तत्वमस्यादि वाक्यस्याभाव । ततश्च केन मिथ्यात्वं प्रतिपद्येत । अपि च- ' नच पुरुषापेक्षया मिथ्यात्वं सत्यत्वं वा प्रपंचस्य कल्पयितुं शक्यम् । मुमुक्षून् प्रति मिथ्या इतरान् प्रति सत्यमिति शक्यं कर्तुम् । नहि पुरुषस्वभावानुरोधिनो भावाः[81] । येन तदपेक्षया सत्यत्वम् असत्यत्वं वा भजेरन् । किं च —

'प्रपंचास्तित्वमज्ञस्य तस्य ज्ञानिनः पुनः ।

स एव किल नास्तीति कथं सह्यं

वचो भवेत्'' ।।

(3) 'ननु सावयवत्वात् क्षीरस्य परिणामोपपत्तिः । उच्यते न सावयवत्वं तत्र परिणतिहेतुः । यदि स्यादम्बुनोऽपि दधि भावेन परिणामः स्यात् । अतोऽप्रयोजकं सावयवत्वम् । परिणामस्वाभाव्यादेव हि पयः परिणमते ।[82]

3-2-1(4) भास्कराचार्यस्य माया विषयकमतस्य वाचस्पतिद्वारा निराकरणम् भास्कराचार्यः मायावादमपि न स्वीकरोति । शंकराचार्यस्य मायावादं प्रति आक्षेपं कुर्वन् भास्करः कथयति - 'कथमिदं मायामात्रं प्रमाणमन्तरेण प्रतिज्ञातुं शक्यम्? 'त्रिवृतं त्रिवृतमेकैकं करवाणि' (छा0 3-3) इति बुद्धिपूर्वं परदेवताप्रवृत्तेः । तदभिप्रायम् ज्ञात्वा को

80- भास्करीय सू0 2-1-4

81- भामती पृ0 89, 444

82- भा0 सू0 पा0 96

नामादृष्टनिर्णयः 'सर्वं मिथ्या' इति कल्पयितुमर्हेव' यदि च दृष्टसाधर्म्येण अदृष्टं निर्णेतुमिष्येव, तदा च दृष्टमदृष्टं द्रष्टव्यम् ।[83]

(2) 'कुतश्चायमवगमो भवेत्? नहि सूत्रकारः कचिन्मायाशब्दं प्रायुङ्क्त । यत्तु स्वप्नज्ञानात् (इति) 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्[84] इति हि य(त्त) त्रोक्तम्, वैधर्म्याच्च[85] न स्वप्नादिवत्' इति वैधर्म्यमुक्तम्[86] ।।

(3) सूत्रकारस्य 'स्मृत्यनवकाशदोषः' इत्यारभ्य सांख्याद्युदर्शनदूषिलाभि? तद्दूषणोद्धारणार्थं प्रत्यधिकरणं प्रयासोऽनर्थकः स्यात् मायामात्रत्वे । 'न वियद श्रुतेः' इति चारभ्य भूतानामुत्पत्यादिविचारोऽनर्थकः स्यात् ।।[87]

नहि दिक्चन्द्र प्रागासीत् पंचान्नास्तीति युज्यते । दिक्चन्द्रज्ञानतुल्यत्वं प्रत्यक्षादेस्त्वके क्षते । नच तिमिरवाद् प्रपंचमिथ्यात्वे करणदोषो गृह्यते ।।[88]

3-2-1(5) भास्कराचार्यसम्मतस्य परिणामवादस्य वाचस्पति द्वारा निरसनम्

शंकराचार्यस्य मतानुसारं मृदादयः स्वात्मरूपेणैव स्थिताः घटादिरूपेण स्वात्मानं दर्शयन्ति । नतु घटादिविकाराणां वाचारम्भणमात्राणां मृदाद्यात्मव्यतिरेकेण सन्त्वान्तरमस्ति । एवमात्माऽपि प्रपंचरूपेणावभासते । प्रपंचस्य आत्मव्यतिरेकेणाभावेत्यभिप्रायः । भास्कराचार्यस्य मते तु तथ्यत एव अचिन्त्या अनन्ताः शक्तयः सन्ति परमात्मनः । तदविक्षेपभूतं कार्यमपि प्रपंचलक्षणं सत्यमेव - इति विशेषः ।

1) तथा च वाक्यं 'परिणामस्तु स्याद् दध्यादिवत् इति । विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति ।[89]

83- भा० सू० पा० 99

84- ब्र०सू० 1-2-3

85- ब्र० सू० 2-2-29

86- भा० सू० पा० 99

87- भा० सू० पा० 99-100

88- सू०भा० 1-1-4 पृ० 17, 18

89- भा० सू० पा० 85

2) कथं पुनः परिणामो निवयवस्याकाशकल्पस्येति चेत्? अत्रोच्यते । परिणामस्वाभाव्याद् क्षीरवत् । सर्वज्ञत्वाश्च सर्वशक्तित्वाश्च स्वेच्छया परिणामयेदात्मानमिति शक्यते वक्तुम् ।[90]

वाचस्पतिमिश्रः 'परिणामिनित्यता न पारमार्थिकी' इति प्रतिज्ञाय तत्प्रसंगेन भेदाभेदवादम् खण्डयति । परिणामिनित्यता हि न पारमार्थिकी, तथाहि - तत्सर्वात्मना वा परिणमदेकदेशेन वा । सर्वात्मना परिणामे कथं न तत्वव्याहतिः । एकादशापरिणामे वा स एकदेशस्ततो भिन्नो वाऽभिन्नो वा । भिन्नश्चेत्व कथं तस्य परिणामः । नह्यस्मिन्परिणममानेऽन्यः परिणमते, अतिप्रसंगात् । अभेदे वा कथं न सर्वात्मना परिणामः इति ।[91]

कारणमेव विशेषावदवस्थान्तरमापद्यमानं कार्यम्, तच्च सामान्यात्मकम् । तथा हि मृद् वा सुवर्णं वा सर्वेषु घटरुचकादिष्वनुगतं सामान्यम् अनुभूयते, न चैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरिच्यन्त इत्युक्तम् । अग्रे च वक्ष्यामः । तस्मात् सामान्यस्य परमार्थसतो अनिर्वाच्यविशेषावस्थान्तराधिष्ठाना भुजंगादय इव रज्वाद्युपादाना उपजानापायधर्मिण इति साम्प्रतम् । (भामती पृ० 515)

एवं प्रकारेण वाचस्पतिमिश्रः भेदाभेदवादस्य निरसनं करोति ।

3-2-1(6) भास्करसम्मत-सत्कार्यवादस्य वाचस्पति द्वारा निरसनम्

भास्कराचार्यः सत्कार्यवादस्य समर्थकः अस्ति । अस्मिन् सन्दर्भे तस्य निम्नलिखितकथनानि अवधेयानि सन्ति -

(क) इतश्च कारणे कार्यस्य सत्वम् । यतः का पुनर्युक्तिः मृत्पिण्डात् घटो जायते न दधि, शशविषाणं वा । यद्यसत् घटो जायेत, असत्वाविशेषाश्च ततस्तयोरप्युत्पत्तिः स्यात् । ननु च कारणशक्तिनियमात् व्यवस्था भविष्यति । नेति ब्रूमः । स एवास्माभिः पर्यनुयुज्यते 'कथं कारणशक्तिनियमः इति । असत्वाविशेषे मृत्पिण्डस्य या शक्तिः कथमेका सा नियम्यत इति? कार्यस्य कारणे सद्भावे मुक्त्वा नियमहेतु-

90- भा० सू० पा० 96

91- भामती 117

मन्यमानो यः कश्चित् स सर्व पर्यनुयोगं नातिवर्तते । तस्मात् सत् कार्यम् उत्पद्यते । 92
(ख) सदेव कार्यम् । कुतः ? कारणमेव हि नाम अवस्थां प्रतिपद्यमानं कार्यमिति
गीयते । अवस्थातद्वतोश्च नात्यन्तभेदः । नहि शुक्लपटयोर्धर्मधर्मिणोरत्यन्तभेदः,
किं तु एकमेव वस्तु ।। 93

(ग) परमात्मा स्वयमात्मानं कार्यत्वेन परिणमयामासेत्यर्थः शक्तिविक्षेपं कृतवान् ।
अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च । नासां विक्षेपं करोति सृष्टिस्थितिकाले यथा
सूर्यो रश्मीनाम्, तद्वदेव संहरति । तथा च मन्त्रवर्णः श्वेताश्वतराणाम् "न तस्य कार्यं
करणं च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" (श्वे 6-8) इति । 94

3-2-1(7) भास्करसम्मतः जीव-परमेश्वरसम्बन्धविमर्शः

भास्कराचार्यः कथयति यत् जीवस्य ब्रह्माभिन्नत्वे अपि तयोरपौधिको भेदः सत्य एव । तद्यथा - ''यथा च भग्ने घटे घटाकाशो महाकाश एव भवति दृष्टत्वात्, एवमत्रापिति । जीवपरयोश्च स्वाभाविकोऽभेदः, औपाधिकस्तु भेदः, स तन्निवृत्तौ निवर्तते ।। 95

(ख) 'तत्वमसि' इति श्रुतोर्भिन्नाभिन्नो जीवः । स्वाभाविकं नित्यसिद्धम्
अभिन्नं रूपम्, इतरदौपाधिकं प्रवाहनित्यम् इति विवेकः । 96

(ग) सुपर्णा' इत्यत्रापि अयमेव न्यायः । परप्रकरणे श्वेताश्वतराणामपि अयं मन्त्रः
पठ्यते । अनन्तरश्च मन्त्रस्तामेव दर्शयति 'समाने वृक्षे पुरुषो निमग्नोऽनीशया
शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति ।

92- भामती सू0 ।0।
93- भामती सू0 ।०।
94- भा0 सू0 पा0 85
95- भास्कर भा0 4-4-4 पृष्ठ 243
96- भास्कर भा0 3-2-6, पृ0 162

तदेवं श्रुतिसूत्रकारौ जीवपरयोर्भेदं दर्शयतः । केचित्तु श्रुत्यर्थम् आचार्योक्तिं च पृष्ठत कृत्वा मायामात्रं स्वबुद्ध्या कल्पयित्वाऽन्यदेव दर्शनं रचयन्ति ।[97]

एवं प्रकारेण भास्करमतानुसारमपि सर्वोऽपि जीवव्यवहारः उपाधिप्रयुक्तो न स्वाभाविकः इति भास्करमतं तु भाष्यकारसम्मतमेव । उपाधीनां तु न पारमार्थिकत्वम् । किन्तु अविद्याप्रत्युपस्थापितत्वम् ।

3-2-1(8) मुक्तौ कर्मणामुपयोगित्व विमर्शः
---------------------------------------

भगवता शंकराचार्येण प्रस्थानत्रयभाष्येषु ज्ञानकर्मसमुच्चयवादस्य निरासः कृतः किन्तु भास्कराचार्येण ज्ञानकर्मसमुच्चयवादः समर्थितः । तद्यथा -

(क) नश्चोभयत्र ब्रह्मज्ञानं प्रति हेतुत्वम् आरम्भे फलप्राप्तौ च कर्मणि पूर्ववृत्ते तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इति आरम्भे हेतुत्वम् । कर्मणा समुच्चितं ज्ञानं क्षेमप्राप्तनिमित्तम् इति फलप्राप्तौ हेतुत्वम् ।।[98] अपि च -

(ख) सर्वेषु आश्रमवत्सु अपेक्षा सा सर्वापेक्षा । कुतः? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' - इति श्रुतेः ज्ञानं प्रति अपवर्गसिद्धौ यज्ञादयस्तृतीयया विभक्त्या अंगत्वेन प्रयाजादिवत् विधीयन्ते । ---- तस्मात्, यथैव शमादयो यावज्जीवम् अनुवर्तन्ते विदुषाम् अपवर्गप्राप्तये, तथा आश्रमकर्माणि- इति नान्तराले परित्यागः ।।[99]

-----------------------------

97- भास्कर भा० 1-2-12 पा०4।

98- भा० सू० पा० पृष्ठ 4

99- भा० सू० पा० 207 3-4-26

कर्मणः कैवल्य प्रतिबन्धानिवर्तकत्वविषये -भास्करस्य मतमिदमस्ति यद् ज्ञानवद् कर्मापि कैवल्यप्रतिबन्धानिवर्तकं भवति ।

इदं चात्र वक्तव्यं केन प्रकारेण विद्यापवर्गोपयोगिनी? स्यान्मतम्, भेदज्ञानम् अविद्या । तन्निवृत्त्या इति । तदसत् । दृष्टविरोधात् । नहि वाक्यार्थज्ञानोत्पत्तौ कस्यचित् कृत्स्नं द्वैतज्ञानं निवर्तते । ध्रियमाणशरीरस्य शरीरेन्द्रियमनांसि रूपादि-ज्ञाननिमित्तानि । नहि निमित्ते सति नैमित्तिकं नोत्पद्यते । यथाग्निनीन्धनसंयोगेन धूमः ।।[100]

कथं पुनः कर्मणो मुक्त्युपायत्वम्? यथैव ज्ञानस्य तव । ननु ज्ञानमविद्यां निवर्तयति । सत्यम् । न भेदज्ञानं निवर्तयतीत्युक्तम् । अनात्मन्यात्मज्ञानं प्रति-बन्धकं निवर्तयतीति चेत्, तथा कर्म । --- महाराजनादि रूपाणां चात्मानं धूप(ष)यित्वा स्थितानाम् अपकर्षणं ज्ञानकर्मभ्याम् । शास्त्रलभ्यत्वाद-पुनर्भावस्य । केन द्वारेणोपकरोतीति चेत्, को जानीयाद् मातृतुल्या श्रुतिरेव चेति । चाहेनेति) ।।[101]

भास्कराचार्यस्यायमपि विचारः अस्ति यद् अपवर्गार्थं ज्ञानमात्रं पर्याप्तं नास्ति, तदर्थं उपासनमपि आवश्यकम् । तदयथा -

(क) सकृदेव श्रवणमननाभ्यां साक्षात्कारिज्ञानमुत्पद्यते इति वर्तमेतद् । श्वेतकेतोरपि यत्र बहुश्रवणमन्तरेण ज्ञानसंशयादिनिवृत्तिर्नासीद्, किं नु खलु मनुष्याणां रागादि-दोषकलुषितचेतसाम् ।।[102]

(ख) आत्मस्वरूपविषये विशेषज्ञाने वाक्यादुत्पन्ने समानप्रत्ययावृत्ति लक्षण-मुपासनं यावज्जीवं कर्तव्यम् ।।[103]

(ग) अनात्मसु देहादिषु विपरीतप्रतिपत्तिः, ब्रह्मस्वरूपप्रतिपत्तिश्च अविद्या, सा सम्यग्ज्ञानोत्पत्तौ निवर्तते । तच्च सम्यग्ज्ञानमुत्पन्नम् इति ? यावज्जीवम् अभ्यस्यमानं परिपक्वम् अपवर्गक्षमं भवतीति शास्त्रादवगम्यते ।[104]

---

100- भा० सू० पा० 209
101- भा० सू० पा० 210
102- भा० सू० पा० 219
103- ,, ,, ,,219
104- ,, ,, ,,219

भास्कराचार्यः ज्ञानेन सह योगस्यापि आवश्यकताम् स्वीकरोति । तद्यथा - 'ज्ञानातिशयमादाय(?) योगाभ्यासं कुर्याद ज्ञानपरिपाकाय इत्यर्थः । विद्यादिवत् । यथा अग्निहोत्रादि अविदुषो विधीयते फलातिशयार्थिनः, तथा अयं विदुषां व्युत्थायिनोऽपवर्गार्थिनः संन्यासिनो नैष्टिकस्य विधीयते ।।[105]

एवंप्रकारेण मुक्तिविषये भास्करस्य मतमिदमस्ति यद् मुक्तिः द्विधा भवति । सद्योमुक्ति, क्रममुक्तिश्च । तद्यथा -

'द्विधा मुक्तिः सद्य एव मुक्तिः क्रममुक्तिश्चेति ये साक्षाद ब्रह्मैव उपासते(ति) सद्य एव मुच्येरन्, इतरेतु हिरण्यगर्भं प्राप्य शुद्धान्तःकरणाः तत्रैव ज्ञानप्रकर्षमासाद्य 'छायातपयोरिव ब्रह्मलोके' इति विविक्तबोधोत्पत्तिसंकीर्तनाद तेन सह मुच्येरन् ।।[106] अतः भास्कराचार्यस्य कथनानुसारं भेदज्ञाननिवृत्तिरेव अविद्यानिवृत्तिः । न भेदज्ञाननिवृत्तिरविद्यानिवृत्तिः किं तर्हि, शरीरादौ अनात्मन्यात्मबुद्धिनिवृत्तिः । ----- तन्निवृत्तौ शरीरपातादनन्तरं सर्वज्ञः सर्वशक्तिः निरतिशयसुखसंवेदी मुक्तो भवति ।।[107] परमात्मना संपन्नस्य एका(वा)त्मनः कर्तृभोक्तृत्वस्तस्य निवृत्तिः । सा च श्रुत्या दर्शिता 'अशरीरं वा सन्तं न प्रियाप्रिये स्पृशतः' (छा०) 'अस्माच्छरीराद समुत्थाय (छा) इति च । प्रारब्धकर्मफलभोगस्यावश्यभावित्वाद, ध्रियमाणशरीरस्य अवश्यंभावी सुखदुःखानुभावः । तस्मात् जीवददेव(जीवान्तमेव) मुक्तमिति ये प्रतिजानते ते श्रुतिमतिवर्तन्ते । दृष्टानुभावं बाधन्ते ।।[108] भास्कराचार्यः जीवन्मुक्तिसिद्धान्तं न स्वीकरोति । जीवदवस्थायां मोक्षः भवितुं न शक्नोति तद्यथा -

यदि च जीवन्नेव मुक्तो भवान् सर्वज्ञत्वाद परावतत्वावेदनमपि प्राप्नोति । ननु सर्वश्चासौ ज्ञश्चेति विग्रहः । मैवम् । त्वत्पक्षे सर्वस्य निवृत्तत्वाद चैतन्यमात्रमावशिष्यते । तत्र निःसम्बन्धो मोक्षोऽभ्युपेयः, श्रुत्यनुसारित्वाद वा सर्वज्ञत्वं सर्वशक्तित्वं चेति । अतो जीवदवस्थायां न मोक्षः । मुक्त्युपायभूतं ज्ञानं कर्म चानुष्टेयम् ।।'[109]

-----------------------------

105- भा० सू० पा० 216
106- भा०सू० 4-3-14 पा 240
107- ,, ,, पा 21
108- भा० सू० पा० 58
109- भा० सू० 3-4-26 पा० 210

भास्करोक्तजीवन्मुक्तिनिराकरणमनादृत्य वाचस्पतिना मण्डनमिश्रवद् जीवन्मुक्तिरङ्गीकृतिमन्वते ।

यथा पूर्वमप्युक्तं, भास्करप्रस्थानम् वाचस्पतेः पूर्वं प्रचलितमासीद् । तत्र च भगवत्पादशंकराचार्यस्य सिद्धान्तानां खण्डनं दृश्यते । भास्करोत्थापितानां दोषाणां परिहारे तथा भेदाभेदवादस्य खण्डनाय वाचस्पतिना महान् प्रयत्नः कृतः । भास्करप्रस्थानभामतीप्रस्थानयोः सम्यगालोचनानन्तरमेतद् प्रतीयते यद् भास्कराचार्येण ये आक्षेपाः शांकरविचारधारायां कृताः तेषां खण्डनं वाचस्पतिना भामत्यां सम्यग् क्रमेण कृतम् । अतः एतद् कथयितुं शक्यते यद् भास्कराचार्यपेक्षया वाचस्पतेः स्थान सिद्धान्ताः उत्कृष्टाः वर्तन्ते । तथापि भास्कराचार्येण यद् किंचिदुक्तं तदपि समग्रत्वेण उपेक्षणीयं नास्ति ।

3-2-1(9) ब्रह्मसूत्रशांकरभाष्ययोः व्याख्यानमाश्रित्य भास्कराचार्य-वाचस्पतिमिश्रयोः मतभेद/विमर्शः

भामतीग्रन्थप्रणयनकाले भास्करप्रस्थानं, केवलाद्वैतिप्रस्थानं क्रमेण बहुत्र लब्धप्रचारमासीदिति अवगम्यते । यतो वाचस्पतिना अद्वैते भास्करोत्थापितानां दोषाणामुद्धाराय भेदाभेदवाददोषाद्घाटनाय च बलवान् प्रयत्नः कृतो दृश्यते । एतदृष्ट्या अद्यपि भास्करप्रभावित-भाष्यान्तरेण दरीदृश्यमानाक्षेपान् उद्धिधीर्पूणामद्वैतिनां भामत्यवलोकनम् उपकारकं भवति ।

भास्कराचार्यस्य भाष्यरचनायाः प्रमुखोद्देश्यं तु शंकराचार्यस्य अभेदवादस्य (अद्वैतवादम्) खण्डयित्वा भेदाभेदवादोपस्थापनमेवासीद् । तद्यथा -

''सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनाद् । ।10
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ।।

स्थालीपुलाकन्यायेन अत्र कानिचिद् सूत्राणि-शांकरभाष्यांशपुरस्सरम् उद्ध्रियन्ते येषां व्याख्याने भास्कराचार्येण यः पन्था अनुसृता तस्य निरसनं भामतीप्रस्थाने सुतरां द्रष्टुं शक्यते ।

---

110- भास्करभाष्यम् प्रारम्भिकश्लोकः

(1) 'अथातो ब्रह्मजिज्ञासा (1-1-1) इत्यस्मिन् सूत्रे यः 'अथ' शब्दः विद्यते तस्य विश्लेषणं कुर्वता भगवता शंकराचार्येण एतदुक्तं यत् 'तत्राथ शब्दः आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः [111] ''नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादि साधनसम्पत् मुमुक्षुत्वं च । तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, विपर्यये । तस्मादथशब्देन यथोक्त साधनसम्पत्यानन्तर्यमुपदिश्यते ।

अस्यार्थमयमस्ति यत् साधनचतुष्टयसम्पादनानन्तरमेव ब्रह्मजिज्ञासा कर्तव्या । अतः 'अथ' शब्दस्यार्थः भवति आनन्तर्यम् ।

किन्तु भास्कराचार्येण एतदुच्यते यत् आनन्तर्यम् साधनचतुष्टयसम्पादने तथा ब्रह्मजिज्ञासायाः मध्ये नास्ति अपितु धर्मविचारस्य तथा ब्रह्मविचारस्य मध्ये वर्तते । तयोरेव आनन्तर्यः अथ शब्देन सूच्यते । तद्यथा -

'' अत्र ब्रूमः । यत् तावदुक्तं धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासोपपत्तेरिति । तदयुक्तम् । अत्र हि ज्ञानकर्मसमुच्चयात्मोक्षप्राप्तिः सूत्रकारस्याभिप्रेता तथा च वक्ष्यति 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति'' [112] । अस्याशयः अयमस्ति यत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदीषन्ति यज्ञेन,दानेन तपसानाशकेन' इत्यादि श्रुतिविहित यज्ञकर्मणां साहाय्येन एवं तत्वज्ञानं मोक्षस्य साधनं भवति नतु एकाकी । सहायक यज्ञादि कर्मणां ज्ञानं धर्ममीमांसां विना न सम्भवति । अतः कर्मज्ञानाय धर्मविचारानन्तरमेव ब्रह्मजिज्ञासा कर्तव्या ।

वाचस्पतिमिश्रेण उपर्युक्तस्य आक्षेपस्य निराकरणं एवं कृतम् - ''क्व पुनरस्याः कर्मापेक्षा, किं कार्ये ------ स्वरूपे वा -------- न तावत् कार्ये ------ तस्मात् साक्षात्कारलक्षणकार्याभावान्नोपासनाया उत्पाद्ये कर्मापेक्षा । न च कूटस्थनित्यस्य सर्वव्यापिनो ब्रह्मणा उपासनातो विकारसंस्कारप्राप्तयः सम्भवन्ति [113] । एवं च -

''नित्यानित्यविवेकादयोऽन्तःकरणधर्माः पूर्वत्रापकृताः स्वशब्देन वा निर्दिष्टाः कथमिव सूत्रकारस्य विवक्षिता इति प्रतिपत्तुं शक्यते तेषामनवस्थितत्वात् [114] ।

---

111- ब्र०शा०भा० 1-1-1

112- ब्र० सू० भास्करभाष्यम्, पृ० 54

113- भामती पृ० 54

114- भामती पृ० 64

अत्र भास्कराचार्यः पुनः एवं कथयति यत् शमादयः न पूर्वप्रक्रान्ताः नच तेषां ब्रह्मजिज्ञासायाम् अंगांगीभावः । अतः ब्रह्मजिज्ञासायाः पूर्वं तेषाम् आनन्तर्यं न युक्तम् ।

अस्य आक्षेपस्य समाधानं वाचस्पतिना एवं कृतम् - 'तस्माच्छान्तो दान्त उपरततितिक्षुश्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत् सर्वमात्मनि पश्यति इति -------- तस्मात्तेषामेवानन्तर्यं न धर्मजिज्ञासायाः ।[115]

अतः शब्दस्य निरूपणं कुर्वता भाष्यकारेण शंकराचार्येण एतदुक्तं यत् -

'अतः' शब्दो हेत्वर्थः 'यस्माद्वेद एवाग्निहोत्रादीनां श्रेयः साधनाना-मनन्यफलतां दर्शयति - 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते'[116] इत्यादि । तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति - 'ब्रह्मविदाप्नोति परम्'[117] इत्यादिः । तस्मात् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या । अस्याय-मर्थः यत् कर्मजन्यफलस्य क्षीयतायाः कारणात् ब्रह्मजिज्ञासा कर्तव्या । एवं प्रकारेण 'अतः' इत्यसौ शब्दः शंकरस्य मतानुसारं साधनसम्पत्तेः हेतुत्वं निदर्शयति ।

किन्तु भास्कराचार्यः कथयति यत् 'अतः' इति शब्दः कर्मजन्यफलस्य क्षयितायाः हेतुत्वं न प्रदर्शयति । अपितु पूर्वप्रक्रान्तार्थस्य एव हेतुत्वं बोधयति । तद्यथा - ''यदयत्युक्तं कर्मणां क्षयित्वं ज्ञानस्य च निःश्रेयससाधनत्वमतः शब्देन व्यपदिश्यते इति तदसत् । अतः शब्दो हि वृत्तस्यापदेशको हेत्वर्थतया । ------- केवलस्य कर्मणाक्षयित्वमुच्यते न ज्ञानसहकारिणः ।।''[118]

भास्करमतस्य खण्डनं वाचस्पतिना एवं कृतम्--- ''नहि मधु विषसंपृक्तमन्नं विषं परित्यज्य समधुशक्यं शिक्षिवरेणापि भोक्तुं क्षयितानुमानोपोद्बलितं च 'तद्यथेह कर्मचितः' इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमम्' इत्यादिकं वचनं मुख्यासम्भावे जघन्यवृत्तितामापादयति । यथाहुःपौराणिकाः 'आभूतसंप्लवस्थाा-नममृतत्वं हि भाष्यते' । ---- अतः स्वर्गादीनां क्षयिताप्रतिपादकात् ब्रह्मज्ञानस्य

---

115- भामती पृ० 73
116- छा० 8-1-6
117- तै० 2-1
118- ब्र०सू० 1-1-1 भास्करभाष्य, पृ० 4

च परमपुरुषार्थताप्रतिपादकात् आगमात् यथोक्तसाधनसम्पत्,ततश्च जिज्ञासेति सिद्धम् ।।[119]

वाचस्पतेः कथनस्य सारः अयमस्ति यत् यथा विषभक्षणस्य परिणामः मृत्युः भवति तथा युक्तस्यान्नस्य भक्षणादपि मृत्युः भवति । एवमेव कर्मणः फलं यथा क्षयशीलं वर्तते तथैव कर्मयुक्तस्य फलमपि क्षयशीलमेवास्ति । अतः ज्ञानकर्मसमुच्चयस्य फलं निर्वाणमस्तीति कथयितुं न शक्यते । अतः वाचस्पतेः मतानुसारं शंकराचार्येण यः कर्मफलक्षयित्वसिद्धान्तः प्रतिपादितः सः संगत एव। अर्थात् अतः शब्दस्यार्थं भवति -'कर्मजन्यफल क्षयित्वात्'।

(2) जन्माद्यस्य यतः (1-1-2) जन्माद्यस्य यतः इत्यस्मिन् सूत्रे ब्रह्मणः यत् जगत्कारणत्वं निर्दिष्टं तस्य व्याख्यानत्वेन शंकराचार्यः इदं कथयति यत् ब्रह्म विवर्ताधिष्ठानं वर्तते एवं च ब्रह्माधिष्ठितः प्रपंचः मिथ्या वर्तते ।

भास्कराचार्यः उपर्युक्तस्य मतस्य प्रत्याख्यानं कुर्वन् कथयति यत् ब्रह्मणः जगतश्च सुवर्ण कुण्डलादिवत् भेदाभेदः वर्तते अर्थात् ब्रह्म अपि सत्यं वर्तते जगदपि सत्यम् । तद्यथा -- ''अतो भिन्नाभिन्नरूपं ब्रह्मेति स्थितम् । संग्रहश्लोकः-

''कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ।।[120]

वाचस्पतिमिश्रः भास्करसम्मतस्य भेदाभेदवादस्य निराकरणं कुर्वन् एतद् कथयति यत् यदि भेदाभेदः स्वीक्रियते, तर्हि कार्य-कारणयोर्मध्ये अपि वास्तविकः अभेदः स्वीकरणीयः स्यात् । एवं सति च सुवर्णे ज्ञाते सति तदभिन्नानां कटककुण्डलादीनां विशेषस्वरूपस्य जिज्ञासा अनुपपन्ना भविष्यति । एवमेव ब्रह्माभिन्नस्य प्रपंचस्य प्रत्यक्षदर्शने जाते सति प्रपंचाभिन्नस्य ब्रह्मणः ज्ञानमपि स्वतः प्रसज्येत । तथा सति च ब्रह्मणः जिज्ञासा अनुपपन्ना स्यात् । एवं प्रकारेण वाचस्पतेः मतानुसारं भास्कराचार्यस्य भेदाभेदवादः सर्वथा असंगतः वर्तते ।

---

119- भामती पृ0 74

120- ब्र0सू0 भास्करभाष्य पृ0 18

वाचस्पतेः मतानुसारं कार्यकारण्योः प्रपंचब्रह्मणोः अभेद एव वास्तविकः । जगद् कल्पितम् अध्यस्तं च, अधिष्ठानाद् ब्रह्मणः तथैव भिन्नं नास्ति यथा कल्पितः सर्पः रज्जोः भिन्नः न भवति । मृत्तिकेत्येव सत्यम् इत्येषा श्रुतिः ब्रह्मप्रपंचयोः अभेदत्वम् अर्थात् ब्रह्मणः एव सत्यत्वं प्रतिपादयति । अतः भास्कराचार्यस्य 'भेदाभेदसिद्धान्तः' समीचीनः नास्ति ।[21]

(3) नेतरोऽनुपपत्तेः ( 1-1-16)
---

ईश्वरजीवयोर्मध्येऽपि शंकराचार्यस्य मतानुसारम् अभेदः वर्तते । द्वयोः भेदः औपाधिकः वर्तते । घटाकाश महाकाशादिवत् । ईश्वरजीवयोरभेदपरकः अयं सिद्धान्तः 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' इत्यादि सूत्राणां व्याख्याने भगवता शंकराचार्येण विश्लेषितः ।

किन्तु भास्कराचार्यस्य मतानुसारम् उपर्युक्तं व्याख्यानं समीचीनं नास्ति । वाचस्पतिना भास्करीयस्य आक्षेपस्य निरसनं एवं कृतम् । 'जीवोऽह्यविद्यया परब्रह्मणो भिन्नो दर्शितः, नतु जीवादपि । तथा च आनन्दमयश्चेज्जीवः, न जीवस्याविद्ययापि स्वतो भेदो दर्शित इति न लब्धालब्धाव्यभाव इत्यर्थः । भेदाभेदो च न जीवपरब्रह्मणोः -------------------- यथा परमेश्वराभिन्नो जीवात्मा द्रष्टा न भवति एवं जीवात्मनोऽपि द्रष्टुर्न भिन्नः परमेश्वरः इति जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्य स्यात् ।[22]

(4) 'अवस्थितेरिति काशकृत्स्नः (1-4-22)
---

इत्यस्य सूत्रस्य भाष्ये शंकराचार्येण काशकृत्स्नमतस्य खण्डनं कृतम् तथा एतत् स्थापितं यत् ईश्वर एव देहावस्थित सन् अविद्याकृतनामरूपोपाधिना संसारी तस्माद् भेदाभेदयोरन्यतरस्मिन्नवहेये भेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम् ।।'' (भामती पृ0 117-118) इत्युच्यते । अतः ईश्वरादिभिन्नः

---

121- परे हि द्वयीं नित्यतामाहुः -कूटस्थनित्यतां परिणामि नित्यतां च । तत्र नित्यमित्युक्ते मा भूदस्य परिणामिनित्यतेत्याह -अ तत्र किंचिदिति-- यथाहुः-

कार्यरूपेण नानात्वमभेदः कारणात्मना ।

हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ।।'' इति अगोच्यते -कः पुनरर्थो भेदो नाम यः सहाभेदेनैकत्र भवेत् । 122- भामती पृ0 186

जीवः नास्ति । काशकृत्स्नस्य मतम् इतदस्ति यत् जीवः ईश्वरस्य अंशः अस्तीति । भास्कराचार्यः अस्य मतस्य समर्थनं करोति । तथा शंकराचार्यस्य मतमाक्षिपति । किन्तु वाचस्पतिमिश्रः भास्कराचार्यस्य मतं खण्डयति तदयथा - '' ये तु काशकृत्स्नीयमेव मतमास्थाय जीवं परमात्मनोऽशमाचरव्युः तेषां कथं ''निष्कलं निष्क्रियम्' इति न श्रुतिविरोधः ।''[123]

(5) असम्भवस्तु सतोऽनुपपत्तेः (2-3-9) इत्यस्य सूत्रस्य भाष्ये शंकराचार्यः कथयति -- 'न खलु ब्रह्मणः सदात्मकस्य कुताश्चितन्यतः संभावः उत्पत्तिराशंकितव्या । कस्मात्? अनुपपत्तेः । सन्मात्रं हि ब्रह्म । न तस्य सन्मात्रदैवोपत्तिः संभावति, असत्यतिशाये प्रकृतिविकार भावानुपपत्तेः । नापि सद्विशेषादृष्टविपर्ययात् । सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यम् । नाप्यसतो निरात्मकत्वात् ।।''[124]

अत्र भास्कराचार्यस्य मतमिदमस्ति यत् सूत्रयोजना 'सतः असम्भवस्त्वनुपपत्तेः' इत्येवं प्रकारेण करणीया । अन्यथा भास्कराचार्यस्य मतानुसारं --- 'सकारणं कारणाधिपाधिपः न चास्य कश्चित् जनिता नचाधिपः'[125] इत्यादि श्रुतीनामानर्थक्यमापद्येत ।

अस्मिन् सन्दर्भे वाचस्पतिः भास्कराचार्यस्य मतं निराकुर्वन् एवं कथयति - ''ननु न चास्य कस्य जनिता इत्यात्मकः सतोऽकारणत्वश्रुतेः कथामुत्पत्त्य । शंका'? सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम् ---------- --------- प्रसिद्धेस्तदिदमाह ---------सन्मात्रं हि ब्रह्मेति ।[126]

(6) 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः (3-2-9)

इत्यस्य सूत्रस्य भाष्ये शंकराचार्यः कथयति यत् ------स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति नान्यः'' । कस्मात्? कर्मानुस्मृति शब्दविधिभ्यः'' इति विभाज्यहेतुं दर्शयिष्यामि कर्मशेषानुष्ठानदर्शनाम् स एवोत्थातुमर्हति नान्यः ।'[127]

---

123- भामती 1-4-22
124- ब्र0सू0शा0भा02-3-9
125- श्वे0उ0 6-9
126- भामती 2-3-9
127- ब्र0सू0 शा0भा0 3-2-9 पृ0 704

अस्मिन् सन्दर्भे भास्कराचार्यस्य एषः आक्षेपः अस्ति यत् ये जनाः जीवेश्वरयो-र्भेदं नांगीकुर्वन्ति तेषां मतानुसारं तु अस्याधिकरणस्य रचनायाः आवश्यकता एव नास्ति । एषामीश्वर एव साक्षाद् संसारीति दर्शनम् तेषां न पूर्वपक्षोऽव-कल्पते न सिद्धान्तः । अस्याक्षेपस्य समाधानं वाचस्पतिः एवं करोति ---यदि ब्रह्मविचाराय जीवेश्वरयोर्भेदः आवश्यकः स्याद् तर्हि अधिकारिणः अभावाद् अनुबन्धचतुष्टय एव न स्यात् । अतः एवं ज्ञातव्यं यद् यथा सांवृत्तिकदृष्ट्या जगतः उद्भवादिकं स्वीक्रियते तथैव जीवेश्वरयोः सांवृत्तिकं भेदमाश्रित्यैव वेदान्तविचारः प्रवर्तते । यद्यपि वस्तुतः उपदेष्टा आचार्योऽपि ब्रह्मस्वरूप एव शिष्य अपि ब्रह्म-स्वरूप एव । तथापि उपदेश क्रमः प्रचलति । अत एवात्र श्रुति -''आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा '' [128]

अस्यैव मतस्य पुष्टिं गौडपादः अपि एवं करोति --

''न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।। [129]

एवं प्रकारेण वाचस्पतेः मतानुसारम् भास्कराक्षेपः असंगतः वर्तते ।

(7) पूर्वं तु बादरायणोन हेतुव्यपदेशाद्(3-2-41) फलाधिकरणे शंकराचार्येण इदं कथितं यद् अन्तर्यामिनः अनुग्राहव्यापारः फलप्रधाने प्रयोजकः भवति । तं व्यापारं विना जडकर्माणि कर्मफलं दातुं नार्हन्ति ।

अस्य मतस्य खण्डनं कुर्वता भास्कराचार्येण इदमुक्तं यद् ईश्वरः मुक्तः तस्य व्यापारः अपि नित्यः । अतः तस्य व्यापारस्य सम्बन्धः सर्वैः सह अस्ति नतु केनापि विशेषेण पुरुषेण सह । अतः भास्करस्य मतानुसारं शंकराचार्यस्य कथनं समीचीनं नास्ति ।

भास्करमतस्य निरसनं कुर्वन् वाचस्पतिः कथयति यद् ईश्वरस्यानुग्रहः सर्वेषु समानं भवति तथापि कर्मजन्यादृष्टविशेषस्य फलं सम्बद्धः पुरुष विशेष

128- कठ उ0 2-7

129- गौडपादकारिका -2-32

एव प्राप्स्यति नतु सर्वे । अतः ईश्वरस्य अनुग्रहविशेषः अपि सर्वपुरुषसाधारणः न भवति किन्तु औपाधिकरूपेण पुरुषविशेषसम्बन्धी अनित्यश्च भवति । तद्यथा -'' ये पुनरन्तर्यामिव्यापाराया फलोत्पादनाया नित्यत्वं सर्वसाधारणत्वमिति मन्यमाना भाष्यकारीयमधिकरणं दूषयांबभूवुस्तेभ्यो व्यावहारिकयामीशिशीशितव्यविभागावस्थायामिति भाष्यं व्याचक्षीत । 130

(8) सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् (3-4-26)

वैदिककर्मणां विधानं साधकस्य कृते जीवनपर्यन्तम् आवश्यकमस्ति वा न वा अस्य विषयस्य चर्चा ब्रह्मसूत्रस्य सर्वापेक्षाधिकरणे दृश्यते । 131 यथा योग्यतावशेनश्वो न लांगलाकर्षणे युज्यते, रथचर्यायां तु युज्यते एवम् आश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ चापेक्षन्ते इति ।

शंकराचार्यस्य उपर्युक्तं मतं निरस्य भास्कराचार्यः इदं कथयति यत् वैदिककर्मणामनुष्टानं सर्वेषां कृते जीवनपर्यन्तमावश्यकम् । 'सर्वापेक्षा शब्दस्यार्थः भास्करानुसारमयमस्ति यत् सर्वेषु आश्रमेषु यज्ञादिकर्मणामपेक्षा वर्त्तते । भास्करस्य मतानुसारं -------'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन एषा बृहदारण्यकश्रुतिरपि अपवर्गसाधनभूतस्य ज्ञानस्यांगत्वेन यज्ञादिकं निर्दिशति । एवंप्रकारेण यथा शमदमादीनाम् आवश्यकता जीवनपर्यन्तं भवति एवमेव यज्ञादिकर्मणाम् अपि मध्ये त्यागः वांछनीयः नास्ति ।

ये जनाः एतत् कथयन्ति यत् ''पुत्रैषणां, वित्तैषणां, लोकैषणां" परित्यज्य भिक्षावृत्तिमाश्रयेत् । एवं प्रकारेण च सर्वकर्माणि परित्यजेत्'' ----- तेषामेतत्त् कथनमपि भास्करस्य मतानुसारं समीचीनं नास्ति । यतः स्मृतिषु एकस्मात् आश्रमात् आश्रमान्तरप्राप्तिः प्रतिपादिता वर्त्तते तदाश्रित्यैव आश्रमान्तरस्य विधानं वर्तते नतु सर्वकर्मणां त्यागस्य ।

श्वेताश्वतरोपनिषदि उपलभ्यमानं ''तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।

130- भामती 3-2-41 पृ0 733

131- ब्र0सू0 3-4-26

अत्याश्रमिभ्यः परमं पवित्रम्
प्रोवाच सम्यगृषिसंघजुष्टम् ।। [133]

अस्मिन् मन्त्रे केषांचित् मतानुसारं सर्वकर्मत्यागः अपेक्षितः वर्तते किन्तु भास्करस्य मतानुसारमत्र 'अत्याश्रमी' इत्यस्य शब्दस्यार्थः प्रव्रजिताश्रमी वर्तते नतु आकर्मत्यागी ।

भास्करस्य मतानुसारं लौकिक-वैदिककर्मणां साहाय्यं विना ज्ञानेऽपर्गकर्म साधनयोग्यता नास्ति । भास्करस्यायं विचारः अस्ति यत् कर्माऽपि तथैव मोक्ष-साधनं यथा ज्ञानमस्ति ।

भास्कराचार्यस्य उपर्युक्तज्ञानकर्मसमुच्चयवादमाक्षिपन् वाचस्पतिः --पृच्छति - कर्मणः उपयोगिता उत्पत्तौ अस्ति अथवा ज्ञानस्य परिणामे(मोक्षे)?

वाचस्पतेः मतानुसारं मोक्षस्य साधनं ज्ञानमस्ति । ज्ञानस्योत्पत्तौ कर्मणः उपयोगिता वर्तते । कर्मणा अन्तःकरणशुद्धिः शुद्धान्तःकरणे विविदिषोत्पत्तिः अतः ज्ञानस्य क्षमतायां कर्मणः अपेक्षा नास्ति । अविद्यायाः निवृत्यनन्तरं मोक्षः भवति । अविद्यानिवृत्तिश्च ज्ञानेन भवति नतु कर्मणा । यतः कर्म स्वयं अविद्यात्मकं वर्तते । अतः कर्म जीवनपर्यन्तमावश्यकं नास्ति । एवं प्रकारेण भास्करस्य एषः सिद्धान्तः समीचीनः नास्ति यद् कर्म जीवनपर्यन्त-मावश्यकं वर्तते इति ।

(9) अनारब्धकार्ये एव तु पूर्वे तदवधेः (4-1-15) इत्यस्य सूत्रस्य भाष्ये शंकराचार्यः कथयति -"नैवात्र विवदितव्यम् ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति [134] । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रति-क्षेप्तुं शक्येत? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेन एतदेवं निरूप्यते'' । [135]

133- श्वेताश्वतरोपनिषद् 6-21
134- ब्र०सू० 4-1-15
135- The discription of the Sthithapanajana which beget in sruthi smirithi(2-55-68) conforms our belief that one can be established in the knowledge of the Brahman and get passes the body. The conclusion is that Sanchitha kamma alone, whether good or bad is distroyed by knowledge.

अस्य कथनस्य सारः अयमस्ति यत् शंकराचार्यस्य मतानुसारं जीवन्मुक्तिः सम्भावा वर्तते । किन्तु भास्कराचार्यः जीवन्मुक्तिसिद्धान्तं निराकरोति । तस्य मदमिदमस्ति यत् जीविते विदुषि अविद्यानिवृत्तिर्नसंभवति । अतः जीवन्मुक्तिः न युक्ता । विद्योदये सति अविद्यानिवृत्तिः भवतीति कथ्यते । किन्तु अविद्यायाः किं स्वरूपम् क वा अविद्यायाः आधारः? एतेषु प्रश्नेषु आचार्याणां मतैक्यं नास्ति । यदि अविद्या एका तर्हि तस्याः निवृत्तौ सर्वेषां मुक्तिप्रसंगः उपस्थितो भवति । यदि अविद्या अनेका तर्हि तस्याः अनिर्वचनीयत्वं कथं सम्भवेत्? यदि अविद्यायाः अस्तित्वमीश्वरे स्वीक्रियेत तर्हि ईश्वरस्य व्याघातः स्यात् । अविद्यायाः आश्रयः जीवोऽस्ति इति कथनमपि अयुक्तम् । यतः जीवः अवस्तु । अवस्तुत्वात् जीवः अविद्यायाः आश्रयः कथं भवितुं शक्नोति? एवं प्रकारेण अनात्मदेहादौ आत्मत्व-प्रतिप्रत्तिः एव अविद्या इति वक्तुं शक्यते । अविद्यायाः निवृत्तिश्च ज्ञानेन भवति । अतः तत्वमस्यादि वाक्यैः आत्मस्वरूपविषये ज्ञाने उत्पन्ने सत्यपि यावज्जीवनम् उपासना आवश्यकी वर्त्तते । यदि एतदुच्यते यत् ब्रह्मज्ञानिनः कर्मणि अधिकारः न भवति तर्हि भोजनादिष्वपि तस्य प्रवृत्तिर्निस्यात् । किन्तु लोके प्रवृत्तिः दृश्यते । अपि च 'तमेवविदित्वाऽतिमृत्युमेति' इत्यादि श्रुतयः एतत् प्रतिपादयन्ति यत् ब्रह्म-ज्ञानात् उत्तरकाले मोक्षप्राप्तिर्भवति नतु समानकालो 'तस्य तावदेव चिरं यावन्न-विमोक्ष्येऽथ सम्पत्स्ये' इति छान्दोग्यश्रुत्या एतत् सिद्धयति यावत्पर्यन्तं देहः धार्यते तावत्पर्यन्तं मोक्षो न भवति । देहपातानन्तरमेव मोक्षः भवति नतु ततः पूर्वम् । एवं प्रकारेण जीवन्मुक्तिसिद्धान्तः भास्करस्य मतानुसारम् असंगतः ।

भास्कराचार्यस्य उपर्युक्तं मतं खण्डयित्वा वाचस्पतिमिश्रः कथयति यत् ब्रह्मज्ञानद्वारा अविद्यायाः निवृत्तिरेव मोक्षः । ब्रह्मज्ञानिनः ब्रह्मभावः श्रुति-सम्मतः । विद्याप्राप्तेः ब्रह्मप्राप्तेश्च समानकालता श्रुतिष्वपि प्रतिपादिता वर्तते । तद्यथा-ब्रह्मविद् ब्रह्मैव भवति[136] 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन

---

136- मु० 3-2-9

तथात्मानमेवं वेदाऽहं ब्रह्मास्मीति तत्सर्वमभवत् तत्र को मोहः कः शोकः एकत्व-[138]
मनुपश्यतः[139] एवं प्रकारेण ब्रह्मज्ञाने मोक्षप्राप्तौ च पौर्वापर्यं नास्ति ।

आश्रमकर्माणि उपासनादि कर्माणि च सर्वासु अवस्थासु अपेक्षितानि न भवन्ति । यतः तानि कर्त्रादिद्वयम् उपास्योपासकभेदश्च आश्रयन्ति । किन्तु शमदम-प्रभृतयः भेदभावनां नाश्रयन्ति । 'अथातो ब्रह्मजिज्ञासा' इति सूत्रमपि स्वभावतः एतद् साधयति यद् जीवः अविद्यायाः आधारः अर्थात् तस्मिन् ब्रह्मविषयकं अज्ञानम् अस्ति । तदेवाज्ञानमविद्या इत्युच्यते । अविद्या चानिर्वचनीया । अतः वाचस्पतेः मतानुसारं भास्करस्य कथनं समीचीनं नास्ति ।

(10) अस्मिन्नस्य च तद्योगं शास्ति(1-1-19)

अस्य सूत्रस्य भाष्ये शंकराचार्यः कथयति यद् प्राणमयः, विज्ञानमयः, मनोमयः, आनन्दमयः एतेषु यः मयट् प्रत्ययः दृश्यते स विकारार्थः अस्ति ।

किन्तु भास्कराचार्यस्य एतद् कथनमस्ति यद् मयट प्रत्ययस्य विकारार्थः अन्नामयशब्दे समीचीनः सन्नपि प्राणमयादि शब्देषु मयट् प्रत्ययः विकारार्थो गृहीतुं कदापि न शक्यते । भास्करस्य मतमिदमस्ति यद् मयट् प्रत्ययस्यार्थः सर्वत्र एक एव न भवति । अपितु प्रकरणानुसारं तस्यार्थः निर्णीयते । प्राणमयः इत्यस्मिन् शब्दे मयट प्रत्ययस्य प्रयोगः स्वार्थे वर्तते नतु विकारार्थे ।

भास्करोत्थापितस्य आक्षेपस्य परिहारः वाचस्पतिना आनन्दमयाधि-करणे कृतः । भामतीकारस्य आशयः अयमस्ति यद् प्राणस्योपाधिना आत्मा प्राणानां विकारः तथा मनसः अवच्छिन्नः आत्मा मनोविकार अस्तीति । अतः 'मयट' प्रत्ययस्य विकारार्थः युक्तः एव, तर्हि तस्य उपेक्षां कृत्वा प्राणमयादि शब्देषु मयट प्रत्ययस्य स्वार्थपरकता स्वीकरणीया नास्ति ।

138- बृ० 2×3 वाजसनेयि ब्राह्मण - 1;4-10

139- ई०

प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः नु प्रत्ययार्थस्यैव प्राधान्यम् । अस्य नियमस्य अनुसारं प्रत्ययस्यार्थः प्रकृत्यर्थापेक्षया तत्रैव प्रधानं भवति । यत्र प्रकृतिप्रत्ययौसहार्थं ब्रूतः । यत्र प्रकृत्यर्थादतिरिक्तं कमप्यन्यमर्थं प्रत्ययः नाभिव्यंजयति तत्रैव प्रत्ययः स्वार्थमात्रपरकः इत्युच्यते । किन्तु प्राणमयादि शब्देषु मयट् प्रत्ययः विकारार्थे प्रयुक्तः सन् स्वार्थको भवति । अतः स स्वार्थो अस्ति अर्थात् निरर्थकः अस्ति एतत् कथयितुं न शक्यते ।

अस्मिन्नस्य च तद्योगं शास्ति' सूत्रस्य भाष्ये सांख्यपरिकल्पितस्याचेतनस्य प्रधानस्य आनन्दमयत्वं निराकर्तुं भगवत्पादः शंकराचार्यः कथयति यत् - 'इतश्च न प्रधाने जीवे वा आनन्दमयः शब्दः[140] । यस्मात् अस्मिन् आनन्दमये प्रकृते आत्मनि प्रतिबुद्धस्यास्य तद्योगं शास्ति । तदात्मना योगस्तद्योगः तद्भावापत्तिः मुक्तिरित्यर्थः । किन्तु अस्यैव सूत्रस्य उत्तरवर्ति भाष्ये भगवता शंकराचार्येण 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यस्याः तै० श्रुतेः यत् व्याख्यानं कृतम् तत्र भास्कराचार्यः एतत् आक्षेपं करोति -- यत् 'शंकराचार्यः आनन्दमयं ब्रह्मेति न,अपितु आनन्दमयकोशाभ्यन्तरं ब्रह्म' इत्येवं निरूपयन्निव प्रतीयते[141] । अस्मिन् सन्दर्भे असौ प्रश्नः उदेति यत् 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र किमानन्दमयावयत्वेन ब्रह्म विवक्ष्यते उत, स्वप्रधानत्वेनेति? पुच्छशब्दादवयवत्वेनेति पूर्वपक्षः । सिद्धान्तस्तु 'आनन्दमयोऽभ्यासात्'। आत्मानन्दमय इत्यत्र 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्रधानमेव ब्रह्म उपदिश्यते । कुतः ? अभ्यासात् ।

एवंप्रकारेण इतश्च पुच्छशब्दस्य नावयोवार्थः किन्त्वाधारः । वाचस्पतिमिश्रेणास्मिन् सन्दर्भे एतदुक्तम् - पुच्छपदं हि बालधौ मुख्यं सदानन्दमयावयवे गौणमेवेति मुख्यशब्दार्थलंघनमभ्यव परतायामधिकरणपरतायां च तुल्यम् । अवयवप्रायलेखाबधश्च विकारप्रायलेखाबाधेन तुल्यः[142] । ब्रह्मपदमानन्दमयपदम इति त्रितयलंघनं

---

140- ब्र०सू० 1-1-19

141- The Anantamya does not denote the Pradhana or the jiva, because the Jiva obtained salvation and it when joined or identified with the Anatnaya( Vedanta explained V.H. DATE R.Vol.I page 49).

142- ब्रह्मसूत्रम्- विद्यानन्दगिरि ब्र० सू० भाष्यम् 1-1-19 पृ० 12

त्वधिकम् । तस्मात् मुख्यत्रितयलंघनात् असाधीयन पूर्वपक्षः[143] । मुख्यत्रयानुगुण्येन तून्तरपक्षो युक्तः । अत्र एतत् ज्ञातव्यं वर्तते यत् भास्करस्य मतानुसारम् आनन्दमयमेव ब्रह्म किन्तु शंकराचार्यस्य मतानुसारम् आनन्दकोशाभ्यन्तरं ब्रह्म । अर्थात् शंकराचार्यस्य मतानुसारं पुच्छ शब्दः अधिकरणपरकः अस्ति । किन्तु भास्करस्यायम् आक्षेपः अस्ति यत् पुच्छशब्दस्याधिकरणपरकेऽर्थे मुख्यार्थस्योल्लंघनं भवति । अतः पुच्छशब्दस्यार्थः अवयवः अस्ति नत्वधिकरणम् । अस्मिन् सन्दर्भे वाचस्पतिमिश्रस्य एतत् कथनमस्ति यत् (।) पुच्छशब्दस्य अवयववाचित्वेऽपि मुख्यार्थबाधः अस्त्येव । एतदतिरिक्तं पुच्छस्यावयववाचित्वेऽपि तद्विशेषणीभूतानां ब्रह्माऽऽनन्दमयमानन्दमयमीनन्दम् इत्यतेषां मुख्यार्थेष्वपि बाधा स्यात् । यदि आनन्दमय एवं ब्रह्म इत्येतत् स्वीक्रियते तर्हि विकारार्थकस्य मयट प्रत्ययस्य वाच्यार्थबाधा प्रसज्येत । यतः ब्रह्म तु अविकारि । अतः आनन्दमयं न ब्रह्म अपितु ब्रह्मपुच्छं प्रतिष्ठा इत्यस्मिन् वाक्ये निर्दिष्टं ब्रह्म एव ब्रह्म । वाचस्पतेः अस्य कथनस्य पुष्टिः वेदान्तकल्पतरुकारस्य अमलानन्दस्य कथनेनापि भवति । तद्यथा- ''मयंगविकारे मुख्यः ब्रह्मशब्दः परब्रह्मणि मुख्यः अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थ एव मुख्यो न मयडर्थे । पूर्वपक्षे एतत् त्रितयलंघनम् आनन्दमयपदस्यान्नमयादिविकारप्रायपाठपरित्यागश्च स्यात् । उत्तरे तु पक्षे पुच्छशब्दस्यावयवप्रायपाठस्यैव बाधनम् । अनुगुणं च मुख्यत्रितयमित्यर्थः । तद्यथा -

'प्रायपाठपरित्यागो मुख्यत्रियलंघनम् ।
पूर्वस्मिन्नुत्तरे पाक्षे प्रायपाठस्य बाधनम् ।।''[144]

परामर्शं जैमिनिरचोदना चापवदति (3-4-18) इत्यस्य सूत्रस्य भाष्ये एवं च 'विधिर्वा धारणवत् इत्यस्य सूत्रस्य भाष्ये'ब्रह्मसंस्थोऽमृतात्वमेति' इत्यादि छान्दोग्यश्रुतिमुद्धृत्य 'ब्रह्म संस्था' शब्दस्य व्याख्यानं व्याख्यानं कुर्वता भगवता शंकरेण उक्तं यत्'ब्रह्मसंस्थाशब्दः ''सन्यासाऽश्रमेरूढः । अत्रायं प्रश्न उदेति यत् ब्रह्मसंस्था इत्येषा शब्दः यौगिकः अस्ति रूढो वा? कर्मकाण्डिनां क मतमेतदस्ति यत्

---

143- भामती ।-।-19 पृ० 186

144- कल्पतरु ।-।-19 पृ० 187

यथाऽश्वकरणशब्दः शालवृक्षे रूढः वर्तते, तथा ब्रह्मसंस्थ शब्दः रूढं नास्ति। एवं प्रकारेण भास्करस्य मतानुसारं ब्रह्मसंस्थशब्दः पाचकशब्दवत् यौगिकः वर्तते। तथा अस्यार्थः भवति(ब्रह्मणि संस्था यस्य सः इति) अर्थात् यस्य ब्रह्मणि निष्ठा अस्ति सः ब्रह्मसंस्थः। एतादृशः जनः ब्रह्मचारी अपि भवितुमर्हति, गृहस्थाश्रमी वानप्रस्थाश्रमी अपि भवितुं शक्नोति। अतः यदि आश्रमत्रये ब्रह्मसंस्थाता सुलभा वर्तते, तर्हि ब्रह्मसंस्थ नाम्नः चतुर्थाश्रमस्य काऽप्यावश्यकता नास्ति? एवं सति च ब्रह्मसाक्षात्कारार्थं कर्मकाण्डत्यागस्य आवश्यकता नास्ति। कर्मकाण्डत्यागाभावे सन्यासाश्रमस्यावश्यकताऽपि स्वतः एव निरस्ता जायते (भास्कराचार्यमतं)[146] अस्मिन् विषये शांकराचार्यस्य एतत् कथनं द्रष्टव्यं वर्तते यत् योगादन्येष्वाऽश्रमेषु अपि प्रवर्तमानः ब्रह्मसंस्थशब्दः परिव्राजकार्थे एव रूढः वर्तते। तद्यथा-

कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत रूढ्यभ्युपगमेचाश्रमामात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्य प्रसंग इति। अत्रोच्यते - ब्रह्मसंस्थ इति पदं हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्रमाणां न सम्भवति स्वाश्रमविहितकर्मानुष्ठाने प्रत्यवाय श्रवणात्,परिव्राजकस्य तु सर्वकर्मसंन्यासात्प्रत्यवायो न संभवत्यनुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थाताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म यज्ञादीनि चेतरेषां, तद्व्यतिक्रमे च तस्य प्रत्यवायः।[147]

अत्रोपर्युक्तस्य शांकरमतस्य विरुद्धं भास्कराचार्येण यदुक्तं तस्य खण्डनं तथा शांकरकथनस्य समर्थनं कुर्वता वाचस्पतिना तथा अमलानन्देन यदुक्तं तदपि अवधेयम् वर्तते। वाचस्पतिः कथयति यत्- "एष हि ब्रह्मसंस्थातालक्षणो धर्मो भिक्षोरसाधारणः,आश्रमान्तराणि तत्संस्थान्यत्संस्थानि च, भिक्षुस्तत्संस्थ इत्येव। तत्संस्था हि सर्वभावं व्यवच्छिन्दन्ती विरोधादयस्तत्संस्थ एव तत्राश्रमजसी नान्यत्र। शमदमादिस्तु तदीय इति। स्वांगमव्यवधायकमित्यर्थः। ब्रह्मसंस्थात्व-

---

146- भास्करभाष्य 4-3-20

147- ब्र०शां०भा० 3-4-20, 884

3-3-0 विवरणप्रस्थानं प्रतिबिम्बवादश्च ।

पदमपादाचार्येण विरचिते पंचपादिका नाम्नि ग्रन्थे प्रकाशात्मयतिना 'पंचपादिकाविवरणम्' इत्येवं रूपेण यः टीकाग्रन्थः रचितः स एव विवरण-प्रस्थानस्य आधारः । पंचपादिकाविवरणे समुपलब्धान् मौलिकसिद्धान्तान् आ-श्रित्य यः विचारप्रवाहः प्रवर्तितः स एव विवरणप्रस्थानम् इति नाम्ना प्रथितोऽभूत् ।

पंचपादिका-नामा ग्रन्थः सम्प्रति चतुःसूत्रीपर्यन्तमेव उपलभ्यते । किन्तु ग्रन्थस्य अन्तःस्थात् एतत् प्रतीयते यत् असौ ग्रन्थः समग्रं शारीरकभाष्यम् आश्रित्य रचित आसीदिति । यतः उपलभ्यमाने अंशे एतादृशाः उल्लेखाः दृश्यन्ते, यथा अस्य विस्तारः अग्रे भविष्यति । उदाहरणतया पंचपादिकायाः प्रथमे वर्णके पदम-पादाचार्येण एतत् लिखितं यत् बौद्धानाम् अर्थक्रियाकारित्वस्य सिद्धान्तस्य खण्डनं सुगतमतस्य परीक्षायाः समये अग्रे विशेषरूपेण करिष्यते । बौद्धमतस्य खण्डनं ब्रह्मसूत्रे द्वितीयाध्यायस्य द्वितीये पादे अस्ति । अतः तावत्पर्यन्तं तु पंच-पादिका आसीद् एव इति अनुमातुं शक्यते । एवमेव इदमपि कथयितुं शक्यते यत् पंचपादिका समस्ते ब्रह्मसूत्रे रचिता आसीत् इति ।

अत्रायं प्रश्नः उदेति यत् 'यदि पदमपादेन समस्ते ब्रह्मसूत्र भाष्ये स्वीयः ग्रन्थः रचितः स्यात् तर्हि ग्रन्थस्य नाम 'पंचपादिका' इत्येतत् कथं कृतम् । अस्य उत्तर-मिदमस्ति यत् शारीरकभाष्यप्रक्रियायाः पंचभागाः वर्तन्ते । तद्यथा-पदच्छेदः-पदार्थोक्तिः-विग्रहः वाक्ययोजना आक्षेपसमाधानं च । पंचभागेषु भाष्यप्रक्रियायाः विभक्तत्वात् पदमपादेन स्वग्रन्थस्य नाम पंचपादिका' इति कृतम् । ऋजुविवरण-कारेण च कृतम् । आत्मस्वरूपः प्रबोधपरिशोधिन्यां (पंचपादिका टीका) तथा विज्ञानात्मा तात्पर्यद्योतिन्याम् एतद् कथयतः यत् पादशब्देन पदमपादाचार्यः उपर्युक्तानां पंचपादानां एव उल्लेखं करोति । अतः पंचपादिका इत्येतत् नाम पंचपाद पादमात्रं एव ग्रन्थः पदमपादेन लिखितः इत्यस्य मतस्य प्रमाणं नास्ति ।

पंचपादिका विवरणस्य भूमिकायां श्रीरामशास्त्रिमहाभागः कथयति यत् 'पंचि'' धातोः अर्थः अस्ति-'विस्तृतः' तथा पद्' धातोः अर्थः अस्ति-ज्ञानम्' । एवं प्रकारेण पंचपादिका इत्यस्यार्थः भवति-'स ग्रन्थः यस्मिन् विस्तरेण भाष्यार्थस्य प्रतिपादनं दृश्यते ।' अतः पंचपादिका इति नामाश्रित्य एतत् न मन्तव्यं यत् ग्रन्थः पंचपादपर्यन्तमेव सीमितः इति । मद्रपुरीय हस्तलिखितग्रन्थशालायाम्

अद्यापि एतादृशः पंचपादिकाग्रन्थः उपलभ्यते यस्मिन् ईक्षत्यधिकरणस्य किंचिद् भागपर्यन्तं पंचपादिका व्याख्यानम् उपलभ्यते । भामत्याम् वैश्वानराधिकरणे (1-2-26) तथा दहराधिकरणे (1-3-17) पंचपादिकामतस्य खण्डनम् उपलभ्यते । अतः एतद् स्पष्टम् अस्ति यद् वाचस्पतिना तथा कल्पतरुकारेण पंचपादिकायाः अधिकः भागः दृष्टः आसीद् इति ।

एवं प्रकारेण सामान्यतः इदं स्वीकर्तुं शक्यते यत् पंचपादिका ग्रन्थः समग्र शारीरकभाष्ये लिखितः आसीद् न तु चतुःसूत्रीपर्यन्तमेव । किन्तु अधुना पंचपादपर्यन्तमेव एषो ग्रन्थः उपलभ्यते । विवरणप्रस्थानस्य अन्ये प्रमुखाः ग्रन्थाः एते सन्ति -

(1) प्रबोधपरिशोधिनी (आत्मस्वरूपरचिता)

(2) तात्पर्यद्योतिनी (विज्ञानात्म रचिता)

(3) पंचपादिकाटीका (विद्यासागर रचिता)

(4) पंचपादिकादर्पणम् - (अमलानन्दरचितम्)

(5) पंचपादिकाविवरणम् - (प्रकाशात्मयतिरचितम्) 12 वें श०

(6) ऋजुविवरणम् - (विष्णुभट्टोपाध्याय रचितम्)

(7) विवरणतात्पर्यटीका - चित्सुखाचार्यरचिता
असौ एव संन्यासाश्रमे आनन्दगिरि
इति नाम्ना प्रख्यातोऽभवद्

(8) विवरणभावप्रकाशिका (नृसिंहाश्रमाचार्यविरचिता)

(9) तत्वदीपनम् - (अखण्डानन्देन, आनन्दगिरेः शिष्येण
पंचपादिकाविवरणोपरि लिखितम् ।

(10) विवरणप्रमेयसंग्रहः - (विद्यारण्यमुनिना प्रणीतः)

(11) विवरणोपन्यासः - (रामानन्दसरस्वतिना, गोविन्दानदस्य शिष्येण रचितः)

(12) रत्नप्रभा : गोविन्दानन्दरचिता) ।

(13) पंचदशी : (विद्यारण्यमुनि रचिता)

(14) खण्डनखण्डखाद्यम् - (श्रीहर्षरचितम्)

(15) वेदान्तपरिभाषा - धर्मराजाध्वरीन्द्रलिखिता ।

शांकरदिग्विजये माधवाचार्यः कथयति यत् "भगवान् श्रीशंकराचार्यः पद्मपादाचार्यं प्रति उक्तवान् यत् पंचपादिकायाः टीकायाः पंचैव पादाः प्रचलिताः भवेयुः तत्रापि च चतुःसूत्रीपर्यन्तमेव टीकेयं प्रसिद्धा स्यात् । अस्य कथनस्य अनुसारमपि संक्षेपेण एतत् ज्ञातुं शक्यते यत् पद्मपादाचार्याः सम्पूर्णभाष्योपरि टीकां विरचितवन्तः स्युः । तत्र च पंचपादपर्यन्तायाः टीकायाः नाम पंचपादिका इति भवेत् । परन्तु इदानीं चतुःसूत्राणामेव भाष्यस्य पंचपादिका टीका समुपलभ्यते । अस्मिन् सन्दर्भे केषांचित् विदुषामेतत् मतमप्यस्ति यत् भिषग् द्रव्याणि संस्थाता रोगी च(अर्थात् चतुरो वैद्यः, शौद्धोषधिः, उपयुक्ता सामग्री रोगी च) एतेषां चतुष्पदां सम्पत्त्या चिकित्साशास्त्रस्य उपयोगिता वर्तते तथैव अध्यासः जिज्ञासा-लक्षणा-प्रमाणम् समन्वयः इति पंचपादीयसम्पत्तिष्वेव वेदान्तशास्त्रस्यापि उपयोगिता भवति । अर्थात् वेदान्तदर्शनमपि पंचपादात्मकं वर्तते । एतस्य प्रथमः पादः अध्यासपादः भवति । तत्र एतत् प्रदर्शितं भवति यत् अध्यासः मिथ्याज्ञाननिमित्तकोऽनर्थः इति । द्वितीयपादे विस्तृतरूपेण एतत् प्रदर्शितम् अस्ति यत् मिथ्याज्ञाननिमित्ताध्यासरूपात्मकस्य अनर्थस्य निवृत्तिः ब्रह्मज्ञानात् अतिरिक्तं न केनापि अन्येन साधनेन भवितुम् अर्हति ।

तृतीये पादे स्वरूपतटस्थलक्षणद्वारा च ब्रह्मणः स्वरूपं प्रदर्शितं भवति । चतुर्थे पादे ब्रह्मसद्भावे प्रमाणं प्रस्तुतम् अस्ति । पंचमपादे स्पष्टतया विस्तृतरूपेण च व्याख्यातं वर्तते यत् ब्रह्मणि प्रमाणरूपेण उपस्थापितानां श्रुतीनां प्रामाण्यं, ब्रह्मणि तात्पर्यस्वीकारेणैव उपपद्यते । एतेषां पंचपादानां व्याख्यानभूतस्य भाष्यस्य नाम 'पंचपादिका' इति वर्तते । पंचपादिकामधिकृत्य प्रकाशात्मयतिना 'पंचपादिकाविवरणम्' व्यलेखि । अस्य आविर्भावानन्तरम् अद्वैतवेदान्ते 'विवरण नाम्ना एकं नूतनं प्रस्थानम् आरब्धम् ।

विवरणकारः प्रकाशात्मयतिः प्रतिबिम्बवादं समर्थयति । तस्य मतानुसारम् यथा जले व्यापकरूपस्य आकाशस्य प्रतिबिम्बः दृश्यते, तथैव देहधारिषु प्राणिषु ब्रह्मण प्रतिबिम्ब एव 'जीव' इत्युच्यते

मसाधारणं परिव्राजकधर्मं श्रुतिरादर्शयतीत्याह - तथा च न्यास इति ब्रह्मेति । सर्वसंगपरित्यागो हि न्यासः, स ब्रह्म, कुत? इत्यत आह- ब्रह्म हि परः । अतः परो न्यासो ब्रह्मेति । किमपेक्ष्य परतः संन्यास इत्यत आह - तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदिति । एतदुक्तं भवति -ब्रह्मपरतया सर्वैषणापरित्यागलक्षणो न्यासो ब्रह्मेति । तथाचेदृशं न्यासलक्षणं ब्रह्मसंस्थत्वं भिक्षोरेवासाधारणं नेतरेषामाश्रमिणाम् । ब्रह्मज्ञानस्य शब्दजनितस्य यः परिपाकः साक्षात्कारोऽपवर्गसाधनं तदंगतया पारिव्राज्यं विहितम्, न त्वनधिकृतं प्रतीत्यर्थः ।[148]

अत्र वाचस्पतेः उपर्युक्तस्य कथनस्य आशयः वेदान्तकल्पतरुकारेण अमलानन्देन एवं निर्दिष्टः -'संपूर्वतिष्ठतिर्हि समाप्तिवचनः । अन्यविष्टतायाः ब्रह्मणि समाप्तिर्नस्यात् । अन्यत्रापि व्यासवामत्वादित्यर्थः । स्वभावेन स्वस्य हेतोः विरोधात् तं व्यवच्छिन्दन्ति इति योजना ।[149]

शंकराचार्येण ब्रह्मसंस्थ शब्दस्य सन्यासपरकत्वं निरूप्य न्यासस्यार्थः कर्मसंन्यास इति कृतः । किन्तु भास्करेण न्यास शब्दस्य ब्रह्मवाच्यत्वं निरूपितम् । वाचस्पतिना भास्करमतस्य खण्डनं कृत्वा शांकरमतस्य समर्थनं कृतम् । एवं च सर्वसंगपरित्याग एव न्यासः । न्यास एव ब्रह्म इत्येव कथ्यते । यतः न्यासः अन्येभ्योत्कृष्टो वर्तते । तद्यथा-'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'(नारा078) अतः उत्कृष्टत्वात् सन्यासस्य ब्रह्मत्वं सम्यग् उच्यते । एवंप्रकारेण वाचस्पतेः मतानुसारं न्यासः भिक्षुणाम्साधारणं धर्मः । अतः ब्रह्मसंस्थशब्दस्यार्थः सन्यासाश्रमी अस्तीति स्वीकर्तव्यः ।

---

148- भामती 3-4-20 पृ0 884-85

149- वेदान्तकल्पतरुः पृ0 884

पंचपादिकाव्याख्याने प्रवृत्तो विवरण नाम ग्रन्थः बहुत्र इष्टसिद्धिकारस्य विमुक्तात्मनः मतमपि प्रतिपादयति ।

प्रकाशात्मयतिभिः पंचपादिकाविवरण प्रणयनकालात् प्रागेव अद्वैतवेदान्तेषु बहवः प्रस्थानभेदाः अभूवन्निति तत्र नानामतोदाहरणादेव अनुमीयते । अतएव ते बहुत्र मतभेदान् संक्षेपतो निर्दिश्य क्वचिदेव स्वमतं निस्सन्दिग्धतया आविरकार्षुः ।

प्रकाशात्मयतिः अवच्छेदवादं निराकृत्य अविद्याप्रतिबिम्ब एव जीव इति स्वपक्षं स्थापयति, मननिदिध्यासनयोरंगत्वं च विहितं श्रवणं प्रति इति वाचस्पति-मतं क्वचिदंशे स्वीकृतमिव, तथापि आत्माश्रिता अविद्याव्यवहारे जीवमाश्रितैव लक्ष्यते । अविद्यामाययोरैक्यं सर्वैरंगीकार्यम्, शब्देन प्रथमं परोक्षज्ञानम्, ततो निदिध्यासन-साहाय्ययेन तत एवपरोक्षज्ञानं च उदभवतीत्युररीकारेण प्रतिपत्तिविधि मनपेक्ष्यैव अन्वयव्यतिरेकसिद्धा स्मृतिसंतानः शक्यकरणः मर्दनसुखवत् प्रत्यक्षफलदर्शनात् ।[150]

यद्यपि पंचपादिकाव्याख्यानमेव प्रतिज्ञातमात्र, तथापि पंचपादिकोक्ता-नुक्तपुरक्तचिन्तनमपि कृतमेव, प्रबलतरयुक्तिभिश्चाविद्योपादानभेदवाद उपष्टम्भितः । भामतीपरस्थिभिः ये सिद्धान्ताः प्रवर्तिताः तै सह उपर्युक्तानां विवरणानुमत-सिद्धान्तानां यः भेदः अस्ति तस्य निरूपणम् अत्र संक्षेपतः क्रियते ।

3.3 । विवरणप्रस्थानस्य प्रमुखाः सिद्धान्ताः

(1) जीवब्रह्मणोः सम्बन्धविषये विवरणानुयायिनः प्रतिबिम्बवादं स्वीकुर्वन्ति ।

(2) विवरणानुयायिनः एषः सिद्धान्तः अस्तीति यत् अविद्यायाः आश्रयः ब्रह्म तथा विषयः अपि ब्रह्म एव ।

(3) विवरणप्रस्थानानुसारं मूलाविद्या एकैव ।

(4) विवरणपरस्थिनः एतत् प्रतिपादयति यत् शुद्धं ब्रह्म एव अखण्डाकारवृत्तेः विषयः ।

(5) विवरणपरस्थिनः कर्मणां विद्यार्थत्वं प्रतिपादयन्ति ।

(6) ब्रह्मसाक्षात्कारे शब्द एव करणम् इति विवरणानुयायिनः अभिप्रयन्ति ।

---

150- पं० वि० 248

(7) विवरणप्रस्थानः श्रवणादौ विधिरस्ति इत्यभिप्रयन्ति । श्रवणमनननिदिध्यासनानां मध्ये श्रवणस्य अंगित्वम् अन्येषां चागंत्वमस्तीति विवरणप्रस्थानः ।

3-3-।(1) अविद्या-स्वरूपम्

पंचपादिकाकारः पद्मपादाचार्यः अपि शंकराचार्यवत् माया अविद्या प्रभृति-अव्याकृत-अग्रहण-प्रभृति शब्दानां पर्यायत्वेन प्रयोगं करोति । तद्यथा -

'येयं श्रुतिस्मृतिइतिहासपुराणेषु नामरूपमव्याकृतमविद्यामय प्रकृति अग्रहणम् अव्यक्तं तमः कारणं लयः शक्ति महासुप्तिः, निद्रा, अक्षरम् । आकाश इति च तत्र तत्र बहुधा गीयते । विवरणकारः प्रकाशात्मयतिरपि -माया-अविद्ये पर्यायत्वेन निर्दिशति । तद्यथा - तस्मात् ब्रह्मैव स्वमायया अविद्यया निवर्तते । आभासवादी सुरेश्वराचार्यः, अवच्छेदवादी वाचस्पतिमिश्रोऽपि अविद्या-माययोः अभेदं स्वीकुर्वन्तः ।[152]

अत्रैतत् ज्ञातव्यं वर्तते यत् शंकरोत्तरवेदान्ते जीवेश्वरयोः भेदप्रतिपादनार्थम् अविद्यामाययोरपि भेदः निरूपितः । विद्यारण्येन विशुद्धसत्वप्रधाना माया तथा गुणत्रययुक्ता अविद्या इत्येवं प्रकारेण मायायां प्रतिबिम्बितं ब्रह्म ईश्वरः एवमविद्यायां प्रतिबिम्बितं ब्रह्म जीव इत्युक्त्वा माया अविद्ययोर्मध्ये भेदः प्रदर्शितः । तद्यथा -

''सत्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ।
मायाबिम्बो वशीकृत्य तां स्याद सर्वज्ञ ईश्वरः ।।
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।।''[153]

विवरणप्रस्थाने अविद्यायाः भावरूपत्वं स्वीक्रियते । भामतीप्रस्थानेऽपि अविद्यायाः भावरूपत्वं स्वीक्रियते । तद्यथा - 'यथा हि बिम्बस्य मणिकृपाणादयो गुहा, एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा इति ।[154]

---

152- बृ० भा० वा० 4/3। 919 भामती 377
153- पंचदशी, तत्वविवेक, 1-16- 17

154- भामती पृ० 377

1

3-3-1(2) अविद्याध्यासयोरैक्यम्

तमेतमेवलक्षणम् अध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः[155]'' इत्यस्य भगवत्पादभाष्यस्य व्याख्याने पंचपादिकाकारः कथयति यत् -

''अतद्रूपावभासित्वम् अध्यासशब्देन
प्रकृतोपयोगितया उपक्षिप्य पुनस्तस्य अविद्या
शब्दतया विद्यामात्रापनोदनार्हत्वं दर्शनीयम् ''

2-3-1(3) अविद्यायाः एकत्वम्

ब्रह्मसिद्धिकारः मण्डनमिश्रः तथा भामतीकारः वाचस्पतिमिश्रः अनेकजीवादस्य समर्थनाय मूलाविद्यायाः नानात्वं स्वीकुरुतः । तद्यथा - 'यथा हि बिम्बस्य मणिकृपाणादयो गुहाः, एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा इति ।''[156] यद्यपि अविद्या प्रतिजीवं भिन्ना तथापि अविद्यात्वसामान्यत्वात् नानासु अविद्यासु अव्यक्तमव्याकृतम् इत्यादि एकवचनान्तपदानां प्रयोगः दृश्यते । तद्यथा -

'अविद्यात्वमात्रेण च एकत्वोपचारः ।
''अव्यक्तमिति च अव्याकृतमिति च ।।''[157]

किन्तु विवरणकारः प्रकाशात्मयतिः मूलाविद्यायाः एकत्वमेव स्वीकरोति नतु नानात्वम् । अत्र एतत् ज्ञातव्यं वर्तते यत् मूलाविद्यायाः एकत्वे स्वीकृते सत्यपि विवरणकाराः मूलाविधायाः अवस्थाभेदानंगीकृत्य जीवानां नानात्वमुपपादयन्ति । तद्यथा - अथवा मूलाज्ञानस्यैव अवस्थाभेदाः ।

रजताद्युपादानानि शुक्तिकादिज्ञानैः ।।[158]
सहाध्यासेन निवर्तन्ते इति कथ्यताम् ।।

---

155- अध्यास भाष्य

156- भामती पृ0 42। (1) प0 पर 30

157- भामती पृ0 378

158- प्र0पा0॰वि0॰पृ0 99

2-3-1(14) ब्रह्मणः अविद्याश्रयविषयत्वम्

विवरणप्रस्थाने अविद्यायाः आश्रयः विषयश्च (उभयमेव) ब्रह्म इति प्रतिपाद्यते । वस्तुतः प्रकाशात्मयतेः मतानुसारम् आश्रयविषययोः भेदस्यापेक्षैव नास्ति । यतः एकस्मिन् एव वस्तुनि अविद्या आश्रयत्व-आवरणात्मकम् उभयमेव कार्यं सम्पादयति । यथा अन्धकारः आश्रयस्य कृते आवरणस्य कृते च वस्तुद्वयं नापेक्षते, तथैवाज्ञानमपि आश्रयार्थम् आवरणार्थं च वस्तुद्वयं नापेक्षते । तथाहि -(क) 'न तावदज्ञानमाश्रयविषयभेदसापेक्षं किंत्वेकस्मिन्नेव वस्तुनि आश्रयत्वमावरणं चेति कृत्यद्वयं सम्पादयति[159] । (ख) नहि तमो वस्तुद्वयापेक्षमवभासते[160] ।

यद्यपि सुरेश्वराचार्यः अपि ब्रह्म एवाविद्यायाः आश्रयः इति कथयति तथापि जीववदविद्यायाः अपि आभासरूपत्वं तथा अविद्या-ब्रह्मणोः सम्बन्धोऽपि आभासात्मकः इति प्रतिपादयति । मामती प्रस्थानानुसारं तु अविद्यायाः आश्रयो जीवः विषयश्च ब्रह्म।

2-3-1(5) अध्यासस्य मिथ्याज्ञाननिमित्तत्वम्

मिथ्याज्ञाननिमित्तः' (अध्यासः) इति भाष्यवाक्यं 'मिथ्या च तदज्ञानं च मिथ्याज्ञानम्' इति वाक्यम् 'मिथ्येति अनिर्वचनीयता उच्यते, अज्ञानम् इति जडात्मिका अविद्याशक्तिः' इति प्रतिपादितं पंचपादिकायाम् ।[161] अस्य व्याख्यानं प्रकाशात्मयतिः एवं करोति -

''तत्र' अज्ञानम्' इत्युक्ते ज्ञानाभावमात्रमुक्तम् स्यात्, मिथ्या इत्युक्ते भ्रान्तिज्ञानम् इति स्यात् । तदुभयव्यावृत्त्यर्थं निरूढ्य पदार्थौ दर्शयति । 'मिथ्या च तदज्ञानं च' इत्यादिना ।[162]

(2) ननु कथं मिथ्याज्ञानम् अध्यासस्योपादानम्? तस्मिन् सति अध्यासस्योदयात्,असति चानुदयात् -इति ब्रूमः । नन्वध्यासस्य प्रतिबन्धकं तत्वज्ञानं तदभावश्चाज्ञानमिति प्रतिबन्धकाभावविषयतया अज्ञानस्याध्यासेनान्वयव्यतिरेकौ अन्यथासिद्धौ । ---

159- पं० प० वि० पृ० 210-11
160- पं० पा० वि० पृ० 210-11
161- पंचपादिका - पृष्ठ 4
162- पचपादिकाविवरणम्-11

------------------- तस्मात् प्रथमापेक्षितकारणकल्पिप्तमेवान्वयव्यतिरेकौ न्यायसहितौ कुर्वाते । [163]

अत्राज्ञानस्याभावत्वनिरासः इष्टसिद्ध्यनुसारेण कृतः । (इ० सि० पा० 65-67)

किं च - ''ननु क्लृप्तं विषयेन्द्रियादिदोषः कारणमिति । सत्यम् । निमित्तं तु तत् । उपादानापेक्षायाम् अज्ञानमनुप्रविशति । सर्वं च कार्यं सोपादानम् । भावकार्यत्वात्' घटादिवत्- इत्यनुमानात् ।। [164]

2-3-1(6) ब्रह्मप्रतिबिम्बत्वम् (जीवस्य)

---------------------------

कोयं जीवो नाम? इत्यस्मिन् विषये विवरणकारः कथयति -ब्रह्मैव अविद्याप्रतिबिम्बितमिति वदामः । अस्मिन् सन्दर्भे पंचपादिका-विवरणस्य अधोलिखिताः अंशा द्रष्टव्याः सन्ति-

(क) जीवः प्रतिबिम्बश्चेत् न बिम्बात्मतामवगन्तुमलं प्रतिबिम्बत्वात् अक्षिपात्रगतदेवदत्तप्रतिबिम्बवत्- इत्येतन्निराचष्टे 'देवदत्तस्याचेतनांशस्य' इति । अचेतनत्वप्रयुक्ता तत्रानवगतिः, न प्रतिबिम्बत्वप्रयुक्ता, घटादिषु तथा दर्शनात् इति भावः । [165]

जीवब्रह्मणोः अभेदप्रतिपादनार्थमेव एतदुच्यते यत् जीवः ब्रह्मणः प्रतिबिम्बः वर्तते इति । तद्यथा- ''एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।। [166]

अस्य मतस्य व्याख्यानं कुर्वता पद्मपादाचार्येण एतदुक्तं यत् 'तत्वमसि' महावाक्यं प्रतिबिम्बस्थानीयस्य जीवस्य बिम्बस्थानीयेन ब्रह्मणा सह एकत्वं प्रतिपादयति । तद्यथा- 'तत्वमिति बिम्बस्थानीयस्य ब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते ।'' [167] पंचपादिकाकारस्य पद्मपादस्य मतं विवृण्वन् प्रकाशात्मयतिः यत् कथयति तदपि अवधेयं वर्तते -तथा हि - (क) अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवत् अमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्ब सम्भवात्'' । [168]

---------------------------

163- पं० वि० पा० ।।
164- पं० वि० पा० ।।-12
165- प० वि० पृ० 64
166- ब्र० सू० शा० भा० पृ० 358
167- पंचपादिका प्रथमवर्णक, पृ० 108
168- प० प० वि० पृ० 289

(ख) रूपं रूपं प्रतिरूपो बभूव, एकधा बहुधा चैव दृश्यते जलचन्द्रवत्, अत एव चोपमा सूर्यकादिवत् इति च श्रुतिस्मृतिसूत्रै जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात्'।[169]

(ग) जानुमात्रप्रमाणेऽपि जले दूरविशालाकाशदर्शनात् जलान्तराकाश एवाभ्रादिप्रतिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात् तत्प्रतिबिम्बत्वं चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं च निराकर्तुं शक्यत इति भावः ।[170]

पंचपादिकायां एतदपि स्पष्टीकृतं वर्तते यत् प्रतिबिम्बः न वस्त्वन्तरम् अहंकर्तुरनिदमंशो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरम्, किन्तु तदेव तत्, पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्या इति दर्शयितुम् कथं पुनस्तदेव तत्? एकस्वलक्षणतावगमात् । 'यथा बहिः स्थितो देवदत्तो यत्स्वलक्षणः प्रतिपन्नः तत्स्वलक्षण एव वेश्मान्तः प्रविष्टोऽपि प्रतीयते, तथा दर्पणतलस्थितोऽपि । न तत् वस्त्वन्तरत्वेयुज्यते ।[172]

3-3-1(7) मुक्ति दशायां जीवस्येश्वररूपत्वम्

मुक्तजीवस्य स्वरूपविषये प्रतिबिम्बवादिनामपि आन्तरिकः मतभेदः अस्ति । संक्षेपशारीरककारस्य सर्वज्ञात्ममुनेः मतानुसारम् ईश्वरः जीवश्च उभौ एव ब्रह्मणः प्रतिबिम्बौ । मुक्तावस्थायां च प्रतिबिम्बभूतः जीवः बिम्बभूतशुद्धचैतन्ये अवस्थीयते ।

किन्तु प्रकाशात्मयतेः मतानुसारं जीवः ईश्वरश्च उभौ प्रतिबिम्बरूपौ न स्तः । बिम्बभूतस्य चैतन्यस्य प्रतिबिम्बः जीवः तथा बिम्बस्थानीयं चैतन्यं ईश्वरः । अत एव मुक्तिदशायां जीवः ईश्वररूपताम् आप्नोति, नतु शुद्धब्रह्मरूपताम् । यावत्पर्यन्तं सर्वेषां जीवानां मुक्तिः न भवति तावत्पर्यन्तं मुक्तः कश्चिद जीवोऽपि ईश्वररूपमवाप्नोति, नतु ब्रह्मरूपम् । अस्मिन् सन्दर्भे सिद्धान्तलेशसंग्रहकारस्य अप्पयदीक्षितस्य निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते -

169- पं०पा० वि० पृ० 289
170- पं०पा० वि० पृ०
171- पं०पा० वि० पृ० 104
172- पं० पा० पृ० 104-5

(1) ''तत्रापि प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः । तथा सत्येव लौकिक-बिम्बदृष्टान्तेन स्वातंत्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते । (सि0ले0पृ0 104)

(2)''अस्मिन् पक्षे तु मुक्तस्य यावत्सर्वमुक्तिः सर्वज्ञत्वसर्वकर्तृत्व सर्वेश्वरत्व सत्यकामत्वादिपरमेश्वरभावापत्तिरिष्यते'' (सि0ले0 सं0पृ0 436)

(3) तथैकस्य ब्रह्मचैतन्यस्य अनेकेषु उपाधिषु प्रतिबिम्बे सति (सि0ले0सं0 ~~पृ0 436~~)

एकस्मिन् प्रतिबिम्बे विद्यादये तेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यं भावात् (सि0ले0सं0पृ0 536)

(1) कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः (सू0श्रा0)

(2) जीवः ईश्वरोऽपि प्रतिबिम्बविशेषः'' इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम्'' (सि0ले0सं0पृ0 534)

(3) उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात् (सि0ले0 सं0पृ0 104)

अत्रेतत् ज्ञातव्यं वर्तते यत् सुरेश्वराचार्यस्य मतानुसारं जीवः ईश्वरः उभौ एव मिथ्या । आभासमात्रत्वात् । ब्रह्म सदैव मुक्तः जीवश्च मिथ्या । ब्रह्मणि संसारित्वं तथैव कल्पितं यथा नभःस्थले नीलिमा[173] । अविद्यायाः कारणात् जीवः अमुक्तवत् प्रतिभासते । किन्तु वस्तुतः ब्रह्मस्वरूपत्वात् जीवः सदैव मुक्तः । एवं प्रकारेण च मोक्षप्राप्तिः औपचारिकतामात्रम् । तच्च सुरेश्वरेण बृहदारण्यकोपनिषद् भाष्यवार्तिके व्याधकुलसंवर्धितस्य राजकुमारस्याख्यायिकया तथा तैत्तिरीयोपनिषद्भाष्यवार्तिके 'दशमस्त्वमसि' इत्यनेन दृष्टान्तेन प्रतिपादितम् ।

वाचस्पतेः मतानुसारमन्तःकरणावच्छिन्नं चैतन्यं जीवः । सः न तु चैतन्यस्य प्रतिबिम्बरूपः न वा चैतन्यस्याभासः । यथा घटरूपोपाधौ विनष्टे जाते सति तदवच्छिन्नः आकाशः महाकाशे अवस्थितः भवति, तथैव अन्तःकरणरूपोपाधेः विनाशे सति तदवच्छिन्नं चैतन्यम् अनवच्छिन्ने चैतन्ये अवस्थितः भवति । एवं प्रकारेण च अवच्छिन्नस्य जीवस्य अनवच्छिन्नब्रह्मरूपता एव मुक्तिः[174] ।

-----------------------------

173- आत्मा संसारितां यातो यथा कात्स्न्यं वियत्तथा (बृ0भा0वा0 2-4-486)

174- यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावे वतिष्ठत्येवमविद्योपाधानविगमे जीवे ब्रह्मभाव '(भामती 2-3-43)

'अनारब्धकार्ये एव तु तदवधेः'' इत्यस्य सूत्रस्य भाष्ये भगवता शंकराचार्येण उक्तं यत् ज्ञानेन संचितकर्मराशेः -क्षयः भवति नतु प्रारब्धकर्मराशेः । [175] आरब्धकर्मणां फलभोगार्थं' ज्ञानप्राप्तेरनन्तरमपि शरीरस्य अवस्थितिः । एवंप्रकारेण मुक्तस्य पुरुषस्यापि 'आरब्धकर्मणां भोगपर्यन्तं शरीरधारणं'' आवश्यकम् । तदेव जीवन्मुक्तिरित्युच्यते । [176]

विवरणकारः प्रकाशात्मयतिरपि'' तस्य तावदेव चिरम्'' अस्याः छान्दोग्य श्रुतेः अनुसारं तत्वज्ञानानान्तरमपि देहेन्द्रियाणां किंचित्कालपर्यन्तं अवस्थानं भवति इति स्वीकरोति । तद्यथा-

(1) 'प्रारब्धकर्मवतश्च तत्वदर्शनं साशरीरस्यैव सम्भवति । व्यासादीनाच्च सशरीराणामेव अपरोक्षदर्शनं श्रूयते ।'' [177]

शंकरप्रवर्तितस्य जीवन्मुक्तेः सिद्धान्तस्य भामतीकारेण विवरणकारेण तथा वार्तिककारेणापि समर्थनं कृतम् । अस्य सिद्धान्तस्य विरोधः केवलं मण्डनमिश्रेण कृतः । सः जीवन्मुक्तिसिद्धान्तस्य खण्डनं कृत्वा सद्योमुक्तिवादं प्रतिपादयति । स्थितप्रज्ञस्य जीवन्मुक्तत्वं मण्डनः न स्वीकरोति । तस्य मतानुसारं स्थितप्रज्ञ अपि साधकः एव । किन्तु वाचस्पतिमिश्रस्य एतद् कथनमस्ति यत् स्थितप्रज्ञ सिद्धः भवति, नतु साधकः । नैकेषां स्थितप्रज्ञानां तत्वज्ञानं दीर्घजीविता च प्रख्याता एव । अतः तत्वसाक्षात्कारे सत्यपि प्रारब्धकर्मणां क्षयपर्यन्तं जीवनधारणं नापेशलम् । तथाहि -

(1) स्थितप्रज्ञश्च न साधकः, तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशयप्रज्ञस्तु स्थितप्रज्ञ, स च सिद्ध एव । [179]

(2) अन्यथा देवर्षीणां हिरण्यगर्भमुद्दालक प्रभृतीनां विगलितक्लेशजलावरणतया परितः प्रद्योतमानबुद्धिसत्वानं ज्योग्जीविता भवेत् । [180]

(3) तस्मादागमानुसारतोऽस्ति प्रारब्धविपाकानां कर्मणां प्रक्षयाय तदीयसमस्त फलोपभोगप्रतीक्षा सत्यपि तत्वसाक्षात्कारे । [181]

---

175- ब्र०सू० 4-1-15

176- ब्रह्मसाक्षात्कारे जातेऽप्याप्रारब्धक्षयविद्यालेशानुवृत्या जीवन्मुक्तिरस्तु ।'' (वि० प्र० सं० पृ० 362)

177- पं० पा० वि० पृ० 787

178- स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किन्तु साधक एवावस्थाविशेषं प्राप्तः स्यात् । (ब्रह्मसिद्धि पृ० 130)

179- भामती पृ० 959

180- भामती पृ० 958

181- भामती पृ० 958

3-3-1(8) श्रवणस्यांगित्वम्

श्रवण-मनन-निदिध्यासनानामंगित्वविषये विवरणमतानुयायिनामेतत् कथनमस्ति यत् मनननिदिध्यासनाभ्यां सहकृतेन श्रवणेन आत्मसाक्षात्कारः सम्भवति । तद्यथा -

(1) मनननिदिध्यासनाभ्यां फलोपकार्यंगाभ्यां सह श्रवणं नाम अंगि विधीयते ।[182]

(2) मनननिदिध्यासनयोश्च श्रवणांगत्वमुत्तरत्र वक्ष्यामः ।''[183]

(3) सर्वथा तावद्मनननिदिध्यासनाभ्याम् अंगभूताभ्यां सह श्रवणविधानमस्त्येव ।[184]

(4) विशिष्टशब्दावधारणं प्रमेयावगमं प्रति अव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनन-निदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कार-परिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितस्य करणस्य ~~कस्यचित्~~ विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदंगी अंगीक्रियेते ।[185]

अस्य मतस्य विपरीतं भामतीकारः श्रवणमननाभ्याम् उपकृतेन निदिध्यासनेन यः संस्कारः उत्पद्यते तेन युक्तमन्तःकरणेन आत्मसाक्षात्कारः भवति । एवं प्रकारेण वाचस्पति ब्रह्मसाक्षात्कारे निदिध्यासनस्यांगित्वं तथा श्रवणमननयोः अंगत्वं प्रतिपादयति । तद्यथा - 'ते (श्रवणमनने) एव च चिन्तासन्ततिमीयं तृतीयां प्रतिपत्तिं (निदिध्यासनसंज्ञां)प्रसुवाते । सा च आदर-नैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्ते एव प्रतिपत्तिं चतुर्थीम् ।

(अ) कर्मणां विद्यार्थत्वम्

भगवता शंकराचार्येण ज्ञानस्यैव मोक्षसाधनत्वं स्वीकृतम् । तस्य मतानुसारं जीवस्य कर्तृत्वभोक्तृत्वम् अविद्याहेतुकम् । अविद्या एव बन्धस्य हेतुः । विद्योदये सति जीवः ब्रह्मभावमाप्नोति । एवं च विद्या(ज्ञानम्) एव मोक्षस्यैकमात्रं साधनम् ।

182- पं० पा० वि० प्रथमवर्णक पृ० 30
183- ,, ,, ,, ,, ,, 33
184- ,, ,, ,, ,, ,, 38
185- पं०पा० वि० पृ० 4-11-12

तद्यथा -

(1) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्या प्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।[186]

(1) तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्याद । तत्रैवं सति यथोक्तकर्मफलेष्विव तारतम्यावस्थितेषु कश्चिदतिशयो मोक्ष इति प्रसज्येत ।[187]

किन्तु शंकरोत्तरवर्तिनामाचार्याणां एतन्मतमस्ति यत् मोक्षस्य साधनं ज्ञानं किन्तु ज्ञानोत्पत्तौ कर्मणामपि उपयोगः अस्ति । किन्तु उपयोगः कीदृशः इत्यस्मिन् विषये तेषां मतभेदोऽस्ति ।

विवरणप्रस्थानानुसारं यज्ञादिकर्मणामुपयोगः विद्योत्पत्तौ (ज्ञानोत्पत्तौ) वर्तते । तथाहि - 'नित्यनैमित्तिककर्मानुष्ठानैः संस्कृतस्य आत्मनो यदि श्रवणमनन-ध्यानाभ्यासादीनि ज्ञानसाधनानि संपद्यन्ते तदा संस्कारकर्मणि सहकारिविशेषाद आत्मज्ञानमवतारयन्ति ।[188]

किन्तु भामतीप्रस्थाने एतद स्वीक्रियते यद् कर्मणामुपयोगः विविदिषोत्तौ वर्तते नतु विद्योत्पत्तौ । तद्यथा-'उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदि-षोत्पाददवारा विविदिषन्ति यज्ञेन' इति श्रुतेः ।[189]

सुरेश्वराचार्येण वार्तिकप्रस्थानेऽपि कर्मणां विविदिषामात्रमेव उपयोगः इति निरूपितम् । अप्पय्यादीक्षितः अपि एवमेव कथयति ---

'भाष्यकृद्भिरपि विद्यासंयोगाद प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषसंयोगात्तु बाह्यान्तराणि यज्ञदिनि इति यज्ञादीनां विविदि-षार्थत्वस्य वक्ष्यमाणत्वाश्च ।[191]

(आ) श्रवणादौ विधित्वम्

विवरणकारः प्रकाशात्मयतिः श्रवणे नियमविधिं स्वीकरोति । 'तत्तु समन्वयात' इत्यस्य सूत्रस्य भाष्ये शंकरेण श्रवणादौ विधेः निषेधः कृतः । किन्तु अत्र विवरणपत्थिनां कथनमेतदस्ति यद भगवता शंकराचार्येण दर्शनस्य निषेधः कृतः, नतु श्रवणविधेः । अस्मिन् सन्दर्भे विवरणप्रस्थानानुयायिनां निम्नलिखितानि कथनानि द्रष्टव्यानि --

(1) 'दर्शनविधाने हि ब्रह्म कर्मतया गुणभूतं प्रसज्यते ।[192]

ब्र०सू०शा० 1-1-1 पृ० 4 187- ब्र०सू०शा० 1-1-4

188-पञ्चा० वि० तृतीयवर्णक पृ० 540- 189- भामती 3-4-26- 190- बृ०भा०वा० 104-105।

(2) दर्शनविधाने अयं दोष इति दर्शयति - ''प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन'' इति न्यायेन प्रत्ययार्थस्य प्राधान्यात् दर्शनस्य च प्रकृत्यर्थतया गुणभूतत्वेन तद्विशेषणस्यब्रह्मणोऽपि सुतरां गुणभूतत्वं स्यादित्यर्थः ।[193]

(3) ब्रह्मदर्शनमुद्दिश्य विचारविधाने तु स्वप्रधानमभूतदर्शनविशेषणतया ब्रह्मपि स्वप्रधानं भवति न तु गुणभूतम् इति वेदान्तैः ब्रह्मपि स्वप्रधाने प्रतिपाद्यमाने तदधर्शनाय श्रवणादिविधानं नैव विरुध्यते ।[194]

(4) 'नादयः आत्मनि वेदान्ततिरिक्त, प्रमाणाप्रसक्ते व्यावर्त्याभावात् ।[195]

(5) 'ननु श्रवणे न नियमविधिरुपपद्यते व्यावर्त्याभावात् तत्र किमात्माविचारितवेदान्तैरेव ज्ञातव्य इति वेदान्तो नियम्यते, किं वा वेदान्तानां विचारेणैव ज्ञातव्य इति विचारः अथवा मुमुक्षुणा मोक्षसाधन ज्ञानाय आत्मैव श्रोतव्य इत्यात्मा?[196]

एतेषां कथनानां सारः विवरणभावप्रकाशिककारस्य नृसिंहाश्रमाचार्यस्यानुसारमयमस्ति यद् श्रोतव्यः, इत्यनेन वेदान्तवाक्यश्रवणद्वारा आत्मज्ञानस्य भावना कर्तव्या इति नियम्यते - (क) एवमात्मज्ञानस्य तर्कितसाधनान्तरसाध्यत्वयोग्यतायामपि अविद्यानिवृत्तिसमर्थादद्वैतात्मज्ञानसाधनीभूतवेदान्तश्रवणंपक्षे अप्राप्तं विधीयते ।

(ख) भिन्नात्मविषयकवाक्यश्रवणं व्यावर्त्यते ।[197]

(ग) विचारनियमविध्यभावे नियमेन ततो निवृत्त्यसंभवात् ।[198]

------------------------------

193- वि० ता० दी० बृ० 37

194- पं०पा० वि० पृ० 37

195- वि०भा० प्र० पृ० 34 (विवरणभावप्रकाशिक-नृसिंहाश्रम)

196- वि०भा० प्र० पृ० 36

197- वि०भा० प्र० पृ० 36

198- वि० भा० प्र० पृ० 36

किन्तु भामतीकारः वाचस्पतिमिश्रः श्रवणमनननिदिध्यासनेषु विध्यभावं मनुते । 'आत्मेत्येवोपासीत' इत्यत्रापि विधिर्न अपितु विधिसरूपः वर्तते । एवमेव 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः,मन्तव्यः निदिध्यासितव्यः'' इत्यत्र श्रूयमाणाः दर्शनविधिरपि विधि नापितु विधिसरूपः । अस्मिन् सन्दर्भे वाचस्पतेः निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते ।

----'आत्मेत्येवोपासीतेति न विधिः, अपितु विधि-सरूपोऽयम्[199] 'अन्यतः प्राप्ता एव हि श्रवणादयः विधि सरूपैर्वचनैरनूद्यन्ते'[200] मनननिदिध्यासनयोरपि न विधिः तयोः अन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोः विधिसरूपैर्वचनैरनुवादात्[201] । 'न च चिन्ता साक्षात्कारयोर्विधिरिति तत्वसमीक्षायामस्माभिरुपपादितम् । विस्तरेण चायमर्थस्तत्रैव प्रपंचितः । जर्तिलयवाग्वा जुहुयात् इतिवद् विधिसरूपा एते ''आत्मा वा अरे द्रष्टव्य'' इत्यादयो नतु विधेय इति ।[202]

एवंप्रकारेण श्रवणादीनाम् विधित्वविषये विवरणप्रस्थानभामतीप्रस्थानयोः मतभेदः वर्तते ।

## 3-3-1(9) शब्दस्य ब्रह्मसाक्षात्कारकरणम्

मण्डनमिश्रः 'तत्वमसि' इत्यादि वाक्यार्थप्रत्ययाभ्यासरूपं प्रसख्यानं ब्रह्मसाक्षात्कारस्य करणमिति प्रतिपादयति । भामतीकारः वाचस्पतिमिश्रः प्रसंख्यानस्य महत्वं स्वीकुर्वन्नपि एतद् कथयति यद् मनसः सहकारिकरणत्वेनैव प्रसंख्यानस्य ब्रह्मसाक्षात्कारे उपयोगः, नतु स्वतन्त्ररूपेण तद्यथा -'वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वं पदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम्[203] । 'सत्यं न ब्रह्मसाक्षात्कारः आगमयुक्तिफलमपितु युक्त्यागमार्थज्ञानाहितसंस्कारसचिवं चित्तमेव ब्रह्मसाक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते ।[204]

-----------------------------------

199- भामती 1-1-4 पृ0 115
200- भामती ,, पृ0 130
201- भामती ,, पृ0 153
202- ,,, 3-2-21 पृ0 713
203- भामती पृ0 57
204- भामती पृ0 932

किन्तु विवरणकारः प्रकाशात्मयतिः आत्मसाक्षात्कारकृते न प्रसंख्यानस्य नच मनसः करणत्वं स्वीकरोति । तस्य मतानुसारं तत्त्वमसि' इत्यादि महावाक्यानि अर्थात् शब्द एव ब्रह्मसाक्षात्कारस्य करणम् । तस्य मतानुसारं 'तं त्वौपनिषदम्' वेदान्तविज्ञानसुनिश्चितार्थाः ' इत्यद्याः श्रुतयोरपि एतद् प्रतिपादयन्ति यत् वेदान्तवाक्यानां श्रवणातिरिक्तमन्यस्य कस्यापि साधनस्य ब्रह्मसाक्षात्कारे उपयोगित्वं नास्ति । शब्दात् ब्रह्मणः अपरोक्षं ज्ञानं कथं सम्भवति? इत्यस्याः शंकायाः समाधानाय विवरणपत्थिनः शब्दापरोक्षवादं समर्थयन्ति । तथाहि- 'इन्द्रियस्य यथा अपरोक्ष ज्ञानजनकत्वं एवं शब्दस्यापि तदविरुद्धम्, अपरोक्षार्थविषयत्वस्य शब्दज्ञानेऽपि सत्वात् ।[205] अत्रैतद् ज्ञातव्यं वर्तते यत् नैयायिकानां मते इन्द्रियजन्यज्ञानस्यैवापरोक्षत्वं स्वीक्रियते । किन्तु वेदान्तमते ज्ञानस्यापरोक्षतायाः आधारः विषयस्य स्वभावो भवति । अतः इन्द्रियजन्यत्वमेव ज्ञानस्यापरोक्षत्वे न नियामकम् । अपि च शब्दापरोक्षवादिनां मतानुसारं- 'यत्साक्षादपरोक्षात्' इति श्रुतिः एतद् प्रतिपादयति यत् अपरोक्षाया संविदा सह तादात्म्यस्थापनात् परोक्षं वस्त्वपि अपरोक्षं संजायते । अपि च 'दशमस्त्वमसि' इत्यादि स्थलेषु शब्दादेवापरोक्षज्ञानं स्पष्टम् । अतः विवरणपत्थिनां मतानुसारं शब्दः अपरोक्षज्ञानस्य हेतुः । एवं प्रकारेण च महावाक्यश्रवणमेव आत्मसाक्षात्कारस्य करणम् नतु मनः । मनसः करणत्वस्य निषेधः 'यन्मनसा न मनुते' इत्यादि श्रुतिष्वपि उपलभ्यते । 'मनसैवानुद्रष्टव्यम्' इत्यादि श्रुतिषु मनसः या करणता निरूपिता सा शब्दस्य सहकारित्वेनैव वर्तते ।

वार्तिककारः सुरेश्वराचार्यः अपि आत्मसाक्षात्कारं प्रति उपनिषद्वाक्यानां करणत्वं स्वीकरोति नतु मनसः । आत्मानात्मपदार्थानां विज्ञानेऽपि मनसः साधारणकारणत्वमेवास्ति नतु करणत्वम्(आसाधारणं कारणत्वम्) । तथाहि -

(क) भावनोपचितो चेतो न कैवल्यकारणम् ।
तस्यैव समुच्छेदान्तद्वेत्त्वज्ञानहानतः ॥[206]

(ख) आत्मानात्मपदार्थेषु विज्ञानोत्पत्तिसाधनम् ।
मनः साधारणं दृष्टं सर्वज्ञानैकहेतुतः ॥[207]

---

205- वि० भा० प्र० पृ० 403
206- बृ० उ० भा० वा० 2-4-205
207- बृ० उ० भा० वा० 2-4-4(650)

## 3-3-2 प्रतिबिम्बवाद-अवच्छेदवादयोः वैषम्यम्

जीवपरमेश्वरयोः औपाधिकः भेदः, न पारमार्थिकः इति अद्वैतिनां सिद्धान्तः । तत्र अज्ञानान्तःकरणरूपोपाधिभिः जीवः अवच्छिन्नं तत्र उपाधौ प्रतिबिम्बितं चैतन्यं जीवः इति पक्षद्वयम् । तत्र आद्यः अवच्छेदवादः, द्वितीयः प्रतिबिम्बवादः इत्युच्यते । अवच्छेदवादे अन्तःकरणावच्छिन्नं जीवः, अविद्यावच्छिन्नं चैतन्यं ईश्वरः । ईश्वरस्य उपाधि माया, माया-अविद्ययोरभेदः जीवस्य उपाधिः अन्तःकरणम् । अत्र अवच्छेदवादिनां मते जीवो नाम अखण्डस्य ब्रह्मणः सखण्डाभिव्यक्तिः । तेषां मते जीवब्रह्मणोः सम्बन्धः घटाकाशमहाकाशयोः इव । 'अंशो नानाव्यपदेशात्' इत्यादिषु सूत्रेषु च सूत्रकारेण परमात्मनः अंशत्वेन जीवस्य कथनात् अयम् अवच्छेदवादः अंशवादो वा सूत्रकाराणाम् अभिप्रेतः इति अवगम्यते । ''ममैवांशो जीवलोके जीवभूतः सनातनः (गीता 1-5-7) इति भगवद्गीतायामपि जीवस्य ब्रह्मांशत्वं प्रतिपादितम् । अवच्छेदवादे बुद्ध्यन्तःकरणादिकं चैतन्यस्य अवच्छेदकं विशेषणं वा इति समष्टिमायायाः समष्ट्यन्तःकरणम् उत्पद्यते तेनैव विशिष्टं चैतन्यं च हिरण्यगर्भः इत्युच्यते । व्यष्ट्यविद्यायाः व्यष्ट्यन्तःकरणम् उत्पद्यते तेन विशिष्टं चैतन्यं च जीव इत्युच्यते ।

'न स्थानतोऽपि' इत्यादि सूत्रोक्ताधिकरणे भाष्यकारेण स्वयं प्रतिबिम्बवादः निराकृतः । अस्यैव अधिकरणस्य 'अत एव चोपमा सूर्यकादिवत्' इति सूत्रे जलसूर्यदृष्टान्तग्रहणात् प्रतिबिम्बवादः एव सूत्रकारसम्मतः इति प्रतिबिम्बवादिभिः उच्यमाने अवच्छेदवादिभिः उच्यते - 'अम्बुवदग्रहणात्तु न तथात्वम्' इति उत्तरसूत्रे एव भाष्यकारेण सर्वगतस्य आत्मनः प्रतिबिम्बत्वं निराकृतम् । अम्बुः सूर्यादिभ्यो विप्रकृष्टे देशे वर्तते । आत्मा तु अमूर्तः । तस्य च सर्वव्यापित्वात् तस्मात् विप्रकृष्टदेशे वर्तमानं प्रतिबिम्बयोग्यं न किमपि वस्तु अस्ति । अतः सर्वगतस्य आत्मनो प्रतिबिम्बो न युक्तः ।

अत्र यथा सूर्यः जले प्रतिबिम्बितः सन् जलगतकम्पनाद्युपाध्यधीनो भवति, तथा ब्रह्मापि अन्तःकरणादि परिच्छिन्नं सत् अन्तःकरणगतसुखादिभाग भवति इत्यत्रैव तात्पर्यं न तु ब्रह्मणः सूर्यवत् प्रतिबिम्बत्वे तात्पर्यम् इति मन्तव्यम् ।

तस्माद् अन्तःकरणावच्छिन्नं चैतन्यं जीवः, अविद्यावच्छिन्नं चैतन्यम् ईश्वरः । 'मायोपाधि जगद्योनिः सर्वज्ञत्वादिलक्षणः' इति वाक्यवृत्तिगतं वचनम् उपपद्यते । कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्यपि उपपन्नम् । वाचस्पतिमिश्रैः अवच्छेदवादम् अवलम्ब्य नीरूपस्य चैतन्यस्य नीरूपे अन्तःकरणाद्युपाधौ प्रतिबिम्बनं निराकृतम् । तथा चोक्तम् - 'रूपवद्धि द्रव्यम् अतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तदविवेकेनगृह्यमाणस्यापि छायां गृह्णीयात् । चिदात्मा तु अरूपो विषयी न विषयच्छायाम् उद्ग्राहयितुम् अर्हति । यथा हुः - 'शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बता' इति । लोके रूपवतो द्रव्यस्यैव प्रतिबिम्बः दृश्यते । अतः प्रतिबिम्बपक्षः सर्वथा निरस्तो भवति । आत्मनः सावयवत्वाद् न प्रतिबिम्बत्वं युक्तम् ।

रूपरहितस्य शब्दस्य प्रतिध्वनिः पर्वतगुहादिषु प्रतीयते । किन्तु तन्न युक्तम् । यतः प्रतिध्वनिः ध्वनेः प्रतिबिम्बो न, अपितु प्रथमशब्दाद् उत्पन्नः शब्दान्तर एव प्रतिबिम्बः सदैव चाक्षुषो भवति । पुष्पस्य प्रतिबिम्बः दर्पणे चाक्षुषो वर्तते, किन्तु पुष्पस्य सौरभि दर्पणे नानुभूयते । अतः तस्य प्रतिबिम्बित्वं कल्पयितुं न शक्यते । रूपवतो द्रव्याद् अतिरिक्तं कस्यापि प्रतिबिम्बित्वं नाञ्जसम् ।

प्रतिबिम्बवादे अपरो दोषोऽपि विद्यते । प्रतिबिम्बपक्षे प्रतिबिम्बस्य प्रतिबिम्बः, तस्य प्रतिबिम्बः च अपेक्षितः । एवं सम्मुखदर्पणेषु प्रतिबिम्बस्य निर्शृंखला सम्भवति ।

'अंशो नानाव्यपदेशात्' इत्यादि सूत्रभाष्याणां व्याख्यानप्रसंगे अपि वाचस्पतिमिश्रैः जीवस्य ब्रह्मप्रतिबिम्बत्वं समाहितम् । 'तस्माददवैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयता विद्योपादान भेदाद् तद प्रतिबिम्बभेदाः । न च मोक्षस्य अनर्थबहुलता, यतः प्रतिबिम्बानां इव श्यामतावदाततादि जीवनामेव नानावेदनाभिसम्बन्धो ब्रह्मणस्तु बिम्बस्यैव न तदभिसम्बन्धः । यथा च दर्पणापन्ये तत्प्रतिबिम्बं बिम्बभावे अवतिष्ठते न कृपाणोः प्रतिबिम्बितं अपि एवम् अविद्योपादानाविगमे जीवे ब्रह्मभावः'' इति सूत्रस्य प्रसंगेऽपि वाचस्पतिना जीवस्य ब्रह्मप्रतिबिम्बत्वं समर्थितम् । अत एव वाचस्पतिमिश्राः अपि प्रतिबिम्बवादिनः इति केचन वदन्ति । किन्तु परिमलकारैः समन्वयाधिकरणस्य उपसंहारे इदं मतद्वयं सविस्तरम् आलोचितम् । तैः प्रथमतः प्रतिबिम्बवादम् उपस्थापयित्वा तदनन्तरम् अवच्छेदवादः उपस्थापितः । अपि चावच्छेदवादे न सूत्रादिविरोधाशंका इति तैः समाधानं कृतम् ।

अतः 'वाचस्पतिमिश्राः अवच्छेदवादिनः इति वदन्ति ।

## ३-३-३ विवरणप्रस्थान- भामतीप्रस्थानयोः वैषम्यम्

भामतीप्रस्थाने अनेकेषु स्थलेषु मण्डनमिश्रस्य तथा विवरणप्रस्थाने अनेकेषु स्थलेषु सुरेश्वराचार्यस्य प्रभावः दृश्यते ।

मण्डनमिश्रस्य मते अविद्यायाः आश्रयः जीवः, अविद्यायाः विषयः ब्रह्म एवं वाचस्पतेः मतेऽपि अविद्यायाः आश्रयः जीवः, अविद्यायाः विषयश्च ब्रह्म एवेति पक्षः । जीवस्य आश्रयः अविद्या । अविद्यायाश्च आश्रयो जीवः इति इतरेतराश्रयदोषः सम्भवति । अस्याः दोषस्य निराकरणं मण्डनमिश्रः बीजांकुरदृष्टान्तेन करोति । उपर्युक्तस्य दोषस्य निराकरणं वाचस्पतिनाऽपि बीजांकुरदृष्टान्तेन कृतम् ।

किन्तु सुरेश्वराचार्यः अविद्यायाः आश्रयविषययोः भेदं न स्वीकरोति । तस्य मते अविद्यायाः आश्रयो विषयश्च ब्रह्म एव । ब्रह्मणि तथा अविद्यायां विषयविषयिभावसम्बन्धः वर्तते । असौ सम्बन्धः अनादिः नैसर्गिक च भवति । पद्मपादाचार्यः तथा प्रकाशात्मयतिरपि एवमेवप्रतिपादयन्ति ।

मण्डनमिश्रः अनेकजीवाविद्यावादस्य समर्थनाय मूलाविद्यायाः नानात्वं प्रतिपादयति । एवमेव वाचस्पतिरपि अनेकजीववादसमर्थनाय मूलविद्यायाः नानात्वं स्वीकरोति । वाचस्पतिः भामत्यां 'तदधीनत्वादर्थवत्' इति सूत्रस्य व्याख्याने भिन्नाधिकरणयोः विद्याविद्ययोः अविरोधत्वं समर्थयति ।

मण्डनमिश्रस्य मते शाब्दज्ञानं परोक्षात्मकं भवति । तस्य मते तत्वमसि' आदि महावाक्यात् ब्रह्मसाक्षात्कारः नोत्पद्यते । श्रवणानन्तरं मननं तथा प्रसंख्यानमावश्यकम् । तस्य मते 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतिः एवं ''ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति मुण्डकश्रुतिः प्रसंख्यानस्य ब्रह्मसाक्षात्कारकारणत्वं प्रतिपादयतः ।

वाचस्पतेः मतेऽपि ध्यायमेव ब्रह्मसाक्षात्कारस्य कारणम् । 'अपि च संराधने प्रत्यक्षानुमानाभ्याम्' इति सूत्रमपि तां श्रावयति । वाचस्पतेः मतम् अमलानन्दः एवं स्पष्टयति । ---

---

208- ब्र० सू० ३-२-२४

'अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा । शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः ।।[209] अस्मिन् विषये वाचस्पतिः मण्डनमिश्रस्य प्रसंख्यानविषयसिद्धान्तमपि समर्थयति । तदयथा-

''न चैषा साक्षात्कारो शब्दस्य प्रमाणस्य फलम् ।

अपितु प्रत्यक्षस्य,तस्यैव तत्फलत्वनियमात्

अन्यथा कुटजबीजादपि वटांकुरोत्पत्तिप्रसंगात् ।।[209]

सुरेश्वराचार्यः मण्डनस्येमं मतं खण्डयति । 'तं त्वौपनिषदं पुरुषं'' (बृ03-9-26)

इति श्रुतिः तथा 'शास्त्रयोनित्वात्'(ब्र0 1-1-3)

इति सूत्रं च ब्रहमसाक्षात्कारं प्रति उपनिषद् वाक्यमेव करणमिति मनुते ।

विवरणकारः प्रकाशात्मयतिरपि आत्मसाक्षात्कारस्य करणम् उपनिषद्वाक्यमेव इति कल्पयति ।

''एवं च 'तं त्वौपनिषदम्' इति तद्धितप्रत्ययेन ब्रहमावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्नम् भवति, अपरोक्षावगतेरेव सम्यगवगतित्वात् ।[211]

अस्माभिः एतत् ज्ञातुं शक्यते यत् ब्रहमसाक्षात्कारस्य करणविषये वाचस्पतिः मण्डनसिद्धान्तम् अनुकरोति । तथा विवरणकारः सुरेश्वराचार्यः शब्दापरोक्षवादमेव उपस्थापयति ।

श्रवणमनन-निदिध्यासयोः अंगित्तविषयेऽपि भामतीप्रस्थानस्य विवरणप्रस्थानेन सह मतभेदाः वर्तन्ते । वाचस्पतिः ब्रहमसाक्षात्कारे निदिध्यासनस्य अंगित्वं तथा श्रवणमननयोः श्रवणमननयोः अंगत्वं कल्पयति । किन्तु विवरणकारः श्रवणस्यांगित्वं मनननिदिध्यासनयोश्च अंगत्वं कल्पयति । सुरेश्वरोऽपि ब्रहमसाक्षात्कारे श्रवणस्य अंगित्वं मनुते ।

विवरणकारः प्रकाशात्मयतिः जीवस्वरूपप्रतिपादनाय प्रतिबिम्बवादं तथा भामतीकारः अवच्छेदवादं च स्थापयत । अवच्छेदवादस्य समर्थकाः प्रतिबिम्बावादं प्रति एतत् आक्षेपं कुर्वन्ति यत् चैतन्यस्यामूर्तत्वात् अन्तः करणे चैतन्यस्य प्रतिबिम्बः नोपपद्यते । (किन्तु अवच्छेदवादेऽपि अयं दोषः समानः ) ।

---

209- वे0क0 1-1-28 पृ0 18

210- भामती 1-1 पृ0 55-57

211- पं0 पा0 वि0 पृ0 408

एवम् अविद्यायाः आश्रयविषययोः विषयेऽपि भिन्नता वर्तते । वाचस्पतेः मते जीवः अविद्यायाः आश्रयः । तेन 'दृष्टिसृष्टिवादः स्वीकृतः । तस्य मते अहि-विभ्रमस्याधिष्टानं रज्जु भवति तथा प्रपंचविभ्रमस्याधिष्टानं जीवाश्रिताविद्यायाः विषयीभूत ब्रह्म एव अथवा ईश्वरो वर्तते ।

विवरणकारस्य मते ब्रह्म एव अविद्यायाः आश्रयः विषयश्च । भामती-पस्थिनां मते मूलाविद्यायाः जीवभेदेन नानात्वं, विवरणपस्थिनां मते एकैव मूलाविद्या ।

मोक्षविषयेऽपि उभयोः प्रस्थानयोः मध्ये मतभेदाः सन्ति । विवरण-प्रस्थाने जीवः प्रतिबिम्बसमः तथा ईश्वरः बिम्बसमश्च भवति । अतः तत्वत्पर्यन्तं मुक्तः जीवः ईश्वरसमे अवस्थीयते । भामतीकारः जीवस्य अन्तःकरणावच्छिन्नत्वं स्वीकरोति । अतः मुक्तिदशायां जीवः अनवच्छिन्नसत्वेनावस्थीयते ।

जीवन्मुक्तेः सन्दर्भेऽपि वैभिन्यं वर्तते । 'तस्य तावदेव चिरम्' इति श्रुतिः जीवन्मुक्तिसिद्धान्तं समर्थयति विवरणप्रस्थाने ।

उभयोः प्रस्थानयोः मोक्षस्य एकमात्रसाधनं ज्ञानमेव इति स्वीक्रियते । किन्तु भामत्यनुसारेण 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'[212] इति श्रुतिषु प्रयुक्तं 'विविदिषन्ति पदेन' यज्ञादि कर्मणामुपयोगः विविदिषायाम् एव । प्रकाशात्मयतेः मतानुसारेण यज्ञादिकर्मणामुपयोगः विद्योत्पत्तौ भवति न तु विविदिषोत्पत्तौ ।

## 3-4-0 तृतीयाध्यायस्य सारः समाहारश्च ।

आद्वैतवेदान्ते सत्स्वपि भास्करप्रस्थानादिषु वार्तिकप्रस्थानस्य, भामतीप्रस्थानस्य तथा विवरणप्रस्थानस्य विशिष्टं महत्त्वं वर्तते । यद्यपि मण्डन-मिश्रस्य कथनानां समावेशः भामतीप्रस्थाने संजातः, एवमेव सुरेश्वराचार्येण यद् कथितं तस्य सन्निवेशः विवरणप्रस्थाने द्रष्टुं शक्यते तथापि एतेषाम् आचार्याणां एतैः प्रवर्तितानां सिद्धान्तानां च स्वीयं वैशिष्ट्यं वर्तते । भामतीप्रस्थानस्य आकलनम् एतेषाम् उल्लेखं बिना सम्यग् रूपेण कर्तुं न शक्यते । मण्डनमिश्रसुरेश्वरयोः ऐक्यमस्ति पार्थक्यं वा इत्यस्मिन् विषये अस्माकं मतमेतदस्ति यद् तयोः सिद्धान्तेषु पार्थक्यं दृश्यते ।

---

212- बृ० उ० 4-4-22

वार्तिकप्रस्थानस्यानुसारम् अविवेकस्य ज्ञानाभावरूपस्य अविद्यात्वमस्ति । एवं च अविद्यायाः आश्रयः विषयश्च एकैव । अविद्यायाः द्वैविध्यराहित्यमपि सुरेश्वराचार्येण प्रतिपादितम् । अविद्यागतः यः चिदाभासः स एव ईश्वरः इति । तथा अविद्याकामकर्म च एतानि त्रीणि सृष्टेः बीजानि । सृष्टेः विभागः अव्याकृतावस्था व्याकृतसूक्ष्मावस्था तथा अव्याकृतसूक्ष्मावस्थाः इत्येवं प्रकारेण कर्तुं शक्यते इति सुरेश्वराचार्यः अभिप्रैति । जीवस्याऽऽभासरूपत्वं बन्धस्याविद्याजन्यत्व, कर्मणां विद्यार्थकत्वाभावत्वं तथा ज्ञानकर्मसमुच्चयवादस्य अस्वारस्यम् अपि सुरेश्वराचार्येण प्रतिपादितम् ।

भास्कराचार्येण अपि एकस्य नवीनस्य प्रस्थानस्य उदभावनं कृत्वा भेदाभेदवादस्य प्रवर्तनं कृतम् । भागवत्पादसम्मतम् अविद्याध्यासयोरैक्यं भास्करेण नांगीकृतम् । शंकराचार्यस्य मायावादोऽपि भास्करेण खण्डितः । शंकरस्य विपरीतं भास्कराचार्यः ज्ञानकर्मसमुच्चयवादं समर्थयति । भेदज्ञाननिवृत्तिरेवाविद्यानिवृत्तिः इत्येवं प्रतिपादयः सः सद्योमुक्तिः, क्रममुक्तिः इति मुक्तेः द्वैविध्यं प्रतिपादयति ।

पदमपादाचार्यविरचितः पंचपादिकानामकः ग्रन्थः सम्प्रति चतुःसूत्रीपर्यन्तमेवोपलभ्यते । अस्य ग्रन्थस्य विवरण-नाम्नी टीका प्रकाशात्मयतिना लिखिता । विवरणप्रस्थानानुसारम् अविद्यायाः आश्रयः विषयश्च ब्रह्मैव । मूलाविद्या एकैव । जीवब्रह्मणोः सम्बन्धविषये विवरणानुयायिनः प्रतिबिम्बवादं स्वीकुर्वन्ति । कर्मणां विद्यार्थत्वमस्ति तथा श्रवणमनननिदिध्यासनेषु श्रवणस्यांगित्वम् अन्येषां च अंगत्वमस्तीति विवरणपन्थिनः अभिप्रयन्ति । जीवस्य ब्रह्मप्रतिबिम्बत्वम् निरूपयता विवरणकारेण एतदुक्तं यत् ब्रह्म एवाविद्याप्रतिबिम्बितम् इति ।

उपर्युक्तप्रकारेण सुरेश्वराचार्यभास्कराचार्य पदमपाद-प्रकाशात्मयति-प्रभृतिभिः ये सिद्धान्ताः वेदान्तनये प्रवर्तिताः, तेषां निराकरणं भामतीप्रस्थाने सम्यक्रूपेण दृश्यते । अस्मिन् अध्याये यत्र-यत्र उपर्युक्तानाम्आचार्याणां मतानि उल्लिखितानि वर्तन्ते, तत्र-तत्र वाचस्पतिमिश्रस्य मतमपि निरूपितं वर्तते । आभासवाद अवच्छेदवादयोः तथा प्रतिबिम्बवाद-अवच्छेदवादयोर्मध्ये यः भेदः वर्तते तस्यापि उल्लेखः अस्मिन् अध्याये यथास्थानं द्रष्टुं शक्यते । अस्मिन् सन्दर्भे अस्माकम् अयं विचारः अस्ति यत् आभासवादस्य प्रतिबिम्बवादस्य च तुलनायाम् अवच्छेदवादः एव समीचीनः इति । अस्य विचारस्य पुष्टिः अस्मिन् अध्याये कृतेन तुलनात्मकेन समीक्षणेन संजायते इति अत्र सुधियः एव प्रमाणम् ।

# चतुर्थोऽध्याय:

## भामती प्रस्थानस्य स्वरूपपरिचय:, अन्यप्रस्थानानां सन्दर्भे भामतीप्रस्थान प्रतिपादितानां प्रमुख सिद्धान्तानां तुलनात्मकं समीक्षणम्

### 4·1·0· भामती प्रस्थानप्रवर्त्तकस्य वाचस्पतिमिश्रस्य जीवनं कृतयश्च

यथाह्येषां भामतीयदार्शनिकानाम् ऐतिहासिकपरिचयपरकविवरणानां सम्यक्तया अनुपलभ्यमानत्वात् संजायते विवाद: तेषां जन्मकालजन्मस्थान प्रभृतिषु विषयेषु, तथैवास्ति स्थिति: सर्वतन्त्रस्वतन्त्रस्य श्रीमतो वाचस्पतिमिश्रस्य जीवितविषयेऽपि । तथापि यत् किंचित् प्रमाणजातं, बाह्यं वा आभ्यन्तरं वा समुपलभ्यमस्ति सम्प्रति तदाश्रित्य तस्य महतो दार्शनिकस्य जीवनं साररूपेणात्र वर्ण्यते ।

### 4·1·1· वाचस्पते: जन्मस्थानम्

वाचस्पतिमिश्रस्य जन्मस्थानं मिथिला आसीत् इति नात्र विवाद: । तत्र मधुवणीव्याख्यया सम्प्रति प्रथिते मण्डले 'अन्हराढाठी' इत्यस्मिन् ग्रामे तस्य जन्म अभवत् । केषांचिन्मतानुसारं तस्य जन्म 'भण्डारसम' इति नाम्नि ग्रामे समभवत् । महामहोपाध्याय: पण्डितपरमेश्वरमहाभाग: तथा कवीश्वरचन्दा झा प्रभृत्तय: वाचस्पते: ग्रामस्य नाम 'भामा' इति वदन्ति । अस्य मतस्य आधार: संभवत: वाचस्पते: पत्न्या: नाम आसीत् । वाचस्पते: पत्नी 'भामती' आसीत् इति तु सुप्रसिद्धमेव ।

डा० गंगानाथ झा – प्रभृतीनां विदुषां मतानुसारं वाचस्पतिमिश्रस्य जन्मस्थानं 'अन्हराढाठी' एवासीत् तथा तत्रैव भगवत: शंकराचार्यस्यापि आगमनम् अभूत् । तदानीं असौ ग्राम: 'नृग' – नाम्ना प्रसिद्धस्य कस्याचित् अन्धस्य राज्ञ: राजधानी

आसीत । "नृणा गच्छतीति नृग:" अर्थात नरयानम् आरूह्य नरान् वा आश्रित्य चलतीति नृग: । संभवत: उपचारवशात् जनै: स राजा 'नृग:' इति संबोध्यते स्म जतु 'अन्ध:' इति 'अन्हराठादी' इत्यस्य शब्दस्य संकृतरूपमपि अन्धराजधानीत्येवं प्रकारेण आसीत् । संप्रति असौ ग्राम: ठादी इत्येवं लघुनाम्ना व्यपदिश्यते ।

भामत्यां वाचस्पतिमिश्रेण राज्ञ: नृगस्य उल्लेख: कृत: - "न वाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणां अन्येषां मनसाऽपि दुष्कराणि नरेश्वरणाम्" इति । न्यायवार्तिकतात्पर्यटीकायामपि एतत् लिखितं वर्तते यत् राज्ञ: नृगस्य दर्शनाय पुरवासिन्य: नार्य: अतीवोत्कण्ठिता: अभवन् । तथा हि - 'यदा हि नगरघोषित: कुतूहलात् प्राणिहितमनसो विकसितनिस्पन्दनयनोत्पला: सौधमालागवाक्षकै: अवनिपतिं सवल्वाहम् अतिचिरप्रेषितं परावृत्तं गोपुरेण निर्विशमानं आलोकयन्तीति' ।

यद्यपि पुरातत्त्वशोधकै: राज्ञ: नृगस्य राजधानी नेपालक्षेत्रे आसीत इत्यपि कथ्यते, तथापि एतदपि स्मर्तव्यं भवति यत् बाणस्य दण्डिन: च काले नेपालदेश: भारतीयक्षेत्रात् पृथक् न परिगण्यते स्म । एवं च मधुबनी मण्डलस्य - नेपाल देशेन सह एतादृशं सामीप्यं अस्ति, येन उभयोरेकैनैव नाम्ना उल्लेखो भवतिस्म इति भग्नावशेष: अपि सिद्ध्यति । अत एव 'अन्हाराठादी' ग्रामस्य अवस्थिति: मिथिलायामेव आसीत् इति स्वीकरणीयमेव । अम्बिकादत्त व्यासमहोदयेनापि 'सामवत्' - नाटकस्य प्रस्तावनायां वाचस्पते: जन्मभूमि: मिथिला आसीत् इति निम्नलिखित-सूत्रधारवचनेन प्रतिपादितम् - तथाहि "सूत्राधार: - सेयं मिथिला - वाचस्पतिना तुल्यो वाचस्पतिपण्डितो यत्र । जात: शास्त्रपयोधौ निष्णातोधीरधौरेय:" ।

## 4·1·2· वाचस्पतिमिश्रस्य गुरुपरम्परा

वाचस्पतिमिश्रस्य जीवनविषये बाह्यसादृश्येण अधिकं विवरणं नोपलभ्यते । तस्य ग्रन्थानधीत्य अथवा जनश्रुतिम् आश्रित्य यत् किमपि ज्ञायते तदनुसारमेव विद्वद्भि: तस्य विषये किमपि उच्यते । न्यायवार्तिकतात्पर्यटीकायां तेन लिखितम् -

"त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः ।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्" इति ।

प्रमाणमीमांसायां हेमचन्द्रेण "त्रिलोचनः" वाचस्पतेः गुरुः आसीत् इति उक्तम् । अपरं च बौद्धेन विदुषा रत्नकीर्तिना स्वकीये 'अपोहसिद्धान्त' - नाम्नि ग्रन्थे त्रिलोचनस्य मतानि उद्धृत्य तेषां खण्डनं कृतं । वाचस्पतिमिश्रेण त्रिलोचनस्य सकाशात् मीमांसादर्शनस्य अध्ययनं कृतं आसीत् इत्यपि प्रथितमस्ति ।

वाचस्पति - जयन्तयोर्मध्ये कः ज्यायान् कः अन्यस्य गुरुः ? केन कस्मादधीतम् इत्येतेषु विषयेषु अस्ति तावत् महान् मतभेदः । केचित् कथयन्ति यत् जयन्तभट्टः वाचस्पतेः गुरुः आसीत् । इति । अन्ये कथयन्ति यत् वाचस्पतिमिश्रः जयन्तभट्टस्य गुरुः आसीत् इति । किन्तु संप्रति नैकेषां विदुषां धारणा एषा अस्ति यत् नानयोः एकः अपरस्य गुरुः शिष्यो वा । वस्तुतः उभौ प्रायः समकालिकौ आस्ताम् । तथा च एकस्मिन्नेव मार्गे व्यवहरन्तौ अपि तौ परस्परं अपरिचितौ आस्ताम् ।[1] वेदान्तशास्त्रे वाचास्पतेः गुरुः "मार्ताण्डतिलकस्वामी" आसीत् इति अस्माभिः 'भामती' ग्रन्थे द्रष्टुं शक्यते ।[2] किन्तु 'वेदान्तकल्पतरु' नाम्नि प्रटीकाग्रन्थे 'मार्ताण्डः' तथा 'तिलकस्वामी' इति पृथक्-पृथक् रूपेण द्वौ पुरुषाविव उल्लिखितौ वर्तेते ।[3]

---

1. **"Indian Theory of knowledge based upon Jayantha's Nyayamanjari". Dr. C.D. Bijelwan.**

2. "षडभिरङ्गैरुपेताय विविधैरव्ययैरपि ।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च ।
मार्ताण्डतिलकस्वामिमहागणपतीन्वयम् ।
विश्ववद्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥"

3. "आदित्यस्य सदा पूजा तिलकं स्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात्" इति ।

4·1·3· वाचस्पतिमिश्रस्य समय:

वाचस्पते: जन्माधिकृत्य अनेके मतभेदा: वर्तन्ते । तस्य प्रथमो ग्रन्थ: "न्यायसूचीनिबन्ध: 'अन्तिमश्च 'भामती' इति सर्वै: स्वीक्रियते । न्यायसूचीनिबन्धस्य रचनाकालविषये वाचस्पति: स्वयमेवेदमुद्घोषयति - ""न्यायसूचीनिबन्धो सावकारि सुधियां मुदे श्रीवाचस्पतिमिश्रेण वस्वंकवसुवत्सरे" इति । (वसु:=8, अंक=9, वसु-8) अर्थात् 898 तमे वर्षे वाचस्पतिमिश्र: "न्यायसूची निबन्ध नाम्नो ग्रन्थस्य निर्माणम् अकरोत् । सुप्रसिद्धा: आधुनिका विद्वांस: विन्ध्येश्वरी प्रसाद द्विवेदी-दिनेश शकाब्दशब्दस्य वाचक इति ।

उदयनाचार्येण वाचस्पते: तात्पर्यटीकायां परिशुद्धिर्लिखिता । उदयनेन लक्षणावली-नामा एकोऽपरो पि ग्रन्थो लिखित: । तस्य लेखनकालविषये उदयनोऽपि एवं कथयति -

"तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्तत: । वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्" । अस्य श्लोकस्यानुसारं 906 शकाब्दे उदयनेन 'लक्षणावली' रचिता । किन्तु एवं प्रकारेण तु वाचस्पति - उदयनयो: समये अष्टवर्षाणामेव भेद: दृश्यते । उदयनेन न्यायवार्तिक-तात्पर्यटीकापरिशुद्धि:" नामको यो ग्रन्थो व्यलेखि तस्मिन् ग्रन्थे उदयन: वाचस्पते: पाण्डित्यम् एवं वर्णयति - "मात: सरस्वति ! मुहुर्मुहुरेव नत्वा वद्धाञ्जलि: किमपि विज्ञपयाम्यवेहि । वाक्चेतसोर्मम तथा भव सावधाना, वाचस्पतेर्वचसि न स्खलतो यथैते" ।। ब्रह्मसूत्रस्य शांकरभाष्योपरि वाचस्पतिना 'भामती' व्यलेखि । भमत्या: पुष्पिकायामपि स एवं वदति -

"नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्तुं न च पारयन्ति ।
तस्मिन् महीपे महनीयकीर्तौ श्रीमन्नृगे कारि मया निबन्ध:" इति ।।

एवंप्रकारेण वाचस्पति: राज्ञ: नृगस्य समकालिक आसीत् इति वक्तुं शक्यते ।

शाङ्र्गधरपद्धतौ शाङ्र्गधरेण निर्मितं पद्यमस्मिन् संदर्भे द्रष्टव्यं वर्तते -

(क) "आविन्ध्यादाहिमाद्रेः विरचित विजयः तीर्थयात्रा प्रसंगाद,
उद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कंधरेषु प्रसन्नः ।
आर्यावर्तं यथार्थं पुनरपि कृतवान् म्लेच्छविच्छेदनाभिः,
देवः शाकम्भरीन्द्रो जगति विजयते वीसलः क्षोणिपालः ।।

(ख) ब्रूते संप्रति चाउहानतिलकः शाकंभरी भूपतिः,
श्रीमन्विग्राह राज एष विजयी संतानजानात्मनः ।
अस्मानि करदं व्यधायि हिमवद् विन्ध्यान्तरालं भुवः,
शेषस्वीकरणाय मास्तु भवतामुद्योगशून्यं मनः" ।।

चाउहान क्षत्रिवंशी हम्मीर नामा एकः राजा अभवत् । तस्य सभायां राघवदेवनामा एकः पण्डितः आसीत् । तस्य पुत्रः दामोदर आसीत् । दामोदरस्य पुत्रेण शाङ•र्गधरेण नृगनृपस्य नाम पाषाणपञ्ज भूप प्रसंङ•गे उदधृतम् । हम्मीरस्य समयः 1100 शकाब्दः आसीत् । अतः तस्मात् पूर्वमेव वाचस्पतेः समयःस्यात् ।

ऐतिहासिकदृष्ट्या विक्रमाब्द 1235 वर्षादपि पूर्वं दिल्ली नगरसमीपस्थे, एकस्मिन् स्तम्भे एतद पद्यद्वयमुल्लिखितमासीत् । तत्र च लेखनकालः 1085 शकाब्दः इति अंकितो स्ति । एतेन निश्चेतुं शक्यते यत् वाचस्पतेः जन्मसमयः 1100 शकाब्दानन्तरम् केनापि प्रकारेण भवितुं न शक्नोति ।

प्रबोधचन्द्रोदयनाम्नो नाटकस्य द्वितीयाङ•के श्रीकृष्णमिश्रेण एतदुक्तम् -

"नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनम् ।
तत्त्वं ज्ञातमहो न शालिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता ।
सूक्ष्मा वस्तुविचारणा नृशुभिः स्वस्थैः कथं स्थीयते" ।।

श्रीकृष्णमिश्रः बुन्देलखण्डीयस्य कीर्तिवर्मणः तस्य सेनापतेः गोपालस्य च समकालिकः आसीत्, तयोरुल्लेखः 1042 ई वत्सरे उट्टङि•क्तेएकस्मिन् शिलालेखे उपलभ्यते ।

उदयनाचार्य: लक्षणावल्यां स्वग्रन्थस्य निर्माणकाल: 906 शकाब्दे आसीत् इति प्रतिपादयति । उदयन: वाचस्पते: 'न्यायवार्तिकतात्पर्यटीकोपरि' 'परिशुद्धिम्' अलिखत् । अत: लक्षणा वल्या रचनातिथ्यनुसारमपि वाचस्पते: समय: 906 शकाब्दात् पूर्वम् एव आसीदिति सिध्यति ।

किन्तु केषाञ्चिन्मतमेतदस्ति यत् -"वाचस्पत्युक्त: 898 संख्यक: वत्सर: विक्रमाब्दो स्ति न तु शकाब्द: । उदयनाचार्यस्य अन्या उक्तयो पि एवं प्रमाणयन्ति यत् तेन त्रिलोचनस्य वाचस्पतेश्च मृत्योरनन्तरं स्वग्रन्था लिखिता: । अत: वाचस्पते: समय: 841 क्रैस्त्वो वत्सरो स्ति इति । यन्तु पाश्चात्यै: मैकडोनाल्ड प्रभृतिभि: विद्वद्भि: एवं कथ्यते यत् वाचस्पति: भोजराजसमकालिक: आसीदिति तन्न प्रामाणिकम् ।

4·2·0· वाचस्पतिमिश्रस्य ग्रन्था:

4·2·1· न्यायकणिका -

वाचस्पते: प्रथमा कृति: अस्ति 'न्यायकणिका' । न्यायकणिका टीकाग्रन्थो वर्तते । मण्डनमिश्र: मीमांसाशास्त्रे 'भावना विवेक:, 'विधिविवेक:' 'विभ्रमविवेक:' 'मीमांसानुक्रमण च इत्येमान् ग्रन्थान् अरचयत् । तेषु य: विधिविवेकनामा ग्रन्थो स्ति, तस्यैव टीका भवति 'न्यायकणिका' । वाचस्पते: अन्येषां ग्रन्थानां नामानि न्यायकणिकायां न दृश्यन्ते, अत: अनुमीयते यत् वाचस्पते: प्रथमा कृतिर्भवति 'न्यायकणिका' ।[4] न्यायकणिकायां वाचस्पति: मण्डनमिश्रं प्रति विपुलां श्रद्धां व्यनक्ति । तद्यथा -

---

4· न्यायकणिकाया: प्रथमप्रकाशनं तु 1864 तामे क्रैस्त्वे वर्षे काशी मेडिकलहाल यन्त्रालये एव अभवत्
असौ ग्रन्थ: काश्या: प्रकाशितायां 'पण्डित पत्रिकायां' टिप्पण्या सह मुद्रितो भवत्" ।।

"आचार्यकृतिनिवेशनमप्यवधूतम् वचोऽस्मदादीनाम् ।
रथ्योदकमिव गंगाप्रवाहपातः पवित्रयति ।। इति ।

वाचस्पतिः न्यायकणिकायां प्रभाकरान् द्विधा विभक्तवान् । जरत्प्रभाकराः, नव्यप्रभाकरश्चेति । मीमांसायाः नैके सिद्धान्ता अत्र सुविशदीकृता वाचस्पतिमिश्रेण ।

4.2.2. ब्रह्मतत्वसमीक्षा

न्यायकणिकायाः लेखनानन्तरं वाचस्पतिः मण्डनमिश्रस्य 'ब्रह्मसिद्धिम्' आश्रित्य तद्व्याख्यानत्वेन 'ब्रह्मतत्व समीक्षाम्' अरचयत् । किन्तु अयं ग्रन्थः अद्यत्वे नोपलभ्यते ।

4.2.3. तत्वबिन्दुः

भाट्टमतमनुसृत्य रचितेऽस्मिन् ग्रन्थे शाब्दबोधप्रक्रिया मौलिकरूपेण प्रतिपादितास्ति वाचस्पतिमिश्रेण । श्री विन्ध्येश्वरी प्रसादाद्विवेदी न्यायवार्तिकस्य भूमिकायां तत्वबिन्दोः एकस्याः विस्तृतायां व्याख्यायाः उल्लेखं कृतवान् । न्यायवार्तिकतात्पर्यटीकाग्रन्थेऽपि वाचस्पतिना 'तत्वसमीक्षा' 'तत्वबिन्दुः' त्यनयो ग्रन्थयोः उल्लेखः कृतः । अतः अनयोरनन्तरमेव "न्यायवार्तिकतात्पर्यटीकायाः' रचना सजाता इति निश्चेतुं शक्यते ।

4.2.4. न्यायवार्तिकतात्पर्यटीका

वाचस्पतिः त्रिलोचनगुरोः सकाशात् अधीत्य उद्योतकरस्य न्यायवार्तिकमवलम्ब्य "न्यायवार्तिकतात्पर्यटीकाम् विरचितवान् । "न्यायवार्तिकतात्पर्यटीकायाः पुष्पिकायां यथा लिखितं वाचस्पतिमिश्रेण -

'यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्योतकरगवीनामतिजरतीनाम् समुद्धरणात्" इति ।।

तेनेदं ज्ञायते यत् बौद्धै: ये आक्षेपा: न्यायवार्तिके कृता:, तेषां परिहाराय वाचस्पतिना 'तात्पर्यटीका' लिखिता ।

4·2·5· न्यायसूचीनिबन्ध:

न्यायशास्त्रे वाचस्पते: द्वितीयो ग्रन्थोऽस्ति 'न्यायसूचीनिबन्ध:' । अस्य ग्रन्थस्य रचना तात्पर्यटीकाया: पूर्वमभवत् पश्चात् वा ? अस्मिन् विषये सत्यपि यद्किन्चिद वैमत्ये एतन्निश्चितं वर्तते यत् उभयोरनयो: ग्रन्थयोर्लेखनस्य मध्ये नासीद् अत्यस्य ग्रन्थस्यान्तराल: न्यायसूचीनिबन्धस्य, तात्पर्यटीकायाश्च मंगलश्लोकयो: समानत्वं दृश्यते । तद्यथा -

"नमामि धर्माविज्ञान वैराग्यैश्वर्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तापिने ।।"

द्वयोरेव ग्रन्थयोर्लेखनप्रयोजनमपि समानमेव प्रदर्शितं वाचस्पतिना । तद्यथा -

(क) "यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
श्रीगौतमसुगवीनामतिजरतीनां समुद्धरणात् " ।। (न्यायसूचीनिबन्ध:)

(ख) "यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात्" ।।(न्या·वा·ता·टीका)

न्याय सूचीनिबन्धे पन्चाध्याया: वर्तन्ते । प्रत्येकमध्याये आह्निकद्वयं वर्तते । विषयानुसारेण आह्निकानां विभाजनं प्रकरणेषु वर्तते । यथा प्रथमाध्यायस्य प्रथमाह्निके सप्तप्रकरणानि सन्ति । प्रथमाध्यायस्य द्वितीयाह्निके चत्वारि प्रकरणानि सन्ति । एवं प्रकारेण एकषष्ठिसूत्रमितस्य प्रथमाध्यायस्य आह्निकद्वयम् एकादशप्रकरणेषु विभक्तंवर्तते । द्वितीयाध्याये 137 सूत्राणि तथा 13 प्रकरणानि वर्तन्ते । तृतीयाध्याये 16 प्रकरणानि 145 सूत्राणि सन्ति । चतुर्थाध्याये 20 प्रकरणानि 113 सूत्राणि सन्ति । पंचमाध्याये 24 प्रकरणानि 67 सूत्राणि च सन्ति ।

वाचस्पति: न्यायसूचीनिबन्धस्य पुष्पिकायां लिखति यत् तेन वस्वंकवसुवत्सरे

अस्य ग्रन्थस्य रचनाकृता । ग्रन्थस्य अन्ते तेन स्वयमेतदभ्युक्तम् यत् अत्र आहत्य अध्याय:, 10 आहन्किानि, 84 प्रकरणानि 528 सूत्राणि, 1966 पदानि तथा 8885 अक्षराणि च सन्ति इति ।

4.2.6 साङ्ख्यतत्त्वकौमुदी

वाचस्पतिमिश्रस्य 'साङ्ख्यतत्त्वकौमुदी' सुप्रसिद्धवर्तते । अस्मिन् ग्रन्थे वाचस्पतिना उक्तम् - यत् "सर्वं चैतद् अस्माभि: न्यायवार्तिकतात्पर्यटीकायां व्युत्पादितम्" एतेन इदं सिध्यति यत् न्यायग्रन्थानां निर्माणानन्तरमेव वाचस्पतिना साङ्ख्यतत्त्वकौमुद्या रचना कृता इति ।। आनुश्रविकप्रमाणविवरणादि प्रसङ्गेषु वाचस्पति: यां स्वीयां सहजां शैलीं दर्शयति, तत्रापि स स्वीयं नैय्यायिकत्वं न जहाति । तथाहि - "गुरुपाठात् अनुश्रूयते इति आनुश्रवो वेद:, एतदुक्तं भवति - श्रूयत एव परं न केनापि क्रियते इति । तत्र भव: आनुश्रविक: इति । तत्र प्राप्तोज्ञात इति यावत् । आनुश्रविको पि कर्मकलापो दृष्टेन तुल्यो वर्तते । ऐकान्तिक - आत्यन्तिक दु:ख-प्रतीकारणामुपायत्वस्य उभयत्रापि तुलयत्वात्" इति । साङ्ख्यमत प्रतिपादनवेलाया-मपि वाचस्पति: सन्दर्भानुसारं अन्यांयपि मतानि निदर्शयति । साङ्ख्यतत्त्वकौमुद्या: अनेका: व्याख्या: सन्ति । तासु बलरामोदासीनकृता एका अद्यतनी व्याख्या अपि वर्तते ।

4.2.7. तत्त्ववैशारदी

वाचस्पति: योगशास्त्रे व्यासभाष्योपरि 'तत्त्ववैशारदीम्' अरचयत् । विज्ञानभिक्षु: तत्त्ववैशारद्यां 'योगवार्तिकं' रचितवान् ।

4.2.8. न्यायसूत्रोद्धार:

केषाञ्चित् विदुषां मतानुसारं वाचस्पतिना 'न्यायसूत्रोद्धार:' इति नाम्ना प्रार्थितस्य ग्रन्थस्यापि रचना कृता ।[5] किन्तु अन्येषां केषाञ्चित् मतमिदमस्ति यत्

---

5. A Companian to Wanskrit Literature, P. 103

न्यायसूत्रोद्धारस्य रचयिता पंचदश ख्रिस्ताब्दे लब्धजन्मा द्वितीय वाचस्पतिमिश्र: आसीत् नतु नवमशताब्दीक: भामतीकार: प्रथमो वाचस्पतिमिश्र:[6]। अस्य कारणमेवदप्यस्ति यत् 'न्यायसूचीनिबन्धे न्यायसूत्राणां संख्या 528 वर्तते, किन्तु न्यायसूत्रोद्धारे तेषां संख्या 531 अस्ति। यदि एकेनैवाचार्येण उभयोर्ग्रन्थयोनिर्माणं कृतं स्यात्, तर्हि कथमेतादृशं वैषम्यं समुपलभ्येत ? एवं प्रकारेणएतद सिध्यति यत् द्वितीय एवं वाचस्पति: न्यायसूत्रोद्धारस्य रचयिता आसीत् इति।[7]

4·2·9· भामती

वाचस्पतिमिश्रस्य अन्तिमा कृतिर्भवति 'भामती'। ब्रह्मसूत्रमवलम्ब्य भगवत्पादेन शंकराचार्येण रचितस्य शारीरकभाष्यस्य टीकात्वेन भासते 'भामती' ग्रन्थो वाचस्पतिमिश्रस्य। वाचस्पतिमिश्रेण भामत्यां: आरंभे एतत् स्पष्टीकृतं यत् भामतीग्रन्थस्यमाध्यमेन स: भाष्ये प्रवेशं करोति। एकां जनश्रुतिम् अवलम्ब्य इदं कथ्यते यत् भगवत्पादेन शंकराचार्येण वाचस्पते: पत्न्या: भामत्यां: साहाय्येन स्वयमेव निवेदित: आचार्य: वाचस्पतिमिश्र: शारीरकभाष्ये भामतीटीका रचयितुम्। यद्यपि भामती एकाटीका विद्यते, तथापि एषा कृति: वेदान्तशास्त्रपरम्परायाम् एकस्य महत: प्रस्थानस्य जननी संजाता। यत: वाचस्पतिमिश्रेण अत्र भगवत्पादशंकरादपि पूर्ववार्तिनाम् आचार्याणां मतानि साररूपेण निबद्धानि। अस्य ग्रन्थस्य महत्व अनेन प्रकारेणापि सिद्ध्यति यत् कालान्तरे सनम् आश्रित्य महतो विशिष्टस्य वेदान्तग्रन्थजातस्य निर्माणम् अभूत्। अनुभवानन्दस्य शिष्य: अमलानन्द: 'वेदान्तकल्पतरु-नामकं टीकाग्रन्थं 1247-1260 क्रैस्तवशताब्दावधौ रचितवान्। अप्पय्यादीक्षितेन वेदान्तकल्पतरुपरिमल - नामक: टीकाग्रन्थ: षोडशे क्रैस्तवीदे शताब्दे रचित:। लक्ष्मीनृसिंह: ( कौण्डभट्टस्य पुत्र:, तथा रंगोजीभट्टस्य पौत्र:) 'आभोग' रचितवान वेदान्तकल्पतरुपरिमलेन सह क्वचित - क्वचित् आभोगस्य साम्यमस्ति क्वचित्-क्वचित्

------------

6· फणिभूषणतर्कवागीशप्रभृति विदुषां मतानुसारम्।

7· भारतीय न्यायशास्त्र - डा0 बिजल्वान, हिन्दी संस्थान, लखनऊ, 1983-84

वैषम्यम् च । वैद्यनाथपयगुण्डनाम्ना विदुषा अपि । 'वेदान्तकल्पतरुमंजरी' नामक: टीकाग्रन्थ: व्यरचि । भामत्याम् अन्ये अपि प्रटीकाग्रन्था: वर्तन्ते यथा अल्लालरचित: टीकाग्रन्थ:, भामतीतिलक: । अमलानन्देन कल्पतरोतिरिक्त 'शास्त्रदर्पणम्' इत्याख्यया एको न्य: ग्रन्थो पि रचित: । आनन्दगिरे: शिष्येण अखण्डानन्देन ग्रन्थो अपि. । 350 क्रैस्तवीय शताब्दे भामतीमवलम्ब्य 'ऋजुप्रकाशिका' नामक: प्रटीकाग्रन्थो व्यलेखि । एवं प्रकारेण वाचस्पतेरयं ग्रन्थ: न केवल टीकाग्रन्थ:, अपितु 'भामती' नाम्ना एकस्य महत: प्रस्थानस्य आधार: अपि संजात: । वस्तुत: भामतीग्रन्थस्य पुष्पिकायां वाचस्पतिमिश्रेण यत् लिखितं तत्सर्वं निश्चितरूपेण सत्यं वर्तते तद्यथा –

(क) "भक्त्वा वाद्यसुरेन्द्र वृन्दमखिलाविद्योपधानातिगम्,
येनाम्नाय पयोनिर्धेर्नयपथा ब्रह्मामृतं प्राप्यते।
सो यं शाङ्करभाष्यजातविषयो वाचस्पते: सादरम्,
सन्दर्भ: परिभाष्यतां सुमतय: स्वार्थैष्को मत्सर: ।।

(ख) अज्ञानसागरं तीर्त्वा ब्रह्मतत्त्वमभीप्सताम् ।
नीतिनौकर्णधारेण मया पूरि मनोरथ: ।।
यन्न्यायसांख्ययोजानां वेदान्तानां निबन्धनै:।

(ग) समचैषं सुमहेत्पुण्यं तत्फलं पुष्कलं ।
समर्पितमथैतेन प्रीयतां परमेश्वर: ।।

(घ) नृपान्तराणां मनसाप्यगम्यं भ्रूक्षेपमात्रेण चकारकीर्तिम् ।
कार्तस्वरासारसुपूरितार्थसार्थ: स्वयं शास्त्रविचक्षणश्च । ।

(ङ) नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्तुं नचपारयन्ति ।
तस्मिन्महीपे महनीयकीर्तौ श्रीन्नृगे कारि मया निबन्ध: ।।

4·3·0· वाचस्पतिनामधारिणो विद्वांस:

भारतीयदार्शनिकपरम्परायाम् अनेके विद्वांस: 'वाचस्पति:' - इति नाम्ना प्रख्याता: अभवन् । तेषु भामतीकार: दार्शनिक: वाचस्पतिमिश्र: क: आसीत् ? इत्येतद् अपि विचारणीयं वर्तते ।

'वाचस्पति' इति नाम्ना प्रख्यातानां सुप्रसिद्धविदुषां संख्या सप्त अस्ति । तेषु येन भामतीग्रन्थो लिखित:, स: सर्वप्रथम: वाचस्पतिमिश्र: आसीत् । तेन एव 'न्यायकणिका' 'ब्रह्मतत्त्वसमीक्षा' 'तत्त्वबिन्दु:' 'न्यायवार्तिकतात्पर्यटीका' 'सांख्यतत्त्वकौमुदी' तथा 'तत्त्ववैशादी' इत्येते सुप्रसिद्धा: ग्रन्था: लिखिता: । स एस भामतीकार: मिथिलायां 'ठाढी' इति ग्रामे लब्धजन्मा 'नृग' नाम्नो राज्ञ: काले वर्तमान: नवमशताब्दीक: वाचस्पतिमिश्र एव 'वृद्धवाचस्पति:' इत्येवं रूपेणापि अभिधीयते ।सएव अस्माकम् अभिप्रेत: सर्वतन्त्रस्वतन्त्र: सर्वप्रथमो वाचस्पति: । द्वितीयो वाचस्पतिमिश्र: स: आसीत्, येन 'न्यायतत्त्वालोक:' तथा 'न्यायसूत्रोद्धार:' इत्येतौ ग्रन्थौ लिखितौ । अस्य जन्म 15 ख्रिस्तीय शताब्द्याम्अभवत् । तृतीयो वाचस्पतिमिश्र: स्मार्तवाचस्पति: इति रूपेण विख्यात: शंकरामिश्रस्य समकालिक: आसीत् । शंकरमिश्रस्य लेखनकाल: 1462 ख्रीष्टाब्द आसीत् । अत: तृतीयो वाचस्पतिरपि 15 ख्रीष्टीय शतके जन्म लेभे इति निश्चेतुं शक्यते । अनेन मुख्यत: धर्मशास्त्रसम्बन्धिनो ग्रन्था: विरचिता:, तेषु 'विवादचिन्तामणि:' 'श्राद्धचिन्तामणि:' 'नीतिचिन्तामणि:' 'विवादनिर्णय:' 'शुद्धिनिर्णय:' 'शब्दनिर्णय:' इत्यादि ग्रन्था: प्रसिद्धा: सन्ति । तेन न्यायशास्त्रे 'अनुमानखण्डटीका' अपि लिखिता, तमेवाश्रित्य मिथिलायामियं जनश्रुति: प्रचलिता वर्तते -

"शङ्करवाचस्पत्यौ शङ्करवाचस्पतिसदृशौ ।
पक्षधर प्रतिपक्षी लक्ष्यीभूतो न क्वापि ।।"

तेनैवमिथिलाया: महाराजस्य भैरवेन्द्रदेवस्य, पत्न्या: आज्ञाम् अनुसृत्य 'द्वैतनिर्णय-नामक: स्मृतिग्रन्थो विरचित: । तथाहि-

सप्तमो वाचस्पति: रुद्रनाथवाचस्पति: आसीत् । अस्य निवासस्थानं नवद्वीपे आसीत् । विद्यानिवासभट्टाचार्यस्य द्वयो: पुत्रयो: एक: न्यायवाचस्पति: अपरश्च विश्वनाथ - पंचानन: आसीत् । विश्वनाथ पंचाननेन 'न्यायसूत्रवृत्ते: 1634 क्रिस्तीयाब्द: निर्दिष्ट: । अत: एतत् सिध्यति यत् सप्तमस्य वाचस्पते: जीवनकाल: सप्तदश शताब्दया: पूर्वभाग: आसीत् । एतेन महाभागेन 'तत्वचिन्तामणिदीधीति-परीक्षा' किरणावलीप्रकाशविवृत्तिपरीक्षा' 'पदार्थखण्डनव्याख्याप्रभृति ग्रन्था: रचिता:। अस्य साहित्यिककृतिषु भ्रमरदूतम्, वृन्दावनविनोदकाव्यम्' तथा भावविलास: इत्यादीनां परिगणना भवति ।

एवं प्रकारेण यद्यपि वाचस्पति नामधारिणां विदुषां परम्परा नवम क्रैस्तव शताब्दीत आरभ्य सप्तदश क्रैस्तव शताब्दीपर्यन्तं प्रचलति, तथापि सर्वप्रथम: वाचस्पति: भामतीकार: एव आसीत् । स च नवम क्रैस्तवशताब्दयां जन्म लेभे इति विद्वांस: स्वीकुर्वन्ति ।[9]

4·4·0· भामत्या: व्याख्यापरिवार:

भामती आचार्य वाचस्पतिमिश्रस्य अष्टमा कृति भवति । इयं शांकरभाष्यस्य टीकारूपेण प्रथिता वर्तते । वाचस्पतिना अनेके ग्रन्था: लिखिता: । तेषु ग्रन्थेषु चन्तिमो ग्रन्थो ऽस्ति भामती । भामत्या: आरम्भे 'आचार्यकृतिनिवेशनम्'[10] इत्युक्त्वा वाचस्पति: शंकराचार्य प्रति श्रद्धां व्यनक्ति ।

ब्रह्मसूत्रशांकरभाष्यस्य टीका प्रटीकानां मध्ये 'भामती' उत्कृष्टा सर्वमान्या च भवति । भामतीग्रन्थस्य पठनात् अस्माभि: ज्ञातुं शक्यते यत् अस्यां स: अविद्याया: जीवणितत्व' कल्पयित्वा मण्डनसिद्धान्त परिपोषयति । मण्डनमिश्रस्य अभिप्रायाणां ज्ञानायापि भामतीप्रस्थानम् अतीवमहत्वपूर्णं विद्यते । शंकरविचारधारायां मण्डनप्रस्थानं मिश्रीकृत्य वाचस्पतिमिश्रेण ये विचारा: प्रस्तुता:, ते भामतीप्रस्थानादतिरिक्तं कुत्राप्यन्यत्र नोपलभ्यते ।

---

9. **History of Indian Logic.**, S.C. Vidyabhushan.

10. भामती मंगलश्लोक:

पंचपादिकायामनुपलभ्यया: अनेके विषया: अपि भामत्याम् विश्लेषिता: वर्तन्ते । भामत्या: प्रभाविता: नैके विद्वांस: स्वव्याख्योपव्याख्यानै: भामतीमलंचक्रिरे । भामतीप्रस्थानस्यारम्भकाले भास्करप्रस्थानस्य प्रचार: आसीत् । वाचस्पतिमिश्रेण भास्करोत्थापिता: दोषा: निराकृता: एवं च भेदाभेदवादे अपि ये दोषा: आसन् तेषां समुद्घाटनं कृतम् । एवं प्रकारेण एतत् सिद्धयति यत् वाचस्पतिमिश्रात् पूर्वं भास्करमतम् अतीव प्रभावि आसीत् । तथा भास्करमतस्य सम्यगवबोधायापि भामती-प्रस्थानस्य अतीवमहत्त्वं विद्यते ।

वाचस्पतिना वैशेषिकदर्शनमतिरिच्य अन्येषु सर्वेषु आस्तिकदर्शनेषु ग्रन्था: लिखिता: तद्यथा -

1) न्यायवार्तिकतात्पर्यटीका (न्यायशास्त्रे)
2) तत्त्ववैशारदी (योगशास्त्रे)
3) सांख्यतत्त्वकौमुदी (सांख्यशास्त्रे)
4) न्यायकणिका (मीमांसा शास्त्रे)
5) ब्रह्मतत्त्वसमीक्षा (वेदान्तशास्त्रे)
6) भामती (ब्रह्मसूत्र भाष्यटीका)
7) न्यायसूचीनिबन्ध: (न्यायशास्त्रे)
8) तत्त्वबिन्दु:

अद्यावधि ब्रह्मतत्त्वसमीक्षानामक: ग्रन्थो नोपलभ्यते । अत: वाचस्पते: भामती नामक एक एव ग्रन्थ: अद्वैतवेदान्तविषयक: उपलभ्येत । केषाञ्चित् मते तत्त्वबिन्दुरपि वेदान्तविषयक: ग्रन्थ: अस्ति । किन्तु अस्मिन् विषये विदुषां मतभेद: वर्तते । भामत्या: पुष्पिकायां वाचस्पतिना स्वीयग्रन्थानां गणना कृता तथा एतदप्युक्तं यत् भामती नामको ग्रन्थ: तेन राज्ञ: नृगस्य शासनकाले रचित: इति । किन्तु नृगनामा राजा कुत्र कदा अभवत् इत्यस्मिन् विषये प्रामाणिकरूपेण किमपि न ज्ञायते ।

भामत्या: विचारधाराम् आश्रित्य ये ग्रन्था: प्रवर्तिता: अभवन्, तेषां संख्या पि अल्पीयसी नास्ति । तद्यथा -

1). वेदान्तकल्पतरू : - अनुभवानन्दस्य शिष्येण अमलानन्देन (क्रै० 1274-1260) उक्त: ।

2) वेदान्तकल्पतरूपरिमल: अप्पय्यदीक्षितेन (क्रै० 1600) रचित: ।

3) आभाग: लक्ष्मीनृसिंहेण (क्रैस्तव 1700) रचित:, लक्ष्मीनृसिंह: कोण्भट्टस्य पुत्र: रंगोजिभट्टस्य पौत्र: आसीत्) ।

4) वेदान्तकल्पतरूमंजरी - (वैद्यनाथगैगुण्ठेन रचिता)

5) भामतीतिलकम् - अल्लालेन रचित: ग्रन्थ:

6) शास्त्रदर्पणम् - अमलानन्देन रचितम् ।

7) ऋजुप्रकाशिका - अखण्डानन्देन रचिता ।

एतेषु व्याख्याग्रन्थेषु भामत्या: य: प्रभाव: दृश्यते तस्योल्लेख: सप्तमाध्याये दष्टव्य: ।

4·4·0· <u>भामती प्रस्थाने प्रतिपादिता: प्रमुखा: विषया:</u>

4·4·1· <u>ब्रह्मजिज्ञासाया: अनादित्वम्</u>

ऋग्वेदे परमतत्वचिन्तनसम्बद्धानि यानि सूक्तानि सन्ति तेषु नासदीयसूक्तस्यान्यतमं स्थानं विद्यते । तत्र नैकेषु मन्त्रेषु जिज्ञासाया: एवाधिक्यं वर्तते नतु निश्चितसिद्धान्तानाम् । तद्यथा -

'कोऽद्धा वेद क इह प्रवोचत्
कुत अजात कुत इयं विसृष्टि: ।
अर्वाग् देवा अस्य विसर्जनेन,
अथा को वेद यत आ बभूव ।।[1]

---------

1· ऋग्वेद - 10 सं0 10/129

एतादृशी जिज्ञासा चिन्तनधाराद्वये परिणता भूत्। प्रथमचिन्तनधारायाः लक्ष्यं बाह्यजगतः मूलकारणस्य अन्वेषणमासीत् तथा अपरायाः चिन्तनधारायाः लक्ष्यमात्मनः स्वरूपनिर्धारणमासीत्। व्यक्तेः माध्यमेन जगतः ज्ञानस्य प्रयासः पुरुषसूक्ते दृश्यते। अस्याः धारणायाः परिणामस्वरूपं व्यक्तेः विश्वस्य चो नवः एकस्मादेव मूलात् अभवत् इति अस्य भावस्य विकासः संजातः। तद्यथा -

'अदितिर्द्यौरदितिरन्तरिक्षम्' यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा। यो देवानां नामधा - एक एव तं संप्रश्नं भुवना यन्त्यन्या।[12] किंच भामत्यां - 'शरीरपरिमाणत्वे ह्यात्मनो कृत्स्नत्वं परिच्छिन्नत्वम्। तथा चानित्यत्वम्। ये हि परिच्छिन्नास्ते। सर्वे नित्या यथा घटादयस्तथाचात्मेति"।[13]

अभिव्यक्तीनामसंख्यत्वे पि तत्त्व एकमेव वर्तते इत्यपि ऋग्वेदसंहितायां दृश्यते। तथाहि - 'इन्द्रं मित्रं वरुणमग्निमाहुः अथो दिव्यः स सुपर्णो गुरुत्मान। एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।[14] ब्राह्मणग्रन्थेषु आरण्यक-साहित्ये च अस्याः विकासः दृश्यते। तद्यथा - 'अहं वेद न मे मृत्युः' (तै०आ० 1·13·1) 'अहं त्वदस्मि मदसि त्वदेतत्' (तै·ब्रा· 1·2·1·20) परमतत्त्वमेकं वर्तते इत्यस्य सिद्धान्तस्य सुस्पष्टं व्याख्यानं बृहदारण्यकोपनिषदि उपलभ्यते। तथाहि-कति देवता · · · · · · एका।

परमतत्त्वसम्बद्धायाः जिज्ञासायाः परिणामस्वरूपम् उपर्युक्ते चिन्तनधाराद्वये परमतत्त्वस्य 'आत्मन्' तथा 'ब्रह्मन्' इति आख्याद्वयं प्रवृत्तमभवत्। अनयोः आत्मन् शब्दः शरीरस्य श्वासस्य तथा प्राणस्य पर्यायत्वेनापि प्रयुक्तः अभवत् किन्तु चिन्तन-धारायाः विकासे सति आत्मन् शब्दः मनुष्यस्य अन्तःस्थित - चिद्रूपस्य तत्त्वस्य

----------

12· ऋग्वे· 10·82-3

13· भामती - पृ० 562

14· ऋग्वे· सं० 1-164, 46

वाचक: संजात: । तद्यथा -'आत्मा म आत्मनि श्रित:, आत्मा हृदये हृदयं मयि' ।

वाचस्पतिना ब्रह्माजिज्ञास्यं न वा ? इत्यस्मिन् सन्दर्भे यदुक्तं तदपि अवधेयं वर्त्तते । बृहत्वाद् बृंहणत्वात् आत्मैव ब्रह्मेति गीयते । सचायमाकीटपतंगेभ्य: आ च देवर्षिभ्य: प्राणभृन्मात्रस्येदंकारास्पदेत्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन अहमित्यन्दिग्ध पर्यस्तापरोक्षानुभवसिद्धा इति न जिज्ञासास्पदम् । नहि जातु कंचिदत्र सन्दिग्धे 'अहं नाहं वेति नच विपर्यस्यति नाहं वेति पूर्वपक्ष: । "सिद्धान्तस्तु भवेदेनदेवं यद्यहं प्रत्यय: प्रमाणाम् । तस्य तूक्तेन क्रमेण श्रुत्यादि बाधकत्वानुपपत्ते:, श्रुत्यादिभिश्च समस्ततीर्थकरैश्च प्रमाण्यानभ्युपगमादध्यासत्वम् एवं वेदान्ता नाविवक्षितार्था:, नाप्युपचरितार्था:, किन्तूक्तलक्षणा: । प्रत्यगात्मैव तेषां मुख्यो र्थ: ।"[15] तस्य च वक्ष्यमाणेन क्रमेण संदिग्धत्वात् प्रयोजनवत्वाच्च युक्ता जिज्ञासा, इत्याशयवान् सूत्रकारस्तज्जिज्ञासा मसूत्रयत् -'अथातोब्रह्मजिज्ञासेति ।'

4.4.2. भामती प्रस्थानानुसारम् अध्यासस्य स्वरूपम्

अधि उपसर्गपूर्वकाद अस् धातो धम् प्रत्ययेन अध्यास: इति रूपम् सिध्यति । को यमध्यासो नामेति प्रश्ने आचार्य: शंकर: अध्यास भाष्ये कथयति - "स्मृतिरूप: परत्र पूर्वदृष्टावभास: .. स्मृते: रूपमिव रूपमस्य इति स्मृतिरूप: । परत्र अन्यस्मिन् स्वभिन्ने स्वाभाववति च पूर्वदृष्टस्य पूर्वानुभूतस्य अवभासो ज्ञानम् " इति । अत्र दृष्टान्त: 'इदं रजतमिति' । यथा रजतभिन्नायां शुक्तिकायां पूर्वदृष्टस्य रजतस्य अवभासात्मकं ज्ञानं, स्वाभाववति च स्फटिके पूर्वानुभूतस्य लोहितस्य वा ज्ञानम् ।

वाचस्पतेर्मतानुसारं 'अवसन्नो अवमतो वा भासो वभास:' इति । अवभासपदं तु मिथ्याज्ञानसूचकमेव । अवभासस्यार्थस्तु अवसन्न: अवमत: (तिरस्कृत:) भास: = प्रतीति रिति । प्रत्ययान्तरेण पूर्वज्ञानस्य बाध: सम्भवति । अर्थात् मिथ्याज्ञानमेव अध्यास इति अभिधीयते । पूर्वदृष्टपदेन आरोपणीयस्यअनृतवस्तुन: उपस्थापनं क्रियते । 'परत्र' इति पदम् आरोपविषयस्य सत्यत्वं सूचयति । परशब्दो भिन्नार्थक: एव ।

---------

15. भामती , पृ0 । 46

लक्षणे 'स्मृतिरूप:' इति पदम् असन्निनहितविषयतां प्रतिपादयति ।

भामत्यां 'न प्रकाशमानतामात्रं सत्वम् । येन देहेन्द्रियादे: प्रकाशमानतया सद्भावो भवेत् । नहि सर्पादिभावेन रज्वादय: स्फटिकादयो वा रक्तादिगुणयोगिनो: न प्रतिभासन्ते । मरीचिकायां स्थितं तोयं पिपासोपशमाय न प्रवर्तते । यत: मरीचिरूपेण सलिलमवस्तु सत् ।' स्वरूपेण तु परमार्थसदेव । एवं प्रपंचो पि अत्यन्तमसदेव । अत: निरस्तसमस्तसामर्थ्यस्य निस्तत्वस्य कुतो नुभवविषयभाव: कुतो वा चिदात्मन्यारोप: ? अत्यन्तासन्त: शरीरेन्द्रियादय: नानुभवविषया भवितुमर्हन्तीति ।

एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्या प्रत्ययरूप: कर्तृत्वभोक्तृत्वप्रवर्तक: सर्वलोकप्रत्यक्ष: इति अध्यास: सिद्ध: ।

अस्य भाष्यस्य व्याख्यानं वाचस्पति: विस्तरेण करोति । 'तदनेन अन्त:करणावच्छिन्न: प्रत्यगात्मा इदमनिदंरूपश्चेतन: कर्ता भोक्ता, कार्यकारणाविद्याध्याधारो हंकारास्पदं संसारी सर्वानर्थ भाजनं जीवात्मा इतरेतराध्यासोपादान:, तदुपादानश्चाध्यास: इत्यनादित्वादी जाहुरवन्नेतरेतराश्रयत्वमित्युक्तं भवति । एवमयमनादिरनन्त' इत्यादि पदेन सर्वलोक प्रत्यक्षतया अध्यासं द्रढीकरोति ।

वाचस्पति 'मिथ्या प्रत्ययरूप:' इति पदस्यार्थमेवं करोति - ''मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वम् । तदस्य च तथोक्त: । अनिर्वचीनय: इत्यर्थ: ।

4·4·3· अध्यासलक्षणम्

अज्ञानजन्यो ध्यासे एव बन्धो दु:खस्य मूलकारणमिति । अत एव भाष्कार भाष्यारम्भे अध्यासस्वरूपलक्षणं.प्रमाणेरूपपाद्य अन्ते प्रतिपादयति - अस्यानर्थ प्रहाणाय' इत्यादि ।

शांकरवेदान्ते ब्रह्मण: एव सत्यत्वं, जगत: मिथ्यात्वमभ्युपेयते । अहं प्रतीतिश्च बुद्धीन्दियादिदेहादिधर्मविषयकत्वत् अध्यासस्वरूपं अध्यस्यते । धर्माध्यासस्तु - धर्मिणो: तादात्म्याध्यासं बिना न संभवतीत्यत: चिदात्मन:

बुद्ध्यादितादात्म्याध्यासो पि स्वीक्रियते । आत्मानात्मनो: विवेकाग्रह: अध्यासादेव संभवति । शुक्तौ रजताद्भेदाग्रहे एव रजततादात्म्यविभ्रमो भवति । स्मृतिरूप: परत्र पूर्वदृष्टावभासो अध्यास: इति [16] अध्यासस्य लक्षणम् । अधिष्ठानारोपयो: मिथुनीभावं बिना अध्यासो न संभवति । अध्यासाय सजातियस्याऽवभास: आवश्यकएव । स्मृतिरूपमित्यस्य स्मृते: रूपमिव रूपस्येति व्युत्पत्तिसिद्केन स्मृतिरूपपदेन असन्निहितविषयकत्वम् एव सूच्यतो अत्र पूर्वदृष्टपदं सजतियपरत्वं प्रतिपादयति । परत्र परमार्थे सति आरोप्यसत्ताधिकसत्ताके पूर्वदृष्टसजतियस्य अनृतभूतस्यावभासो ध्यासइति लक्षणं सम्पद्यते । पर शब्द: पूर्वदृष्टदेशात् अन्यदेशमात्रं सूचयति । कस्यचित् गविव्यक्तौ दृष्टस्य गोत्वस्य व्यक्त्यन्तरे ज्ञाने जायमाने तत्र लक्षणस्य अतिव्याप्ति: स्यात् । अत एव अध्यासलक्षणे स्मृतिरूपरूपग्रहण क्रियते ।

ननु स्वप्नपदार्थाध्यासे अधिष्ठानस्य अनुपलम्भात् तत्र उक्तलक्षणस्य अव्याप्ति: कथ जा ते इति प्रश्न उदेति । स्वप्ने हि स्मर्यमाणे समर्थमाणान्तरस्य साक्षि प्रत्यक्षरूपे समारोपो भवति । निद्रादोषाच्च तत्र असन्निधानापरामर्शो जाग्रत्कालिने धल्पटादौ पूर्वदृष्टस्य सन्निहित । देशकालत्वस्य समारापो भवति । अस्मिन् प्रसंगे 'पूर्वदृष्टपदं तत्सदृशपरमतो नुभूयमानस्य प्रातिभासिकस्य स्वप्ने पूर्वदृष्टत्वा भावे पि न क्षति: । 'पीत: शङ्ख': शल्यत्र नयनरश्मिसंपृक्तपित्तता नानुभूयाते । शंखे दोववशात् शुक्लिमा नानुभूयते । तस्मश्च 'पीतं तपनीयपिण्ड' इत्यादौ पूर्वदृष्टसामानधिकरण्यं पीतत्वं शङ्कायां आरोप्यते । अत: तत्रापि लक्षणसमन्वयो भवति ।

केचित् सत्वस्य प्रकाशमानतां स्वीकुर्वन्ति देहादीनां प्रकाशमानत्वात् सत्यत्वमुक्त्वा सत्यानृतयो मिथुनीभावस्य अध्यासहेतुभूतभेदाग्रहात् नाध्यास: संभवति । अत: भाष्यकार: शंकराचार्य अध्यासस्य विस्तृतं परिचयम् ददाति । तेनेदं सूचितं भवति यत् सत्वं न प्रकाशमानतामात्रं, येन देहेन्द्रियादे: प्रकाशमानतया सत्वं भवेत् । रज्वादयो सर्पादिभावेन भासन्ते । भासमानत्वस्य सत्वम् अंगीक्रियते चेत् रज्वादे: सर्पधर्मत्वमपि भवेत् । किन्तु तथा न संभवति । अत: आरोपितस्य प्रकाशमानस्य वस्तुतत्वं न अध्यास: इति

----------

16. ब्र० सू० शा० भा०

समुत्पद्यते । असर्पभूतायां रज्जौ रज्जुज्ञानोदयानान्तरं सर्पज्ञाननिवृत्तिः स्यात् ।

एवमेव प्रत्यगात्मा अपि स्वकर्म ज्ञान क्रियादिकं "मम तव " इति प्रकारेण अवभासते । स्त्रीपुत्रादिकसुखदुःखानां आत्मन्येव अधिगमन्नहमेव सुखी दुःखी इत्यादिबाह्यधर्मान् आत्मनिअध्यस्यति । गौरो हं, प ति श्रुणोमीत्यादिरूपेण तथैव जानाति तथा च मूकत्व - बधिरत्व काणत्व पुंसुत्वन्धत्वादि धर्मभूतानिन्द्रिय-धर्मान्, संकल्प-विकल्प- हर्षोन्मेष कर्ममोक्षादि धर्मांश्च प्रत्यगात्मनि अध्यस्य प्रत्यगात्मानं सर्वसाक्षिणं मनुतो एवं स्वप्रकाशानन्दब्रह्मवस्तुनि अज्ञानं, तज्जन्यमखिलचराचरप्रपंचरूपम् अवस्तु अवभासते । किन्तु जगद्रूपवस्तु ज्ञाते सति जगद्रूपाअवस्तुभ्रान्तिः निवर्तते । अयमेव ब्रह्मणि वस्तुनि जगद्रूपावस्तुनो भ्रमो ध्यासः ।

आत्मनि अध्यासः परोक्षदशायां एव संभवति । यथा प्रत्यक्षे आकाशे पि बालास्तलमलिनताद्यध्यस्यन्ति । आकाशो हि द्रव्यं स्पर्शविरहत्वात् अनिन्द्रिय-ग्राह्यत्वात् न इन्द्रियप्रत्यक्षम् नापि मानसम् । मनसः आकारहीनत्वात अप्रत्यक्षं भवन्त्येव । एवं अविरुद्धाः धर्मः प्रत्यगात्मनि अनात्माध्यासः इति ज्ञात्वा सा अविद्येति अध्यस्तपरत्वात् प्रत्यगात्मनि हमेव कर्ता भोक्तेति अध्यासपराक्रमात् शुद्धबुद्धचैतन्यस्यावृतत्वं एव दुःखदैन्यादीनां कारणमिति वाचस्पतिमिश्रस्य मतम् ।

'स्मृतिरूपः परत्र पूर्वदृष्टावभासः ' इति अध्यासलक्षणम् आह भगवान् भाष्यकारः। अत्यन्त विविक्तयोःअपि आत्मानात्मनोः इतरेतरअविवेकेन परस्परम् अध्यस्य अहमिद ममेदम् इति लोकव्यवहारः दृश्यते । नहि प्रकाशमानत्वम् एव सत्वम् । यद्येवं स्यात् तर्हि प्रकाशमानतया एव मरीच्युदकादेरपि सत्यत्वं स्यात्, तेन च पिपासोपशमनमपि भवेत् । न त्वेवं भवति । एवं देहेन्द्रियाणामपि प्रकाशमानमायां न वक्तव्यम् । ननु देहादीनां असत्यत्वे तेषां प्रतीतिः एव न स्यात् इति चेत् । न, नहि अत्यन्तासत्त्वं देहादिनाम् । किन्तु अनिर्वाच्यतया तेषां प्रतीतिः संभवति । यथा सत् प्रकाशति तथा अनिर्वाच्यमपि ।

तत्र इहं हि विदुषां लोके समासशैल्या: समाश्रयणम् इति न्यायमवलम्ब्य 'अवभास:' इति अध्यासस्य संक्षिप्तलक्षणम् 'स्मृतिरूप:' परत्र पूर्वदृष्टावभास:' इति च विस्तृतलक्षण भामतीकारेण प्रदर्शितम् ।

अवभास: इति संक्षिप्तलक्षण 'अवभास' पदस्य अवयवार्थ: परिगृह्यते । तथा च अवपूर्वस्य भासते धातो: घ प्रत्ययेन निष्पन्न: अवभासशब्द: । तत्र भास् धातु: प्रकाशार्थक: अवेत्युपसर्गश्च द्योतक: । प्रकाशो नाम ज्ञानम् । अत: भास् धातो: भावे घञ् प्रत्यये कृते सति ज्ञानं प्रकाश: वा भास: कर्मणि घञ् प्रत्यये कृते च ज्ञेयं प्रकाश्यं वा भास: इत्यर्थद्वयं भवति । एतेन ज्ञानाध्यास: अर्थाध्यासश्च इत्युभयमपि सिध्यति । यथा शुक्तिज्ञाने रजतज्ञानस्य अवभास: ज्ञानाध्यास:, शुक्तौ विषये च रजतस्य अवभास: अर्थाध्यास: ।

अवसन्त: भास: अवभास: । अवसादश्च बाधकज्ञानोदयानन्तरं भ्रमवृत्यन्तरोत्पत्तिप्रतिबन्धरूप: भ्रमज्ञानोच्छेद: । रज्जुसर्पज्ञाने भ्रान्त: पुरुष: 'अयं सर्प:' इति जानाति । 'इयं रज्जु:' इति रज्जुज्ञानानन्तरं तु पूर्वज्ञानं बाधितं भवति । अयं सर्प: इति ज्ञानं न पुन: उदेति, सर्पज्ञानस्य उच्छेद: तदानीं भवति ।

ननु 'पीत: शङ्ख:' इति भ्रमज्ञानवत: पुरुषस्य शङ्ख: न पीत: अपितु श्वेत: इति ज्ञानं नोदेति । बाधकज्ञानानन्तरमपि 'पीत: शङ्ख' इति प्रत्यक्षं भवतीति पीतशङ्खज्ञानस्य अवसाद: उच्छेद: वा नास्ति, भ्रमवृत्यन्तरस्य पुन: उत्पत्तिदर्शनात् इत्यनेन अव्याप्ति: इति चेत् । तत्र पक्षान्तरं उच्यते 'अवमत: भास:' इति । भासस्य अवमानश्च इच्छाप्रवृत्यादि कार्यक्षमत्वापादनरूप: यौक्तिकतिरस्कार: । तथाहि शुक्तिज्ञानेन रजतज्ञाने बाधिते अपि यदा पुन: शुक्तौ रजतं दृश्यते तदा इच्छाप्रवृत्यादिकं न जायते यौक्तिकतिरस्कृतत्वात् । एवं रज्जुसर्पज्ञाने अपि रज्जुज्ञानानन्तरम् सर्पज्ञानमूलकं प्रवृत्यादिकं न जायते एवं सति यौक्तिकतिरस्काररूप: अवमान: तत्रापि अस्ति । तथा च अवभास: इति अध्यासलक्षण रज्जुसर्पादिज्ञाने पीतशङ्खादिज्ञाने च संगातम् इति एतदेव अध्यासस्य लक्षणम् इति वाचस्पतिमिश्रमतम् ।

अनेन संक्षिप्तलक्षणेन अध्यास: मिथ्याज्ञानम् इति प्रतिपादितं भवति । ज्ञानस्य

मिथ्यात्वे तज्ज्ञानस्य ज्ञेयमपि मिथ्या इति स्वत: एव आयति । तज्ज्ञानस्य ज्ञेयम रज्जौ सर्पज्ञानं यथा मिथ्या तज्ज्ञानस्य ज्ञेयरूप: सर्पो पि मिथ्या । अत: 'अवभास:' इति संक्षिप्तलक्षणेन ज्ञानाध्यास:, अर्थाध्यासश्च इति उभयमपि लक्षितम् । यद्यपि भामतीकारै: 'एतावता मिथ्याज्ञानं इत्युक्तं भवतीति केवलं ज्ञानाध्यास्यैव उल्लेख: कृत: ।

अस्मिन् संक्षिप्तलक्षणे यद्यपि अव्याप्त्यादि, दोषा: न वर्तन्ते तथापि अपरे 'केचन दोषा: सन्ति'- इति अभिप्रयन्ति । तथाहि यत्र रूढार्थयौगिकार्थयो: समाना: प्रसक्ति:, तत्र कारणम् - विशेषाभावे सति 'रूढिर्योगमाहरति' इति न्यायेन रूढार्थेन यौगिकार्थ: बाध्यते । 'अवभास' पदस्य रूढार्थस्य च ज्ञानमात्रम् । तच्च यथा भ्रमे तथा प्रमायां प्रयुज्यते । तदुक्तं भामतीकारै: -'अवभासपदं च समीचीने पि प्रत्यये प्रसिद्धम्' यथा नीलस्य अवभास:'[17] इति । अत एव 'अवभास' पदेन अध्यासलक्षण-प्रदर्शनं च समीचीनम् । अपिच, लक्षणेन यथा स्वाभिमतवस्तुन: सिद्धि: प्रदर्शनीया, तथा पराभिमतवस्तुतन: निराकरणमपि कर्तव्यम् इति दार्शनिकी रीति: । अत एव मिथ्या-ज्ञानम् अध्यास: इति ख्यात्यन्तरनिराकरणद्वारा अनिर्वाच्यख्यातिस्थापनार्थं च विस्तुतलक्षण उच्यते - स्मृतिरूप: परत्र पूर्वदृष्टवभास:' इति । अस्मिन् विस्तृतलक्षणे अवभासपदेन प्रकाश: 'भाति वा' इति सामान्यार्थ: गृह्यते । पूर्वदृष्टस्यावभास: पूर्वदृष्टावभास: । पूर्वं दृष्टम् = पूर्वदृष्टम् । दृ
हेति पदं भावे कर्मणि वा क्त प्रत्ययेन विहितम् इति पूर्वदर्शनस्य इव दर्शनस्य, पूर्वदृष्टवस्तुन: इव वस्तुनश्च य: प्रकाश: स पूर्वदृष्टावभास: । अध्यासे यद् आरोप्यं वस्तु तत् पूर्वं दृष्टं ज्ञातं वा भवितव्यम् । अत एव अध्यासे यस्य दर्शनं तत्र पूर्वदृष्टम् अपितु पूर्वदृष्टमिव इत्युक्तं भामत्याम् । यद्यपि पूर्वदृष्टं वस्तु स्वरूपेण सत् तथापि तत्सदृश यत् नूतनं वस्तु आरोप्यते तद् अनृतम् एव । रजतादिकं आपणादिषु रजतादिरूपेण सदपि शुक्त्यादौ अध्यस्तं रजतादिकं न आपणस्थसत्यरजतादिवत्, अपितु पूर्वदृष्टरजतसंस्कारात् तत्कालोत्पन्नम् इति नान्यथा-ख्यातिप्रवेश: । एवं अन्यथाख्यातिनिरासार्थं, आरोप्यस्य अनिर्वचनीयत्व सूचनार्थं च

------

17. भामती, पृ० 18,19

पूर्वदृष्टपदं उपात्तम् ।

न चात्र पूर्वदृष्टेत्यनेन पूर्वकालीनसत्यवस्तुन: यथार्थं दर्शनं आवश्यकम् इति मन्तव्यम् । यद् आरोप्यते तद्विषयकं पूर्वदर्शनम् = पूर्वज्ञानमात्रं एव अपेक्षितम्, नतु तस्य सत्यत्वम्, पूर्वदृष्टवस्तुन: सत्यत्वे मिथ्यात्वे च अध्यासम्भवात् । तथा च आरोप्यस्य दृष्टत्वमात्रं उपयुज्यते न वस्तुमन्तेति दृष्टग्रहणम् । पूर्वेति पदं पूर्वकालीन ज्ञानेन इति ज्ञापनार्थमेव । तदुक्तं वर्तमाने दृष्टं = दर्शनं नारोपयोगीति पूर्वमित्युक्तम् ' इति । ननु चेन कदापि पीतवर्णः न दृष्टः, तस्य चिन्तदोषवशात् यदा श्वेतशङ्खे 'पीत: शङ्ख:' इति भ्रम: भवति, तदा पीतवर्णस्य पूर्वदृष्टत्वं कथमिति चेत् । तत्र अननुभूतपीतवर्णस्य पीतशङ्खविभ्रमे तु जन्मान्तरानुभूतपीति - स्मरणम् 'उपासनीयम्' इति परिमलकारा: ।

वाचस्पतिना मते 'परत्रेति पदेन न केवलं भिन्नदेशिकम् अधिष्टानं ज्ञाप्यते, अपितु अधिष्ठानस्य आरोप्यापेक्षया सत्यत्वम् अपि । अध्यासो नाम सत्यानृतयो: मिथुनीभाव: । तत्र 'पूर्वदृष्ट' पदेन आरोप्यस्य मिथ्यात्वं ज्ञापितम् इति तत्प्रतिद्वन्द्विना 'परत्र' पदेन अधिष्टानस्य आरोप्यापेक्षया सत्यत्वं सूचितम् इति तन्मतम् ।

स्मृतौ अतिव्याप्तिवारणाय परत्रेति पदम् । परत्र पदेन पूर्वदेशात् भिन्नदेशस्य सन्निहितदेशस्य न ग्रहणम्, स्मृतिस्तु पूर्वदृष्टदेशम् असन्निहितम् अवलम्ब्य एव उदेति इति न तत्र अतिव्याप्ति: । अपि च परत्र पदेन अध्यस्तं वस्तु सत्यभूते कस्मिंश्चित् अधिष्टाने अनुभूयते इति सूच्यते । स्मृते: विषयस्तु नैव कस्मिंश्चित् सत्यभूते अधिष्टाने अनुभूयते इति न तत्र अतिव्याप्ति: ।

'परत्र पूर्वदृष्टावभास: अध्यास:' इत्युक्ते प्रत्यभिज्ञायाम् अतिव्याप्ति: । तथा हि- स्वस्तिमत्यां दृष्टं गोत्वमेव कालाक्ष्यां दृष्टम् इति । परत्र कालाक्ष्यां पूर्वदृष्टस्य गोत्वस्य तादात्म्येन अवभास: । एवं पाटलीपुत्रे दृष्टो देवदत्त: पुन: माहिष्मत्यां दृष्टइति परत्र माहिष्मत्यां पूर्वदृष्टस्यदेवदत्तस्य आश्रयभावेन संसर्गेण अवभास: संसर्गाध्यास: इति ।

ननु अत्र 'पूर्वदृष्ट' पदस्य तावत् न यथाश्रुतार्थः गृहीतः, पूर्वदृष्टम् आरोपणीयतया अनृतम् इत्युक्तत्वात् । तत् कथं तत्पदाङ्कित लक्षणस्य प्रत्यभिज्ञायां प्रभाभूतायां अतिव्याप्तिः, नहि गोत्वस्य मिथ्यात्वम् पूर्वदृष्टस्य गोत्वस्य अन्यत्रयो वभासः, तरयापि न मिथ्यात्वम् इति अतिव्याप्तिशंका एव नास्तीत्यर्थः । तत्र उच्यते - स्मृतिरूपपदस्य पारमार्थिकत्वेन असन्निहितविषयत्वरूपे यथाश्रुतार्थे गृहीते तु 'पूर्वदृष्ट' पदस्य न मिथ्यार्थकत्वम् । प्रत्यभिज्ञायां अतिव्याप्ति वारणाय 'स्मृतिरूपः' इति पदम् । अतः असन्निहितविषयत्वमेव स्मृतिरूपपदेन बोध्यम् इति भामतीकाराः । तथा च अतिव्याप्तिनिरासः, प्रत्यभिज्ञायाः सन्निहितविषयकत्वात् । ननु एवमपि स्मृतौ अतिव्याप्तिरिति चेत्, न स्मृतेः रूपमिव रूपम् अस्येति स्मृतिरूपपदस्य व्याख्यानात् स्मृतौ अपि नातिव्याप्तिः । एवं च असन्निहितस्य परत्र अवभासः इति भामतीकारसम्मतं अध्यासलक्षणम् इति कल्पतरुकृि अवधृतम् ।

आत्मनि अनात्मनः अध्यासे लक्षणम् इदं संगच्छते, नतु अनात्मनि आत्मनः अध्यासे । अनात्मा अनृतः, आत्मा तु सत्यः इति अनात्मनि आत्मनः यः अध्यासः, स अनृते सत्यस्य अवभासः, नतु सत्ये अनृतावभासः । अत एव परिमलकारैः स्मृतिरूप-पदस्य पारिभाषिकार्थः पुनरपि परिवर्त्य अधिष्ठानसमसत्ताकत्वेन गृह्यते ।

तथा च "अधिष्ठानासमसत्ताकस्य अवभासः अध्यासः इति तेषां सिद्धान्तः । आत्मनः पारमार्थिकसत्ता, अनात्मनश्च व्यावहारिकसत्ता इति आत्मनि व आत्मनः अध्यासे लक्षणमिदम् अनुगतम् । पारमार्थिके आत्मनि यथा व्यावहारिकस्य तथा प्रातिभासिकस्यापि सत्यस्य अध्यासः सम्भवति ।

अध्यासे आरोप्यस्य मिथ्यात्वप्रदर्शनाय 'पूर्वदृष्ट' पदम् उपात्तम्, निरधिष्ठानभ्रमस्य असम्भवत्वप्रदर्शनाय च 'परत्र' पदम् । लक्षणे एतत् पदद्वितयस्य प्रवेशस्तु दोषहिः। एवं च 'स्मृतिरूपः अवभासः' इत्येव लक्षणं अ भवितुयुक्तम् । अत एव कल्पतरुकृि नः 'असन्निहितस्य अवभासः' इति लक्षणमेव अंगीकृतम् । अस्मिन् लक्षणे असन्निहितस्य इत्यनेन च असत्ख्यातेः वारणम् । तथा चोक्तम् -'अथवा सन्निधानेन सत्ख्यातिरिह

वारिता । अवभासादसत्ख्यातिनृश्रृंगो तददर्शनात्'[18] इति ।

पन्चपादिकाविवरणे अध्यास: मिथ्या ज्ञानेवादनकन्वेन स्वीक्रियते । अध्यासस्य स्थाने 'मिथ्या ज्ञाननिमित्त:' इति पदं प्रयुज्यते । 'मिथ्या ज्ञाननिमित्त:' इति भाष्यवाक्यं 'मिथ्या च तदज्ञानं च मिथ्याज्ञानम्' इति विगृह्य मिथ्येति अनिर्वचनीयता उच्यते, अज्ञानमिति जडात्मिका अविद्याशक्ति: (पं॰पा॰4) इति । तद्यथा पन्चपादिकाविवरणे – 'तत्र 'अज्ञानम्' इत्युक्ते ज्ञानाभावमात्रभुक्तं स्यात्, मिथ्या इत्युक्ते भ्रान्तिज्ञानम् इति स्यात् । तदुभयव्यावृत्त्यर्थं निरूच्य पदार्थौ दर्शयति । 'मिथ्या च तदज्ञानं च' इत्यादिना ।[19]

किंच –

'ननु कथं मिथ्याज्ञानम् अध्यासस्योपादानम ? तस्मिन् सति अध्यासस्योदयात्, असति चानुदयात् – इति ब्रूम: । नन्वध्यासस्य प्रतिबन्धकं तत्वज्ञानं तदभावश्चाज्ञानमिति प्रतिबन्धा भावविषयतया अज्ञानस्याध्यासेनान्वयव्यतिरेकौ अन्यथासिद्धौ । नैतत् सारम् । पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम् । नच अध्यासपुष्कल कारणे सति तत्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते । किन्तु असत्येवाध्यासकारणे तत्वज्ञानोदय: । तस्मात्, नाज्ञानान्वयव्यतिरेकौ प्रतिबन्धकाभावविषयौ । तथापि विरोधिसंसर्गाभाव इति चेत् । न । कार्यस्य कारणाये हि प्रथममुत्पद्यते, न विरोधिसंसर्गाभावापेक्षा । तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेवान्वयव्यतिरेकौ न्यायसहितौ कुर्वाते ।[20]

अज्ञानस्य आत्माश्रयतया, भ्रान्तिज्ञानाश्रयकोतिनिक्षिप्तत्वाश्च मिथ्याज्ञानमेवाध्यासोवादानं नात्मान्त:करणकाचादिदोषाइति सूक्तम् ।[21]

---------

18· क०त०, पृ० 19–20

19· पं०पा॰वि॰ ।।

20· पं॰ वि॰ पा॰ ।।

21· पं॰ वि॰, पृ० 12

4.4.4. अध्यासस्य निमित्तम्

'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति अध्यासलक्षणं समुपन्यस्तं भगवता भाष्यकारेण । तत्र पूर्वदृष्टाभिव पूर्वदृष्टम् इति कृत्वा पूर्वदृष्टं स्वरूपेण सदपि अत्र अनिर्वाच्यत्वे अनृतत्वे वा पर्यवस्यति । स्मृतौ संस्काररूपेण अवस्थितस्य पारमार्थिकत्वेन असन्निहितस्य मिथ्याभूतस्य अनिर्वचनीयस्य वा परत्र अधिष्ठाने प्रतीतिरेव अध्यासः इति कल्पति । एतदध्यासवशात् सत्यानृतभूतौ अत्यन्तविविक्तौ आत्मानात्मानौ तद्धर्मौ च मिथुनीकृत्य अस्थूले अकृशे आत्मनि धर्मिणां देहानां, देहधर्माणां च स्थूलत्व कृशात्वसुखित्वदुःखित्वादीनाम् अवबोधः, जडे विषये देहादौ धर्मिणि अपि चेतनस्य आत्मनः तद्धार्माणां च चेतनत्वसुखरूपत्वादीनाम् अवबोधः भवति ।

एतस्मात् कारणभूतात् मिथ्याज्ञानाद् अध्यासाद्वा तत्फलभूतः 'अहमिदं ममेदमिति लोकव्यवहारः' भवति । इतरेतराविवेकः एव अध्यासस्य निमित्तम् । तदुक्तम् । आत्मानात्मनोः इतरेतराविवेकेन अहमिदं ममेदमिति लोकव्यवहारः-" इति भाष्यकारैः । इतरेतराविवेकश्च परस्परं विवेकाग्रहः भेदाग्रहः वा ।

ननु आत्मानात्मनोः विवेकाग्रहश्चेत् अविवेकतयोरभेदः एवं भविष्यति । आत्मानात्मनोः अभेदे च आत्मनि अनात्मनः अनात्मनि च आत्मनः अध्यासः न सम्भवति यतः भिन्नवस्तुनोरेव हि अध्यासः सम्भवति नाभिन्नवस्तुनोः ।

आत्मानात्मनोः धर्मिणोः अत्यन्तविविक्तत्वेन आत्मधर्माणाम् अनात्मधर्माणां च अत्यन्तविविक्तत्वात् आत्मानात्मनोः तद्धर्माणां च मिथुनीकरणं कदापि न सम्भवति । मिथुनीकरणसम्भवाद आत्मानात्मनोः अभेदः कल्पयितुं न शक्यते । ननु अत्यन्तविविक्तौ चेत् आत्मानात्मनौ मयोः भेदाग्रहो पि न भवेत् । भेदाग्रहाभावे च अध्यासाभावः इति ।

आत्मानात्मनोः वास्तविकभिन्नत्वे पि अविद्यादोषवशात् तयोर्भेदः न गृह्यतइति विविक्तयोः वस्तुतोः भेदाग्रहनिबन्धनः तादात्म्यविभ्रमः युज्यते । यथा शुक्तिरजतयोः वास्तविके भेदे सत्वे पि दूरत्वादिदोषवशात् तयोर्भेदः न गृह्यते ।

ननु शुक्तिरजतयोरिव विविक्तयो: हि वस्तुतो: भेदाग्रह निबन्धन: तादात्म्य-विभ्रमो युज्यते । किन्तु अद्वैतिनां मते एकमेव सद्वस्तु स च आत्मा । आत्मव्यतिरिक्तम् अनात्मभूतं च न किमपि सद् वस्तु अस्ति, नहि परमार्थ सत: चिदात्मन: अत्यन्ता-भिन्नत्वेन देहादि सद्वस्तु अस्ति । तत् कथं केन वा चिदात्मन: भेदाग्रह: तादात्म्य-विभ्रमो वा भवेत्, निरस्तसमस्तभेदे अद्वितीये एकस्मिन् ब्रह्मवस्तुनि तदसम्भवात् इति चेत् ।

एकस्मिन् अपरस्य अध्यासे आरोपाधिष्ठानम् आरोप्यं च इत्येतद् द्वितयस्यापि वास्तविकं सत्वं आवश्यकीयम् इति नास्माकं मतम् । अत एव अध्यासलक्षणे गृहीतस्य पूर्वदृष्टपदस्य व्याख्यानावसरे उक्तं भामतीकारेण - दृष्टत्वमात्रम् उपयुज्यते, न वस्तुसत्ता इति । एतदुक्तं भवति अप्रतीतस्य आरोपायोगात् आरोपार्थम् आरोप्यस्य प्रतीतिरेव उपयुज्यते न वास्तविकसत्त्वम्' इति । अत एव भाष्यकारेण उक्तम् - "सत्यानृते मिथुनीकृत्य" इति । सत्यं चिदात्मा अनृतं तु बुद्धीन्द्रियादि, ते द्वे धर्मिणि युगलीकृत्य विवेकाग्रहाद् अध्यस्य लोकव्यवहार: भवतीत्यर्थ: ।

ननु आरोप्यस्य प्रतीतिमात्रम् एव उपयुज्यते न तस्य वस्तुसत्ता इत्युक्ते मिथ्या-भूतस्य आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोप: तस्मिन् समारोपे च सति आरोप्यस्य मिथ्यात्वप्रतीतिरिति परस्पराश्रयत्वं इति चेत् ।

अयमध्यास: न आदि:, अपितु अनादि: । तदुक्तं भाष्यकारेण 'नैसर्गिको यं लोकव्यवहार:'" इति । अध्यासभूतस्य व्यवहारस्य नैसर्गिकत्वेन अनादित्वेन वा तत्कारणस्य मिथ्याज्ञानभूतस्य अध्यासस्यापि अनादित्वम् अवगन्तव्यम् । तच्च यथा बीजादङ्कुर: उत्पद्यते, अङ्कुरात् बीजम् इति बीजाङ्कुरयो: परस्परसापेक्षत्वे पि तत्सापेक्षत्वस्य अनादित्वात् तत्र न परस्पराश्रयदोष: । एवमत्रापि पूर्वज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादे: उत्तरोत्तराध्यासे उपयोग: इत्यनादित्वात् बीजाङ्कुरवत् न परस्पराश्रयत्वम् । एवम् आत्मानात्मनो: इतरेतरविवेकेनैव अध्यास: संभवतीति अद्वैतिनां सिद्धान्त: ।

4·4·5· अध्यासस्य व्याख्याने भामती प्रस्थानविवरण प्रस्थानयो वैभत्यम्

इतरेतराविवेक: अर्थात् विवेकाग्रहणमेव अध्यासस्य निमित्तमिति वाचस्पति-मिश्र: प्रतिपादयति । तथाहि ----- मिथ्या ज्ञानमध्यासस्तन्निमित्त: । तदनावा भावानुविधानाव्यवहार भावाभावयोरित्यर्थ: । तदेतमध्यासस्वरूपं फलं च व्यवहार-मुक्त्वा तस्य निमित्तमाहइतरेतराविवेकेन । विवेकाग्रहेणेत्यर्थ:[22] । कुतश्च तादात्म्य-विभ्रम इत्यत आह (भाष्यकार:) 'सत्यानृते मिथुनीकृत्य - सत्यं चिदात्मा, अनृतं बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी मिथुनीकृत्य युगलीकृत्यर्थ: । अत्र वेदान्तकल्पतरुकार: अमलानन्द: कथयति मिथुनीकरणाद्विवेकाग्रहस्ततो ध्यास इत्यर्थ[23] युगलीकरण नामाधिष्टानारोप्ययो: स्वरूपेण बुद्धौ भानम् । ननु मिथुनं कृत्वेति किमिति नोतम् अताह (भामतीकार:) - नच संवृतिपरमार्थपतो: पारमार्थिकं मिथुनमस्तीविभूत तभावार्थस्य च्वे: प्रयोग: ।[24] ··· यस्य यो भावी न भूत: स तदनावं वेत्समाकते तस्मिन्नभूततदनावे वर्तमानात् प्रातिपदिकात्कृम्वस्तृना योगे च्वि प्रत्ययो भवति ।[25]

1) मिथ्याज्ञाननिमित्त: अध्यास: 'इत्यस्य भाष्यवाक्यस्य व्याख्यानं कुर्वता पंच-पादिकाकरेण एवं कृतम् -'मिथ्या च तदज्ञानं च मिथ्याज्ञानम् ····· 'मिथ्येति अनिर्वचनीयत उच्यते' अज्ञानम् इति जडात्मिका अविद्याशक्ति:'[26] अस्मिन् सन्दर्भे विवरणकारेण प्रकाशात्मयतिना यदुक्तं तत विशेषत: अवधेयं वर्तते -

2) अत्र 'अज्ञानम्' इत्युक्ते ज्ञानाभावमात्रमुक्तं स्यात्: मिथ्या इत्युक्ते भ्रान्तिज्ञानम् इति स्यात् । तदुभयव्यावृत्त्यर्थं निरुत्य पदार्थौ दर्शयति । 'मिथ्या च तदज्ञानं च'

-----------

22· भामती, पृ० 16

23· वेदान्तकल्पतरू, पृ० 16,17

24, भामती, पृ० 17

25· कल्पतरू, पृ० 17

26· पन्चपादिका, पा· 4

इत्यादिना ।[27]

अत्रैतत् ज्ञातव्यं वर्तते यत् पञ्चपादिकायां मिथ्यापदमनिर्वचनीयम् इत्येवमुक्तम् । अज्ञानपदं च जडशक्तिवाचकम् इत्येवं प्रकारेण व्याख्यातम् । किन्तु विवरणे मिथ्या इत्यस्यार्थः भ्रान्तिज्ञानं तथा अज्ञानमित्यस्य अर्थः ज्ञानाभावः इत्येवं प्रकारेण निर्दिष्टः प्रकाशात्मयतेः एतत् कथनमिष्टसिद्धिकारस्य मतेन सह सामंजस्यं धारयति । तद्यथा -

1- मिथ्यार्थतज्ज्ञानात्मकं मिथ्याभूतमध्यासमुपादानकारणसापेक्षं प्रति अनाश्रयस्थानतया काचादिनिमित्तकारणेषु भिद्यमानेषु मिथ्याभूतस्यैव सर्वकार्यस्वभावानुकूलस्य सर्वत्रानुगमात्, अज्ञानस्यात्माश्रयतया भ्रान्तिज्ञानाश्रयकोटिनिक्षिप्तत्वाच्च मिथ्याज्ञानमेवाध्यासोपादानं नामान्तःकरणकाचादिदोषा इति सूक्तम् ।[28]

आत्मनि अनात्माध्यासस्य कारणत्रितयजन्यात्वोपपत्तिः विवरणे एवं प्रकारेण निर्दिष्टः वर्तते -

'अद्वितीयचैतन्यप्रकाशात्मनि द्रष्टरि अहंकारादिसंघातस्य अध्यस्तत्वात्, अध्यस्यमानव्यतिरिक्तम् अधिष्ठानम्, अध्यासाधिष्ठानयाथात्म्यविषयप्रमाणज्ञानम्, द्रष्टा च इति त्रितयम् आत्मा इति वक्तव्यम् । ततश्च, अधिष्ठानगतो दोषः, द्रष्टादोषो प्रमाकरणदोषो वा सर्वे दोषजातम् अजन्यत्वात्, कारणत्रितयजन्यविज्ञानस्य आत्मव्यनात्माध्यासे असंभवात् ।[29]

उपर्युक्तप्रकारेण एतत् स्पष्टं वर्तते यत् भाष्यस्ते अध्यासलक्षणवाक्ये 'स्मृतिरूपत्वं पूर्वदृष्टत्वं चेति विशेषद्वयस्य यः अभिप्रायवर्णनप्रकारो भामत्यामादृतः दृश्यते सः अत्र सर्वथा उपेक्षितः ।

---

27. पं. वि, पृ0 ।।

28. पं. वि. 12, इ. सि. 56

29. ,, पृ0 40

4.4.6. अध्यासस्य भेदाः

अध्यासः द्विविधः । अर्थाध्यासः, ज्ञानाध्यासश्च । अर्थविशेषे अर्थान्तरस्य अध्यासः अर्थाध्यासः, यथा शुक्तौ रजतस्य आरोपः । ज्ञानविशेषे ज्ञानान्तरस्य अध्यासः ज्ञानाध्यासः, यथा शुक्तिज्ञाने रजतज्ञानस्य आरोपः ।

अध्यासस्य द्वौ भेदौ वर्त्तेते - अर्थाध्यासः, ज्ञानाध्यासश्चेति । एकस्मिन्नर्थे (वस्तुनि) अन्यस्य अर्थस्य (वस्तुनः) आरोपः अर्थाध्यासः इत्युच्यते । यथा शुक्तौ रजतस्य आरोपः । ज्ञानविशेषे ज्ञानान्तर रजतज्ञानस्य आरोपः। अर्थाध्यासस्यापि द्वौ उपभेदौ वर्तेते धर्म्यध्यासः, धर्माध्यासश्च । धर्म्यध्यासः = धर्म्यध्यासे एकस्य धर्मिणः स्वरूपमपरस्मिन् धर्मिणि अध्यस्यते । अतः - धर्म्यध्यासः स्वरूपाध्यासः इत्यपि वक्तुं शक्यते । अत्र एकस्य धर्मिणः तादात्म्यम् अपरस्मिन् धर्मिणि आरोप्यते । अतः एषः अध्यासः तादात्म्याध्यासः इत्यपि कथ्यते । एवंप्रकारेण धर्म्यध्यासः, स्वरूपाध्यासः तथा तादात्म्याध्यासः इत्येते शब्दाः पर्यायवाचिनः सन्तीति वक्तुं शक्यते ।

धर्म्यध्यासस्थले अधिष्ठानमारोप्यं चेति धर्मिद्वयमभिन्नत्वेन प्रतिभातं भवति । धर्माध्यासस्थले तु धर्मिद्वयस्य अन्तरा अनिर्वचनीयस्य सम्बन्धस्य संसर्गस्य वा अध्यासः भवति । तद्वशात् च धर्मिद्वये परस्परधर्मस्यारोपः भवति ।

धर्माध्यासस्थले धर्मिद्वयमध्ये नियमेन संसर्गाध्यास एव भवति । धर्म्यध्यासस्थले तु अनात्मनि आत्मनः अध्यासे संसर्गाध्यासः अन्यत्रश्च स्वरूपाध्यासः ।

उपर्युक्तप्रकारेण अर्थाध्यासः त्रिविधः। धर्म्यध्यासः, धर्माध्यासः, संसर्गाध्यासश्चेति । धर्म्यध्यासः यथा आत्मनि अन्तःकरणादीनाम् अध्यासः । शुक्तौ च रजतस्याध्यासः । धर्माध्यासः यथा आत्मनि इन्द्रियधर्माणाम् अन्धत्वबधिरत्वादीनाम् अध्यासः । संसर्गाध्यासः यथा अन्तःकरणादौ अनात्मनि आत्मनः तादात्म्यसंसर्गस्य अध्यासः ।

प्रकारान्तरेण अध्यासस्य वर्गीकरण स्वोपाधिकनिरूपाधिकरूपेणापि कर्तुं शक्यते । स्वोपाधिकः - 'लोहितः स्फटिकः' इत्यत्र स्फटिके लोहित्यस्याध्यासः जपाकुसुमा-

ह्युपाधि प्रयुक्तो भवति । अत: असौ अध्यास: सोपाधिको अध्यासइत्युच्यते । सोपाधिकाध्यासस्य इदं वैशिष्टयं वर्तते यत् यथार्थज्ञाने सत्यपि उपाधे: अस्तित्व-पर्यन्तं भ्रमदर्शनं भवत्येव ।

निरुपाधिक: - उपाधिनिरपेक्ष: अध्यास: निरुपाधिको ध्यास: । यथा शुक्तौ रजताध्यास: । यद्यपि अविद्यारूप: उपाधि: अत्रापि वर्तते तथापि अविद्याया: अध्यासमान्योपादानत्वात उपाधिशब्देनात्र अविद्याव्यतिरिक्तानाभुपाधीनामेव ग्रहणं भवति ।

अध्यासस्य वर्गीकरणं स्वरूपाध्यास: संसर्गाध्यासश्च इत्येवं प्रकारेणापि कर्तुंशक्यते । स्वरूपाध्यास: - यस्मिन्नध्यासे एकस्य वस्तुन: स्वरूपमन्यस्मिन वस्तुन्यारोप्यते स स्वरूपाध्यास: इत्युच्यते । यथा शुक्तौ रजतस्याध्यास: ।

संसर्गाध्यास: - यदा किंचिद्वस्तु संसर्गत: संसर्गप्रतियोगिरूपेण वा अध्यस्तं भवति, न तु स्वरूपत: तदा संसर्गाध्यास: भवति यथा अनात्मनि आत्मन: अध्यास: । अत्र आत्मा स्वरूपपत: अध्यस्तो न भवति तस्य अध्यस्तता संसृष्टरूपेण भवति ।

4·4·7· अध्यासस्यानादिता

"केषान्चिदयं विचार: अस्ति यत् भामतीप्रस्थाने न केवलमग्रहणमिथ्याज्ञाने अविद्याशब्देन व्यह्रियते, किन्तु जगतो बीजशक्तिरपि तच्छब्देन तत्र तत्र व्यादिश्यत इति"[30] । किंच - 'तनाध्यासस्यापि सा अविद्याशक्तिरुपादानं इति पन्चपादिका-यावत्रापि स्वीकृतेत्यर्थादाप्नोति ।[31] किन्तु अत्र एतत ज्ञातव्यं वर्तते यत तथा समुल्लिखितवचनं तु भामत्यां नोपलभ्यते ।

एवमयमनादिरनन्तो नैसर्गिको ध्यासो मिथ्याप्रत्ययरूप: कर्तृत्वभोक्तृत्वप्रवर्तक: सर्वलोक प्रत्यक्ष: इति हि भाष्यम् । अस्य भामत्याम वाचस्पति: कथयति अनाद्यनन्तीव हेतुरुक्त: 'नैसर्गिक' इति[32] । एवं प्रकारेणाध्यासस्यानादित्वमत्युररी-

30· भा· पृ० 398  31· वेदान्तप्रक्रियाप्रत्यभिज्ञा, पृ० 403

32· भा· पृ० 45

कृतमिव तत्र तथोच्यते तत्राक्तन वाक्ये - 'तदनेन अन्त:करणावच्छिन्न: प्रत्यगात्मा इदमनिदं रूपश्चेतन: कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारो ऽहंकारास्पदं संसारी सर्वानर्थसम्भारभाजनं जीवात्मा इतरेतराध्यासोपादान:, तदुपादानाश्चाध्यास इत्यनादित्वात् बीजांकुरवन्नेतरेतराश्रयत्वम् इत्युक्तं भवति । तथा च 'नचाध्यासे सति विषयत्वं, विषयत्वे चाध्यास: इत्यन्योन्याश्रयत्वमपि साम्प्रतम् । बीजांकुरवदनादित्वात् । पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्य । उत्तरोत्तराध्यासविषयत्वाविरोधात् इत्युक्तं - 'नैसर्गिको यं लोकव्यवहार:' इति[33] । यद्यपि बीजांकुरदृष्टान्तो यं पन्चपादिकायामपि क्वचिदुपान्त:, तथापि भामत्यामिव वारंवारं स तत्र नैवानीत: । यथा 'नैसर्गिको यं लोकव्यवहार:' तथा - 'नैसर्गिक' इति । स्वाभाविको नादिरयं व्यवहार: । व्यवहारानादितया तत्कारणस्याध्यास्यानादितोक्ता: । ततश्च पूर्वपूर्व मिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वात् बीजांकुरवत् । न परस्पराश्रयमित्यर्थ: । न परविधावत: उत्क्रान्तिप्रतिषेधात्"[34] इति ।

4·4·8· देहादिप्रपन्चस्यअध्यस्तत्वम्

अद्वैतवेदान्तानुसारेण चिन्मात्रं ब्रह्म एव परमार्थवस्तु । तदतिरिक्तं ज्ञानृज्ञेयज्ञानरूपनामरूपात्मक: प्रपन्च: तस्मिन् परिकल्प्यते । अत: प्रपंच : मिथ्या एवम् अनिर्वचनीय श्च भवति । 'एकमेवाद्वितीयम्'[35] इति श्रुतिवाक्ये पि ब्रह्मण: सद्रूपत्वं प्रतिपादितम् । ब्रह्मण: अतिरिक्तं अन्यवस्तुना सत्त्वाभावात् ब्रह्म सजातीय विजातीय भेदशून्यं भवति । ब्रह्मणि स्वगतभेदमपि नास्ति । 'सत्यं ज्ञान मनन्तं ब्रह्म[36] इत्यादि श्रुत्या प्रतिपादितं सत्यज्ञानादिपदं न ब्रह्मण: गुणप्रतिपादनपरम् । किन्तु एकार्थिनापरं तथा अखण्डार्थनापरम् ।

अत्रायं पूर्वपक्ष: उदेति यत् अनेकगुणै विशिष्टस्य वस्तुन: अभिधाने अपि एकार्थना

---------

33· भा· पृ0 39
34· भा· पृ0 17
35· (छान्दोग्य उ0 - 6·2·1)
36· (तै0उ0 2·1·1)

संभवति, इति किन्तु नत्र युक्तम् । यत: विशेषणभेदात् अर्थस्य भेदाअपि अनिवार्या:[37] । अर्थस्य भेदत्वात् च एकार्थता न संभवति । सत्यादि पदद्वारा स्वविरोधि असत्यादि धर्माणां ।

ननु देहेन्द्रियादि प्रपंचस्य प्रकाशिनत्वात् अनुभवविषयत्व च । स असदिति कथं वक्तुं शक्ते ? अस्योत्तरमाह भातीकार: वाचस्पतिमिश्र:- "न प्रकाशमानाता मात्रं सत्वं चेन देहेन्द्रियादे: प्रकाशमानातया सद्भावो भवेत्[38] । अनुभूतिरूप: संवित्रूप: चिदात्मैव एकमात्र सत्यम् । यत: स: सर्वेषु अपि कलिषु अबाधितोवर्तते ।

आत्मन: स्वप्रकाशत्वं प्रत्यक्ष-अनुभव-शब्द प्रमाणद्वारा सिद्ध्यति । आत्मा स्वप्रकाश: स्वसत्तायां प्रकाशव्यतिरेकरहितत्वात्, प्रदीपवत् संवेदनव । सुषुप्तौ आत्मन: स्वयंप्रकाशत्वं प्रत्यक्षत्वेन सिद्धयति । सुषुप्त्यनन्तं, सुखो टमस्वात्सम्' इत्यादि सुखानु स्मरणी जायते । अत: सुषुप्तिकालीन प्रत्यक्षद्वारा आत्मन: स्वयंप्रकाशत्वं सिद्ध्यति ।

देहेन्द्रियादि प्रपन्चस्थ सत्वम् अंगीकर्तुं न शक्यते । यत: जाग्रदवस्थायां नाम-रूपात्मक प्रपन्चस्य या प्रतीति भवति, सा सुषप्त्यवस्थायां नानुभूयते । तुरीयावस्थायाम् अहमिति प्रतीते: भानमपि नास्ति । अत एव शरीर-इन्द्रिय-मन-बुद्धि-अहंकारादीनां सम्बन्धेन प्रतीयमानस्य प्रपन्चस्य कादाचित्कत्वान् सत्यत्वम् अंगीकर्तुं न शक्यते ।

आरोपितवस्तुन: प्रकाशमानते पि तस्य वास्तविकी सत्ता अभ्युपगन्तुं न शक्यते । यथा मृगमरीचिकायां भासमान: तोय: न सत् नासात् अपितु अनिर्वाच्य: भवति । तथैव प्रकाशमानवो देहेन्द्रियादि प्रपन्चो पि सदसद्विलक्षणत्वात अनिर्वाच्य: एवं

---

37. वि. प्र. सं. पृ0 749

38. भामती, पृ0 21-22

मिथ्या च भवति । मुनिस्मृति स्वपि प्रपन्चस्य मिथ्यात्वं सुव्यक्तमस्ति । तद्यथा - नेह नानाग्नि किंचन मृत्ये स: मृत्युताप्नोति य इह नानेव पश्यति ।

"यत्र हि द्वेतामव भवति तदितरे नर पश्यति" (बृ0 उ0 2·4·14)" वाचारम्भणं विकारो नामधेयं मृक्तिकित्येव सत्यम्" (छा0 उ0 2·1·4) मायामात्र तु कात्स्न्येनानभिव्यवतस्वरूपत्वात् " (ब,सू0 3·2·3) "आत्मनो ब्रह्णो भेदमसन्न क: करिष्यति" (विष्णुपुराणम्) इत्यादि श्रुतिस्मृतिवाक्यानि ब्रह्मण: भिन्नस्य नामरूपात्मकप्रपन्चस्य मिथ्यात्वं प्रदर्शयन्ति । नामरूपात्मक: देहेन्द्रियादिप्रपन्चस्य त्रिकालाबाधितत्वा भावात्र मिथ्या भवति । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थित वस्तुज्ञाननिवर्त्यत्वम् । यथा रज्वाधाधिष्ठानकसर्पादे: ।

आत्मन: स्वयंप्रकाशत्वं निम्नलिखितानुमानेनापि सिद्धयति । तद्यथा 'आत्मा स्वप्रकाश: स्वसत्तायां प्रकाशव्यतिरेकरहितत्वाम्, प्रदीपवत् संवेदनवश्च ।"[39] प्रदीपवत् आत्मन: स्वप्रकाशाय अन्यप्रकाशस्य आवश्यको नास्ति । अत: आत्मा स्वयंप्रकाश: ।

आत्मन: स्वयंप्रकाशना "अत्रायं पुरुष: स्वयंज्योति:'" इति बृहदारण्यकश्रुत्यनुसरिण सिद्ध्यति आत्मन: स्वयंप्रकाशत्वमधिकृत्य चित्सुखीकार: एवं कथयति"चिद्रूपत्वादकर्मत्वात्स्वयंज्योतिरिति श्रुते: ।

आत्मन: स्वप्रकाशत्वं को निवारयितुं क्षम:।[40] इति। चित्सुखोक्त्या आत्मन: स्वप्रकाशकत्वं सिद्धयति । 'विज्ञानमानन्दं ब्रह्म" "प्रज्ञानं ब्रह्म " "ज्ञानघन" इत्यादि श्रुतय: आत्मन: सद्रूपत्वं श्रावयति । आत्मन: स्वप्रकाश अकर्मत्वेनापि सिद्धयति । आत्मन: अकर्मत्वं व्यक्त्वा ज्ञानकर्मत्वं स्वीक्रियते चेत स्वाश्रितज्ञानस्य विषयत्वात् कर्तृत्व - कर्मत्वादि द्वावपि धर्माणां प्रसक्ति: जायते । ज्ञानरूप क्रियाया: आश्रयत्वात् आत्मा कर्ता, फलस्य आश्रयत्वात् कर्म च भवत: ।

---------

39· वि0 प्र0 सं0, पृ0 627

40· चित्सुखी, पृ0 38

4.5.0 भामतीप्रस्थानानुसारम्

अविद्यायाः स्वरूपम्

'अनिर्वाच्याविद्याद्वितयसचिवस्यप्रभवतो' इत्यादिरूपेण भामत्याः मंगलश्लोके एव अविद्याद्वितयस्य उल्लेखं कृत्वा वाचस्पतिः अविद्यायाः विश्लेषणार्हतामपि निर्दिशति । भामत्यामन्येष्वनेकेषु स्थलेष्वपि अविद्याद्वितयस्योल्लेखाः वर्तन्ते -- तद्यथा --'कार्यकारणाविद्याद्वयाधारोऽहंकारास्पदं संसारी' 'अविद्याद्वय नि बन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वम् । 'द्विविधाऽविद्यात्मः' । एवं लयविक्षेपाभिधानाभ्यां चाविद्याद्वितयं परामृष्टम् । तद्यथा -- 'स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूपः, ननु स्वच्छतैव । लयविक्षेपसंस्कारयोस्तत्र भावात्, (बा०भा०पा० 409)'यदा तु लयलक्षणाविद्योपबृंहितो विक्षेपसंस्कारः समुदाचरति, तदा विशेषविज्ञानोत्पादात् स्वप्नजागरितावस्थातः, परमात्मनो रूपाद् भ्रंशरूपमागमनम् इति' न चाविद्या केवला' इति लयाभिप्रायम्' करणभूतया लयलक्षणाया अविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नामरूपं तदेव माया' ।

ओदाहृतवाक्यैरिदमभ्यूहितुं शक्यते यद् ब्रह्मसिद्धाविव भामत्यामपि अग्रहण विपरीतग्रहणलक्षणे एव द्वे अविद्ये स्वीकृते इति । ब्रह्मसिद्धौ एते एव लयविक्षेपानामभ्यामपि निर्दिष्टे दृश्येते एतद्प्रतीयतेयत् वाचस्पतिना अस्मिन् विषये ब्रह्मसिद्धिकारमतमनुसृतम् । अविद्याया द्विप्रकारत्वविषये मण्डनमिश्रस्य मतम् तदस्ति, यत् द्विप्रकारेण अविद्या प्रकाशस्याच्छादिका विक्षेपिका च; स्वप्नजागरितयोर्विक्षेपिका, सुषुप्तौ आच्छादिका लयलक्षणा । तत्राच्छादिकाविद्यानिवृत्तिर्ज्ञानविधेः फलम् । तच्चासत्; यतो नाच्छादिकाया अविद्याया निवृत्तिः पुरुषेणार्थ्यते तथा, यथा विक्षेपस्य; सति विविधदुःखात्मकः । लयस्तु विविधदुःखनिवृत्तेरस्कृदानन्दत्वेन श्रुतौ गीतः प्रत्यर्थनीयः स्यात् । अपि च विपर्यासमनिच्छतो अविद्याभेद एव न स्यात्, अवस्थात्रयेऽप्यग्रहणमात्रत्वात् । तस्मादग्रहणविपर्ययग्रहणे द्वे अविद्ये कार्यकारणभावेनावस्थिते ।।

अत्र अभावरूपैवाविद्या लयलक्षणात्वेन व्यपदिष्टा, कारणत्वेन च -- इति स्पष्टम् । तस्मात् , भामत्यामपि अग्रहणविपर्ययावेव लयविक्षेपापरपर्यायौ अनिर्वाच्याविद्याद्वितयशब्देन विवक्षितौ -- इत्यवगन्तुं शक्यते ।

परन्तु भामतीप्रस्थाने पद्मपादकोपात्ताविद्याशक्तिशब्दोऽपि तत्र तत्र प्रयुक्तो दृश्यते यः, ब्रह्मसिद्धौ शाङ्करभाष्ये वा क्वचिदप्यदृष्टचरः । तत्र कानिचिद् वचनानि एतत्शब्दगर्भितान्युदाहर्तुं शक्यन्ते --

(क) 'तेन 'तदैक्षत' इत्यादौ उपचर्यतां ब्रह्मणो जगद्योनिता अविद्याशक्त्याश्रयत्वेन, इह तु अविद्याशक्तेरेव जगद्योनित्वसम्भवे न द्वारद्वारिभावो युक्त: इति प्रधानमेवात्र वाक्ये जगद्योनिरूच्यत इति पूर्व: पक्ष: " ।[42] भामत्याम् अस्मिन् स्थले प्रकृतिरेव 'अविद्याशक्ति' -- शब्दव्यपदिष्टा इति स्पष्टम् ।

(ख) "यद्यपि महाप्रलयसमये नान्त:करणादय: समुदाचरद्वृत्तय: सन्ति तथापि स्वकारणे निर्वाच्यायाम् अविद्यायां लीना: सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकविद्यावासनाभि: सहावतिष्ठन्त एव ।[43] अत्रापि यस्यामविद्यायामन्त:करणादयो लीना: सैव प्रकृत्याख्या लयलक्षणा अविद्या -- इति गम्यते ।

(ग) ब्रह्मणस्त्वयमविद्याशक्तिमायादिशब्दवाच्या न शक्या तत्वेनान्यत्वेन वा निर्वक्तुम् । इदमेवास्या अव्यक्तत्वं यदनिर्वाच्यत्वं नाम । सोऽयमव्याकृतवादस्य प्रधानवादाद् भेद: ।।[44] अत्रापि सुस्पष्टं यदव्याकृताख्या जगत्प्रकृतिरेवाविद्याशक्तिशब्दवाच्या इति ।। अत्र वाचस्पतिना अविद्याया: भावरूपत्वमपि समर्थितम् ।

---

42. भा०, पृ० 256

43. भा०, पृ० 383

44. वही, पृ० 377

एतद् ज्ञातव्यंवर्त्तते यत् भगवता शंकराचार्येण अविद्याया: स्वरूपम् एवंप्रकारेण निर्दिष्टम् -- "अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्द-निर्देश्या परमेश्वराश्रया मायामयी महासुप्ति:, यस्यां स्वरूपप्रति-बोध-रहिता: शेरते संसारिणो जीवा: ।[45] अस्य भाष्यवाक्यस्य व्याख्यानं कुर्वता वाचस्पतिना कथितं यत् -- "न ह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तमिति स्वकार्यं कर्तुं परमेश्वरं निमित्ततयोपादानतया चाश्रयते, प्रपञ्चविभ्रमस्य हीश्वरोऽधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथाहि विभ्रमो रज्जूपादान एवं प्रपञ्चविभ्रम ईश्वरोपादान:, तस्मात्जीवाधिकरणात्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयतेति ईश्वराश्रयेत्युच्यते नत्वधारतया; विद्यास्वभावे ब्रह्मणि तदनुपपत्ते: ।[46]

4.5.1 अविद्याया: आश्रय: विषयश्च

अविद्याया: आश्रयं विषयं चाधिकृत्य मतभेदा: वर्तन्ते । वाचस्पति: अविद्याया आश्रय:, जीव:, विषयश्च ब्रह्म इति प्रतिपादयति । तथाचोक्तं कल्पतरुकारेण --

"जीवस्थाया अविद्या विषयं ब्रह्म शक्तिवत् । ऊचे वाचस्पतिर्भाष्यश्रुत्यो हृदयवेदिता ।।"[47] इति मुमुक्षु: ब्रह्मजिज्ञासाया: अधिकारी भवति अज्ञानिन: जिज्ञासुत्वं, मुमुक्षत्वं च वर्तते ।अत: जीव: अविद्याया: आश्रय: भवतीति सिद्ध्यति । यस्य ब्रह्मजिज्ञासा वर्तते तस्य ब्रह्म अज्ञातम् । अत: विद्याया: विषय: ब्रह्म आश्रयो जीवश्च । इति 'अथातो ब्रह्मजिज्ञासा' इत्यनेनैव सूत्रेणापि स्पष्टं भवति । कुत्रचित् अविद्या ईश्वराश्रिता कथमुच्यते इत्यस्या आशंकाया: समाधानं वाचस्पतिना एवमुक्तम् -- भामत्याम्

---

45. ब्र०सू० शा० भा०, 1-4-3
46. भामती, पृ० 378
47. कल्पतरु, पृ० 389- 1.4.3

"यथाहिविभ्रमो रज्जूपादानः, एवं प्रपञ्चविभ्रम ईश्वरोपादानः, तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया-चेश्वरमाश्रयत् तीश्वराश्रयेत्युच्यते, न त्वाधारतया विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति ।"[48] अर्थात् प्रपञ्चः जीवाश्रिताविद्यायाः विषयीभूतस्य ईश्वरस्य विवर्त्तः वर्तते इति । वाचस्पतेर्मतानुसारं प्रपंचः ईश्वरस्य सृष्टिः भवति ननु जीवस्य ।

अविद्यायाः आश्रयत्वात् जीवः अज्ञः, अनभिज्ञः अल्पज्ञः च भवन्ति । वाचस्पतेः मतम् अमलानन्द एवं निरूपयति --

अधिष्ठानं विवर्तानामाश्रयो ब्रह्मशुक्तिवत् ।
जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ।।"[49]

अविद्याऽऽश्रयत्वविषये वाचस्पतिः मण्डनमिश्रमतं अनुसरति । तद्यथा -- ब्रह्मसिद्धौ -- "यत्तु कस्यायमविद्येति । जीवनामिति ब्रूमः । ननु न जीवा ब्रह्मणो भिद्यन्ते । .... सत्यं परमार्थतः, कल्पनया तु भिद्यन्ते । कस्य पुनः कल्पना भेदिका न तावद् ब्रह्मणः । तस्य विद्यात्मनः सर्वः कल्पनाशून्यत्वात् । नापि जीवानाम्, कल्पनायाः प्राक् तदभावात्; इतरेतराश्रयप्रसङ्गात् । ...अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयप्रवृत्त्युत्तमावहति ।।"[50] मण्डनमिश्रस्य एतत् मतम् वाचस्पति मिश्रेणापि निम्नलिखित प्रकारेण निरूप्यते --

"नाविद्या ब्रह्माश्रया, किन्तु जीवे । सा त्वनिर्वचनीया इत्युक्तम् ।"[51] ... अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते । त्वादृशानां जीवानाम् अविद्या, ननु निरूपाधिनो ब्रह्मणः । न च अविद्यायां सत्यां जीवात्मविभागः, सति च जीवात्मविभागे तदाश्रया

---

48. भामती, पृ० 378 (1.4.3)

49. कल्पतरु, पृ० 236 ( 1.2.8)

50. ब्रह्मसिद्धि, 10

51. ... 126

"यथाहिविभ्रमो रज्जूपादान:, एवं प्रपञ्चविभ्रम ईश्वरोपादान:, तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया-चेश्वमाश्रयत् तीश्वराश्रयेत्युच्यते, न त्वाधारतया विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति ।"[48] अर्थात् प्रपञ्च: जीवाश्रिताविद्याया: विषयीभूतस्य ईश्वरस्य विवर्त्त: वर्तते इति । वाचस्पतेर्मतानुसारं प्रपंच: ईश्वरस्य सृष्टि: भवति ननु जीवस्य ।

अविद्याया: आश्रयत्वात् जीव: अज्ञ:, अनभिज्ञ: अल्पज्ञ: च भवन्ति । वाचस्पते: मतम् अमलानन्द एवं निरूपयति --

अधिष्ठानं विवर्तानामाश्रयो ब्रह्मशुक्तिवम् ।
जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ।।"[49]

अविद्याऽश्रयत्वविषये वाचस्पति: मण्डनमिश्रमतं अनुसरति । तद्यथा -- ब्रह्मसिद्धौ -- "यत्तु कस्यायमविद्येति । जीवनामिति ब्रूम: । ननु न जीवा ब्रह्मणो भिद्यन्ते । .... सत्यं परमार्थत:, कल्पनया तु भिद्यन्ते । कस्य पुन: कल्पना भेदिका न तावद् ब्रह्मण: । तस्य विद्यात्मन: ब्रह्म: श्रे कल्पनाशून्यत्वात् । नापि जीवानाम्, कल्पनाया: प्राक् तदभावात्ः इतरेतराश्रयप्रसङ्गात् । ...अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयप्रकृत्त्वमावहति ।।"[50] मण्डनमिश्रस्य एतन् मतम् वाचस्पति मिश्रेणापि निम्नलिखित प्रकारेण निरूप्यते --

"नाविद्या ब्रह्माश्रया, किन्तु जीवे । सा त्वनिर्वचनीया इत्युक्तम् ।"[51] ... अनाद्यविद्यावच्छेदलब्धजीवभाव: पर एवात्मा स्वतो भेदेनावभासते । तादृशानां च जीवानाम् अविद्या, ननु निरूपाधिनो ब्रह्मण: । न च अविद्यायां सत्यां जीवात्मविभाग:, सति च जीवात्मविभागे तदाश्रया

---

48. भामती, पृ0 378 (1.4.3)

49. कल्पतरु, पृ0 236 ( 1.2.8)

50. ब्रह्मसिद्धि, 10

51. वा0 भा0 पा0, 126

अविद्या ई इत्यन्योन्याश्रयातिमि साम्प्रतम्[52] । अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात् ।।

4·5·2 अविद्यानानात्वम् --

"न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, किन्त्वियं प्रतिजीवं भिद्यते । तेन यस्यैव विद्योत्पन्ना तस्यैवाविद्यापनीयते न जीवान्तरस्य"[53] । अविद्यात्वधर्ममाश्रित्य एव कदाचित् अविद्याया एकत्वं प्रकल्प्यते किन्तु वस्तुत: अविद्याया नानात्वमस्ति ।

वाचस्पते: अनेक जीवाश्रितानेकाविद्यावाद: दृष्टिसृष्टिवादे अन्तर्भवति इति केचित् अभिप्रयन्ति । एकजीववादाभिद्ध्यान्तवत् वाचस्पते: अनेकाविद्यावादोऽपि जगत: जीवाश्रिताविद्याया: परिणाम: भवति।[54] ब्रह्म निमित्तमथवा उपादानमात्रं भवति । जीवाश्रिताविद्या, निमित्ततायाः अथवा विषयतायाः सम्बन्धेन ईश्वराश्रिता भवति । नत्वविद्यायाः परमेश्वराधारतया । विद्यास्वभावे ब्रह्मणि तदनुपपत्ते:, अत: जगत् जीवाश्रिताया अविद्याया: परिणाम: भवतीति सिद्ध्यति ।

वाचस्पते: मतस्य स्पष्टीकरणम् कुर्वता अमलानन्देन एवं कथ्यते यत् वाचस्पति: प्रपञ्चस्य अज्ञातसत्तां स्वीकरोति तथा अज्ञातसत्तायां प्रपञ्चस्य व्यावहारिकसत्तां हेतुत्वेन मनुते । अत: व्यावहारिकसत्तायां 'दृष्टिसृष्टिवाद' न युज्यते, स तु ज्ञातसत्तापक्षे एव सम्भवति । इति अमलानन्द: अभिप्रैति । तद्यथा --'ये त्वाहु: ब्रह्मणोजीवभ्रमगोचरस्याधिष्ठानतयोपादानत्वे --'सोऽकामयत स्वयमकुरुतेति च न स्यात्, प्रतिजीवं च भ्रमसाधारण्याद्

---

52. भा0, 235 ; कल्पतरु, 236

53. भामती, पृ0 377-78, 1·4·3

54. वाचस्पतिमिश्र ऑन अद्वैतवेदान्त -- डा0 हसूरकर

जगत् साधारण्यानुभवविरोध: भ्रमजस्य च आकाशादे: अज्ञातसत्वायोग:, तस्मादीश्वरस्य प्रतिबिम्बधारिणी साधारणी माया । तद्व्यष्टयश्च जीवोपाधयोरविद्या मन्तव्या इति । तान् प्रति ब्रूम: । अकामयत, अकुरुतेति च कामकृती जीवाविद्याविवर्त: । न च ब्रह्मविक्रिया:, विवर्तश्च विवर्ते हेतु: सर्प इव विसर्पणस्य । प्रतिमाणकब्रवर्त्य-विद्याभिवर्जेषु स्वरादि वैशिष्टयेन व त्तम् । स्वोपाध्यायाकन्त्रोद्गतवेदस्येव प्रपंचसाधारण्य-प्रसिद्धि: । अधिष्ठानवर्णसाधारण्यात्तत्साधारण्यं प्रस्तुतेऽपि समं सर्व-प्रत्ययवत्वात् ब्रह्मण: । अज्ञातसत्वं प्रपञ्चस्य व्यावहारिकसत्वात् । नच जीवाविद्याजन्यत्वे तदयोग:, स्वेन्द्रियादिवदुपपत्ते: ।"[55]

उपर्युक्तवत्प्रकारेणैतद् सिध्यति यत् वाचस्पतिमिश्रेण प्रपञ्चस्य अज्ञातसत्ता स्वीकृता । अत्रेदं शंका उदेति यत् प्रपञ्चस्य जीवाश्रितया अविद्यया कल्पितत्वात् तस्य व्यावहारिकसत्ता न स्वीकर्तव्या, अपितु शुक्तिरजतादिवत् प्रातिभासिकसत्ता एव अंगीकर्तव्या इति । अस्या: शङ्काया: समाधाने इदमुच्यते यत् एतत् समीचीनं न प्रतिभाति यत् अविद्याकल्पितत्वादेव वस्तुन: प्रातिभासिकत्वं स्वीक्रियते । ब्रह्माश्रिता-विद्यावादिनां मतेऽपि प्रपञ्च: अविद्याया: परिणाम: भवति।तथापि ते जगत: व्यावहारिकसत्तां मन्वते ।

प्रातिभासिकास्तथा व्यावहारिकाश्च वस्तुत: सर्वे पदार्था: अविद्याया: परिणाम: किन्तु यदि अविद्यया सह आगन्तुकदोषा: अपि विद्यन्ते तर्हि तादृशपरिणाम: प्रातिभासिक: इति कथ्यते । तद्यथा शुक्तिरजते इदमाकारवृत्यवच्छिन्नश्चैतन्यनिष्ठशुक्तित्वप्रकारक: अविद्यातिरिक्त: काचादि आगन्तुकदोषा: अपि रजतत्वभ्रमे कारणत्वं भजन्ते ।

---

55. वेदान्तकल्पतरु, पृ0 378

अतः रजतज्ञानं प्रातिभासिकम् इत्युच्यते । किन्तु आकाशादि प्रपञ्चः केवलम् अविद्यायाः परिणामः नतु आगन्तुकदोषमिश्रिताया अविद्यायाः परिणामः । आगन्तुकस्य दोषान्तरस्य विनाशे सति प्रातिभासिकः प्रपञ्चः विनश्यति, किन्तु व्यावहारिकः प्रपञ्चः जीवस्थितायाः अविद्यायाः विनाशं विना न विनश्यति । व्यावहारिकप्रपञ्चस्य प्रातिभासिकप्रपञ्चस्य चायमेव भेदः ।

एकजीववादपक्षे सर्वे पदार्थाः एकजीवाश्रिताविद्यायाः परिणामः भवन्ति । अतः तेषां सत्तापि समानैव । किन्तु अनेकजीवाश्रितानेकाविद्यावादपक्षे व्यावहारिकप्रपञ्च प्रातिभासिकप्रप चयोः भिन्नत्वं निरूप्यते । अनेकजीवाश्रितानेकाविद्यावादपक्षे प्रपञ्चः प्रातिभासिकः आगन्तुककाचादिदोषसहकृतायाः अविद्यायाः परिणामः । प्रातिभासिकप्रपञ्च व्यावहारिकप्रपञ्चयोः भेदत्वं वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण एवमुक्तम् -- "यद्वा घटाद्यध्याये अविद्यैव दोषत्वेनापि हेतुः । शुक्तिरूप्याध्यासे तु काचादयोऽपि दोषाः । तथा चागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् । अतएव स्वप्नोपलब्धरूपादीनामागन्तुकनिद्रादिदोषजन्यत्वात् प्रातिभासिकत्वम् ।[56]

दृष्टिसृष्टिवादे कस्यापि अनात्मपदार्थस्य अज्ञातसत्ता नास्ति; अपितु ज्ञातसत्ता एव भवति । अतः अस्मिन् पक्षे रज्जुसर्पवत् सर्वे अनात्मपदार्थाः केवलं साक्षिभास्या भवन्ति एतादृशेषु साक्षिभास्येषु पदार्थेषु या सा अपि अध्यस्ता एव । दृष्टिसृष्टिवादानुसारं प्रमाणप्रमेयव्यवहारोऽपि स्वप्नवत् अध्यस्त एव ।

किन्तु नानाजीवाश्रित- नानाऽविद्यावादिन अवच्छेदवादिनः वाचस्पते मते यद्यपि प्रपञ्चः जीवाश्रिताविद्यायाः परिणामः भवति, तथापि स प्रमाणप्रमेयादीनां व्यावहारिकसत्तां मनुते तथा व्यावहारिकपदार्थानां ज्ञानं प्रमाणैः निष्पद्यते इति प्रतिपादयति ।

---

56. वेदान्तपरिभाषा ( आशुप्रबोधिनी व्याख्यासंवलिता, पृ० 93-94 )

आचार्य: मधुसूदनसरस्वती अपि एकजीववादसिद्धान्तस्यैव दृष्टिसृष्टिवादे अन्तर्भावं कल्पयति । नात्वनेकजीववादस्य । सिद्धान्तबिन्दौ एकजीववादमधिकृत्य स: कथयति -- "अज्ञानानुपहितं शुद्धचैतन्यमीश्वर:, अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्त: एकजीववादाख्य: । अमुमेव दृष्टिसृष्टिवादमाचक्षते ।[57] अमुमेव इत्यत्र एवं पदेन एकजीववादम् एव दृष्टिसृष्टिवाद: नतु अनेकजीवाश्रितानेकाविद्यावाद: इति स्पष्टी भवति ।

एवं वेदान्ताचार्या: एकजीववादं दृष्टिसृष्टिवादत्वेन स्वीकुर्वन्ति नत्वनेकजीववादम् । अत: वाचस्पते: अनेकजीवाश्रितानेकाविद्यावादोऽपि दृष्टिसृष्टिवादे अन्तर्भावितुं न शक्नोति । 'अद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयाविद्योपधानभेदात् एकस्यैव बिम्बस्य दर्पणाद्युपाधिभेदात् प्रतिबिम्बभेदा: । एवं चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदु:खमुक्तिसंसारव्यवस्था-चोपपद्येत । नच मोक्षस्यानर्थबहुलता यत: प्रतिबिम्बानामिव श्यामतावदात तादिर्जीवानामेव नानावेदनाभिसम्बन्ध:, ब्रह्मणस्तु बिम्बस्यैव न तदभिसम्बन्ध: । यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावेऽवतिष्ठते, न कृपाणे प्रतिबिम्बित्वमपि । एवमविद्योपाधानविगमे जीवे ब्रह्मभाव इति सिद्धयम् ।"[58] एवं भामत्यामविद्यानानात्वं सर्वत्र प्रतिपादितम् इत्यस्मिन् विषये न कोऽपि संशय: ।

4.5.3 अविद्याया: भावरूपत्वम् --

वाचस्पति: प्रतिजीवम् अविद्याया: भेदं मनुते । यस्य जीवस्य अविद्या निवृत्ताभवति, तस्यैव मोक्ष: सिद्धयति । सर्वेषां जीवानां

---

57. सिद्धान्तबिन्दु, पृ0 234

58. भामती, पृ0 722,723

मोक्षलाभो व्यावहारिक दृष्ट्या न सम्भव: अत: सृष्टि रनादिप्रवाह: सदैव प्रचलति अत्रायं प्रश्न: उदेति -- बन्धनफवत: जीव: महाप्रलयावस्थायां कुत्र भवति तथा तस्य पुनरुद्भूति: (सृष्ट्यवस्था इश्चावस्था) कथं संभवति ?

अस्य समाधानमुक्तं वाचस्पतिना- महाप्रलयावस्थायां समस्तप्रप च: अविद्यायां विली ते । यद्यपि महाप्रलये ना न्त:करणादय: समुदाचार-वृत्तय: सन्ति तथापि स्वकारणे अनिर्वाच्यायं अविद्यायां लीत्वा सूक्ष्मेण शक्तिरूपेण कर्म-विक्षेपिका विद्यावासनाभि: सह अवसिष्टन्त एव । ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिमा यथा शर्मदेहे निलीनान्यंगानि मतो नि:सर्गन्त, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्-वासनावासिततया घनासारावसेकसुहितानि धुन: मण्डूकदेहभावमनुभवन्ति --"[59] इति ।

अत: कूर्म -- पृथ्वीवत् अविद्या भावरूपमेव । यदि अभावत्वं मन्यते चेत् सृष्टे: उत्पादनप्रक्रिया अभावव नि जायते इति अंगीक्रियते । वाचस्पति: अविद्याभावरूपत्वं कल्पतरुकारेनापि स्वीकृतम् --

"भ्रमात् संस्कारतश्चान्या मण्डूकमुदाहृते: ।
भावरूपा मता विद्या स्फुटं वाचस्पतिरिह ।।"[60]

## 4·6·0 भामतीप्रस्थानानुसारं ख्यातिविमर्श: --

अध्यासस्य अर्थात् भ्रमस्य विश्लेषणार्थं ख्यातिपञ्चकं प्रथितं वर्तते तद्यथा असत्ख्याति :-- आत्मख्याति:, अख्याति: -- अन्यथाख्याति: अनिर्वचनीयख्यातिश्च । एता: पञ्चख्यातय: वाचस्पतिनापि 'भामती' ग्रन्थे सविस्तरं विश्लेषिता: ।

---

59· भामती, पृ० 333-34, 1·3·30

4·6·1 असत्ख्यातिः भामती ग्रन्थे --

शून्यवादि -- बौद्धानां मते समस्तं पदार्थजातं शून्यमेव । असत्रूप ख्यातेः शुक्तिरजतादि - भ्रमस्थले असतः प्रतीति अर्थात् असदधिष्टाने शुक्तिकादौ असद्रूपरजतादेः भानं भवति । इति अत्र असत्ख्यातिः कथं सम्भवति ? इति वाचस्पतिः तर्कयति । शुक्तिरजतादिस्थले विषयस्तु असदेव । असत् - न कदापि प्रकाशते इति वाचस्पतेः मतम् ।

रजतवद् शुक्तिःअपि असत्रूपेण अंगीक्रियते चेत् शुक्तिः रजतस्य अधिष्ठानं कथं भवितुं शक्नोति ? भ्रमज्ञानाय अधिष्टानम् आवश्यकमेव । अत्र बौद्धानां कथनमेतत्यत् शून्यं प्रथमतः शुक्तिरूपेण विद्यते । पुनश्चशुक्तिः रजतरूपेण भासते । एवं शुक्तिरजतौ उभावेव शून्यैव असत् । अतः भ्रमे रजतस्य वास्तविकसत्ता नास्त्येव । रजतं सद्रूपेण वर्तते चेत्, कदाचित्तस्य बाधा न सम्भवेत् । असद् रूपेण वर्तते चेत् अस्य भानं नस्यात् अतः शून्यवादि बौद्धानां मतं न समीचिनम् । इति भामती कारणामभिप्रायः पंचपादिकाकारः अपि एवं कथयति यत् निरधिष्ठानः भ्रमः न दृष्टपूर्वः, न च सम्भवः । "[61]

4·6·2 आत्मख्यातिः

विज्ञान वादिनो बौद्धा बाह्यार्थस्य अविद्याविलासं मन्यमानाः बाह्यरार्थवादिन भवन्ति । आत्मख्यातिवादिभिः क्षणिकविज्ञानादतिरिक्तं कस्यापि वस्तुनः सत्ता नांगीक्रियते । नीलज्ञाने नीलज्ञानं विना नीलस्य उपलब्धिः न जायते । स्वतन्त्ररूपेण नीलस्य सत्ता अंगीकर्तुं न

---

61, पं०पा०, पृ० 63, वि०प्र०सं०, 15।

शाक्यते । अतः विज्ञानवादे विज्ञानादतिरिक्तं बाह्यपदार्थस्य सत्ता अंगीकर्तुं न शाक्यते ।

"सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ।।"[62]

वाचस्पतिःआत्मख्यातिअधिकृत्य एवं वदति । अन्य धर्मस्य = ज्ञानधर्मस्य रजतस्य, ज्ञानाकारस्य इति यावत् । अन्यत्र = बाह्ये सौन्त्रान्तिकनये तावद् बाह्यमस्ति वस्तु सत्, तत्र ज्ञानाकारस्यारोपः । विज्ञानवादिनामपि यद्यपि न बाह्यं वस्तु सत्, तथाप्यनाद्यविद्यावासनारोपितमलीकं बाह्यं तत्र ज्ञानाकारस्यारोपः ।[63] योगाचार बौद्धैः ज्ञानमात्रस्य सत्ता अंगीक्रियते ।

रजतस्य विज्ञानाकारता तु नेदं रजतमिति बाधकप्रत्ययात् सिद्ध्यति इति चेत्, किमयं बाधकप्रत्ययः पुरोवर्तिद्रव्यं रजतात् विवेचयति आहोस्वित् ज्ञानाकारतामपि अस्य दर्शयति । प्रथमपक्षः सर्वैः अंगीकर्तव्यः, इदमपि रजतनिषेधस्य अनुभवसिद्धत्वात् । द्वितीये किं बाधकप्रत्ययः साक्षात्ज्ञानाकारणां दर्शयति, अर्था द्वा ? नाद्यः । अनुभवविरोधात् । नच पुरोवर्तित्वप्रतिषेधात् अर्थात् अस्य ज्ञानाकारता विज्ञेया इति द्वितीयः ग्रहणीयः । रजतस्य सन्निहितत्वे निषेधे सति असन्निहिते देशान्तरे अपि स्यात्, नान्तु आन्तरे इति निश्चितम् । तदुक्तं भामत्याम् -- असन्निधानाग्रहनिषेधात् असन्निहितः भवति प्रतिपत्तुः, अत्यन्तासन्निधानं त्वस्य कुतस्त्यम् इति । ननु माभूत् अनुभवात् विज्ञानाकारता रजतस्य अनुमानात् नु भविष्यति इति योगाचारः । तथाहि सर्वेषां वस्तूनां ज्ञानाकारत्वे अनुमानं -- यस्य येन सह नियमसहोपलम्भनं नत् ततो न भिद्यते । यथैकस्मात्

---

62. ब्रसू0, 2.1.27

63. भामती - 2.2.28

चन्द्रमसो द्वितीयश्च चन्द्रमा:"[64] इति । भ्रान्तिज्ञाने भासमानं चन्द्रद्वयं यथा परस्परं न भिद्यते तथा यत्र यत्र सहोपलम्भनियम: तत्र तत्र अभिहत्वम् इति बोद्धव्यम् । तस्मात् नीलतद्विज्ञाने अपि परस्परं न भिद्यते । तयो: नियतसहोपलम्भत्वात् इति स्थिति: । तदुक्तं - धर्मकीर्तिना -- "सहोपलम्भ नियमादभेदो नीलतद्धियो: । भेदश्च भ्रान्तिविज्ञानै दृ तेन्द्राविवाद्वये " इति । एवं सर्वेषां वस्तूनां ज्ञानाकारत्वात् तत्सामान्यात् रजतस्यापि ज्ञानाकारत्वं सिद्धम् ।

तत्रो -- सर्वेषां वस्तूनां ज्ञानाकारत्वम् असिद्धम् । तथाहि -- यत्र भ्रान्ति -- वृ चन्द्रद्वयकम् द्वयोरपि विज्ञेयत्वं तत्रेदं भवतु नाम । नीलतद्धिज्ञानयो: शुक्तिरजतम विज्ञानयोश्च विज्ञानविज्ञेययो: तु इदं कुतस्त्यम् ? तथाहि उक्तानुमाने द्वयोर्विज्ञेयत्वस्य उपाधे: सत्वात् नेदम् अनुमानम् उपपद्यते ।

तथा च सर्वथा घटादीनाम् अपि ज्ञानाकारतायाः असम्भवाद् अयं घट: इत्यादौ इव शुक्ति रजतस्यापि ज्ञानाकारता इति वाद: न युक्त: । तस्मात् अनुभवेन अनुमानेन वा बाह्ये आन्तरस्य ज्ञानस्य आरोप: अध्यास: इति नोपपद्यते ।

एवं माध्यमिकानां असत् -- ख्यातिवाद अपि निरस्त: असद् रूपत्वे भावसम्भवान्, अन्यथा शशशृङ्गादि: अपि भानापत्ते: । स्वत: प्रामाण्यवादे, परत: प्रामाण्यवादे परतश्च प्रामाण्यसिद्धया प्रमाणप्रमेयाभेदेन पदार्थ: विभाग: अपि उपपन्न: इति तदुपपत्या अपि न सर्वस्य असद्रूपत्वम् । नहि असत: पदार्थस्य सत्ता ज्ञानेन सम्बन्ध: भवति ।

## 4·6·3 अख्याति:

आत्मख्यातिपक्ष: अरण्यासवादिना प्राभाकरेण प्रवर्तित: आचार्य: वाचस्पतिमिश्र: ~~चिरख्याति~~ । न्यायवार्तिकतात्पर्यटीकायां ~~अख्यातिवादे~~ येन शास्त्रेण अन्यथाख्यातिं प्रति प्रहारं ~~चिक्षिप्त~~ करोति: तेनैव शास्त्रेण अत्रापि प्रहारं कुर्वन्

---------------

कथयति -
~~उक्तं च~~ -- रजतस्य विज्ञानाकारता न तु रजतानुभवेन साधयितुं शक्यते नच बाधकज्ञानेनैव ।

रजतानुभवेन रजतस्य विज्ञानाकारता ~~अत~~ एव न सिद्ध्यति । यतो हि इदं रजतमित्याकारक: रजतानुभव: रजतस्य इदंकारास्पदतां साधयति नतु ज्ञानाकारताम् । ज्ञानाकारतायाः ज्ञानं तु अहं रजतं इति अनुभवकारो भवेत् नेदं रजतमिति बाधकज्ञानं रजतज्ञानाकारता भवति । यतो हि नेदं रजतं इति ~~अपि~~ बाधकज्ञानं पुरोवर्तिनं वस्तु रजतात् भिन्नं साधयति नतु नदीयां ज्ञानाकारतां साधयति । अनेन प्रकारेण आत्मख्यातिवादी वैनाशिक: विनष्ट: संतिष्टति, तस्मिन् स्थाने अख्यातिवादी स्कीयं मन्तव्यं उपस्थापयति ।

अख्यातिवादिनां प्राभाकरानुसारं किमपि ज्ञानं मिथ्या नास्ति । ज्ञानस्य मिथ्यात्वे स्वीक्रियमाणे मानवानां सर्वाणि ज्ञानानि अनास्थकानि स्यु: । दोषवशात् अपि शुक्तिज्ञाने रजतस्य प्रतीति: नानुपपन्न: । यतो हि इन्द्रियाणि समीचीनम् ज्ञानं उत्पादयन्ति । दोषसहितानि इन्द्रियाणि मिथ्याज्ञानम् उत्पादयि न्ति इति स्वीकरणमपि संगतं न भवति ।

कस्यापि ज्ञानस्य मिथ्यात्वाभावेन इदं रजतम् इत्यादि स्थले मिथ्याज्ञानम् अनंगीकृत्य भिन्नं भिन्नं समीचीनज्ञानद्वयं अख्यातिवादी अंगीकरोति । (क) इदमाकारकम् अनुभवज्ञानम् । (ख) रजतम् इत्याकारकं स्मृतिज्ञानम् । इदमाकारकमनुभवज्ञानं सम्मुखनिहितशक्त्या चक्षुषु सम्बन्धे सति जायते । किन्तु दोषकारणाम् तस्या: शुक्ते: शुक्तित्वेन रूपेण ज्ञानम् अभूत्वा सामान्यरूपेण इदंमया ज्ञानं जायते । शुक्तौ रजते च चाकचिक्यादिधर्माणां समानकारणात् शुक्त्यवलोकनैनैव सादृश्यज्ञानेन रजतस्य संस्कार: उद्बुद्ध: सन् रजतं स्मारयति ।

इत्थं च रजतस्य स्मृतिरन्यं ज्ञानं भवति । किन्तु अत्रापि दोषवशात् तत्कांशस्य स्मरणम् अभूत्वा केवलं स्मरणस्य ज्ञानं जायते । इत्थं च इदं तथा रजतं एतद्द्वयमपि भिन्नं-भिन्नं ज्ञानं वर्तते ।एकम् अनुभवात्मकं । द्वितीयं स्मरणात्मकं ज्ञानं च । प्रथमस्य विषयः इदंतया ज्ञाता शुक्तिः, द्वितीयस्य विषयः तत्कांशयिनं रजतम् । किन्तु पुरोवर्तिनि शुक्तौ इदं रजतम् इति ज्ञानस्य समानमिव एते द्वे ज्ञाने भवतः । अतः सादृश्यकारणात् एतज्ज्ञानद्वयं भेदव्यवहारं सामानाधिकरण्ये व्यपदेशं च उत्पादयति । अर्थात् स्वरूपतो विषयतश्च भिन्नेषु भिन्नेषु एतेषु ज्ञानेषु वर्तमानकारणस्य भेदाभावेन अत्र एतत् व्यवहारः उपपद्यते ।

अस्मिन् भेदव्यवहारे एव भ्रमव्यवहारो पि जायते । नेदं रजतमिति बाधकज्ञानमपि तस्य भेदव्यवहारस्यैव बाधः करोति । नच अन्यस्य वस्तुनः । एनदिव भगवान् आदिशंकराचार्येण "यत्र यदध्यासः तद्विवेकाग्रह निबन्धनो भ्रमः" इति उक्तम् ।

## 4.6.4 अन्यथाख्यातिः

प्रभाकरस्य अख्यातिवादेऽपि भ्रमज्ञानस्य समाधानं कर्तुं न शक्यते । यतो हि चेतन प्रवृत्तिः अज्ञानपूर्विका न भवति अपितु ज्ञानपूर्विकैव जायते । प्रभाकराः उभयो ज्ञानयोः भेदाग्रहं रजतार्थिनः प्रवृत्तौ कारणम् आमनन्ति। अतः एतदंगीकर्तव्यं भविष्यति यत् पूर्ववर्तिनी शुक्तौ रजतार्थिनः प्रवृत्तिः रजतस्य आरोपितं ज्ञानं विना नोपपद्यते । यतो हि तादीया प्रवृत्तिः इदंकारास्पदाभिमुखी वर्तते । इदंकारास्पदं च वस्तु रजतं नास्ति । यतः तस्मिन् आरोपितं रजतज्ञानं यावत्पर्यन्तं न भवेत् तावत्पर्यन्तं रजतार्थिनः प्रवृत्तिः न भवति ।

एतस्याः समाधानं कर्तुं नैयायिकाः भ्रमस्थले अन्यथाख्यातिः प्रस्तुतवन्तः । तदनुसारं पुरोवर्तिनि शुक्ति वस्तुनि इन्द्रियसन्निकर्ष-

सत्वे दोषवशात् शुक्तित्वधर्मस्य ज्ञानम् अभूत्वा रजतत्वधर्मस्य ज्ञानं जायते । इत्थं च शुक्ते: शुक्तित्वरूपेण प्रतीति: अभूत्वा शुक्तिभिन्नरजतत्वस्य धर्मपूर्विका: प्रतीति: जायते । इयम् अन्यथाख्यातिर्भवति । अन्यथाख्यातिवादशब्दस्यार्थ: कस्यापि वस्तुन: अन्यरूपेण प्रतीति: । अन्यरूपशब्दे रूपशब्दार्थ: धर्मो ऽस्ति । अत: अन्यरूपेण अर्थात् अन्यधर्मेण प्रतीयते । एतदेव नैयायिका: तदभाववति तत्प्रकारकं ज्ञानं अप्रमा इति रूपेण कथयन्ति । अर्थात् रजतत्वाभाववता शुक्तौ रजतत्वप्रकारकं ज्ञानं भ्रमात्मकं भवति । इत्थम् अंगीक्रियमाणे पूर्ववर्तिनो वस्तुनि रजतत्वज्ञाने जाते रजतार्थिन: प्रवृत्तिरपि जायते । रजतत्वधर्मस्य आरोपेण धर्मिणो: आरोपो नांगीकर्तव्य: । अयं लाघवं अपि भवति । नेदं रजतमिति बाधकज्ञानमपि पुरोवर्तिन: रजतत्वधर्मस्यैव बाधा करोति नतु रजतस्य । यतो हि तत्र रजतस्य सत्तैव नास्ति ।

भामतीग्रन्थे श्रीमान् वाचस्पतिमिश्रमहोदय: अन्यथाख्यातिमतस्य आलोचनां विशेषरूपेण न विहितवान् किन्तु असत्ख्यातिं निराकुर्वन् अनिर्वचनीयख्याते: स्थापना कृतवान् । अत: अन्यथाख्याति: आलोचना अनावश्यको इति ज्ञात्वा परित्यक्ता । किन्तु केचन जना: अवश्यं सन्दिहमाना आसन् यत् वाचस्पतिमिश्रस्य अन्यथाख्यातिवाद: अभीष्ट: वर्तते । तथा कल्पतरुकार: अमलानन्द: लिखति --

"स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् ।
अन्यथाख्यातिरिष्टा स्येत्यन्यथा जगृहुर्जना: ।।"

4·6·5 अनिर्वचनीयख्याति:

अद्वैतवेदान्तिन: अनिर्वचनीयख्यातिं स्वीकुर्वन्ति । तेषां मते 'इदं रजतम्' इत्यत्र शुक्तौ सामान्येन 'इदम्' इति ज्ञानोदयानन्तरं चाकचिक्यादिसादृश्यात् यस्मिन् चैतन्ये शुक्ति: अधिष्टिता तस्मिन्

चैतन्ये आश्रितायाः अविद्यायाः तमोभागात् अनिर्वचनीयं रजतं तत्काल-मेव उत्पद्यते ।

शुक्तौ इदम् रूपेण भासमानत्वात् नाकाशकुशभवत् अलीकम्, किन्तु शुक्तिकाज्ञानोदये तत् बाधितं भवतीति न तस्य सत्वम् । सदसतोश्च परस्परविरोधात् तस्य रजतस्य न सदसत्वं, नतु सदसाद्भिन्नत्वम् । एवं च शुक्तौ भासमानस्य रजतस्य चतुष्कोटिविनिर्मुक्तावात् अनिर्वचनीयत्वम् । अनिर्वचनीयत्वं नाम सदसाद्भिन्नावम् । अस्य 'मिथ्यात्वम्' इति पर्याय-पदमपि युक्तम् ।

भाष्यकारः शंकराचार्यः ख्यातिमाश्रित्य जगतः मिथ्यात्वं निरूपयति ।

आचार्यः वाचस्पतिमिश्रः अध्यासस्य सन्दर्भे प चख्यातयः समग्ररूपेण प्रतिपादयित्वा अनिर्वचनीयख्यातिं स्वीकृत्य अन्यानां ख्यातीनां खण्ड करोति । अन्यथाख्यातिविषये वाचस्पतेः मतम् अमलानन्दः एवं प्रतिपाद-यति --

"स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् ।
अन्यथाख्यातिरिष्टाा स्येत्यन्यथा वाजगृ र्जनाः ।।"[65]

केचित् व्याख्याकाराः वाचस्पतिः अन्यथाख्यात्याः समर्थकः आसीदिति कथयन्ति । तद्यथा -- "तेन सर्वेषामेव परीक्षकाणां मते न्य-स्यान्यधर्मकल्पना अनिर्वचनीयता वश्यभाविनीत्यनिर्वचनीयता सर्वतन्त्रा-विरुद्धे विरुद्धो र्थः इत्यर्थः ।"[66] शून्यवादी बौद्धयाः शून्यस्यानिर्व-

---

65. कल्पतरु, अ०भा०, पृ० 24

66. भामती, पृ० 34

चनीयत्वं कल्पयन्ति । यद्यपि बौद्धख्यानाम् अनिर्वचनीयत्वं येनापि प्रकारेण निर्वचनं कर्तुं न शक्यते । किन्तु अद्वैतिना अनिर्ववनीयत्वं सदसद्विलक्षणात्वेन वक्तुं शक्यन्ते । वाचस्पतिना भामत्या: मंगलश्लोके 'अनिर्वाच्यविद्याद्वितय-सचिवस्य' इत्यादि पंक्त्या अविद्या: एव अनिर्वाच्य: इति इत्युक्तम् । अत: वेदान्ताभिमतख्याति: अनिर्वचनीयख्याति: इत्युच्यते ।

विवरणाकारस्य प्रकाशात्मयते: मते भ्रमस्थले प्रतीयमानं रजतं मिथ्या: तथा अविद्योन्पादक: च भवति । इदं शुक्तिरिति ज्ञानोदयपर्यन्तं मिथ्या-रजतमेव शुक्तौ भासते । अत: एतत् स्पष्टयति यत् प्राति भासिकरजतस्य उपादानकारणं तु अविद्या एव । अत: तं मायामय: इत्युच्यते । एवं ख्यातिसम्बन्धविषये भामतीकर: तथा विवरणाकार: अनिर्वचनीयख्यातिं समर्थयत: ।

ब्रह्मसूत्रसम्बन्धभाष्ये आचार्य: शंकराचार्य: कथयति यत् -- "सर्वथापि त्वन्यस्यान्यधर्मविभासतां न व्यभिचरति' इति । अस्यार्थ: अयमस्ति यत् अन्यस्य अन्यधर्मतिभासता अनृतता सा च अनिर्वचनीय । सर्वतन्त्र सिद्धान्त: इति । अर्थात् अन्ये अन्यधर्मस्य प्रतीति: असत् भवति इति सर्वसम्मतमेव । एवं अद्वैतमते सर्वेषां ख्यातीनां पर्यवसानं अनिर्वचनीयख्यात्यां एव भवति । अनिर्वचनीयताख्यातिवाद: एव समीचीन: । तथाहि 'तेन सर्वेषामेव परीक्ष-काणां मते न्यस्यान्यधर्मकल्पना अनिर्वचनीयता वश्यम्भाविनीति अनिर्वचनीयता सर्वतन्त्रविरुद्धार्थ: । [67]

---

67. The theory of atma Kyathi of the Vijnana-Vadins cannot stand examination. First of all, the Philosophical position on which it is grounded is unsound. It cannot be said that there is no external object outside cognition and related to it. The existence of an object external to cognition is a matter of experience through the senser; and what is experienced through the sense and what is experienced through the senses. cannot be denied. (SBCB 2.2.28)

संक्षेपत: इदं कथयितुं शक्यते यत् 'इदं रजतम्' इति स्थले यत् भ्रमज्ञानमुदेति तत्र मन: कल्पितस्य आन्तररजतस्य बहिरस्तित्वस्य बोध: भ्रमरूप: । अत: विज्ञानवादिनां -- मतानुसारम् एष: भ्रम: आत्मख्यातिरूप: । भामतीपन्थिनस्य आत्मख्यातिवादं निरस्य एतादृशेषु स्थलेषु अनिर्वचनीयख्यातिवादम् एव उपपादयन्ति ।

4·7·0 अवच्छेदवाद:

भामतीप्रस्थानस्य मुख्य: सिद्धान्त: अवच्छेदवाद: अस्ति । अस्य वादस्य मूलभूतानि तत्वानि पूर्ववर्तिसाहित्ये पि उपलब्धुं शक्यन्ते । शांकरभाष्यम् अस्य मुख्य: आधार: अस्तीति सुस्पष्टमेव । जीवब्रह्मणो: पारस्परिक: सम्बन्ध: कीदृश: ? अविद्याया: सम्बन्ध: जीवेन सह ब्रह्मणा सह च कीदृश: ? इत्येतान् एतादृशान् अन्यान् च प्रश्नान् समाधातुं वाचस्पतिना अवच्छेदवादस्य प्रवर्तनं कृतम् ।

अत्रैतत् ज्ञातव्यं वर्तते यत् उपर्युक्तानां प्रश्नानाम् एव समाधानाय सुरेश्वराचार्येण आभासवादस्य तथा पद्मपादेन प्रकाशात्मयतिना च प्रतिबिम्बावादस्य उद्भावनं कृतम् । अत: एतेषां वादानां मध्ये एकस्य निरूपणम् आकलनं वा अन्ययो: द्वयो: आकलनं बिना सम्यक् रूपेण सम्भवं नास्ति । एतत् विचार्य एवास्माभि: अवच्छेदवाद - आभासवाद - प्रतिबिम्बवादानां तुलनात्मकं समीक्षणम् अत्र संक्षेपत: क्रियते ।

4·7·1 ब्रह्मसूत्र भाष्याभामत्यादिषु अवच्छेदवादविमर्श:

जीवेश्वरयो: औपाधिक: भेद: नतु पारमार्थिक: इति अद्वैतिनां सिद्धान्त: । अवच्छेदवादनुसारम् अन्त:करणावच्छिन्नं चैतन्यं जीव:, अविद्यावच्छिन्नं चैतन्यम् ईश्वर: । ईश्वरस्य उपाधि: माया, जीवस्य

उपाधिः अन्तःकरणम् । ब्रह्मणः सखण्डाभिव्यक्तिः । जीव - ब्रह्मणोः सम्बन्धः घटाकाशमहाकाशयोः इव वर्तते । "अंशो नानाव्यपदेशात्" [67] इत्यादि सूत्रेषु च परमात्मनः अंशत्वेन जीवस्वरूपकथनात् अयम् अवच्छेदवादः अंशवादो वा सूत्रकाराणाम् अभिप्रेतः । 'एवमेव' ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवद्गीतावाक्यमपि जीवस्य ब्रह्मांशत्वं प्रतिपादयति - इति भामतीपन्थिनो भिप्रयन्ति ।

"न स्थानतो पि" इत्यादि सूत्रोक्ताधिकरणे भाष्यकारेण स्वयं प्रतिबिम्बवादः निराकृतः । अस्यैवाधिकरणस्य अत एव चोपमा सूर्यकादिवत्' इति सूत्रे जल-सूर्यदृष्टान्तग्रहणात् प्रतिबिम्बवादः एव सूत्रकारसम्मतः' इति प्रतिबिम्बवादिभिः उत्यमाने अवच्छेदवादिभिः उच्यते --'अम्बुवदग्रहणात्तु न तथात्वम्' इति उत्तरसूत्रे एव भाष्यकारेण सर्वगतस्य आत्मनः प्रतिबिम्बत्वं निराकृतम् । अम्बु-सूर्यादिभ्यो गर्तेभ्यः विप्रकृष्टे देशे वर्तते । आत्मा तु अमूर्तः । तस्य च सर्वव्यापित्वात् तस्मात् विप्रकृष्टदेशे वर्तमानं प्रतिबिम्बयोग्यं न किमपि तस्तु अस्ति । अतः सर्वगतस्य आत्मनो प्रतिबिम्बः न युक्तः । ब्रह्मणः सूर्यवत् प्रतिबिम्बत्वे न किंचिदपि तात्पर्यम् ।

अत्र यथा सूर्यः जले प्रतिबिम्बितः सन् जलगतकम्पनाद्युपाध्यधीनो भवति, तथा ब्रह्माणि अन्तःकरणादि परिच्छिन्नं सत् अन्तःकरणगतसुखदुःखादिभाग भवति अतएव चोपमा सूर्यकादिवत्' इत्यस्य सूत्रस्य तात्पर्यं; नतु ब्रह्मणः सूर्यवत् प्रतिबिम्बत्वे । वाचस्पतिमिश्रैः अवच्छेदवादम् अवलम्ब्य नीरूपस्य चैतन्यस्य नीरूपे अन्तःकरणाद्युपाधौ प्रतिबिम्बनं निराकृतम् । तथा चोक्तम् -- "रूपवदिह द्रव्यम् अतिस्वच्छतया रूपतो

---

67. ब्र०सू०, 2.3.43

68. ब्र०सू०, 3.2.18

द्रव्यान्तरस्ये तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात् । चिदात्मा तु अरूपो विषयी न विषयच्छायां उद्ग्राहयितुम् अर्हति । यथाहु: -- "शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बिता" इति ।[69] उदके तु न गगनस्य प्रतिबिम्ब:, किन्तु आलोकस्य नक्षत्रादिनां वा । अविद्योपधान-कल्पितावच्छेदो जीव: परमात्मप्रतिबिम्बकल्पउ' इत्यत्र अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति । तथापि तत्प्रतिबिम्ब-कल्पजीवद्वारेण परस्मिन् उच्यते इत्यत्र च जीवस्य प्रतिबिम्बसादृश्यकथनात् प्रतिबिम्बवाद: भामतीपस्थिनाम् असम्मत: ।

भामतीपस्थिनामेतदपि कथनं वर्तते यत् 'यथा घटाकाशो नाम न परमाकाशादन्य:' इत्यादि ग्रन्थे घटाकाशोदाहरणेन 'स एव तु (परमात्मा) अविद्योपधानभेदात् घटकरकाद्याकाशवत् भेदेन प्रथते इत्यत्र 'औपाधिकत्वाच्च' भेदस्य घटकरकाद्याकाशवत् विरुद्धधार्मसंसर्गस्योपपत्ते: इत्यत्र च जीवस्य घटकरकाथाकाशवत् अवच्छिन्नत्वोक्त्या अवच्छेदवाद: एव सूत्रकारेण प्रतिपादित: । वाचस्पतिमिश्राणां मते अनाद्यविद्यावशात् सच्चिदानन्दं ब्रह्म देहेन्द्रियादिभि: आबद्धं सत् जीवभावं प्राप्नोति । अहं प्रत्यये हि चिदात्मा कर्तृत्वेन भोक्तृत्वेन च प्रत्यवभासते । नहि उदासीनस्य निष्क्रियस्य आत्मन: क्रियाशक्ति: भोगशक्तिर्वा सम्भवति । यस्य च बुद्ध्यादे: कार्यकारण-संघातस्य क्रियाशक्ति: न तस्य चैतन्यम् ।

वाचस्पतिमिश्रा: अवच्छेदवादिन: सन्तीति स्पष्टमेव । घटाकाशादि-दृष्टान्ता: हि अवच्छेदवादे एव उपयुज्यन्ते । 'अवस्थितेरिति काशकृत्स्न:' इति सूत्र -- भाष्यस्य व्याख्याने वाचस्पति: कथयति -- "न जीव आत्मनोऽन्य:' नापि तद्विकार:, किंत्वात्मैवाविद्योपाधानकल्पितावच्छेद: ।

-----------------

69. भामती, 1.1.1, पृ0 8

आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशो नतु परमाकाशादन्यस्तद्विकारो वा ततश्च जीवात्मनोपक्रमः परमात्मनैवोपक्रमस्तस्य ततो भेदात् ।"[70]

कैश्चित् विद्वद्भिः एषा शंका उद्भाव्यते यत् "अंशो नानाव्यपदेशात् " इत्यादि सूत्रभाष्याणां व्याख्यानप्रसंगे वाचस्पतिमिश्रैः अपि जीवस्य ब्रह्मप्रतिबिम्बत्वं स्वीकृतमिति । तथया --'यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावे अवतिष्ठते न कृपाणे प्रतिबिम्बितमपि । एवमविद्योपधानाविगमे जीवे ब्रह्मभाव इति सिद्धा श्च जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वंश इति तात्पर्यार्थः" ।[71] एवंप्रकारेण वाचस्पतिमिश्राः अपि प्रतिबिम्बवादिनः इति केचन वदन्ति । किन्तु परिमलकारैः समन्वयाधिकरणस्य उपसंहारे अस्य आरोपस्य प्रत्याख्यानम् एवं कृतम् -- "तस्मादवच्छेदपक्षे न सूत्रादिविरोधशङ्का ।। तत्र तत्र प्रतिबिम्बत्वव्यवहारस्तु वृद्धिह्रासभावत्वसूत्र लृप्तसादृश्यमूलो गौणः । नहि वल्नाभिन्नत्वेनावगते माणवके अग्निरधीते अग्निरागच्छतीत्यादि प्रयोगसहस्रेऽप्यग्निशब्दो माणवके मुख्यत्वमनुवीत, अन्तःकरणकृतस्यैवात्मनो जीवान्तर्यामिभावेन भेदस्तवविद्या श्रयत्वतद्विषयत्वान्तःकरणावच्छिन्नत्वतु संङ्कल्पितत्वाधमेषउपपद्यते, अन्यथा स्वकल्प्य चविवर्ताधि 'ष्ठस्माकमनादय' इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवेश्वरतद्भेदादि - ष्टान्तत्वेन सर्वगतस्य शुद्धाचैतन्यस्यात्यन्तःकरणे सत्वमवर्जनीयं, तत्तु प्रतिबिम्बपक्षमाश्रित्य द्विगुणीकृत्य वृत्युपपादनेनापि न निर्वहतीति द्विगुणीकृत्य हत्तिरूपपादनीया भवेत्; प्रति ब्रह्मोपासनमुवाक्यधर्मिभिदस्याचार्यै नन्दमयाधिकरणारम्भे वक्ष्यमाणत्वात् ।"

---

70. ब्र०सू०, 1·4·22; भामती, पृ० 416

71. भामती, पृ० 723

4·7·2· अवच्छेदवादस्य विरुद्धं प्रतिबिम्बवादिनामाक्षेपा:

उपर्युक्तानां भाष्यवाक्यानाम् अनुसारं यद्यपि अवच्छेदवादस्य निरूपणं वाचस्पतिमिश्रप्रभृतिभि: कृतं, तथापि भाष्ये एताह्शानि कथनानि अपि सन्ति, येषाम् अनुसारं प्रतिबिम्बवादस्यापि प्रतिपादनं संजायते ।। जीव-ब्रह्मणो: अभेदप्रतिपादनाय जलप्रतिबिम्बस्यापि ये दृष्टान्ता: प्रस्तुता: तेषु प्रतिबिम्बवादस्य बीजानि उपलभ्यन्ते । तद्यथा --

(क) 'अत एव चोपमा सूर्यकादिवत्' इत्यस्य सूत्रस्य भाष्ये 'एकैव हि भूतात्मा भूते भूते व्यवस्थित: । एकधा बहुधा चैव दृश्यते जलश्चन्द्रवत् ।।" इति वाक्यमुदाहृत्य भगवता शंकराचार्येण प्रतिबिम्बवादस्य समादर:' कृत: ।

(ख) प्रश्नोपनिषद: शांकरभाष्येऽपि निम्नलिखितानि वचनानि उपलभ्यन्ते -- "ज्ञानस्यैकत्वोपपत्ते: सर्वेष्वेकालपुरुषाद्यवस्यमेकमेव ज्ञानं नामरूपोपाध्य धनेकोपाधिभेदात्मवित्रादिजलादिप्रतिबिम्बवत् अनेकधावभासत इति ।

(ग) ऐतरेयोपनिषद: शांकरभाष्येऽपि प्रतिबिम्बवादस्य उल्लेख: दृश्यते । तद्यथा --

"स एष प्रज्ञानरूप आत्मा ब्रह्मपरं सर्वशाशित्स्य प्राण: प्रज्ञात्मान्त:करणोपाधि वनुप्रविष्टो जलभेदचातसूर्यप्रतिबिम्बवत् हिरण्यगर्भ: प्राण: प्रज्ञात्मा । एष एवेन्द्रो गुणाद्देवराजो वा ।"[72]

बृहदारण्यकोपनिषद: शांकरभाष्ये पि प्रतिबिम्बवादस्य परामर्श: दृश्यते । तद्यथा -- "तस्य प्रतिबिम्बाख्यस्य वृष्यवे०० पुरुषस्य निष्पन्तिरस्तो:

-----------------------

72· ऐ०उ०शा०भा०, 3/1, पृ० 86

प्राणात्' ।[73] ...... बुद्ध्याद्युपाधिस्वभावानुविधायी हि स चन्द्रादिप्रतिबिम्ब इव जलाद्यनुविधायी ।"[74]

"ब्रह्मसूत्रशांकरभाष्ये एतदपि स्पष्टीकृतं वर्तते यत् उपाधेः प्रभावः प्रतिबिम्बे पतति न तु बिम्बे'[75] । तद्यथा --'यथा चोदशरावादि कम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमाने पि न तद्वान्सूर्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्ये शे दुःखायमाने पि न तद्वानीश्वरो दुःखायते । जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम् ।"[76] उतादृशानाम् अन्येषां च भाष्यवाक्यानाम् आश्रयं गृहीत्वा प्रकाशात्मयति- प्रभृतिभिः प्रतिबिम्बवादस्य समर्थन प्रवर्तनं कृतम् । तद्यथा --

(क) जीवः प्रतिबिम्बश्चेत् न बिम्बात्मतामवगन्तुमलं प्रतिबिम्बात् अधि पात्रगतदेवदत्तप्रतिबिम्बवत् -- इत्येतन्निराचष्टे 'देवदत्तस्याचे नांशस्य' इति । अचेतनत्वप्रयुक्ता तत्रानवगतिः, न प्रतिबिम्बत्वप्रयुक्ता, घटादिषु तथा दर्शनात् इति भावः ।"[77]

(ख) 'ननु देवदत्तस्यैव बिम्बस्य भ्रमनिवर्तकतत्वज्ञानाश्रयत्वं दृष्टम् । एवं बिम्बत्वात् ब्रह्मण एव भ्रमनिरासितत्वज्ञानाश्रयत्वं स्यात्, इति । नेत्याह --'यस्य हि भ्रान्तिः' इति । न बिम्बत्वकृतं तत्त्वज्ञानाश्रयत्वम्, किन्तु भ्रान्तत्वकृतम्, तदपि जीवत्वमिमित्तमिति भावः ।"[78]

---

73. बृ०उ०
74. वही, 2.1.19
75. ब्र०सू०शां० भा०, 2.2.40
76. वही, 2.2.46, पृ० 557-58
77. प०पा०वि०, पृ० 64
78. वही, पृ० 65

अवच्छेदवादस्य विपरीतं प्रतिबिम्बवादस्य समर्थने विवरणकारस्य मुतत् कथनम् अवधेयं वर्तते -- " ननु घटाकाशवदुपाध्यवच्छिन्नो जीव: किं न स्यात् ? न । सामान्यविशेषाभ्याम् उपाधिभिरण्डान्तर्वर्तिब्रह्मणा: सर्वात्मना जीवभावेनावच्छिन्नत्वात् अनवच्छिन्नस्य ब्रह्मणो ण्डाद् बहिरेव सभावप्रसंगात् । तत्र सर्वगतसर्व-नियन्तृत्वादि ब्रह्मणो न स्यात् । अवच्छिन्नप्रदेशेष्वनवच्छिन्नस्य द्विगुणीकृत्य हत्ययोगात् । स्वरूपापेक्षया तत्सर्वं न बहिस्थितब्रह्मापेक्षया इति चेत्, न ।'यो विज्ञाने तिष्टन्' इत्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणो जीवसंनिधानेन विकारान्तरावस्थानश्रवणात् । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशपदर्शनात् एकत्रैव द्विगुणीकृत्य वृत्युपपत्ते:, जीवावच्छेदेषु ब्रह्मणो पि नियन्तृत्वादिरूपेणावस्थानम् उपपद्यत इति प्रतिबिम्बपक्ष एव श्रेयान्' इति । 79

प्रतिबिम्बवादस्य निरूपणेन सदैव विवरणकार: प्रकाशात्मयतिभि: प्रतिबिम्बवादस्य समर्थनाय अवच्छेदवादे अनेके दोषा: संदर्शिता: । तद्यथा --

(क) यदि अवच्छेदवाद: आश्रीयते तर्हि अन्तर्यामिब्राह्मणस्य संगति: नोपपद्यते । बृहदारण्यकोपनिषदि'य: आत्मानमन्तरीयमयति' इत्यादि श्रुतौ एतदुक्तमस्ति यत् जीव ब्रह्मात्मनि अन्तयामिरूपेण अवस्थीयते । यदि जीव: अन्त:करणोपाध्यवच्छिन्नं चैतन्यमस्तीति स्वीक्रियेत तर्हि तस्मिन् अनवच्छिन्नं चैतन्यरूपं ब्रह्म अवस्थातुं न शक्नोति । यथा घटे घटावच्छिन्नस्य घटाकाशस्य एव वृत्ति: भवति नत्वनवच्छिन्नस्य

---

79. पं० पा०वि०, पृ० 65-66

महाकाशस्य । तथैवावच्छिन्ने जीवे अनवच्छिन्नस्य चैतन्यस्य वृत्तिः न सम्भवति ।

(ख) यदि अवच्छेदवादः स्वीक्रियते तर्हि ब्रह्मणः सर्वगतत्वस्य सर्वनियन्तृत्वस्य च हानिः संजायेत । तद्यथा -- अनवच्छिन्नस्य ब्रह्मणो अण्डाद् बहिरेव सद्भावप्रसङ्गात् सर्वगतत्व सर्वनियन्तृत्वादि ब्रह्मणो न स्यात । अनवच्छिन्न प्रदेशेषु अनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात्।

(ग) यदि जीवः अन्तःकरणावच्छिन्नं चैतन्यम् इति स्वीक्रियेत तर्हि तस्य कर्मसमये तथा कर्मफलभोगसमये भिन्नकालत्वात् तथा कर्मस्थले ( अर्थात् पृथिव्यां ) कर्मफलत्वाप्तिस्थले (अर्थात् स्वर्गे) प्रदेशभेदत्वात् कृतहानि -- अकृताभ्यागमदोषयोः प्रसक्तिः संजायेत ।

(घ) अन्तःकरणावच्छिन्नं चैतन्यं यदि प्रमातृत्वेन स्वीक्रियेत तर्हि घटाद्यवच्छिन्नस्य चैतन्यस्यापि प्रमातृत्वं (जीवत्वं) प्रसज्येत । यतः घटादिवत् अन्तःकरणमपि भूतवर्गस्य कार्यमस्ति । अतः तदपि भौतिकं वर्त्तते ।यथोक्तं विद्यारण्यमुनिना --

"शृण्वसंग परिच्छेदमात्राज्जीवो भवेत् नहि ।
अन्यथा घटकुड्यादेरवच्छिन्नस्य जीवता ।।"[80]

पञ्चपादिकायां पद्मपादाचार्येण ब्रह्मणः बिम्बस्थानीयत्वं, जीवस्य च प्रतिबिम्बस्थानीयत्वं प्रतिपादितम् । स्वमतस्य समर्थनाय स

---

80• पंचदशी ( कूटस्थखण्ड)

कथयति यत् 'तत्वमसि' इत्यस्मिन् महावाक्ये प्रतिबिम्बस्थानीयस्य जीवस्य बिम्बस्थानीया ब्रह्मस्वरूपता उपदिष्टा वर्त्तते । तद्यथा -- "तत्वमिति बिम्बस्थानीयब्रह्मरूपता प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते ।

पंचपादिकाविवरणे प्रकाशात्मयतिना श्रुतिस्मृतिप्रभृतीनाम् आश्रयं गृहीत्व प्रतिबिम्बवादस्य समर्थनं कृतम् । तद्यथा -- "रूपं रूपं प्रति रूपो बभूव' "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' 'अत एव चोपमा सूर्यकादिवत्' इति च श्रुतिस्मृतिसूत्रे जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात्। 8।

एतदपि ज्ञातव्यं वर्तते यत् प्रतिबिम्बवादिनां द्वौ प्रमुखौ वर्गौ स्तः । एकस्य प्रवर्तकः विवरणाकारः' प्रकाशात्मयतिः', अपरस्य प्रवर्तकः संक्षेपशारीरककारः 'सर्वज्ञात्ममुनिः' । विवरणाकारस्य मतानुसारम् अन्तःकरणे चैतन्यस्य प्रतिबिम्बाः जीवः, किन्तु ईश्वरः बिम्बस्थानापन्नं चैतन्यम् एव । एवं प्रकारेण विवरणाकारमते ईश्वरः बिम्बरूप एव ब्रह्मरूपत्वात् ईश्वरस्य परमार्थतः सत्यत्वं वर्त्तते ।

किन्तु सर्वज्ञात्ममुनेः मतानुसारं जीवः ईश्वरश्च उभौ प्रतिबिम्बरूपौ । अविद्यायां चैतन्यस्य प्रतिबिम्बः ईश्वरः तथा अन्तःकरणे चैतन्यस्य प्रतिबिम्बः जीवः । तद्यथा --

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
प्रतिबिम्बो त्र संक्षेपशारीरककृतां नये ।।" इति ।

---

8।• पं० पा०वि०, पृ० 289

4·7·3· प्रतिबिम्बवादस्य विरुद्धम् अवच्छेदवादिनामाक्षेपा --

प्रतिबिम्बवादस्य विरुद्धं ये दोषा: अवच्छेदवादिभि: अन्यैश्च आचार्यै: उद्भाव्यन्ते तेषु केचिदत्र उल्लिख्यन्ते ।

(क) अमूर्तस्य ब्रह्मण: प्रतिबिम्ब: कथम् ? अस्य आक्षेपस्य समाधानाय विवरणकार: कथयति -- "अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवत्, अमूर्तस्य ब्रह्मणो पि प्रतिबिम्बसम्भवात् ।[82]

(ख) केषांचित् इदं कथनमस्ति यत् जले अमूर्तस्य आकाशस्य प्रतिबिम्ब: न पतति अपितु जलान्तर्गत: आकाश: एव अभ्रादे: प्रतिबिम्बेन --- सह पश्यत: दृश्यते । अस्य आक्षेपस्य समाधानाय विवरणकार: कथयति यत् जले आकाशस्य प्रतिबिम्ब: स्वीकरणीय एव अन्यथा जानुमात्रप्रमाणजले दूरस्थस्य विशालस्य आकाशस्य यत् दर्शनं भवति तस्य समीचीना व्याख्या न सम्भवेत् । तद्यथा -- "जानुमात्रप्रमाणे पि जले दूरविशालाकाशदर्शनात् जलान्तराकाश एवाभ्रादिप्रतिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात् तत्प्रतिबिम्बत्वं चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं न निराकर्तुं शक्यत इति भाव: ।"[83]

(ग) प्रतिबिम्बवादस्य विरुद्धम् अपरो दोषो उद्भाव्यते यत् अन्त:-करणोपाधे: नीरूपत्वात् तस्मिन् चैतन्यस्य प्रतिबिम्ब: न शक्नोति ।

---

82· पं० वि०, पृ० 289

83· पं० वा० वि०, पृ० 89

प्रतिबिम्बार्थं न केवलं बिम्बस्य रूपवत्त्वम् अपितु प्रतिबिम्बोपाधेरपि रूपवत्त्वम् आवश्यकं वर्त्तते । रूपवत् उपाधौ एव प्रतिबिम्बाः संभवः । रूपहीने उपाधौ न । रूपवति दर्पणे एव मुखस्य प्रतिबिम्बः पतति रूपहीने वायौ न । अतः अन्तःकरणरूपोपाधेः रूपहीनत्वात् तत्र चैतन्यस्य प्रतिबिम्बः न शक्नोति ।

अस्य दोषस्य निराकरणार्थं प्रतिबिम्बवादिभिः इदमुच्यते यत् नीरूपोपाधौ अपि प्रतिबिम्बः पतितुं शक्नोति । उदाहरणतया नीरूपध्वनौ नीरूपवर्णानां प्रतिबिम्बः पतति । अस्मिन् विषये प्रतिपक्षिभिः एतत् कथयितुं शक्यते यत् यथा जपाकुसुमस्य आरुण्यं समीपवर्तिनी स्फटिके प्रसज्यते । तथैव सामीप्यत्वात् वर्णेषु ध्वनिगतधर्माणाम् आरोपः जायते । अतः अत्र बिम्बप्रतिबिम्बत्वं नास्तीति ।

अत्र केचित् कथयन्ति यत् नीरूपध्वनौ नीरूपवर्णानां प्रतिबिम्बत्वं यदि न स्वीक्रियते तथापि प्रतिध्वनिस्तु ध्वनेः प्रतिबिम्बः अस्त्येव । अतः यथा नीरूपध्वनिः नीरूपाकाशे प्रतिध्वनित्वेन प्रतिध्वनितः भवति । तथैव नीरूपं चैतन्यं नीरूपे चैतन्ये प्रतिबिम्बितं भवति । अस्मिन् विषये प्रतिबिम्बवादविरोधीनाम् इदंकथनमस्ति यत् प्रतिध्वनिः वस्तुतः अपरः ध्वनिः वर्त्तते । अस्योत्पादकः आकाशः तथा निमित्तकारणं पूर्वध्वनि वर्त्तते । अतः प्रतिध्वनिः पूर्वध्वनेः प्रतिबिम्बः नापितु तस्मादुत्पन्नः ध्वन्यन्तरः अस्ति । एवं प्रकारेण प्रतिध्वनेः दृष्टान्तम् आश्रित्य नीरूपोपाधौ प्रतिबिम्बभाववादस्य सम्भावना समीचीनः नास्तिः ।

प्रतिबिम्बवादस्य विरुद्धम् एषः आक्षेपः अपि क्रियते यत् विप्रकृष्टदेशास्थितस्य सूर्यादेरेव प्रतिबिम्बः विप्रकृष्टे देशास्थे मूर्ते पतति । किन्तु चैतन्य अन्तःकरणोपाधितः विप्रकृष्टं नास्ति । यतः चैतन्यं सर्वगतम् अस्ति[84] अस्य आक्षेपस्य समाधानं प्रतिबिम्बवादिभिः ब्रह्मसूत्रभाष्योदपि

---

84. ब्र०सू०शा० भा०, 2.3.29, पृ० 369

कर्तुं शक्यते । शंकराचार्यस्य कथनमेतदस्ति यत् दृष्टान्तदार्ष्टान्तिकयोर्मध्ये सर्वसारूप्यं दर्शयितुं न शक्यते ।[85] अस्य तात्पर्य-मिदमस्ति यत् यथा जलगतं सूर्यप्रतिबिम्बं जलगतचलनह्रासादिधर्मानुयायि इव प्रतीयते न तु परमार्थतः सूर्यस्य तथात्वं साधयति तथैव । परमार्थतः अविकृतं ब्रह्म देहाद्युपाध्यन्तर्भावात् उपाधिमत् प्रतीयते । न वस्तुतः तस्य तथात्वमस्ति ।

जीवस्य प्रतिबिम्बरूपत्वे स्वीकृते सति तस्मिन् अचेतनत्वमपि प्रसज्येत । यतः प्रतिबिम्बः सदा अचेतनो एव दृश्यते । एवमेव यदि जीवः ब्रह्मणः प्रतिबिम्बः इति स्वीक्रियेत तर्हि जीवब्रह्मणोः भेदः आवश्यकः स्यात् ।

4.7.4 प्रतिबिम्बवाद अवच्छेदवादयोर्भेदः

उपर्युक्तकथनानां सारूपत्वेन विवरण प्रस्थान -- भामतीप्रस्थानयोः भेदः निम्नलिखितप्रकारेण निरूपयितुं शक्यते ।

(1) विवरणप्रस्थानानुसारं मायाशबलितं ब्रह्म जगत्कारणम् । किन्तु भामतीप्रस्थिनः कथयन्ति यत् ब्रह्म एव केवलं जगत् कारणम् । माया तु सहकारिमात्रम् ।

(2) अविद्याप्रतिबिम्बो जीवः बिम्बभूतः ईश्वर इत्यस्य विवरणमतस्य विरुद्धाः भामतीप्रस्थिनः एतत् कथयन्ति यत् अन्तःकरणावच्छिन्नं चैतन्यं जीवः, अनवच्छिन्नं चैतन्यम् ईश्वरः ।

-------------------

85. ब्र०सू०शा० भा०, 2.3.29, पृ० 359

(3) अविद्यायाः आश्रयः ब्रह्म इति विवरणप्रस्थिनः किन्तु भामतीप्रस्थिनाम् अनुसारमविद्यायाः आश्रयः जीवः ।

(4) विवरणप्रस्थिनः ब्रह्मसाक्षात्कारे महावाक्यस्य करणात्वं निरूपयन्ति । किन्तु भामतीप्रस्थिनः ब्रह्मसाक्षात्कारे मन एव करणम् इत्यभिप्रयन्ति ।

(5) 'शुद्धम् ब्रह्म न वृत्तिविषयः' इत्यस्य विवरणमेतस्य विरुद्धं भामतीप्रस्थिनः कथयन्ति यत् शुद्धं ब्रह्म वृत्तेर्विषयः ।

(6) श्रवणादौ विधिः इति विवरणप्रस्थिनः, किन्तु श्रवणादौ विधिर्नास्तीति भामतीप्रस्थिनः ।

(7) श्रुतिः प्रत्यक्षात् बलीयासि इति विवरणप्रस्थिनः । किन्तु तात्पर्यवती श्रुतिः एव प्रत्यक्षात् बलीयसि इति भामतीप्रस्थिनः ।

(8) विवरणकाराणां मते यज्ञादिकर्मणामुपयोग वेदने अस्ति । किन्तु भामतीकाराणां मते यज्ञादिकर्मणाम् उपयोगः विविदिषायां वर्तते ।

किन्तु सत्यपि उपर्युक्ते मतभेदे उभयोः प्रस्थानयोः अस्मिन् विषये मतैक्यमस्ति यत् ब्रह्मात्मैक्यसाक्षात्कारात् मुक्तिः जायते ।

4.7.5 ब्रह्मसूत्रभाष्यादिषु - आभासवादविमर्शः

यथा अवच्छेदवादस्य तथा प्रतिबिम्बवादस्य मूलभूतानि तत्वानि शांकरभाष्ये उपलब्धयन्ते तथैव आभासवादस्यापि । अस्मिन् सन्दर्भे

भगवद्पादस्य शांकराचार्यस्य निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते ।

(क) "आभास एव च"[86] इत्यस्य सूत्रस्य भाष्ये शांकराचार्यः कथयति -- "आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः । न स एव साक्षात् । नापि वस्त्वन्तरम् । अतश्च यथा नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्सम्बन्धः ।"[87]

(ख) अनाभासं न केनचित् कल्पितेन विषयेण अवभासते[88] .. .. .. .. 'अचिन्त्यास्ते यत सदैव"[89] .. .. ..'नात्माभासत्वसिद्धश्चेदात्मनो ग्रहणात् पृथक् । मुखादेश्च पृथक्सिद्धिरिह त्वन्योन्यसंश्रयः ।।[90]

भगवत्पादस्य शांकराचार्यस्य उपर्युक्तानि अन्यानि च कथनानि आश्रित्य सुरेश्वरप्रभृतिभिराचार्यैः यः आभासवाद प्रवर्तितः तस्य स्वरूपं संक्षिप्तरूपेण निम्नलिखितमस्ति ।

(अ) <u>आभासस्य स्वरूपम्</u> --

आभासस्य स्वरूपं सुरेश्वराचार्यस्य मतानुसारम् इत्थमस्ति --

---

86. ब्र०सू०, 2.3.50

87. ब्र०सू०शा० भा०, 2.3.50

88. मा०उ० शाङ्करभाष्यम्, 3-4

89. वही, 4.51, 52

90. उपदेशसाहस्री, पद्यप्रकरण, 18-115

(1) "अविद्याकार्य बुद्धिस्थ प्रत्यगाभासरूपवत् ।[91]
बौद्धोत्यादि समुत्थानं भण्यते परमात्मनः ।।"[92]

(2) "स्वाभासैर्बहुतमिति मनोबुद्ध्याङ्कपाधिभिः ।

(3) "आत्मा संसारितां यातो यथा कार्ष्ण्यं विष तथा ।।"[93]

अस्यार्थः अयमस्ति यत् अविद्यायां चैतन्यस्य आभासः ईश्वरः तथा बुद्धौ चैतन्यस्य आभासः जीवः । किन्तु आभासत्वात् उभावेव मिथ्या ।[94]

(आ) आभासस्य कारणम् --

भगवता शंकराचार्येण माण्डूक्यकारिकायाः भाष्ये एतत् निर्दिष्टं यत् आभासः परमार्थतः कार्यकारणाशून्यः अस्ति । तद्यथा --'यथाहि लोके ऋजुवक्रादि प्रकाशाभासमलातस्पन्दितमलातचलनं तथा ग्रहणग्राहकाभासं विषयिविषयाभासमित्यर्थः । किं तद्विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजचलमिति ह्युक्तम् ।।" अल तेन समानं सर्वं विज्ञानस्य । सदाचलत्वं तु विज्ञानस्य विशेषः । जात्याभासा विज्ञाने चले किं कृता इत्याह ।-" अस्य कथनस्य सारः अयमस्ति यत् आभासस्य कार्यता एवं कारणता अनुपपन्ने अतः कार्य-

---

91. बृ०उ०भा०वा० अ०, 2

92. वही, अ० 2, ब्रा० 4, वा० 425

93. वही, अ० 2, ब्रा० 4, वा० 436

94. मा०का०शा० भा०, 4-47-52

कारणशून्य: आभास: अचिन्त्य: वर्तते । किन्तु पारमार्थिकदृष्टया कार्यकारणशून्यत्वे सत्यपि व्यावहारिकदृष्टया आभासस्य किंचित् कारणम् भवितव्यम् इत्येवं विचार्य आभासस्य कारणम् ब्रह्म इति उच्यते । तद्यथा --

"बिम्बं विना यथा नीरे प्रतिबिम्बो भवेत्कथम् ।
विनात्मानं तथा बुद्धौ चिदाभासो भवेत्कथम् ।।"[95]

"अज्ञानं तदवच्छिन्नभासयोरुभयोरपि ।
आधारं शुद्धचैतन्यं यत्तुर्यमितीर्यते ।।"[96]

अस्य आशय अयमस्ति यत् स्वाविद्याया: अभावे कार्यकारणशून्यं निर्गुणं निर्विकारं, निष्प्रपचं, निराभासं ब्रह्म स्वत: आभासस्य कारणं भवितुं न शक्नोति । अत: आभासस्य अविद्याकृतत्वं तथैवोच्यते यथा जगत: कारणं ब्रह्म उच्यते ।

सुरेश्वराचार्य कथयति यत् -- "अविद्याया: ब्रह्मणश्च आश्रिताश्रय: विषयीविषय:, सम्बन्ध: वर्तते । असौ सम्बन्ध: अनादि नैसर्गिकश्च वर्तते ।

(इ) आभासस्य अधिष्ठानम् आश्रयश्च --

यथा मुखाभासस्य अधिष्ठानं मुखम् आश्रयश्च दर्पणम् भवत: तथैव आभासस्य अधिष्ठानं शुद्धं ब्रह्म आश्रयश्चाविद्या । तद्यथा --
आभासस्य चाविद्याकृतत्वात् तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्ति: ।

---

95. अद्वैतानुभूति:; श्लोक, 54, पृ० 61
"कार्योपाधिभिर्जीव: कारणोपधिरीश्वर: ।
प्रतिबिम्बो त्र संक्षेपशारीरककृता नये ।।" -- सि०ले०स०,पृ० 85
96. सर्ववेदान्तसिद्धान्तसारसंग्रह, श्लोक० 328, पृ० 165

(ई) आभासस्य भेदा: --

यथा एक एव देवदत्त: जाति, क्रिया - धर्म ( गौरत्व) आदि भेदेन व्यवह्रित: भवति तथैव जगत: पदार्था: अपि जात्याभास -- छला-भास -- वस्त्वाभासरूपेण अवगन्तुं शक्यन्ते । तद्यथा --

"जात्याभासं छलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्त्वम् विज्ञानं शान्तमद्वयम् ।।"[97]

सुरेश्वराचार्येण चिद्व्यातिरिक्तस्य ईशादिविषयान्तस्य जगत: आभासरूपतां प्रतिपाद्य चेतनाचेतनरूपेण आभासस्य द्वैविध्यं निरूपितम् । चेतनाभास: ( कारणाभास:) एवमचेतनाभास: कार्याभास: ।

(उ) आभासस्य उपयोगिता --

आभासस्य उपयोगितायाः विषये शंकराचार्यस्य निम्नलिखितं कथनम् अवधेयं वर्तते -- "यथा चा दित्यजोतिरवभास्यभेदैः संयुज्यमानं हरितनीलपीतलोहितादिभेदैरविभाग्यं तदाकाशभासं भवति । तथा च कृत्स्नं जगदवभासयच्च क्षुरादीनि च तदाकारं भवति ।"[98] अस्मिन् विषये सुरेश्वराचार्यस्य कथनम् एतदस्ति यत् -- ध्वान्तादि विषयान्तो - र्थोऽज त्वान्नात्मसिद्धिकृत् ।।
आत्मं ज्योतिरिभावे नाभावमपि विन्दति ।।"[99]

---

97. मा०का०, 4-45, शा० भा०

98. बृ०उ० शा०भा०, 4·3·30, पृ० 575

99. अद्वैतानुभूति : श्लोक, 55, पृ० 8।

(ऊ) आभासवादानुसारं ब्रह्म जगत् - ईश्वर - जीव - स्थिति: --

अस्मिन् सन्दर्भे शंकराचार्यस्य निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते --

"प्रतिबिम्बचंचलत्वाद्या यथा बिम्बस्य कर्हिचित् ।
न भवेयुस्तथा भासकर्तृत्वाद्यास्तु नात्मन: ।।"[100]

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मृगमरीचिका ।।"[101]

"दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूपमा भासमात्रम् ।"...[102]

"मायाभासो विशुद्धात्मा त्वमेतन्महेश्वर: ।"[103] ....

"आभास एव चैष जीव: परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्य:"[104] ....

"जीवोहि नाम देवताया: आभासमात्रम् । बुद्ध्यादिभूतमात्रासंसर्गजनितादर्श इव प्रविष्ट: पुरुषप्रतिबिम्बो जलादिष्विव च सूर्यादीनाम् ।।"[105]

---

100. बृ० भा० वा०, अ० 4

101. आत्मबोध, श्लो०, 73, पृ० 18

102. शतश्लोकी, श्लो०, 64

103. स्वात्मप्रकाशिका, श्लो० 38, पृ० 136

104. ब्र०सू०शा० भा०, 2.3-50

105. छा०उ० शा० भा०, 6.3.2

सुरेश्वराचार्यस्य मतानुसारं जीव: प्रत्यगात्मन: आभास: अस्ति । अत: स्वरूपत: जीव: एक एव । एक: सन्नपि जीव: नानाविधान्त:-करणवृत्तिषु आश्रित: सन् भेदभावम् आप्नोति । अत: जीवस्य नानात्वम् कल्पितमस्ति ।

4·7·6· अवच्छेदवाद -- आभासवादयो: पार्थक्यम् --

1· नीरूपस्य चैतन्यस्यान्त:करणे आभास असम्भव: इति कृत्वा वाचस्पतिमिश्रेण आभासवादस्य प्रत्याख्यानं कृतम् । किन्तु आभास-वादिनामेतत् कथनमस्ति यत् जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्ब: दृश्यते । तथा च नीरूपस्य निरवयवस्य ब्रह्मण: प्रतिबिम्बे (आभासे) कात्यनुपपत्ति: ।"

2· अवच्छेदवादे अवच्छेद: कल्पित:, अवच्छेद्यं तु वास्तवम् । किन्तु वार्तिककार: उभयोरपि काल्पनिकत्वं स्वीकुर्वन्ति ।[106]

3· अवच्छेदवादानुसारं घटाद्युपाधिभि: महाकाशस्य एकदेशीय: परिच्छेद: भवति । किन्तु आभासवादानुसारं चैतन्याभास: सर्वात्मना उपाधि-स्थो जायते ।

4· अवच्छेदवादस्य प्रवर्तकै: दृष्टिसृष्टिवाद: तथा जीवाश्रिताविद्यावाद: स्वीकृत: । किन्तु आभासवादस्य प्रवर्तकै: कार्यकारणाभासवाद: प्रत्यक्चैतन्याश्रित: अज्ञानवादश्च स्वीकृत: ।

---

106· सिद्धान्तबिन्दु , उपोद्घात, पृ० 12

4.5.7(8) आभासप्रतिबिम्बवादयो पार्थक्यम् --

(1) सुरेश्वराचार्यस्य मतानुसारं बिम्बप्रतिबिम्बौ नाभिन्नौ । अपितु भिन्नौ । प्रतिबिम्ब: बिम्बस्य आभास: । ब्रह्मण: आभास: जीव: ब्रह्मण: तथैव भिन्न: वर्तते यथा मुखस्य आभास: मुखाद्भिन्नो भवति । अस्य मतस्य अनुसारं मिथ्यात्वेन जीवे बाधिते सति जीवब्रह्मणो भेद: सिद्ध्यति ।

(2) प्रतिबिम्बवादे जीवब्रह्मणो: अभेद: वर्तते । भेदस्तु मिथ्या । तदुक्तं -- "बिम्बादिव प्रतिबिम्बं न ब्रह्मणोवस्त्वन्तरम्, किन्तु तदेव तत् ।"[107]

(3) आभासस्य कृते गुणस्य प्रकारस्य वा अपेक्षा भवति किन्तु प्रतिबिम्बस्य कृते द्रव्यास्यापेक्षा भवति ।

(4) चैतन्यभिन्न: आभास: अज्ञानादि उपाधिना भेदात् कारणाभास: तथा कार्याभास: अनयोरुभयो: प्रतीत: भवति तथा आभासकं चैतन्य उभयोरेवाधिक्रमणं करोति । किन्तु प्रतिबिम्बवादिनां मतानुसारं बिम्बं स्वरूपभूतस्य प्रतिबिम्बस्याधिक्रामकं न भवति ।[108]

(5) तत्त्वमसि इत्यस्य महावाक्यस्य अखण्डार्थ बोधार्थम् आभासवादिभि: तत्वं पदयोर्मध्ये बाधसामानाधिकरण्याय जहल्लक्षणा स्वीक्रियते ।

---

107. पं०पा० प्रथमवर्णक, पृ० 108

108. बृ०उ० भा०वा०, अध्याय 4-3, 416

किन्तु प्रतिबिम्बवादिभिः तत्त्वं पदयोर्मध्ये अभेदसामानाधिकरण्याय अजहल्लक्षणा स्वीक्रियते ।

(6) चित्लक्षणविरहितत्वात् आभासः वस्तुसंस्पर्शी न भवति किन्तु प्रतिबिम्बः बिम्बैकरूपत्वात् वस्तुसंस्पर्शी भवति ।

4·7·7 अस्मदीय-मतम् --

प्रतिबिम्बवाद -- आभासवाद - अवच्छेदवादप्रभृतीनां परस्परक-वैलक्षण्येऽपि एते जीवब्रह्मणोः अद्वैतविषये मतैक्यं धारयन्ति । ऐतेषु विषु वादेषु कः बलीयान् इत्यस्मिन् विषये सम्प्रदायानुसारम् आधुनिकविदुषामपि मतभेदाः वर्तन्ते । तथापि आभासस्य प्रतिबिम्बस्य वा अनुपपन्नत्वविषये वाचस्पतिमिश्रेण यदुक्तं तत् अनुसृत्य एतत् कथयितुं शक्यते यत् आभासवाद -- प्रतिबिम्बप्रभृतीनां तुलनायाम् अवच्छेदवादः एवं सम्प्रति बहुसंख्यकैः द्वैतिभिः स्वीक्रियते ।

किन्तु अत्रैतदपि ज्ञातव्यं वर्त्तते यत् वस्तुतः प्रतिबिम्बवादस्य विरुद्धम् अवच्छेदवादिभिः ये दोषाः उभाविताः, ते अवच्छेदकेऽपि दृश्यन्ते । तद्यथा -- चैतन्यस्य नीरूपत्वात् अमूर्तत्वात् च एवमेतान्तःकरणरूपोपाधेः अपि नीरूपत्वात् अमूर्तत्वाद्य अन्तःकरणे चैतन्यस्य प्रतिबिम्बं असम्भवम् इति कृत्वा अवच्छेदवादिभिः प्रतिबिम्बवादः निरस्यते किन्तु एतादृशो दोषः अवच्छेदवादे अप्यस्ति । यतः नीरूपं अमूर्तं अन्तःकरणम् अवच्छेदकं कथं भवितुं शक्नोति । घटाकाशस्य दृष्टान्तः अपि असंगतः । यतः घटरूपोपाधिः अमूर्तः नीरूपः वा नास्ति, अन्तःकरणं तु नीरूपम् । अपि च घटरूपोपाधिना अनवच्छिन्नः आकाशः अवच्छिन्नः न भवति । आरास्य अवच्छिन्नत्वप्रतीतिः अस्माकं चक्षुरिन्द्रियस्य असामर्थ्यं प्रकटयति । यथा ऐकसरे द्वाराग दृश्यमाने सति घटाकाशमहाकाशयोः भेदः नावशिष्यते,

तथैव चक्षुरिन्द्रिये पारदर्शित्व रूपेण सामर्थ्यवृद्धौ जाते सति घटाकाशमहाकाशयो भेद: नावशिष्येत । एवं प्रकारेण अवच्छेदवाद: अपि तथैव दोषहीन: नास्ति यथा प्रतिबिम्बवाद आभासवादौ दोषहीनौ न इति अस्माकं मतम् । तथापि सूक्ष्मेक्षिकया आलोच्यमाने सति प्रतिबिम्बवाद आभासवादयोरपेक्षया अवच्छेदवाद: तुलनात्मक दृष्टया अधिक: ग्राह्य: इति वक्तुं शक्यते ।

4.8.0. अध्यायस्य-सार: समाहारश्च --

भामतीप्रस्थानप्रवर्त्तकस्य वाचस्पति मिश्रस्य जीवनविषये अधिकं विवरणं नोपलभ्यते तथापि बाह्यसाक्ष्यरूपेण आन्तरिक साक्ष्यरूपेण च यद् किञ्चिदुपलभ्यते तदनुसारम् एतद् कथयितुं शक्यते यत् भामतीकार: प्रथमो वाचस्पति मिश्र: भामा इत्याख्यस्य तथा सम्प्रति अन्धारा ठाढी इत्येवंरूपेण प्रथितस्य विहारप्रदेशान्तर्गतस्य भूभागस्य निवासी आसीत् तथा अन्धस्य राज्ञो नृगस्य राज्यकाले विद्यमान आसीत् ।

~~द्वैतवादौ विद्यमान आसीत्~~ । तस्य पत्न्या नाम भामती आसीत् पत्न्या नामानुसारं तेन स्वरचनाया: संज्ञा भामती कृता किन्तु मन्ये एतत्तेन पत्न्युपेक्षा पश्चात्तापरूपेण न अपितु पत्नीं प्रति सम्मावस्य ज्ञापनार्थं कृतम् ।

वाचस्पते: प्रमुखा: सिद्धान्ता भामतीप्रस्थानत्वेन प्रथिता: जाता: (एतादृशेषु सिद्धान्तेषु अविद्याद्विजयम्, अनेकजीववाद: अध्यासवाद: अवच्छेदवाद:) इत्येते वादा: प्रमुखा सन्ति । एतेषां सिद्धान्तानां विश्लेषणं अस्मिन् अध्याये तथा अन्येषु अध्यायेषु अपि द्रष्टुं शक्यते । संक्षेपत: एतद् कथयितुं शक्यते यत् आभासवाद - प्रतिबिम्बवाद प्रभृतीनां तुलनायाम् अवच्छेदवाद: अधिक: ग्राह्य: प्रतीयते ।

5-1-0 ब्रह्मणः स्वरूपम्

ब्रह्म शब्दस्यानेकार्थत्वात् अयं प्रश्नः उदेति यत् ब्रह्मणः स्वरूपं किं? अस्य प्रश्नस्य समाधानाय भाष्यकारेण उक्तम् - 'जन्माद्यस्य यतः' इति । अस्य सूत्रस्य भाष्ये भगवता शंकराचार्येण एतदुक्तं यत् जगतः जन्मादि यस्मात् भवति, तदेव ब्रह्म विजिज्ञासितव्यम् अस्ति इति । अत्र पुनः एषः प्रश्नः उदेति यत् 'जन्माद्यस्य यतः' इत्यनेन सूत्रेण ब्रह्मणः यत् लक्षणम् निरूप्यते तत् कीदृशं लक्षणमस्तीति? अस्य प्रश्नस्य प्रत्युत्तरे कथ्यते यत् एतत् ब्रह्मणः तटस्थलक्षणमस्तीति ।

अस्मिन् सन्दर्भे एतत् ज्ञातव्यं वर्तते यत् लक्षणं द्विविधं भवति । स्वरूपलक्षणं, तटस्थलक्षणं चेति । उभयोरनयोर्ब्रह्मलक्षणयोः निरूपणं निम्नलिखित-प्रकारेण कर्तुं शक्यते ।

5-1-1 ब्रह्मणः स्वरूपलक्षणम्

लक्षणं नाम अव्याप्त्यादिदोषत्रयशून्यत्वम् । लक्षणं हि द्विविधम् स्वरूपलक्षणम्-तटस्थलक्षणं च । तत्र स्वरूपमेव लक्षणम् स्वरूपलक्षणम् । ब्रह्मणः स्वरूप लक्षणं यथा-सत्यं ज्ञानमनन्तं ब्रह्म[1] 'विज्ञानमानन्दं ब्रह्म'[2] 'आनन्दो ब्रह्मेति व्यजानात्'[3] इत्यादि ।

अत्रेयं शंका उदेति यत् अवाङ्मनसगोचरस्य ब्रह्मणः 'नेति' मुखेनैव संकीर्तितत्वात् कथं विशेषणैः तस्य निरूपणं सम्भवति? अस्याः शंकायाः समाधानं इदमस्ति यत् सत्यं, ज्ञानम्, आनन्दम्-अनन्तम्, विज्ञानम् इत्येतानि विशेषणानि स्वरूपसमर्पणद्वारेण विरुद्धार्थव्यावर्तकानि सन्ति । तद्यथा सत्यत्वविशेषणेन असत्यात् व्यावृत्तिः अवगन्तव्या । ज्ञानशब्दोऽत्र चिन्मात्रं लक्षयति । चिद्रूपविशेषणेन ब्रह्मणः अचिद्रूपात् व्यावृत्तिः । अन्तवत्वनिवृत्त्यर्थं उच्यते 'अनन्तमिति' । निरानन्देभ्यः व्यावृत्त्यर्थं उच्यते 'आनन्दम्' इति । अद्वैतसिद्धौ स्पष्टीकृतं यत् यद्यपि सत्यादि पदानां लक्ष्यं एकैव निर्विशेषं ब्रह्म तथापि निर्वचनीयंशाधिक्येन न पदान्तरवैयर्थ्यम् ।

---

1- तै० उ० 2-1-1

2- बृ० उ० 3-9-28

3- तै० उ० 3-6

व्यावर्तकः एव धर्मः लक्षणं भवति । एवं सति यदि सत्यं ब्रह्मणः स्वरूपमेवास्ति तर्हि तद् ब्रह्मणः धर्मः कथं भवितुं शक्नोति? सत्यब्रह्मणोः अभेदे लक्ष्यलक्षण-व्यवहारानुपपत्तेः । अत्रोच्यते - स्वस्यैव ब्रह्मणः स्वरूपभूतसत्यत्वाद्यपेक्षया धर्मिधर्म-भावकल्पनया लक्ष्यलक्षणभावः सम्भवति । यद्यपि सत्यज्ञानानन्दादयः ब्रह्मणः न भिद्यन्ते ? तथापि अन्तःकरणवृत्त्युपाधौ आकारभेदम् आपद्यमाना चिद्रूपाद् ब्रह्मणो भिन्ना इव प्रतिभासमानाः धर्मधर्मिभावं प्रतिपादयन्ति । तस्मात् स्वरूपभूतानामपि तेषां लक्षणत्वं नानुपपन्नम् । यथोक्तम् पंचपादिकायां पद्मपादाचार्येण - 'आनन्दो विषयानुभवो नित्यत्वं चेति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते ।[4]

5-1-2 तटस्थलक्षणम्

यावत्लक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्तकं तद् तटस्थलक्षणम् । ब्रह्मणः तटस्थलक्षणं यथा 'जन्माद्यस्य यतः' । तत्र च श्रुतिः - 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति इति[5] । यस्मात् अस्य जगतः सृष्टिः, यस्मिन् स्थितिः, यस्मिन् लयः तद् ब्रह्म इत्यर्थः । यद्यपि जन्मस्थितिलयेषु एककारणम् अपि इतरव्यावर्तकत्वात् ब्रह्मणः लक्षणं भवितुमर्हति । तथापि एककारणत्वस्य निमित्तकारणसाधारणत्वात् ब्रह्म जगतः निमित्तकारणमात्रम् इति आशंका स्यात् । तस्याः शंकायाः समाधानार्थं त्रयाणामपि जन्मस्थितिलयानां ग्रहणं कृतं बादरायणसूत्रे 'आदि' पदेन ।

अत्रेयं शंका उदेति यत् माया अनादिरस्ति । सा एव जगतः कारणम्, न तु ब्रह्म । अतः एतत् तटस्थलक्षणम् कथं भवितुं शक्नोति? अत्रोच्यते - 'यत् अत्र जगत्पदेन कार्यजातं विवक्षितम् । तेन जगदन्तर्भूतामनादिभावभूतां मायां प्रति अकारणत्वेऽपि न ब्रह्मणः प्राग्जन्मादि कारणत्वहानिः ।

अत्रेयं शंका उदेति - 'यत् कालादृष्टादिषु जगत्कारणेष्वपि मायावत् अनादित्वप्रसक्त्या जगत् ब्रह्मणः अभिन्नत्वं प्रसज्येत । अस्य उत्तरम् इदमस्ति यत् कारणत्वम् एव कर्तृत्वं न भवति । कालादृष्टादीनां कार्यप्रपंचप्रति कारणत्वेऽपि न तत्र जगज्जन्मादिकारणत्वस्यातिव्याप्तिः ।

---

4- पं० पस० पृ० 23
5- तै० उ० 3-1

अविद्यायाः जगदुपादानत्वेन जन्महेतुत्वे आधारतया स्थितिहेतुत्वे तथा लयाधारतया लयहेतुत्वेऽपि अस्य लक्षणस्य अतिव्याप्तिः न भवति । तस्याः अचेतनत्वेन जगत्कर्तृत्वायोगात् । जीवादि चेतनेष्वपि अस्य लक्षणस्य अतिव्याप्तिः न भवति । जीवादीनां शरीरेन्द्रियसृष्टनन्तरं कर्तृत्वसम्भवेऽपि शरीरेन्द्रियरहितानां तेषां जगज्जन्मादि कर्तृत्वायोगात् ।

एतत् कथनं समुचितं नस्ति यत् अविद्यायाः कारणत्वं चेत्,अस्याः कर्तृत्वमप्यस्तीति । कारणविशेषस्यैव कर्तृत्वं भवति नतु सर्वेषां कारणानाम् ।

कर्तृत्वं हि तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् । एतादृशं कृतिमत्वम् अविद्यादीनाम अचेतनतया नास्ति । जीवादीनामपि नास्ति सकलजगदुपादान गोचरापरोक्षज्ञानाद्य भावात् ।

ब्रह्मणस्तु उपादान गोचरापरोक्षज्ञानसद्भावः श्रुतिषु प्रतिपादितः । तद्यथा-'यः सर्वज्ञ सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म (हिरण्यगर्भः) नाम रूपमन्नं च जायते ।[6]

ब्रह्मणः उपादानगोचरचिकीर्षासद्भावे च श्रुतयः प्रमाणम् । तद्यथा - 'सोऽकामयत बहुस्यां प्रजायेय उपादानगोचरसद्भावेऽपि श्रुतिः 'तन्मनोऽकुरुत' इत्यादि ।

मायायाः जगदुपादानत्वेऽपि तस्याः जडत्वेन अधिष्ठानत्वायोगात् । चैतन्यस्यैव अधिष्ठानत्वनियमात् । घटपटादिभौतिकपदार्थानाम जीवसाध्यत्वदर्शनात् इदं न वक्तव्यं यत् ब्रह्मणः निखिलजगत्कर्तृत्वं नास्तीति । यतः सृष्टिपदार्थेषु पंचतन्मात्रेन्द्रियवर्गोत्पत्तौ 'सप्तदशावयवोपेतलिंगशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरभूतत्रैलोक्योत्पत्तौ ब्रह्मणः साक्षात् कर्तृत्वं अविद्यातिरिक्तद्वाराभावात् । इतरनिखिलप्रपंचोत्पत्तौ तु हिरण्य गर्भविराटादि द्वारा ब्रह्मणः कर्तृत्वम् । तत्र च श्रुतिः 'हन्ताहमिमास्तिस्रो देवताऽनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति ।[8]

---

6- मुण्ड० उ० 1-1-9

7- तै० उ० 2-6

8- छा० 6-2-2

ब्रह्मणः स्वरूपलक्षणं मायायामतिव्याप्तं न भवति । मायायाः अपि न तदारोपाधिष्ठानत्वम् । चैतन्यस्यैवाधिष्ठानत्वनियमात् ।

अस्मिन् सन्दर्भे वाचस्पतेः एतत्कथनम् अवधेयं वर्तते । प्रधानकालग्रहलोकपालक्रियायादृच्छास्वभावाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्म जगज्जन्मादिकरणमिति कुतः सम्भावनेत्यत आह -भाष्यकारः- 'अस्य' इति । जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य,मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभंगं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति, तद्ब्रह्मेति[9] ।

अनेककर्तृभोक्तृसंयुक्तस्येति पदस्य अस्य व्याख्यानं कुर्वता वाचस्पतिना उक्तं - ''केचित्कर्तारो भवन्ति,यथा सूदर्त्विगादयः,न भोक्तारः । केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः न कर्तारः । तस्माद्भयग्रहणम् । 'देशकालनिमित्त क्रियाफलानि' इतीतरेतरद्वन्द्वः । देशादीनि च प्रतिनियतानि चेति विग्रहः । तदाश्रयो जगत् तस्य । केचित्खलु प्रतिनियतदेशोत्पादाः, यथा कृष्णमृगादयः । केचित्प्रतिनियतकालोत्पादाः, यथा कोकिलरवादयः । केचित्प्रतिनियतनिमित्ताः, यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः । केचित्प्रतिनियतक्रियाः, यथा ब्राह्मणानां याजनादयो नेतरेषाम् । एवं प्रतिनियतफलाः -यथा केचित्सुखिनः,केचित्दुःखिनः, एवं य एव सुखिनस्त एव कदाचित्दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते, परिमितज्ञानशक्तिभिर्ग्रहलोकपालादिभिः ज्ञातुं कर्तुं चाशक्यत्वात् इति[10] ।

एवं प्रकारेण ब्रह्मणः सन्दर्भे या श्रुतयः उपलभ्यन्ते,तासां सारत्वेन एतत् कथयितुं शक्यते यत् ब्रह्म एकम्,अद्वितीयं, सत्यं, चिन्मयम्,आनन्दमयं, निर्गुण, निर्विशेषं च वर्तते इति ।

## 5-1-3 ब्रह्मणः एकत्वम्

बृह बृंहणे इति धातोः निष्पन्नः ब्रह्मशब्दः प्राणस्य,वेदस्य तथा अन्नस्यार्थे संहितासु प्रयुक्तः दृश्यते । तद्यथा - कतम एको देव इति, प्राण इति स ब्रह्म, त्यदित्याचक्षते'' । एवं प्रकारेण तत् परमतत्वं,ब्रह्म इति आख्यया निर्दिष्टम् अभवत्,

9- ब्र० सू० शा०भा० 1-1-2

10- भामती 1-1-2 पृ० 86

यत् जगद्रूपेण स्वतः प्रस्फुटितं सत् भासते । उपर्युक्तरूपेण संहिताकाले एव अस्याः धारणायाः प्रवर्तनं संजातं यत् अस्य समस्तस्य जगतः आधारः कर्ता नियन्ता च एक एव । स कदाचित् प्रजापतिः, कदाचिद् विश्वकर्मा इत्यादि नामभिःअभिधीयते ।

उपनिषद्सु तस्यैव एकस्य देवस्य अर्थात् परमतत्वस्य स्वरूपज्ञानाय स्वभावावबोधाय चिन्तनमभवत् । तस्य परमतत्वस्य साम्यं ऐक्यं वा सूर्यवायुप्रभृति-तत्वैः सह अस्थापनाय याः कल्पनाः दृश्यन्ते,ताभिरपि परमतत्वस्वरूपस्य समाधानं नाभवत् । एवं प्रकारेण समस्त गोचरपदार्थेषु कुत्रापि ब्रह्मणः तादात्म्यं साम्यं वा अनुपलभ्य ऋषिभिः 'नेति नेति' रूपेण ब्रह्मः अदृश्यम् अग्राह्यम् इत्युक्तम् । तथाहि - यत्तदृश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ।[11]' जगतः सन्दर्भे अपेक्षाया वा परमतत्वस्य (ब्रह्मणः) यत् निषेधात्मकं स्वरूपं नेति नेत्येवं प्रकारेण निर्दिष्टम् अभवत्, तस्य ऋषयः अन्ततः शून्ये पर्यवसानम् आशंक्य प्रत्यंग प्रत्ययवादिनः भावात्मकरूपेणापि (परमतत्वस्य) निर्देशार्थम् अन्वेषणां कृतवन्तः । तद्यथा - 'सत्यं ज्ञानमनन्तं ब्रह्म' ।[12] तत्वान्वेषणस्य प्रत्यग विश्लेषण प्रवणप्रणाल्या अन्तः स्थस्य आत्मनः सत्तायाः तथा पराक् विश्लेषणप्रवणाविधिना (बाह्यजगतः वस्तुनिष्ठ विश्लेषणेन) ब्रह्मणः सत्तायाः निरूपणम् अभवत् । आत्मन् शब्दस्यार्थः अभवत् अन्तस्थं चैतन्यम् । एवं प्रकारेण ब्रह्मन् शब्दस्यार्थः अभवत् - 'बाह्यजगतः आदिस्रोतः इति । आत्म-ब्रह्मशब्दयोः पर्यायरूपेणापि प्रयोगः दृश्यते । एवंप्रकारेण मनुष्यसहितस्य समस्तस्य ब्रह्माण्डस्य शाश्वतं स्रोतः सः एवोच्यते ब्रह्म । आत्मब्रह्मणोः ऐक्यं समानत्वं च अस्तीति सुस्पष्टं ज्ञायते श्रुतिवाक्येषु - 'तत्वमसि' 'अहं ब्रह्मास्मि' 'प्रज्ञानं ब्रह्म' 'अयमात्मा ब्रह्म' इत्यादिषु ।

उपर्युक्तरूपेण ब्रह्मणः विषये यत् किमपि उच्यते तस्य सारः अयमस्ति यत् 'एकमेव ब्रह्म'' इति ।

---

11- मु० उ० 1-6

12- तै० उ० 2-1-1

5-1-4 ब्रह्मणोऽद्वितीयत्वम्

ब्रह्मणः अद्वयता उपनिषत्सु सम्यग् प्रतिपादिता वर्तते । माण्डूक्यकारिकायां गौडपादेन स्पष्टमुक्तम् - 'मायामात्रमिदं द्वैतम् अद्वैतं परमार्थतः'[13] तथा च - अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते[14] । योगवासिष्ठेऽपि एतत् प्रतिपादितम् अस्ति 'यदिदं किंचिदाभोगि जगज्जालं प्रदृश्यते । तत्सर्वममलं ब्रह्मैव भवत्येतद्-व्यवस्थितम् ।[15] ब्रह्माहं त्रिजगद् ब्रह्म त्वं ब्रह्म खलु दृश्यभूः । द्वितीया कलना नास्ति यथेच्छसि तथा कुरु[16] ।। माण्डूक्यकारिकायाम् एतदपि उक्तं यत् जगति यद् वस्तु उत्पत्तिशीलं, गतिशीलमिव वा प्रतीयते तदपि वस्तु अजम्, अचलम्, अवस्तु वर्तते, वस्तुरूपेण यदि किंचिदस्ति तत्तु ब्रह्म एव । तद्यथा -

'जात्याभासं चलाभासं वस्त्वाभासम् तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ।।[17]

भगवत्पादः शंकराचार्यः परमतत्वस्य अद्वयतायाः सिद्ध्यर्थम् अद्वैत-प्रतिपादकश्रुतिवाक्यानां व्याख्यासु एवं कथयति- 'एकमेवेति स्वकार्यपतितमन्यन्नास्तीत्येकमेवेत्युच्यते, अद्वितीयमिति, मृद्व्यतिरेकेण, मृदो यथाऽन्यद् घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यतेऽद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम् ।[18] तथा च 'सलिल इव एको द्वितीयस्याभावात् । अविद्यया हि द्वितीयः प्रविभज्यते, सा च शान्तात्र अत एकः । द्रष्टा दृष्टेरविपरिप्लुतत्वादात्मज्योतिः स्वभावायाः, अद्वैतो द्रष्टव्यस्य हि द्वितीयस्याभावात्[19] ।

ब्रह्मसूत्रभाष्यस्य आरम्भे भगवत्पादेन शंकराचार्येण स्पष्टमुक्तं यत् - अस्यानर्थहेतोः प्रहाणाय, आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताः आरभ्यन्ते ।[20]

13- मा० का० 1-17
14- मा० का० 3-18
15- यो० वा० 6-1, 11-16
16- यो० वा० 6-1-49,23
17- यो० वा० 6-1- मा० का० 5-55
18-
19- छा० उ० भा० 6-2-1
20- बृ० शा० भा० 4-3-32
ब्र० सू० शा० अध्यासभाष्यम् ।

मण्डनमिश्रेण शब्दब्रह्मवादिनः भर्तृहरेः शब्दाद्वैतवादम् आश्रित्य ब्रह्माद्वयवादस्य प्रवर्तनं कृतम् । तद्यथा - अक्षरमितिशब्दतामाह, विशेषेण सामान्यस्य लक्षणात् । तदेतत् विशुद्धत्वं नित्यत्वमेकत्वं चाकाशकल्पे ब्रह्मण्यक्कल्पते;[21]

सुरेश्वराचार्येण नैष्कर्म्यसिद्धौ ब्रह्मणः अद्वितीयत्वम् एवं प्रतिपादितम् - ''आत्मनोऽप्य/द्वितीयत्वम् आत्मत्वादेव सिद्ध्यति[22] ।

'न स्वयं स्वस्य नानात्वं नाकल्पात्मना यतः । नोभाभ्यामप्यतासिद्धाम्-द्वैतं द्वैतबाधया ।।'[23] एवमेव बृहदारण्यकभाष्यवार्तिके सुरेश्वराचार्येण ब्रह्मणः यत् निर्वचनं कृतं, तदपि तस्याद्वयत्वं प्रसाधयति -अव्याकृतानुगतं निःसामान्य-विशेषतः[24] ।

ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ।।

उपर्युक्तक्रमेण अद्वैतत्वस्य च यः विमर्शः दृश्यते तस्य वर्गीकरणं सरणित्रये कर्तुं शक्यते[25] । तद्यथा - सर्वं ब्रह्म एव' 'इदं ब्रह्म एव' 'इदं बुद्धिकालेऽपि सर्वं ब्रह्म एव ।

वेदान्तकौमुद्यां रामाद्वयेन अद्वैततत्वस्य यत् विश्लेषणं कृतं तदस्ति - 'तात्त्विकद्वैतविधुरं सद् वस्तु अद्वैतम्'' । ब्रह्मशब्दस्य व्युत्पत्तिजन्यः अर्थः अपि तस्य मतानुसारं ब्रह्मणः अद्वयत्वं साधयति - 'तथा च बृहतेर्धातोरर्थानुगमात् सर्वतोऽसंकुचित-बृहत्वसम्पन्नं मीमांस्यत्वेन उपक्षिप्तं ब्रह्मैवाद्वैतपदार्थः ।''[26]

नृसिंहाश्रमेण वेदान्ततत्वविवेके धात्वर्थस्य पर्यवसानं ब्रह्मणः अद्वयत्वे भवतीति निरूपितम् । तद्यथा- ''लक्ष्यस्य (ब्रह्मणः अद्वयत्वं ब्रह्मशब्दादवगम्यते, तत्रैव ब्रह्म-शब्दाभिधेयबुद्धिरूपबृहत्वस्य पर्यवसानात् । नच नदीपूरस्येव बुद्धिरवयवोपचयः, आकाशस्येव बृहत्वं परिमाणविशेषो वस्तुरिति वाच्यम् - ''निष्कलम् अस्थूलम् इत्यादि श्रुतिभिर्ब्रह्मणि तदभावस्य सिद्धत्वात्[27] । बृह धातोः यत् बृहत्वं तत् तदपि अद्वैतपरकमेव वर्तते । तद्यथा - 'बृहि धातुर्हि बृद्धिमादत्ते,बुद्धिश्चात्र स्वरूपोपचयः, स च

---

21- ब्र० सि० पृ० 16-19
22- नै सि० 2,96
23- नै० सि० 2-1.12
24- बृ०भा० वा० 4-3-1815
25- अद्वैतवेदान्त में तत्व और ज्ञान-उर्मिलाशर्मा पृ० 18-19
26- वे० कौ० पृ० 88
27- वे० त० वि० पृ० 517

सर्वात्मतायोग्यतैवेति त्रिविध परिच्छेदशून्यं ब्रह्मशब्दाभिधेयं लक्ष्यम् ।''[28]

अद्वैतदीपिकायां नृसिंहाश्रमेणापि कथितं यत् सर्वथा अपरिच्छिन्नम् आत्मतत्त्वम् एव ब्रह्म तच्च अद्वयम् । यत् भूमानं यत्र् परं पश्यति तदन्यं न इत्युक्तेः, जीवेश्वरभेदनिरासेन आत्मैकत्वसिद्धिरित्यर्थः ।

एवं प्रकारेण यदद्वयं तदेव ब्रह्म इति अद्वेतिनां मतम् ।

5-1-5 ब्रह्मणः सत्वं सत्यत्वं च
---------------------------

छान्दोग्योपनिषदि मूलतत्वस्य अन्वेषणम् अन्ततः 'सत्' इत्येतत् रूपेण पर्यवसितं दृश्यते । तद्यथा - सदेव सौम्येदमग्रमासीत् इति । कठोपनिषद्यपि अस्ति इति 'अस्तीत्येवं रूपेण सत्ता एव ब्रह्म इति निरुपितं दृश्यते । योगवासिष्ठेऽपि सत्यात्मकता एव परमतत्त्वम् इति प्रतिपादितं दृश्यते । तद्यथा - 'यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च ।[29] तथा च- 'स पदार्थो पदार्थत्वं स तत्वं यदनुत्तमम् । स सत्तो वस्तुनः सत्वं असत्वं वा सतः स्वतः ।''[30]

वैशेषिकमते द्रव्यगुणकर्मादीनामपि सत्ता वर्त्तते,तर्हि सत्तायाः अदिवतीयत्वं कथं स्वीकरणीयम्? इत्यस्याः शंकाया समाधानार्थम् एतत् कथ्यते यत् 'प्रागुत्पत्तेस्तु नैवंद कार्यं सदेवासीत इति अभ्युपगम्यते वैशेषिकैः ---- तस्मात् वैशेषिक परिकल्पितात् सतोऽन्यद् कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्यः ।[31] भगवता शंकराचार्येण भाष्ये एतदपि स्पष्टीकृतं यत् यथा - 'मृत्तिकां बिना घटादेः अस्तित्वं नास्ति तथैव मूलकारणं बिना जगतः अस्तित्वं नास्ति । जगतः व्यावहारिकी सत्ता दृश्यते नामरूपात्मकस्य जगतः अध्यस्तत्वेऽपि आधारं बिना तस्य कल्पनाऽपि कर्तुं न शक्यते । अतः सत्ता एव जगतः आधारः तदेव आत्मा तदेव ब्रह्म । तद्यथा -'सः यः सदाख्य एष अतोऽण भावी जगतो मूलम् ---- एतेन सदाख्येनात्मनाऽऽत्मवत्सर्वमिदं जगत् तदेव सदाख्यं कारणं सत्यं परमार्थसत् । अतः स एवात्मा जगतः प्रत्यक् स्वरूपं सतत्वं यथाभ्याम् ।[32]

------------------------------

28- त० वि० दी० पृ० 517
29- यो० वा० 1-1-1
30- यो० वा० 6-1-59-10
31- छा० उ० भा० 6-2-1
32- छा० उ० शा०भा० 6-8-7

सद् शब्दस्य कोऽर्थः इत्यस्मिन् विषये एतद् ज्ञातव्यं वर्तते यद् 'अस भुवि' धातोः शतृप्रत्ययाद् निष्पन्नोऽयं सद् शब्दः, विद्यमानता'- इत्यर्थे प्रसिद्धः। प्रकारान्तरेण यदविद्यमानम् अविनाशि च नास्ति, तदेव सत्। एतदेव कारणं यद् सत्तया सह अविनाशित्वम्, अनन्तत्वं, नित्यत्वं च पर्यायत्वेन व्यवह्रियन्ते। भगवता शंकराचार्येण तैत्तिरीयोपनिषद्भाष्ये एतदुक्तं यद् यः पदार्थः अनुभूतेः विषयः सन् स्वरूपं कदापि न व्यभिचरति तदेव सद्। तद्यथा - 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्। तद्रूपेण निश्चितं,तद्रूपं व्यभिचरदनृतमित्युच्यते।। अतो विकारोऽप्यनृतम्। यद्यपि आकाशः अपि अनन्तः तथापि स ब्रह्मवद् अनन्तः नास्ति। यतः सृष्टेः प्राक् आकाशः नासीद् तथा अन्यैः पदार्थैः सह तस्य अनन्यत्वं नास्ति। आकाशस्य विपरीतं ब्रह्म सृष्टेः प्रागपि आसीद् तथा अन्यैः सर्वैः पदार्थैः सह तस्य अनन्यत्वमपि अस्ति। कालस्य आकाशस्यापि कारणं ब्रह्म एव। कार्यापेक्षया अपि ब्रह्मणः अनन्तत्वं न हीयते। कार्यवस्तूनाम् अनृतत्वाद् ब्रह्मणः एव च सत्यत्वाद्। निरतिशयानन्दत्वाद् ब्रह्मणि निरतिशयता सत्यता च वर्तते। अतः तत्वतः केवलं ब्रह्म एव सत्यम्। सत्यत्वमेव तस्य स्वरूपम्। तद्यथा-''आकाशो ह्यनन्त इति प्रसिद्धं देशतः, तस्येदं कारणं तस्माद् सिद्धं देशतः आनन्त्यत्वम्। न ह्यसर्वगताद् सर्वगतमुत्पद्यमानं लोके किंचिद् दृश्यते।'' ''निरतिशयमानन्त्यमात्मनः,देशतस्तथाऽकार्यत्वाद् कालतः, तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतः। अत एव निरतिशयसत्यत्वम्।[34] ''स च एषो-ऽणिमैतदात्म्यमिदं सर्वं स आत्मा[35] ------

रत्नप्रभायां गोविन्दानन्देन कथितं यद् - ''बृंहणाद् ब्रह्मेति व्युत्पत्त्या देशकालवस्तुतः परिच्छेदाभावरूपं नित्यत्वं प्रतीयते। अविद्यादिदोषशून्यं शून्यत्वम् शुद्धत्वम्। जाड्यराहित्यं बुद्धत्वम्। बन्धकालेऽपि स्वतो बन्धाभावः मुक्तत्वम्।[36]

---

33- तै० उ० भा० ।।8
34- तै० उ० भा० पृ० ।।9
35- छा० उ० 6-9-4
36- र० प्र० ।-।-। पृ० 87
37- बृ०-भा०-वा०-।-

बृहदारण्यकभाष्यवार्तिके सुरेश्वराचार्येणापि एतद् कथितं-यत् किंचिद् दृश्यमानं तस्य तत्वं सदेव वर्त्तते सद् वस्तु व्यक्तरूपेण-अव्यक्तरूपेण वा भवितुं शक्नोति । यत् किमपि अभिव्यक्तं प्रकाशितं भवति तत्सर्वं स्वाश्रयीभूतकारणस्य सत्तायाः बलादेव प्रकाश्यते । अतः जगतः मूलकारणं ब्रह्म तच्च सदेव वर्त्तते । तद्यथा -

''न विद्यमानमात्रेण ह्यभिव्यक्तिरपीष्यते ।
सदेव वस्त्वभिव्यक्तं तथाऽव्यक्तं च लक्ष्यते ।।
कार्यान्तरेण संस्थानान्मृदादेर्नोपलभ्यते ।
सदात्मनोपलब्धिस्तु न कदाचन हीयते ।।[37] तथा
सत्पूर्वमिदं कार्यं तमोऽन्तस्थघटादिवत् ।
तस्याभिव्यक्ति धर्मत्वादन्यथा स्यान्नृश्रृंगवत् ।।[38]

संक्षेपशारीरके सर्वज्ञात्ममुनिः नित्य-सत्य सत् शब्दान् एकार्थे प्रयुक्ते । तद्यथा -'नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सन् विभुश्चाद्वितीयः ।[39] मधुसूदनसरस्वती एतेषां शब्दानामर्थान् एवं निरूपयति कालत्रयापरिच्छेद्यो नित्यः । त्रिकालाबाध्यः सत्यः । सद् सदा सन् विद्यमानो भावरूप इति वा । सत्तु शून्याद् विपरीतं भवति । एवंप्रकारेण नित्यत्वं,सत्वं च ब्रह्मणि एव सम्भवन्ति । अतः यद् सत्वं तदेव ब्रह्म ।

विद्यारण्यः पंचदश्यां भामतीकारस्य मतं उपस्थापयति । तद्यथा -

''सत्यत्वं बाधाराहित्यम् जगदबाधैकै साक्षिणः ।
बाधः किं साक्षिको ब्रूहि नत्वसाक्षिकेष्यते ।।''[40]

रामाद्वयेन वेदान्तकौमुद्याम् एतदुक्तं यत् अनेकेषु सद्वस्तुषु आत्मापि एकः इत्येवं प्रकारेण यः अवयुत्यवादः स समीचीनः नास्ति । यतः वस्तुतः आत्मा एव केवलं सद्वस्तु अस्ति ।[41] तद्यथा -'न च तत्वसमुदायस्य विभज्यैकदेशेन कथनमवयुत्यवादो यदेकात्मतत्वकीर्तनम् ।

---

37- बृ० भा० वा० 1-2-77
38- बृ० भा० वा० 1-2-74
39- सं० शा० 1- 173
40- पंचदशी 3-28
41- पंचदशी 3-29

न्यायरत्नदीपावल्याम् आनन्दानुभवेन एतदुक्तं यत् सत्ताजातेः अस्तित्वं बिनापि सत्वं ब्रह्मणः अभिन्नं वर्तते । तद्यथा - 'यदि सत् कुम्भादिभ्यो भिन्नं भक्तेतदा न कुम्भादयः सन्तीति प्रतीतिः । कुम्भादौ सत्प्रतीतिः सत्ताजातिसम्बन्धादीति चेन्न । गोत्वादौ सद्व्यवहाराभावप्रसंगात् । नायं दोषः, गोत्वदौ स्वरूपसत्ताश्रयणादिति चेन्न । तेष्वनुगतसद्व्यवहारविरहापत्तेः । गोत्वादिषु स्वरूपसत्वसाधर्म्येण सत्ताध्यारोपात् । सत्सदित्यनुगम इति चेन्न । द्रव्यादिष्वपि तथैवानुगमप्रसंगात् ।[42]

गंगाधरेन्द्रसरस्वत्या स्वाराज्यसिद्धौ सत्ताजातेः तथा अर्थक्रियासमसत्वस्य निराकरणं कृत्वा त्रिकालाबाध्यत्वमेव सत्यत्वम् इति निरूपितम् । तथा सत्वं केवलं ब्रह्मणः स्वरूपम् । अस्य सिद्ध्यर्थं तेन अन्ये एकादशहेतवः अपि निर्दिष्टाः । तद्यथा-
'सत्यत्वं तस्य सौम्यान्नभास इव जगन्नीलिमाधारभावाद्,
अव्यावृत्तेरखिलदृशितया सर्वबाधावधित्वात् ।
निस्संगत्वाविरोधाद् सकलगततयाऽऽत्मत्वतः साक्षिभावाद्
अन्येष्टुर्निषेधात् स्पुट्वचनशतैः स्वानुभूत्या च सिद्धम् ॥[43]

नित्यानित्यवस्तुविवेकः इत्यस्य भाष्यवाक्यस्य व्याख्यायां भामतीकारेण नित्यत्वसत्यत्वयोः पर्यायत्वेन प्रयोगः कृतः । एवंप्रकारेण नित्यत्वस्य अर्थः सत्यत्वम् एवेति निर्दिष्टम् । तद्यथा - नित्यत्वं सत्यत्वं, तद्यस्यास्ति तन्नित्यं सत्यं तथा - चास्थागोचरः । अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं तथा चानास्थागोचरः । तदेनेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सुखं व्यवस्थारयते तदास्थागोचरो भविष्यति, यत्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत्यक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकादवा कर्मणो विशुद्धसत्वस्य भवत्यनुभावोपपत्तिभ्याम् । न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्, तदभावे 'तदधिष्टानस्यानृतस्याप्यनुपपत्तेः, शून्यवादिनामपि शून्यताया एव सत्यत्वात् ।''[44]

---

42- न्या० र० दी० पृ० 98-99
43- न्या० र० दी० 98-99
44- भामती पृ० 71-72(1-1-1)

5-1-6 ब्रह्मणः स्वप्रकाशत्वं चित्स्वरूपत्वं च

'सच्चिदानन्दरूपेण' श्रुतिः ब्रह्मणः चित्स्वरूपत्वं प्रतिपादयति । चित् ज्ञानं प्रकाश च इत्येते शब्दाः पर्यायवाचित्वेन व्यवह्रियन्ते । 'चिती संज्ञाने' इति धातो क्विप् प्रत्ययात् निष्पन्नोऽयं चित् शब्दः जीवनं, चेतनां, प्रत्ययम्, अनुभवं च व्यंजयति । संज्ञानरहितः पदार्थः अचरः जडश्च इति कथ्यते । तद्विपरीतं ब्रह्म चित् इति उच्यते ।

चित्वम् त्रिधा अभिव्यज्यते । जीवनरूपेण ज्ञानरूपेण तथा प्रकाशरूपेण । जीवनतत्वं किमस्तीति प्रश्नस्य समाधानार्थं प्राणः मनः बुद्धिः एतेषां त्रयाणाम् उल्लेखाः पूर्वपक्षरूपेण श्रुतिषु दृश्यते । किन्तु अन्ततः इदमेव प्रतिपादितं यत् जीवनतत्वम् एतेभ्यः परं किमपि वर्त्तते यत् परमतत्वमपरम् एवास्ति । ब्रह्म । तदेव चित्वम् ।

बृहदारण्यकोपनिषद्भाष्यवार्तिके एकस्य सूक्ष्मतरप्राणस्य अर्थात् प्राणवृत्तीनामाधारत्वेन यस्य तत्वस्य उल्लेखाः दृश्यते, तस्मादपि परम् आत्मतत्वमस्ति तदेव चित्वम् ।

भामत्यां वाचस्पतिना स्वयंप्रकाशमानता एव सत्वम् इति प्रतिपादितम् । अतः स्वयंप्रकाशमानत्वम् एव परमतत्वं तदेव ब्रह्म इति प्रतिपादितम् । जडात् जडमस्ति स्वप्रकाशमानत्वाभावात् । आत्मा स्वयंप्रकाशः अस्ति, चित् स्वरूपत्वात् । अतः एतत् सिद्ध्यति यत् तदेव सत् यत् चिद्स्वरूपं स्वप्रकाशं च वर्त्तते ।

योगवासिष्ठेऽपि एतत् स्पष्टं निरूपितं वर्तते यत् परमतत्वम् प्रकाशमयं स्वप्रकाशम् अन्यप्रकाशकं च वर्त्तते । स्वयंप्रकाशः तदस्ति यत् स्वस्य प्रकाशार्थम् अन्यस्य प्रकाशकस्य अपेक्षां न करोति[45] । माण्डूक्यकारिकायां गौडपादेन ज्ञानालोकम्, अस्वप्नं, सकलविज्ञानं, सर्वज्ञं, सदज्योतिः, इत्येवं प्रकारेण ब्रह्मणः चिद्स्वरूपस्य प्रतिपादनं कृतम् । सर्वदृक् अनन्यदृक् इत्येवं रूपेणापि ब्रह्मणः उल्लेखः कृतः । गौडपादेन एतत् स्पष्टीकृतं यत् ब्रह्म सर्वथा स्वप्रकाशं वर्त्तते स्वप्रकाशाय तत् अन्यत् प्रकाशं नापेक्ष्यते ।

भगवता शंकरेण शारीरकभाष्ये ब्रह्मणः चैतन्यत्वं चितत्वं वा संसाधितम् । तद्यथा 'अस्ति तावत् नित्यशुद्धबुद्धमुक्तस्वभावम्[46] ।

45- ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टादर्शनदृश्यभाः ।
कर्ता हेतुः क्रिया यस्मात् तस्मै ज्ञप्त्यात्मने नमः ।।'' (यो० वा० 1-1-2)

46- ब्र० सू० शा० भा० 1-1-1

सुरेश्वराचार्योऽपि 'नैष्कर्म्यसिद्धौ' ब्रह्मणः स्वप्रकाशतां, सर्वप्रकाशतां च निरूप्य तस्य चित्वं साधयति । बृहदारण्यकभाष्यवार्तिकेऽपि संवित् अनुभूति शब्दयोः प्रयोगः ब्रह्मणः आत्मतत्वस्य वा पर्यायत्वेन कृतः । तद्यथा - अजमेकं स्वतः सिद्धं प्रत्यग्रूपमनन्यदृक् ।[47]

'सत्तात्वकमिदं सर्वमिति संसाध्य यत्नतः ।

तस्यापि संविन्मात्रेण पूर्णतैवोप्यते सतः ।।[48]

क्रूघटार्थाविद्भूत्य संवित्सद्रूपमात्रया ।

अर्वगत्यात्मना सत्वं सर्वदृक् स्यादविक्रियः ।।[49]

संक्षेपशारीरके सर्वज्ञात्ममुनिना अनृतजडविरोधिरूपम् इत्युक्त्वा ब्रह्मणः सत्यज्ञानस्वरूपत्वं संसाधितम् ।[50]

न्यायमकरन्दे आनन्दबोधभट्टाचार्यः ब्रह्मणः प्रकाशेन निखिलं प्रकाशमान् भवति इति निर्दिशति । तद्यथा - यद्भासा निखिलं विभाति विषयो यो न स्वयं ज्योतिषाम् । यस्याहुर्भुवनोद्भवस्थितिलयान् लीलामयान् सूरयः ।''[51]

पंचपादिकाविवरणे प्रकाशात्मयतिः अपि आत्मनः प्रकाशत्वं जडात् तस्य पृथगत्वं च स्वप्रकाशतामाश्रित्यैव निरूपयति । केनापीन्द्रियेण अज्ञायमाने सत्यपि सदापरोक्षस्वानुभूतिगम्यत्वात् आत्मा स्वप्रकाशः । तद्यथा - 'अनुमानमपि स्वयं-प्रकाशोऽयमात्मा स्वसत्तायां प्रकाशव्यतिरेकाभावात्प्रदीपसंवेदनवत् । आत्मा स्वयं-प्रकाशो विषयप्रकाशकर्तृत्वात्प्रदीपवत् । तथा आत्मा स्वयंप्रकाशो विषयप्रकाशा-श्रयत्वादालोकवत् । अजन्यप्रकाशगुणश्चात्मा प्रकाशगुणत्वाद् आदित्यादिवत् । आत्मा स्वयंप्रकाशः अनिन्द्रियगोचरत्वे सत्यपरोक्षत्वात्संवेदनवत् ।[52]

पंचदश्यां विद्यारण्यमुनिना 'नोदेति नास्तमेत्येका संविदेषा स्वयम्प्रभा''[53] इत्येवं प्रकारेण परमतत्वस्य संविदत्वं उदयास्तरहितत्वं स्वयंप्रभावत्वं च निरूप्य एतत्

---

47- बृ० भा० वा० 1-2-26
48- बृ० भा० वा० 1-2-29
49- बृ० भा० वा० 1-4-989
50- सं० शा० 1-1
51- न्या० म० 1-1 पृ० ।
52- पं० पा० वि० (लाज० सं०) पृ० 197-98
53- पं० द० 1-7

कथितं यत् अवेद्यत्वे ऽपि अपरोक्षत्वं स्वप्रकाशतायाः हेतुः । तद्यथा -

''विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ।

अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम्।।'' [54]

चित्सुखाचार्यः 'तत्त्वदीपिकायाम्' आत्मनः स्वयंप्रकाशस्य एकादशलक्षणानि पूर्वपक्षरूपेण उद्भाव्य सिद्धान्तपक्षत्वेन एवं कथयति यत् 'अवेद्यताविशिष्टापरोक्षव्यवहारयोग्यता स्वयम्प्रकाशिता' [55] अत्र पूर्वपक्षरूपेण ये विकल्पाः उद्भाविताः ते सन्ति अधोलिखिताः - ''स्वश्चासौ प्रकाशश्च स्वप्रकाशः ? स्वस्य स्वयमेव प्रकाश इति वा? सजातीयप्रकाशाप्रकाश्यत्वं वा? स्वसत्तायां प्रकाशव्यतिरेकतिरहितत्वं वा? स्वव्यवहारहेतुप्रकाशत्वं वा? ज्ञानविषयत्वं वा? ज्ञानाविषयत्वे सत्यपरोक्षत्वं वा? व्यवहारविषयत्वे यति ज्ञानाविषयत्वं वा? स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा? अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा? तद्योग्यत्वं वा? [56]

मधुसूदनसरस्वती सिद्धान्तबिन्दौ संक्षेपेण तथा अद्वैतसिद्धौ विस्तरेण ब्रह्मणः ज्ञानत्वम् आश्रित्य सप्तविकल्पान् उद्भावयति ।

गंगाधरेन्द्रसरस्वती स्वाराज्यसिद्धौ एतत् कथयति यत् 'स्वपरप्रथायामन्यानिरपेक्षत्वं चित्वम् '' [57] ब्रह्म चिद्रूपम् अस्ति इति सिद्धयर्थं तथा एकमात्रं परमतत्वं चिद्रूपं वर्तते इत्यस्य प्रतिपादनाय सः नैकान् हेतून् प्रस्तौति । तद्यथा -

''आत्मत्वादीक्षितृत्वादखिलवशितया शास्त्रयोनित्ववादात् ।

कामाभिध्योपदेशाच्छशितपनमुखाद्योति भासतोक्तेः ।

साक्षादेवापरोक्षादसुकृतसुकृताध्यक्ष्यसाक्षित्ववादात्

सर्वज्ञादिशब्दात्स्फुटवचनशतैश्चापि सच्चित्स्वभावाम् ।। [58]

---

54- पं० द० 3-27-28
55- त० प्र० ५ पृ० 4-6
56- त० प्र० पृ० 4,5
57- स्वा० सि० पृ० 159
58- स्वा० सि० 2-39

5-1-7 ब्रह्मणः आनन्दत्वम्
-------------------------

'आनन्दो ब्रह्मेति व्यजानात्' इत्यादि श्रुतिवाक्येषु ब्रह्मणः आनन्दरूपत्वं सुस्पष्टं प्रतिपादितं विद्यते । ''यो वै भूमा तत्सुखम्'' यत्र निरतिशयं नित्यं निरवच्छिन्नं तदेव भूमा । भूमैव सुखं भूमात्वेव विजिज्ञासितव्यम् ।।

योगवासिष्ठे ब्रह्म एव आनन्दस्य लघुसीकराणां स्रोतोऽस्ति । दुःखस्य निवृत्तिरेव परमसुखम् । तदेव आनन्द त्वमिति । तदेव च परमतत्त्वम् । तद्यथा - ''स्फुरन्ति सीकरा यस्मादानन्दस्याम्बरेऽवनौ । ''सर्वेषां जीवनं यस्मात् तस्मै ब्रह्मात्मने नमः ।।[59]

''यत्सुखं दुःखमेवाहुः क्षणनाशानुभूतिभिः ।
अकृत्रिममनाद्यन्तं यत्सुखं तत्सुखं विदुः ।।'' 60

गौडपादाचार्यः माण्डूक्यकारिकायां तुरीयतत्त्ववर्णने ब्रह्मणः आनन्दत्वं साधयति । तद्यथा -

''निवृत्ते सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतसर्वभावानां देवस्तुर्यो विभुः स्मृतः ।।[61]

बृहदारण्यकभाष्ये, तैत्तिरीयोपनिषद्भाष्ये तथा छान्दोग्यभाष्ये शंकराचार्येण अपि ब्रह्मणः आनन्दत्वं,विज्ञानस्य आनन्दादभिन्नत्वं च संक्षेपरूपेण प्रतिपादितम् । ब्रह्मसिद्धौ मण्डनमिश्रेणापि ब्रह्मणः आनन्दत्वं सुस्पष्टं निरूपितम् । सः कथयति यत् आनन्दः भावरूपः नतु अभावरूपः (दुःखस्य) तद्यथा - आनन्दमिति न तावद् दुःखनिवृत्तिरेव सुखम् ------ । ---- दुःखनिवृत्तिरन्यदेव । स चानन्दशब्दस्य मुख्योऽर्थः ।[62]

जागतिकः आनन्दः ब्रह्मानन्दस्य आभासः । अतः ब्रह्मानन्दः भावरूपः । आनन्दत्वं ब्रह्मणः स्वरूपम् । गुणः धर्ममात्रं वा न।/ आनन्दत्वात् ब्रह्मणः निर्विशेषत्वं

-------------------------
59- यो० वा० 1-1-3
60- यो० वा० 6/68/31
61- मा० का० 1-10
62- बृ०भा० 3-9-28

न हीयते । यतः 'विज्ञानमानन्दं ब्रह्म' इत्यादि श्रुतिषु विज्ञानम् आनन्दश्च ब्रह्मणः स्वरूपं नतु वैशिष्ट्यम् । विज्ञानानन्दयोः एकः ब्रह्मस्वरूपत्वेन निर्देशः ब्रह्मणः जडवस्तुभ्यः तथा दुःखात् भिन्नत्वं प्रतिपादयति । तद्यथा - ''तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम् । एवं च लौकिकानन्द एतस्य मात्रेति युज्यते, अवच्छेदात्, दुःखनिवृत्तौ तु दुर्योजमेतत् । इतश्चानन्दस्वभाव आत्मा, परप्रेमास्पदत्वात् । श्रूयते हि परप्रेमास्पदत्वम्- तदेतत्प्रेयः पुत्रात् इति ।[63]

पदमपादाचार्यः पंचपादिकायाम् आनन्दस्य ब्रह्मणः अपृथक्त्वं किन्तु पृथक्त्वेन अवभासमानधर्मत्वं निर्दिशति । तद्यथा -

''आनन्दो विषयानुभावो नित्यत्वं चेति सन्ति धर्माः ।
अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते ।।''[64]

सर्वज्ञात्ममुनिः अपि संक्षेपशारीरके परमतत्त्वस्य सुखस्वरूपत्वं प्रतिपादयति । सुषुप्त्यनन्तरम् आत्मातिरिक्तं किंचिदपि अन्यत् न स्मर्तुं शक्यते । अतः 'सुखमहमस्वाप्सम्' इत्याद्यनुभावानां सुषुप्त्युत्तरवर्तिनाम् आशयः आत्मा एव । अतः आत्मनः सुखरूपत्वं सुस्पष्टम् । तद्यथा -

''प्राज्ञे सुखं समनुभूय समुत्थितः सन्
सर्वप्रकारविषयप्रतिपत्तिशून्ये ।
सुप्तोऽहमत्र सुखमित्यनुसन्दधानः
सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ।।
प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः
स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ।
प्रेयः श्रुतेरपि ततः सुखताऽनुमानं
नैयायिकोऽपि न दृगात्मनि निह्नुवीत ।।[65]

---

63- ब्र० सि० पृ० 5
64- पं० पा० पृ० 23
65- सं० शा० 1-23, 25

आत्मनः सुखस्वरूपत्वविषये एषा शंका उदेति यत् -यदि परमतत्वं सुखरूपम् अस्ति प्रत्यग आत्मा (जीवः) च तस्मात् पृथग् नास्ति तर्हि दुःखस्य अस्तित्वं प्रतीतिर्वा कथं भवितुं शक्नोति? अस्याः शंकायाः समाधानम् इष्ट-सिद्धौ विमुक्तात्मा एवं करोति -

''शुभकर्मणा उपस्थापितो विषयविशेषे तदिन्द्रियसंयोगात् जातेऽन्तःकरणवृत्तिविशेषे प्रसन्ने सति, निर्मल इवादर्शे मुखम्,आत्मैवानन्दः प्रकटीभवति । तद्विषयसुखमिति प्रसिद्धं लोके ।''[66]

एवं च - 'प्रियत्वाच्चात्मैव सुखम् । प्रसिद्धो ह्यात्मैव प्रियो लोके । अन्यस्य सर्वस्यात्मार्थत्वेन प्रियत्वं, न तु स्वतः । ----- यदर्थं सर्वं यच्च नान्यार्थं तत्सुखं प्रसिद्धम् । सा च प्रसिद्धिर्नात्मनोऽन्यत्र समस्तीत्यात्मैव सुखम् । ---- आत्मा नान्यार्थः सर्वं चात्मार्थम्, सुखं च 'नान्यार्थं', सुखार्थं हि सर्वमिति सुखात्मनोर्लक्षणाभेदादभेद एवेति सिद्धम् ।[67]

आनन्दानुभवः 'न्यायरत्नदीपिकायां' कथयति यत् -''दुःखाभाव एवानन्द इति न । आनन्दस्याभावत्वानुभवविरोधात् । ब्रह्मस्वरूपताश्रुति विरोधाच्च लौकिकमपि सुखं न दुःखाभावः नित्यमेवात्मसुखं विषययोगजान्तःकरणवृत्ति-व्यङ्ग्यंसत् विषयसुखमिति गीयते । ज्वराद्यभावोऽपि विषयवदात्मसुखस्य व्यंजको भवेत् । अभावस्य व्यंजकता नादृष्टचरी । मूर्तद्रव्याभावस्याकाशव्यंजकतादर्शनात् । इत आत्मैव सुखम् ।[68]

चित्सुखाचार्यः तत्वदीपिकायाम् आत्मनः आनन्दमयत्वस्य सुखरूपत्वस्य वा प्रतिपादनार्थं सौषुप्तम् अनुभवम् स्वस्य परमप्रेमास्पदतां च हेतुत्वेन उपस्थापयति । तद्यथा - 'परमप्रेमास्पदत्वानुपपत्तिरात्मनः सुखरूपत्वे प्रमाणम् । आत्मनः प्रेमा-स्पदतायां न कस्यचिद् विवादः, मा न भूवं भूयासमिति आत्मन्याविशेषो लौकिक-परीक्षकसम्मतत्वात् ।[69]

---

66- इ० सि० पृ० 28
67- इ० सि० पृ० 29,30
68- न्या० र० दी० 13।
69- त० प्र० पृ० 566

विद्यारण्यः पंचदश्यां कथयति यत्र आत्मप्रीतेः विषयः आस्पदश्च आत्मा आनन्दस्वरूपः । तद्यथा -

''सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः ।

सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी ।।[70]

मधुसूदनसरस्वतीः अद्वैतसिद्धौ पूर्वपक्षरूपेण अनेकान् कल्पान् उद्घाट्य - ''आनन्दत्वस्य निरुपाधिकेष्टरूपत्वात्' इति सिद्धान्तयति । तद्यथा -'' आनन्दत्वं जातिविशेषो वा, अनुकूलतया वेदनीयत्वं वा,अनुकूलवेदनत्वं वा,अनुकूलत्वमात्रं वा, सुखात्मकत्वमेव वा, दुःखाभावोपलक्षितस्वरूपत्वं वा, परांगीकृतं वा । ----- नाद्यः, अखण्डस्वरूपानन्दे तदभावात्, न द्वितीयः,मोक्षे वेदितुरभावात् आत्मनो वेद्यत्वाच्च । किंच आनुकूल्यं किञ्चित्सापेक्षं, न चान्यं प्रति तदुक्तमिति स्वं प्रत्येव कर्तव्यत्वेन सविशेषत्वापातात् । --- ।[71]

गंगाधरेन्द्रसरस्वती स्वाराज्यसिद्धौ ब्रह्मणः नित्यानन्दत्वम् एवं प्रकारेण साधयति - ''सौख्योत्कर्षाविधित्वान्निरवधिपरमानन्दभूमात्मकत्वात् । कृत-प्राप्यत्ववादान्निरवधिपरमानन्दभूमात्मकत्वात् । सर्वप्रत्यक्तत्ववादान्निधिनिलय-बधूसाम्यवादात्सुषुप्तावानन्दे ब्रह्मतोक्तेरपि च रसतया तत्सदानन्दरूपम् ।[72]

एवंप्रकारेण'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतिषु यदुक्तं दृश्यते तदनुसारं ब्रह्मणः आनन्दमयत्वं स्वतः स्पष्टम् ।

5-1-8 ब्रह्मणो निर्गुणत्वम् निर्विशेषत्वं च

यद्यपि अद्वैतवेदान्ते परमतत्वस्य निर्देशः ब्रह्म' आत्मा सच्चिदानन्दः इत्येवं रूपेणदृश्यते तथापि वस्तुतः तत् अव्यपदेशम्, अलक्षणम्,अतः अनिर्वाच्यम् अस्ति इति व्यपदिश्यते । ब्रह्मणः स्वरूपस्य निषेधमुखेनैव प्रायः निरूपणं दृश्यते ।'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्येवं रूपेण एतत् स्पष्टीकृतं वर्तते यत् ब्रह्म वाचां विषयः नास्ति । पदार्थानाम् अन्ततः निषेधात् यत् अवशिष्यते,तदेव ब्रह्म । तच्च अरूपम्,अस्पर्शम्,अव्ययं,निर्धर्मकं, निर्विशेषं,निर्गुणं च । निषेधमुखेन यत्

---

70- पं०द० 12-25

71- अ० सि० पृ० 750-51

72- स्वा० सि० 2-202

किमपि ब्रह्मविषये उच्यते तस्यैव विधिमुखेन शुद्धं, केवलम्, बुद्धम् इत्येवं प्रकारेण उल्लेखाः क्रियते ।

यद्यपि सर्वज्ञ, सर्वशक्तिमान्, सर्वकामः सर्वरसः इत्यादिरूपेणापि आत्मनः उल्लेखाः क्रियते तथापि 'तद् धावतोऽन्यानत्येति' एवं विधैः वाक्यैः एतत् स्पष्टं भवति यत् सर्वज्ञत्वादि गुणधर्मैः ब्रह्म परिच्छिन्नं नास्ति ।

नैयायिकैः आत्मनः ज्ञानाधिकरणत्वम् उद्भाव्य तस्य जडत्वमपि उद्घोषितम् । अतः ब्रह्मणः गुणधर्माश्रयतायाः निषेधेन ब्रह्मणः प्रज्ञानत्वस्य प्रतिपादनार्थम् एव निषेधमुखाः व्यपदेशाः वेदान्तिभिः उद्भाविताः । न्यायवैशेषिकादि-दर्शनेषु तत्त्वानामनेकत्वं प्रतिपाद्य मूलतत्त्वस्यापि अनेकत्वं निर्दिष्टं वर्त्तते । अतः अद्वैतवेदान्तिभिः तस्य निराकरणार्थम् अर्थात् परमतत्त्वस्य अद्वितीयतायाः प्रतिपादनार्थम् एतत् कथितं यत् ब्रह्म गुणक्रिया-जातिविशेषप्रवृत्तिभिः असंस्पृष्टम् । अर्थात् केवलम्, एकमात्रं, पदार्थान्तरसंसर्गरहितम् इति ज्ञातव्यम् ।

न्यायमतस्य खण्डनं श्रीहर्षस्य 'खण्डनखण्डखाद्ये' चित्सुखाचार्यस्य 'तत्त्वप्रदीपिकायां' च विस्तरेण दृष्टुं शक्यते । न्यायवैशेषिकानिर्दिष्टपदार्थानाम् आपाततः परिभाष्यमाणेऽपि परमतत्त्वेन सह तेषां संसर्गः नास्तीति निरूप्य मधुसूदन-सरस्वत्या एतत् स्पष्टीकृतं यत् ब्रह्म अखण्डस्वरूपम्, अद्वितीयं चास्ति ।

ब्रह्म निष्क्रियं, निर्विकारं चास्ति । ब्रह्मणि विकारस्य सम्भावनापि नास्ति । अतः तस्य निष्क्रियत्वं, निर्विकारत्वं च स्पष्टमेव । ब्रह्म सावयवं नास्ति । यतः अवयवाः विनाशिनो भवन्ति । अवयवानां विनाशे अवयविनाम् अपि नाशः जायते, नित्यत्वात् । ब्रह्मणः अविनाशित्वं तस्य निखायत्वमपि साधयति ।

ब्रह्मणः निर्गुणत्वादिविषये श्रुतिषु उपलभ्यमानानि कानिचित् प्रमाणानि अत्र उद्ध्रियन्ते । तद्यथा - 'अवाच्यमनभिव्यक्तमतीन्द्रियमनामकम् ।'[73] ''अनन्ते परमे तत्त्वे स्वत्वास्वत्वाद्यसम्भवात् ''[74] 'निर्गुणः सत्वादिगुणरहितः ''।[75]

---

73- यो० वा० 6-2-62-27

74- यो० वा० 6-2-10/14

75- श्वे० भा० 6-11, पृ० 243

'अविद्यादिदोषशून्यत्वं शुद्धत्वम्, जाड्यराहित्यं बुद्धत्वम्, बन्धकालेऽपि स्वतो बन्धाभावः मुक्तत्वं च प्रतीयते । एवं सकलदोषशून्यं निर्गुणं प्रसिद्धम् ।''[76] ''निर्गुणप्रकरणस्थायास्तु अद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितविषयसमर्पकतया अन्यथासिद्धेः ।।[77] नाप्यनुमानं ब्रह्मणि तात्त्विकधर्मं साधनायालम् । तथा हि ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवत्, अतसत्ताकभावरूपधर्मवद् वा, यावत्स्वरूपमनुवर्तमानधर्मवद् वा तादृशभावरूपधर्मवद् वा, स्वज्ञानाबाध्यधर्मवद् वा, ------ धर्मिणा विरुद्धधर्मैर्वा हीनं नावतिष्ठते वा, पदार्थत्वात् अभावाश्च भावत्वात्, घटवत् ।[78] निर्विशेषत्वस्य स्वरूपत्वेन विशेषत्वानंगीकारात् । धर्माभावस्य स्वरूपतयैव सत्वांगीकारेण व्याघाताभावात् ।।[79]

एवं प्रकारेण ब्रह्मणो निर्गुणत्वं निर्विशेषत्वं च स्वतः स्पष्टम् ।

---

76- र० प्र० पृ० 87

77- अ० सि० पृ० 717

78- अ० सि० पृ० 718

79- अ० सि० पृ० 727

## 5-2-0 ईश्वरस्य स्वरूपम्

निर्गुणः निरुपाधिकं निर्विशेषं ब्रह्म स्वकीयया एव मायया अवच्छिन्नं सव सगुणः सोपाधिक, सविशेषः ईश्वरः इत्युच्यते । अयमेव ईश्वरः जगतः सृष्टि-स्थितिलयानां कारणमस्ति । निर्गुणे निरुपाधिके च ब्रह्मणि ईश्वरत्व सर्वज्ञत्वं जगत्कारणत्वादि व्यवहाराणाम् अनुपपन्नत्वात् मायावच्छिन्ने ब्रह्मणि एव ईश्वरत्व सर्वज्ञत्व प्रभृतीनां उपपत्तिः दृश्यते । तद्यथा - 'तदेवमविद्यात्मकोपाधि परिच्छिन्ना-पेक्षमेवेश्वरस्य ईश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्वं च न परमार्थतो विद्ययापास्तसर्वोपाधि-स्वरूप आत्मनी शित्री शितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते ''[80]

माया ईश्वराधीना सती तस्य स्वभावस्य आवरणं कर्तुं तथैव असमर्था यथा विशुद्धं दर्पणं पदार्थ गुणानाम् अवरणं न करोति । मायायाः सहाय्येन ईश्वरः जगतः सृष्टिं करोति । सृष्टिरचनायां ईश्वरस्य किमपि प्रयोजनं नास्ति । तस्य आप्तकामत्वात् । अतः ईश्वरस्य सृष्टिव्यापारः लीलारूपः । यथोक्तम् शांकर-भाष्ये ---' एवमीश्वरस्याप्यनपेक्ष्य किंचित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । नह्यीश्वरस्य प्रयोजनान्तरं नीरूप्यमाणं न्यायतः श्रुतितो वा संभवति । नच स्वभावः पर्यनुयोक्तुं शक्यते[81] ।

शांकरोत्तरवेदान्ते ईश्वरजीवयोः विषये विभिन्नानि मतानि उपलभ्यन्ते । सिद्धान्तलेशः संग्रहे अप्पस्यदीक्षितेन उद्धृतं यत् -'' अनादिरनिर्वाच्या भूत-प्रकृतिश्चित्मात्रसम्बन्धिनी माया । तस्यां चित्प्रतिबिम्ब ईश्वरः, तस्या एव परि-च्छिन्नानन्त प्रदेशेषु आवरणशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बो जीवः ''[82] ।

---

80- ब्र० सू० शा० भा० 2-1-14 पृ० 382

81- ब्र० सू० शा० भा० 2-1-33 पृ० 480

82- सि० ले० सं० पृ० 91-92

पंचदश्यां विद्यारण्येन इदं स्पष्टीकृतं यत्र मायायां विशुद्धसत्वस्य प्राधान्यं वर्तते । किन्तु अविद्यायां सत्वं, रजस तमसा चाभिभूतं जायते । तद्यथा -" सत्वशुद्धयविशुद्धिभ्यां मायाविद्ये च ते मते[83]। रजस्तमोऽनभिभूतशुद्धसत्वप्रधाना माया, तदभिः भूतमालिनसत्वा अविद्यति मायाविद्याभेदं परिकल्प्य मायाप्रतिबिम्बः ईश्वरः, अविद्याप्रतिबिम्बो जीवइत्युक्तम् ।

केषांचित इदं मतं वर्तते यत्र मायायां विक्षेपशक्तेः प्राधान्यं भवति । अविद्यायाम् च आवरणशक्तेः प्राधान्यम् । एका एव मूलप्रकृतिः -"विक्षेपप्राधान्येन माया शब्दिना ईश्वरोपाधिः आवरणप्राधान्येन अविद्याज्ञानशब्दिता जीवोपाधिः[84] । आवरणशक्तिसम्बन्धात् जीवस्यैव अहम् अज्ञः इत्येवं प्रकारकोऽनुभवः भवति । आवरणशक्तिप्रधानया अविद्यया सह असम्बद्धत्वात् ईश्वरे अज्ञाता न कल्प्यते । यथोक्तं सिद्धान्तलेशसंग्रहे अप्पय्य दीक्षितेन- 'जीवस्यैव अज्ञोऽस्मि इति अज्ञानसम्बन्धानुभावः नेश्वरस्य ।

संक्षेपशारीरककारः सर्वज्ञात्ममुनिः मायाऽविद्ययोर्मध्ये कमपि भेदम् न स्वीकरोति । तस्य मतानुसारम् अविद्या ब्रह्मणः शक्तिरस्ति । अविद्यायाः कार्य अन्तःकरणम् अस्ति । अविद्यायां प्रतिबिम्बतं चैतन्यं ईश्वरः अन्तःकरणे प्रतिबिम्बितं चैतन्यं जीवः । संक्षेपतः तस्य मतमिदमस्ति -"कार्योपाधिरयं जीवः, कारणोपाधिरीश्वरः" इति ।

अस्मिन् सन्दर्भे एतद् ज्ञातव्यं वर्तते यत्र विवरणमतानुयायिभिः ईश्वरस्य प्रतिबिम्बत्वं न स्वीक्रियते ते ईश्वरस्य बिम्बत्वं मन्वते नतु प्रतिबिम्बत्वम् । प्रतिबिम्बस्थानीयस्तु जीवः वर्तते । स च बिम्बस्थानीयस्य ईश्वरस्य प्रतिबिम्बः अस्तीति विवरणानुयायिनां राद्धान्तः । यदि ईश्वरः जीववत् प्रतिबिम्बरूपत्वेन स्वीक्रियेत तर्हि तस्य स्वातंत्र्यं नोपपद्येत । यथोक्तं अप्पय्यदीक्षितेन " तथा सत्यैव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य, तत्पारतन्त्र्यं जीवस्य च युज्यते[85] ।

-----------------------------------

83- पंचदशी- तत्वविवेक पृ0 127

84- सिद्धान्तलेशसंग्रहः पृ0 102

85- सि0 ले0 सं0 पृ0 103-4

ईश्वरस्य प्रतिबिम्बरूपत्वाभावे अन्यदपि प्रमाणं वर्तते तद्यथा -
"ईश्वरः जीवः च परस्परं विभिन्नस्वभाववन्तौ । उपाधेः भेदं बिना एकस्यैव बिम्बस्य द्वौ भेदौ भवितुं नार्हतः । अतः विवरणानुयायिनां मतानुसारं ईश्वरः बिम्बः एव वर्तते नतु प्रतिबिम्बः । ते मायायाः प्रतिबिम्बोपाधित्वमपि न स्वीकुर्वन्ते । तद्यथा -" बिम्बप्रतिबिम्ब भावेन जीवेश्वरयोर्विभागः, नोभयोरपि प्रतिबिम्बभावेन । ---- तत्रापि प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः[86] ।

एवं प्रकारेण प्रतिबिम्बद्वयार्थम् अपेक्षितोपाधिद्वयाभावे जीवेश्वरौ उभौ एव न प्रतिबिम्बरूपौ । ईश्वरः बिम्बरूपः, जीवश्च प्रतिबिम्बरूपः[87] । इति विवरणानुयायिनां मतम् ।

अवच्छेदवादिनः वाचस्पतिमिश्रास्तु ईश्वरस्य चैतन्यप्रतिबिम्बत्वम् आभासत्वं वा न स्वीकुर्वन्ति । भामतीप्रस्थानस्तु अविद्यावच्छिन्नं चैतन्यं जीवः तथा अविद्याविषयीभूतं चैतन्यम् ईश्वरः इति कथयन्ति । माया-अविद्ययोः रूपहीनत्वात् प्रतिबिम्बस्य उपाधित्वं न सम्भवति । यतः प्रतिबिम्बोपाधेरपि रूपवत्त्वमावश्यकम् । ब्रह्मानन्दसरस्वती वेदान्तमुक्तावल्यां तथा मधुसूदनसरस्वती सिद्धान्तबिन्दौ एतत् कथयतः यत् यदि अविद्यायाः आश्रयः जीवः इति स्वीक्रियेत, तर्हि जगतः निर्माणार्थम् ईश्वरस्य काप्यावश्यकता नास्ति । अस्य आक्षेपस्य समाधानं कुर्वता कल्पतरुकारेण तथा परिमलकारेण एतदुक्त यत् यथा रजतादिविवर्तानाम् अधिष्टानम् शुक्तिः एवमेव जीवाविद्यादिविवर्तानाम् अधिष्टानं ब्रह्म एव । एवं प्रकारेण च यथा अहिविभ्रमस्योपादान रज्जुः भवति तथैव प्रपंचविभ्रमस्य उपादानम् ईश्वरः ।

अस्मिन् सन्दर्भे निम्नलिखितानि कथनानि द्रष्टव्यानि सन्ति -
1) एवं च वाचस्पतिमते जीव एव समन्वयः पर्यवस्यति, तन्मते जीवाश्रिताविद्यापरिणामस्य प्रपंचस्य जीवेऽध्यारोपेण तत्रैवापदनीयत्वात् ।"[88]

-----------------------------------

86- सि० ले० सं० पृ० 104
87- सि० ले० सं० पृ० 105
88- व० क० प० पृ० 404

(2) अधिष्ठानं हि ब्रह्म न जीवाः ।
अधिष्ठाने च समन्वय इत्यनवद्यम् ।[89]

(3) अधिष्ठानं विवर्त्तानामाश्रयो ब्रह्म शुक्तिवत् ।
जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ।।[90]

(4) प्रपंचविभ्रमस्यहीश्वराधिष्ठानत्वमहिविभ्रमस्येव
रज्जवधिष्ठानत्वम्, तेन यथा हि विभ्रमोरज्जूपादानः एवं प्रपंचविभ्रम ईश्वरोपादानः[91]

5-2-1 साक्षिणः स्वरूपम्

अद्वैतवेदान्ते ब्रह्म-ईश्वरः-साक्षी-जीवः इत्येवं प्रकारेण उल्लेखाः दृश्यन्ते । अत्रेदं विचारणीयमस्ति यत् 'कोऽयं साक्षी ? किमसौ जीवातिरिक्तः जीवः एव वा? ईश्वरातिरिक्त ईश्वर एव वा? ब्रह्मातिरिक्त;ब्रह्म वा?

सिद्धान्तलेशसंग्रहकारः श्री अप्पयदीक्षितः साक्षिणः स्वरूपविषये यत् कथयति सर्वप्रथमं तत् संक्षिप्तरूपेण प्रस्तूयते।साक्षी शब्दस्य व्युत्पत्तिः-साक्षात् ईक्षणात् साक्षी (साक्षात्-पदात् दृष्टरि-अर्थे इनि प्रत्ययः। 'संज्ञायाम्' इति सूत्रानुसारम् साक्षी अर्थात् द्रष्टा दर्शनकर्ता । साक्षात् ईक्षणम् अपरोक्षतया द्रष्टृत्वात् । अस्य कः आशयः इत्यस्मिन् विषये सिद्धान्तलेशसंग्रहकारेण कूटस्थदीपम् उद्धृत्य कथितम्-
1) देह(स्थूलसूक्ष्म)द्वयाधिष्टान भूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षात् ईक्षणात् निर्विकारत्वात् च साक्षीत्युच्यते ।[92] द्रष्टृत्वं(दृष्टिक्रियाकर्तृत्वम्) निर्विकारत्वम् (कर्तृत्वादिविकारराहित्यं) इत्यनयोः परस्परविरोधः न कल्पनीयः । दृष्टिस्वरूपे एव कूटस्थे तत्कर्तृत्वस्य 'साक्षाद्द्रष्टरि संज्ञायाम्' इति सूत्रानुसारं उभयो, समन्वयात् । एवमेव लोकोऽपि औदासीन्य बोधेभ्यः एव साक्षित्वं सिद्धम् । अस्य आशयः अयमस्ति यत् साक्षिणि कर्तृत्वम् आरोपितम् अस्ति नतु वास्तविकम् ।

89- वे० का० प० पृ० 404
90- वे० क० प० 404
91- भामती पृ० 378
92- सिद्धान्तलेशसंग्रहः पृ० 234

प्रकाशात्मके अकर्तरि सवितरि यथा सविता प्रकाशते इति प्रकाशकर्तृत्वम् आरोप्यते। तथैव दृशिस्वरूपे साक्षिणि द्रष्टृत्वं दर्शनकर्तृत्वम् वा आरोप्यते। वस्तुतः साक्षी अकर्ता अभोक्ता उदासीनश्च वर्तते। सः कूटस्थः इत्युच्यते। कूटे अर्थात् मिथ्या बुद्धौ चिदाभासे वा निर्विकाररूपेण असंगरूपेण वा यत् चैतन्यम् अवतिष्ठते उच्यते कूटस्थः इति। स एव साक्षी। स्वप्रकाशः स साक्षी स्थूलसूक्ष्मात्मकं शरीरद्वयम् अवभासयति।

अत्रेयं शंका उदेति यत् जीवचैतन्यस्यैव साक्षित्वमस्तु किं कूटस्थचैतन्येन? अस्य उत्तरमिदमस्ति यत् जीवचैतन्यस्य औदासीन्यदृष्टित्वाभावेन तस्य औदासीन्याभावात् कूटस्थत्वं न युज्यते।

यदि जीवशरीरद्वयस्य स्थूलसूक्ष्मात्मकस्य अवभासार्थं साक्षी स्वीक्रियते तर्हि अन्तःकरणवृत्त्या एव अवभासः कथं न स्वीक्रियते॥ अस्य उत्तरमिदमस्ति यत् अन्तःकरणस्य जडत्वात् अन्तःकरणवृत्तिरपि जडा। अतः तया जीवशरीरद्वयस्य अवभासः न शक्यः। तस्मात् जीवस्यस्थूलसूक्ष्मदेहयोः अवभासार्थं साक्षी स्वीकरणीयः। अन्तःकरणम्, अन्तःकरणवृत्ति अन्तःकरणधर्मभूतं सुखादुःखादिकं च साक्षिणः एव विषयः नान्तःकरणवृत्तेः, नापि इन्द्रियाणाम्। अन्तःकरणवृत्तेः साक्षिविषयत्वात् सा स्वयमपि साक्षी चैतन्यालोकेन आलोकिता सत्येव प्रकाशते। अतः अन्तःकरणवृत्ते भासकः अपि साक्षी इति अभ्युपगन्तव्यः।

कस्यापि जीवस्य 'अहं न वा' अहं प्राणिमि न वा' इत्यादिकः संशयः नोदेति। अतः जीवेषु अहंत्वस्य सदा प्रकाशमानत्वं स्वीकरणीयम्। अहंत्वस्य जडत्वात् अहंत्वप्रकाशस्य उपपादनार्थं साक्षी स्वीकरणीयः। ज्ञानेच्छादीनां प्रत्यक्षादिप्रमाणगम्यत्वम् नास्ति। मानसप्रत्यक्षेणापि ज्ञानस्य ज्ञानं न सम्भवम्। मनसः इन्द्रियादिवत् अप्रकाशमानत्वात्। अन्यथा मनसः इन्द्रियाणां च आत्मत्वप्रसक्तिः स्यात्। अतः ज्ञानादिविषयग्रहणान्यथानुपपत्त्या साक्षी स्वीकरणीयः।

5-2-2 साक्षिणः जीवात् भिन्नत्वाभिन्नत्वविमर्शः

साक्षी जीवात् भिन्नः । जीवस्य उदासीनत्वाभावात् । जीवस्य साक्षित्वाभावः विभिन्नैः आचार्यैः सुतरां प्रतिपादितः । तद्यथा -

(अ) पंचदश्याम् - यः साक्षी जीवाद्भेदेन दर्शितः ' इति ।

(ब) अद्वैतसिद्धौ - 'जीवात् विवेचितोऽयं साक्षी न ब्रह्मकोटिरपि किन्तु अस्पृष्टजीवेश्वरविभागं चैतन्यम्'' ।

केचित् वेदान्तिनः जीवकोटौ साक्षिणः अन्तर्भावः युक्तः इति कथयन्ति । तेषां कथनमिदमस्ति यत् अध्यासेन एकस्य वस्तुनः धर्मः अन्यस्मिन् संक्रमते । यथा 'इदं रजतमिति' भ्रमज्ञाने शुक्तिगतः इदन्ताख्यः धर्मः रजते अवभासते । तथैव जीवाभिन्नस्य जीवाधिष्ठानस्य परमेश्वरस्य साक्षित्वमपि जीवे प्रतिभासते । एवं प्रकारेण केचन वेदान्तिनः सुखादुःखाज्ञानादीनां साक्षात् द्रष्टुः अविद्योपाधिकस्य जीवस्य एव साक्षित्वम् प्रतिपादयन्ति ।

कर्तृ-भोक्तृत्वस्य जीवस्य उदासीनसाक्षित्वं कथं संभवति? अस्मिन् विषये एतत् कथ्यते यत् जीवः स्वरूपतः असंगः, उदासीनश्च वर्तते । जीवस्य कर्तृत्व-भोक्तृत्वादिकं अन्तःकरणजीवचैतन्ययोः तादात्म्याध्यासेन एव जीवे आरोप्यते । आरोपः मिथ्या, अतः जीवस्य कर्तृत्व-भोक्तृत्वादिकमपि मिथ्या । अतः जीवस्य असंगत्वं उदासीनत्वं च युक्तम् । तथात्वे च तस्य साक्षित्वं सत्यम् । अस्य मतस्योल्लेखः अप्पय्यदीक्षितेन सिद्धान्तलेशसंग्रहे एवं कृतः- 'केचित्तु अविद्योपाधिको जीवः एव साक्षात् द्रष्टृत्वात् साक्षी लोकेऽपि हि अकर्तृत्वे सति द्रष्टृत्वं साक्षित्वं प्रसिद्धम्' । तच्च असंगोदासीनप्रकाशरूपे जीव एव साक्षात् सम्भवति । जीवस्य अन्तःकरणतादात्म्यापत्त्या कर्तृत्वाद्यारोपभाक्त्वेऽपि स्वयम् उदासीनत्वात्' ।[93]

---

93- सि० ले० सं० पृ० 249

केचित् वेदान्तिनः अन्तःकरणोपाधिकस्य जीवस्य साक्षित्वं स्वीकुर्वन्ति नाविद्योपहितस्य जीवस्य । तेषाम् आशयः अयमस्ति यत् एकस्याम् सर्वगतायाम् अविद्यायाम् उपहितस्य चैतन्यस्य साक्षित्वे स्वीकृते सति सर्वव्यापिन्या अविद्यया सह सर्वेषाम् अन्तःकरणानां सम्बन्धात् एकपुरुषगतसुखदुःखादीनां पुरुषान्तरेण उपलब्धिः प्रसज्येत । अन्तःकरणोपहितस्य जीवस्य साक्षित्वे तु सुखदुःखादीनामुपलब्धिः पुरुषान्तरे न प्रसज्यते । यथोक्तं सिद्धान्तलेशसंग्रहे - 'तस्मात् अन्तःकरणोपधानेन जीवः साक्षी । तथा च प्रतिपुरुषं साक्षिभेदात् पुरुषान्तःकरणादेः पुरुषान्तरसाक्षिसंसर्गीत् वा तदयोग्यत्वात् वा अप्रकाशः उपपद्यते ।[94]

अत्र एषा शंका उदेति यत् अन्तःकरणोपहितस्य चैतन्यस्य प्रमातृत्वात् प्रमातुश्च उदासीनत्वाभावात् कथं तस्य साक्षित्वम् । एवमेव सुषुप्तौ प्रमात्रभावेऽपि साक्षिसत्त्वेन तयोर्भेदश्च अस्ति । अतः जीवस्य साक्षित्वम् कथम् स्वीक्रियेत? अस्मिन् विषये एतदुच्यते यत् अन्तःकरणस्य विशेषणत्वे चैतन्यस्य प्रमातृत्वं, तथा अन्तःकरणस्य उपाधित्वे चैतन्यस्य साक्षित्वम् आपन्नम् । यथोक्तं सिद्धान्तलेशसंग्रहे- 'विशेषणोपाधयोर्भेदस्य सिद्धान्तसम्मतत्वेन अन्तःकरणविशिष्टः प्रमाता तदुपहितः साक्षीति भेदोपपत्तेरित्याहुः ।

## 5-2-3 साक्षिणः-ईश्वरादिभ्यो भिन्नत्वविमर्शः

साक्षी ईश्वरात् भिन्नः अस्ति । यतः सृष्टिस्थितिलयकर्ता ईश्वरः उदासीनः इति कथयितुं न शक्यते । यथोक्तं सिद्धान्तलेशसंग्रहे - 'एवं जीवात् विवेचितोऽयं साक्षी न ब्रह्मकोटिरपि । किन्तु अस्पृष्टजीवेश्वरविभागं चैतन्यमित्युक्तं कूटस्थदीपे । अस्यायामर्थः यत् जगत्सृष्टिनियमनादिव्यापारकर्तुः ईश्वरस्य उदासीनत्वाभावात् जीवं प्रति नित्यापरोक्षसाक्षिभूतत्वासम्भावात् ईश्वरस्य साक्षित्वम् नास्ति । ईश्वरत्वजीवत्वादि धर्मरहितं जीवाधिष्ठानं शुद्धब्रह्मचैतन्यं एव साक्षिपदवीं लभते ।[95]

94- सि० ले० सं० पृ० 235

95- शांकरवेदान्ते तत्त्वमीमांसा, वे.सार पृ.66
पृ. 85

किन्तु केचिद् वेदान्तिनः इदं कथयन्ति यत् ईश्वरस्य असौ रूपभेदः जीवप्रवृत्ति-निवृत्योः अनुमन्ता सन् स्वयम् उदासीनः अस्ति । अतः सः साक्षी इत्युच्यते । यथोक्तं वेदान्तसारे - 'ईश्वरस्य समभेदोऽसौ कारणत्वादिवर्जितः ।''

एवमेव श्वेताश्वतरोपनिषद्यपि ईश्वरस्य साक्षित्वम् उपपादितम् । तथाहि- 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः, साक्षी चेता केवलो निर्गुणश्च ।''[96]

ईश्वरः एव साक्षी इत्यस्य मतस्य समर्थने इदमपि कथ्यते यद् सुषुप्तौ इन्द्रियाणां बुद्धिवृत्तेश्च उपरमे सति जीवगतव्यष्टि-अज्ञानस्य भासकः अयम् ईश्वर-साक्षी जीवेन सहाभिन्नः सन् प्राज्ञ इत्युच्यते । अतः उदासीनः परमेश्वरः एव साक्षी इति ईश्वरकोटौ साक्षिणः अन्तर्भावः जायते ।

## 5-2-4 साक्षिद्वैविध्यम्

केषांचिद् अद्वैतवेदान्तिनां मते साक्षी द्विविधो वर्तते । जीवसाक्षी-ईश्वरसाक्षी च ।

### (1) जीवसाक्षी

अन्तःकरणावच्छिन्नम् अन्तःकरणतादात्म्यापन्नं वा चैतन्यं जीवः । अज्ञान-तादात्म्यापन्नं चैतन्यं यथान्तःकरणेन तादात्म्यम् आपद्यते तथा तदन्तःकरणच्छुरितम् अन्तःकरणानुप्रविष्टं चैतन्यं जीव इति व्यपदिश्यते इति वाचस्पतिमिश्रमतम् ।

विवरणमते तु अविद्याप्रतिबिम्बितचैतन्यमेव जीवः । तथाहि विवरणे ब्रह्मैव अविद्याप्रतिबिम्बितम् इति वदामः । प्रतीयमानकर्तृत्वादिनिर्वाहाय यथान्तःकरणावच्छिन्नचैतन्यरूपः जीवः पृथक् अंगीकर्तव्यः तथा ज्ञानसुखादिविषयप्रकाशनिर्वाहाय सम्पन्नान्तःकरण जीवसाक्षी अपि ।

अत्रेयं शंका उदेति यद् 'एकमेव अन्तःकरणं, जीवचैतन्यं यथा व्यावर्तयति तथा साक्षिणमपि इति कथं जीवसाक्षिणोः भेदः ? ।

96- श्वे० उ० 4-5
97- वे० प० पृ० 72

अस्योत्तरम् इदमस्ति यत् अन्तःकरणम् साक्षिचैतन्यस्य आधिः। किन्तु जीवचैतन्यस्य विशेषणम्। अन्तःकरणोपहितं चैतन्यं साक्षी अन्तःकरणविशिष्टं चैतन्यं जीवः।

(उपाधेः लक्षणम्) यदवस्तु धर्मी वा स्वयं पृथगत्वेन वर्तमानं सत् स्वस्थानावस्थितं वस्त्वन्तरं ज्ञापयति स उपाधिः। यथोक्तं वेदान्तपरिभाषायाम् - 'उपाधिस्तु कार्यानन्वयी व्यावर्त्तको वर्तमानश्च' इति[98]। (अस्य विपरीतं विशेषणं तदभवति यत् कार्यान्वयी व्यावर्तकं वर्तमानं च) अन्तःकरणसम्वलितं चैतन्यं कर्त्ता, भोक्ता संसारी, जीवः इत्युच्यते। अत एवान्तःकरणम् केवलम् जीवचैतन्यस्य विशेषणम्। विशेषणं तु विशिष्टम् अनुगच्छति किन्तु उपाधिः उपहितं नानुगच्छति। जीवे अन्तःकरणस्य प्रवेशोऽस्ति साक्षिणि तु तस्य प्रवेशो नास्ति। जीवः इति अन्तःकरणसहितस्य चैतन्यस्य संज्ञा। साक्षीति केवलं चैतन्यस्य संज्ञा। एवंप्रकारेण साक्षिणि उदासीनत्वात् रागद्वेषादिकं न भवति। किन्तु जीवे भवति। अतः एकमेव चैतन्यम् अन्तःकरणसहितं सत् जीवेत्युच्यते। किन्तु अन्तःकरणाव्यावृतं सत् साक्षीत्युच्यते।

श्रुतिरपि कर्मफलभोक्तुः जीवात् पृथग् भूतः साक्षी अस्तीति प्रमाणयति। तथाहि 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति'। साक्षिचैतन्यं सुषुप्त्यवस्थायाम् निर्विषयं सत् स्वयं भासते। किन्तु जाग्रतावस्थायां जीवस्य अन्तःकरणेन्द्रियादिकम् भासयति। यथोक्तं पंचदश्याम् - '

''नाटयशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम्।
दीपयेदविशेषेण तदभावेऽपि दीप्यते''[99]।

विषयावभासकत्वं हि साक्षित्वम् नच अन्तःकरणस्य तत्युज्यते जडत्वात् विकारयुक्तत्वात्च। यथोक्तम् विवरणे- 'सर्वं वस्तु ज्ञाततया वा अज्ञाततया वा साक्षिचैतन्यस्य विषयः[100]। अन्तःकरणस्य जडतया विषयावभासकत्वायोगेन विषयभासचैतन्यो-

---

98- वे० प० पृ० 72
99- पंचदशी 10-11
100- विवरण पृ० 83

पाधित्वम् अयं च जीवसाक्षी प्रतिशरीरं नाना । यद्यपि साक्षिचैतन्यं स्वरूपेण एकम् तथापि भेदकस्य तदुपाधिभूतान्तःकरणस्य प्रतिशरीरं भेदात् तदुपधेयसाक्षिचैतन्यस्यापि भेदः ।

(2) ईश्वरसाक्षी

भामतीप्रस्थाने मायावच्छिन्नं चैतन्यम् ईश्वरः इत्युच्यते । किन्तु विवरणप्रस्थानानुसारं मायोपहितं चैतन्यम् ईश्वरः इति प्रतिपाद्यते ।

विवरणप्रस्थाने माया-अविद्ययोः भेदः नास्ति । अतः मायोपहितम् इत्यस्यार्थः अविद्योपहितमित्यपि कर्तुं शक्यते ।

भामतीप्रस्थानेतु मायाविद्ययोः भेदः अस्ति । अतः मायोपहितम् इत्यस्यार्थः विशुद्धसत्वप्रधानोपहितम् इत्यैव कर्तुं वरम् ।

मायाविद्ययोर्भेदः पंचदश्यामपि स्पष्टरूपेण निरूपितः । तद्यथा -
तमोरजस्त्वगुणा द्विविधाचसा । सत्वशुद्धाविशुद्धिभ्यां मायाऽविद्या च ते मते ।

एवं प्रकारेण ईश्वरसाक्षिचैतन्यं एकम् तदुपाधिभूतायाः मायायाः एकत्वात् । ईश्वरचैतन्यम् अनादि ईश्वरसाक्ष्युपाधिः माया अपि अनादिः । मायायाः विशेषणत्वे ईश्वरत्वं मायायाः उपाधित्वे साक्षित्वम्इति ईश्वरत्वसाक्षित्वयोर्भेदः ।

अत्र एषा शंका उदेति यत् विशेषणत्वेन उपाधित्वेन च धर्मभेदात् धर्मिणोः ईश्वरसाक्षिणोरपि भेदः प्रसज्यतेऽस्याः शंकायाः समाधानमिदमस्ति यत् धर्मभेदो धर्मिभेदे न हेतुः । यथा एक एव देवदत्तः पाचकत्वपाठकत्वप्रभृतीनां धर्माणां भेदेऽपि देवदत्तत्वं न जहाति तथैव मायात्वेन उपाधित्वेन च धर्मभेदेऽपि धर्मिणः चैतन्यस्य ईश्वरत्व-साक्षित्वरूपेण धर्मभेदेऽपि एकत्वं न जहाति । विरुद्धधर्मैः एव धर्मिभेदक. ननु परस्परः अविरुद्धः ।

5-2-1(4) असंगस्य आत्मनः साक्षित्वविमर्शः

ईश्वरतत्वस्य जीवतत्वस्य च मध्ये चैतन्यस्य एका विशिष्टा अवस्था वर्त्तते या एकतः ब्रह्म जीवनिष्क्रिया असंगा च वर्त्तते । अपरतश्च सततं जीवस्य सर्वाणि कार्याणि अवभासयति । एवं प्रकारेण साक्षित्वेन अभिधीयमाना सा अवस्था ईश्वरतत्वस्यैव एकं विशिष्टा रूपं वर्त्तते । ईश्वरतत्वस्य द्वौ प्रमुखौ पक्षौ स्तः । जगतः सृष्टिः

तथा कर्मफलाविधानम् । कर्मफलविद्धानाय एव ईश्वरः साक्षित्वावस्थां धारयति । शारीरक भाष्यस्य आरम्भे भगवता शंकराचार्येण प्रत्यगात्मनि साक्षित्वं निर्दिष्टम् । तद्यथा - अहं प्रत्ययिनं अशेष स्वप्रचार साक्षिणि प्रत्यगात्मनि अध्यस्य तं च प्रत्यगात्मानम् सर्वसाक्षिणं तद्विपर्ययेण अन्तः करणादिषु अध्यस्यति । [101] रत्नप्रभाकारेण गोविन्दानन्देन अस्यार्थः एवं प्रकारेण कृतः ''यस्य प्रत्यक्त्वं ज्ञातं नास्ति स आत्मा साक्षी'' तद्यथा 'अज्ञानप्रत्यक्त्वे साक्षिणि' [102] ।

बृहदारण्यकभाष्यवार्तिके सुरेश्वराचार्येण साक्षिणः स्वरूपं एवं निर्दिष्टम् । (1) कूटस्थः असंगः आत्मा अज्ञानोपहितः सन् साक्षिपादवाच्यः । यद्यपि कूटस्थे [103] परब्रह्मणि साक्षित्वमसंगतम् । यतः परब्रह्मणः अद्वितीयत्वं स्वतः सिद्धम् । साक्षित्वं च द्वितीयसंगतिम् अपेक्षते । तथापि अज्ञानोपहिते आत्मनि साक्षित्वं युक्तम् ।

संसारी आत्मा जीवः अपि कर्तृत्व भोक्तृत्वात् साक्षी नास्ति । अतः परमतत्वम् अज्ञानस्थिताभासद्वारा द्रष्टा दर्शनदृश्यादीनाम् साक्षी भवति । परमतत्वस्य ~~साक्षी~~ अर्थैः सह ~~अज्ञानं विना~~ सम्बन्धः नास्ति । अतः कूटस्थः असंगः आत्मा अज्ञानोपहितरूपेण साक्षीपदवाच्यः [104] ।

'' मोहतत्कार्यनीडस्थ कूटस्थाभासमकम् ।
ज्ञानं तद्विना भूत परमसाक्षीति भण्यते ।।
कूटस्थस्य न साक्षित्वं द्वितीयासंगतेर्भवेत् ।
नाशिनोऽपि न साक्षित्वं नाशेनाव्यतिरेकतः ।।
अज्ञानमात्रहेतौ तु सर्वमेतत् समंजसम् ।
कर्तृत्वादन्यथाज्ञानहेतुत्वादात्मनिरूपिणः ।।
प्रत्यगज्ञस्य स्थास्नुत्वाज्ज्ञानुमहिम चान्वयात् । कूटस्थस्यापि साक्षित्वमागमापायिनं प्रति ।। ''

---

101- साक्षाद्द्रष्टरि संज्ञायां 5-2-91
102- ब्र० शा० भाग पृ० 17
103- रत्नप्रभा पृ० 54
104- बृ० भा० वा० 1-4-1 पृ० 372-380 ।।

साक्षी जीवादपि विलक्षणः अस्ति । जीवः जडमिश्रं चैतन्यम् । तस्य विपरीतं साक्षी चिन्मात्रस्वरूपः कूटस्थश्च ।

साक्षी स्वस्य सिद्ध्यर्थम् अन्यं साक्षिणं नापेक्षते । तस्य साक्षित्वं स्वतः सिद्धम् । चिदात्मा यथा सर्वेषां वस्तूनां प्रकाशकः तथैव तेषां द्रष्टापि वर्त्तते । लौकिकं ज्ञानं प्रमेय प्रमातृ प्रमाणान्यपि विषयत्वेनैव आश्रयति । किन्तु साक्षी ज्ञानस्य विषयः अपि नास्ति । प्रमाणानि पराक् प्रवणानि, न तु प्रत्यक् प्रवणानि । अतः साक्षी प्रमातृत्वाद्विलक्षणः । तद्यथा -'' साक्षि साक्ष्याभिसम्बन्धः प्रमात्रादौ यथा तथा । साक्षि वस्तुनि नैव स्याद केवलानुभवात्मनि ।। ''

(2) असंगकुचिन्मात्रचित्दृष्टः प्राक् स्वप्नप्रबोधक् ।

तथा प्रफुल्लबोधाब्जः प्राग्वद् स्वप्नबोधयोः ।।''[105]

साक्षि जाग्रत्-स्वप्न-सुषुप्ति अवस्थासु विद्यमानः अस्ति । जागरणे प्रमातृ प्रमाणादीनाम् अवभासकत्वेन स अनुभवगम्यः । सुषुप्तौ तस्य अस्तित्वम् अस्ति किन्तु विषयाणाम् अभावात् स तदानीं नानुभवगोचरः । संक्षेपशारीरके साक्षिणः स्वरूपम् एवमुक्तम् -

'तमसा विनिर्मितमिदं सकलं । चतुरः स पश्यति परः पुरुषः ।
अविकारिबोधवपुरद्वयकः । कारणैर्विना सकलसाक्षितया ।।[106]

संक्षेपशारीरके एतदपि उक्तं यत् परमः पुरुषः शुद्धं चैतन्यं वा ब्रह्म स्वाश्रतया मायया उपहितः सन् स्वस्मिन्नेव कल्पितम् निखिलं प्रपन्नं प्रपंचकारणम् अविद्यावृत्तौ स्वीयेन आभासेन प्रकाशयन् साक्षीत्युच्यते । तद्यथा -

'निजमायया परिगतः पुरुषः परतन्त्रया तु निजया प्रभया ।
परिजल्पितं सकलमाकलयन् स हि साक्षितामुपगतो भवति ।।''[107]

---

105- बृ० सं० वा० ।5।
106- सं० शा०- 2/29
107- सं० शा० 2/30

चित्सुखाचार्यः 'तत्वप्रदीपिकायां' एवं कथयति यत् चित्सु आत्मा एव साक्षिपदार्थानां सम्बन्धेन साक्षीत्युच्यते । असौ साक्षी अविद्याविशिष्टः नास्ति । तद्यथा - मानसप्रत्यक्षवेदयत्वे इच्छादेः कर्मकर्तृभावस्य एव साधकत्वात् । न च स्वरूपमात्रेण ग्राहकस्य विशिष्टरूपेण ग्राहकत्वे अप्यविरोधः केवलस्य देवदत्तस्य गन्तृत्वं कुण्डलविशिष्टस्य तु गन्तव्यत्वमिति तत्रापि विरोधाभावप्रसंगात् ।[108] चित्सुखाः एवमपि कथयति यत् सर्वेषां प्रत्यग्भूतं विशुद्धं ब्रह्म एव जीवतादात्म्यापन्नत्वेन साक्षीत्युच्यते । साक्षात् चिन्मात्रत्वे सत्यपि साक्षिभावः जीवभावे अन्तर्भूतः । तद्यथा - 'तस्मात् सर्वप्रत्यग्भूतं विशुद्धं ब्रह्ममात्रं जीवाभेदेन साक्षीति प्रतिपादयते ।'[109]

विद्यारण्यः पंचदश्यां साक्षिस्वरूपं एवं प्रतिपादयति - 'कर्तारं च क्रिया तद्वद् व्यावृत्तविषयानपि । स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ।।

'नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ।
दीपयेदविशेषेण तदभावेऽपि दीप्यते ।।
अहंकारं धियं साक्षी विषयानपि भासयेत् ।
अहंकाराद्यभावेऽपि स्वयं भात्येव पूर्ववत् ।।''[110]

अस्मिन् विषये एषा शंका उदेति यत् अविद्योपहितरूपेण यदि साक्षी एकः अस्ति तर्हि एकस्य पुरुषस्य इच्छादीनां प्रत्यक्षः अन्येन पुरुषेण ~~न कृत~~ कथं न क्रियते? । अस्य उत्तरमिदमस्ति यत् अन्तःकरणोपहितं जीवचैतन्यमेव साक्षी । एवं च अन्तःकरणस्य प्रयोजकोपाधित्वे स्वीक्रियते सति साक्षी अपि प्रतिजीवं भिद्यते । धर्मराजाध्वरीन्द्रः अपि प्रतिजीवं साक्षिणः पृथक्त्वम् अंगीकरोति । तद्यथा -(1) 'सत्यं जीव एव साक्षी, न तु सर्वगतेनाविद्योपहितेन रूपेण । पुरुषान्तःकरणादीनामपि पुरुषान्तरं प्रति स्वान्तःकरणभासकसाक्षिसंसर्गविशेषेण प्रत्यक्षत्वापत्तेः । न चान्तःकरणभेदेन प्रमातृभेदात् तदनापत्तिः, साक्षिभास्येऽन्तःकरणादौ सर्वसाक्ष्यभेदे सति प्रमातृभेदस्याप्रयोजकत्वात् । तस्मादन्तःकरणोपधानेन जीवः साक्षी ।[111]

---

108- तत्वप्रदीपिका पृ0 588
109- तत्वप्रदीपिका पृ0 589
110- प0 द0 10।-12।।
111- सि0 ले0 सं0 पृ0 190

धर्मराजाध्वरीन्द्रः अपि प्रतिजीवं साक्षिणः पृथक्त्वम् अंगीकरोति । तद्यथा- 'तत्र जीवो नाम अन्तःकरणावच्छिन्नचैतन्यम्, तत्साक्षी तु अन्तःकरणोपहितचैतन्यम्, अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः । विशेषणं च कार्यान्वयि वर्तमानं व्यावर्तकं उपाधिश्च कार्यानन्वयी व्यावर्तको वर्तमानश्च । रूपविशिष्टो घटो नित्य इत्यत्र रूपं विशेषणम्, कर्णशुष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशुष्कुल्युपाधिः ।''[112]

5-3-0 आत्मनः स्वरूपम्

देहात्मवादः - आत्मनः स्वरूपस्य विषये दार्शनिकानां मतभेदाः सन्ति । चार्वाकानां मतानुसारं स्थूलशरीरम् एवं आत्मा[113] । अहं प्रत्ययस्य आलम्बनत्वात् पुत्रवित्तादिभ्यः अपि प्रियतरत्वात् । अस्य मतस्य सन्दर्भेऽपि उपनिषद् श्रुतयः उपलभ्यन्ते । तद्यथा तैत्तिरीयोपनिषदि 'स वा एष पुरुषोऽन्नरसमयः'' ब्रहदारण्यकोपनिषदि- 'तदेतत्प्रेयः पुत्रात्, प्रेयो वित्तात् प्रेयोऽन्यस्मात्, सर्वस्मात् अन्तरतरम् यदयमात्मा[114] ।

इन्द्रियात्मवादः - केचित् चार्वाकाः इन्द्रियाण्येवात्मा इति वदन्ति । अस्मिन् सन्दर्भेऽपि श्रुतयः उपलभ्यन्ते । तद्यथा - 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवान्को न श्रेष्ठ' इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्टतरमिव दृश्येत सः वः श्रेष्ठ इति ।[115]

इन्द्रियाणाम् अभावे शरीरक्रियायाः अभावात् इन्द्रियाणाम् उपजीव्यत्वेन आत्मत्वं निगद्यते ।

प्राणात्मवादः - केचित् चार्वाकाः प्राणः आत्मा इति वदन्ति । अस्मिन् सन्दर्भे श्रुतयः अपि उपलभ्यन्ते । तद्यथा तैत्तिरीयोपनिषदितस्माद्वा एतस्मादान्नरसमयात् अन्योऽन्तरात्मा प्राणमय'[116] इति । मरणसमये अन्नाद्यभावेन प्राणस्य कृशीभावे

---

112- वे० प० पृ० 97
113- शांकरवेदान्ते तत्वमीमांसा
114- तै० उ० 2-1-1
115- बृ० 4-1-8
116- तै० उ० 2-2-1

विद्यमानानामपि इन्द्रियाणां विषयेषु प्रवृत्तिर्नजायते । अशनायापिपासयोः प्राणधर्मत्वं प्रसिद्धम् । तादृक् धर्मकश्च प्राणः अहं प्रत्ययविषयः इति प्राणः आत्मा इत्यर्थः ।

मनसात्मवादः :- केचित् अन्ये चार्वाकाः मन आत्मा इति कथयन्ति । अस्मिन् विषयेऽपि श्रुतयः उपलभ्यन्ते । तद्यथा -'तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तरात्मा मनोमयः''[17] प्राणोपजीव्यत्वात् अहं विकल्पवान् अहं संकल्पवान् इत्यादि अनुभवाच्च मनसः आत्मत्वम् उच्यते । योगाचारबौद्धानां मतानुसारं क्षणिकविज्ञानम् एव आत्मा । बुद्धिरेव क्षणिकविज्ञानम् । मनोमयात् आभ्यन्तरः क्षणिकविज्ञानमयः आत्मा ।'अन्योऽन्तर आत्मा विज्ञानमयः' इति ।[18]

माध्यमिकबौद्धाः ' शून्यमात्मा' इति वदन्ति । अत्रापि इयं श्रुतिः उपलभ्यते । तद्यथा-'असदेवेदमग्रमासीत्'[19] । अर्थात् सृष्टेः प्राक् इदं नामरूपात्मकं जगत् शून्यमासीत् । अतः माध्यमिकबौद्धाः शून्यस्यैव आत्मस्थानीयत्वं कल्पयन्ति ।

5-3- । आत्मनश्चिद्रूपत्वम्

नैयायिकाः आत्मनः ज्ञानाश्रयत्वं मन्वानाअपि आत्मनः जडत्वं प्रतिपादयन्ति । तार्किकानां मते आत्मा ज्ञानस्याश्रयः यथाऽहं जानामि तथा ज्ञानस्य विषयः (आत्मानं जनामि) अपि भवितुमर्हति । एतन्मतमपि न युक्तम् । नैयायिकानुसारं आत्मनः जडत्वात्, तस्याचेतनत्वं परः प्रकाशयम् वा ।

प्राभाकरमीमांसकानां मतेऽपि संवित् स्वयंप्रकाशा । आत्मा च तदाश्रयत्वेन भासते नतु विषयत्वेन ।

भाट्टमीमांसकानां मते अज्ञानोपहितम् अज्ञानावच्छिन्नं वा चैतन्यम् आत्मा । भाट्टैः आत्मनः द्रव्यबोधात्मकत्वं प्रतिपादयते । सुषुप्तौ आत्मनः प्रकाशत्वं स्वीकार्यम् । अन्यथा सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्'इति परामर्शो न स्यात् ।

17- तै० उ० 2-3- ।
18- तै० उ० 2-4- ।
19- छा० 3-19- ।

आत्मनः जडत्वमपि स्वीकर्तव्यम् एव । अन्यथा सुषुप्तावपि दर्शनश्रवणादिकम् उदीयात् ।

अद्वैतवेदान्तिनां मतानुसारं जीवब्रह्मणोः ऐक्यमस्ति । आत्मा सच्चिदानन्द-रूपः, नित्यः, शाश्वतः, कूटस्थः (सर्वविकारवर्जितः) नित्यमुक्तः (ज्ञानस्वरूपत्वात्) विभुः (देशकालादिपरिच्छेदशून्यः) सर्वभूतेषु एक । तद्यथा- एको देवः सर्व-भूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।[120] जीवब्रहमणोः भेदस्तु मिथ्याकल्पितः न पारमार्थिकः[121] । ब्रहमणः निर्गुणत्वात् आत्माऽपि स्वरूपतः निर्गुणः सुखादुःखादिरहितश्च वर्तते । तथापि उपाधियोगात् सगुणः इव प्रतीयते । आत्मनः कर्तृत्वभोक्तृत्वमपि नास्ति, तथापि मनः प्रभृतीनां कर्तृत्वभोक्तृत्वादिकम् आत्मनि आरोप्य आत्मा कर्ता भोक्ता इत्यारोप्यते । अतः नित्यस्य आत्मनः कर्तृत्वभोक्तृत्वादिकं आध्यासिकं नतु पार-मार्थिकम् । यथा जपाकुसुमसन्निधिवशात् स्फटिके लौहित्यं प्रतीयते तद्वत् अन्तः करणसन्निधिवशात् आत्मनि कर्तृत्वम् अध्यस्यते ।

आत्मा अविकारी वर्तते । अत एव स नित्यशुद्धः असंगश्च उच्यते । तद्यथा 'असंगो ह्ययं पुरुषः' इति । बुद्धेरपि कर्तृत्वं न युज्यते । करणत्वेन क्लृप्तशक्तिकायाः बुद्धेःकर्मशक्ति, तथा न युज्यते, यथा करणत्वेन प्रयुक्ते कुठारादौ न भवति ।

जीवब्रहमणोः त्रैकालिकैक्यत्वात् जीवस्य नित्यत्वम् । सृष्टेः प्राक् एकमेवाद्वितीयं ब्रह्म' इति ब्रहमणः अद्वयत्वं निरूप्यते । किन्तु सृष्टयनन्तरं जीवस्योत्पत्तिः कथं न स्वीक्रियते? श्रुतावपि जीवस्य उत्पत्तिः श्रूयते । तद्यथा- 'स यथोर्णनाभिस्तन्तु-नोच्चरेत्, यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः, सर्वे लोकाः सर्वे देवाः, सर्वाणि भूतानि व्युच्चरन्ति, तस्योपनिषत् सत्यस्य, सत्यमिति; प्राणा वै सत्यम् तेषामेष सत्यम् ।।''[122]

---

120- श्वे० 6-11
121- भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः, एको देव सर्व-भूतेषु गूढः सर्वव्यापी, सर्वभूतान्तरात्मा इत्यादि श्रुतिभ्यः' (ब्र०सू० शा०भा० 1-4-10)
122- बृ० उ० 2-1-20 ( वोल्यूम 3- पृ० 127)

अस्याः शंकायाः समाधानमिदमस्ति यत् जीवस्य नित्यत्वं ब्रह्मैकत्वं चापि श्रुतिषु दृश्यते । 'यथा नित्यो नित्यानाम्'[123] 'स वा एष महानजः आत्माऽजरोमरोऽमृतोऽभयो ब्रह्म'[124] ' न जायते म्रियते वा विपश्चित्'[125] । एवमेव विस्फुलिंगानां दृष्टान्तेन आत्मनः उत्पत्तिविषये याः श्रुतयः उपलभ्यन्ते ताः सान्ति जीवस्य औपाधिकजन्माभिप्रायात् । अतः तासां श्रुतीनाम् अद्वयश्रुतिभिः सह विरोधः नास्ति ।

आत्मा चिद्रूपः अर्थात् चैतन्यम् एव अस्य स्वरूपमस्ति । चिद्रूपं ब्रह्म उपाधिसम्पर्कात् जीवभावं आप्नोति । अत एव आत्मा नित्यः, चैतन्यश्च । सुषुप्त्यादावपि चैतन्यस्य साक्षित्वेन अवस्थानात् जीवः अचिद्रूपः नास्ति । एवंप्रकारेण सुषुप्तावपि चैतन्यस्य सत्वात् आत्मा चिद्रूपः ।

अत्र एषा शंका उदेति यत् आत्मनः अनुभवरूपत्वे 'अहम् अनुभवामिति' अनुभवाश्रयं विषयीकुर्वतः प्रत्ययस्य निर्विषयत्वापत्तिः स्यात् । अनुभवस्य अनुभवम् प्रति आधारत्वायोगात् । अस्याः शंकायाः समाधानमिदमस्ति यत् यद्यपि अनुभवरूपो जीवः नानुभवाश्रयः एकस्य एवाधाराधेयत्वायोगात् । तथापि अहम् अनुभवामीति अनुभवाश्रयत्वं जीवस्य नासंगतम् । अनुभवामिति इत्यनुभवस्य वृत्तिप्रतिबिम्बितचैतन्यात्मकत्वात् । तस्य वृत्तिप्रतिबिम्बितचैतन्यस्य चिद्रूपानुभवभिन्नत्वात् बिम्बप्रतिबिम्बयोः अभेदेऽपि उपाधिसत्वदशायाम् तयोर्भेदात् । अस्मिन् विषये विवरणकारस्य मतमपि उल्लेखनीयं वर्तते - 'यथा अयो दहतीत्यत्र दग्धृत्वायसोः एकाग्निसम्बन्धात् परस्परसम्बन्धावभासः, तथा अनुभवान्तःकरणयोः एकात्मसम्बन्धात् तथा अवभासः ।

5-3-2 आत्मनो विभुत्वम्

बालाग्रशतभागस्य शतधाकल्पितस्य च भागो जीवः सविज्ञेयः इत्यादि[126] श्रुतिषु जीवस्य अणुत्वम् निर्दिष्टम् । अतः जीवस्य आत्मनः अभेदत्वात् आत्मनः अणुपरिमाणत्वं प्रसक्तम् । तन्न । श्रुतीनाम् अन्यथाऽपि उपलभ्यमानत्वात् । तद्यथा-

123- श्वे० 6-13
124- बृ० 4-4-25
125- क० उ० 1-2-18
126- श्वे० उ० 6-8

'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः'[127] अस्यायमाशयः यत् आत्मनः स्वाभाविकं विभुत्वं वर्तते किन्तु अन्तःकरणस्य सूक्ष्मतया तदुपाधिकस्य आत्मनः परमाणुत्व श्रुतिः । अतः आत्मनः सूक्ष्मत्वम् औपाधिकं वर्त्तते । नतु स्वाभाविकम् ।

अद्वैतवेदान्तिनां मते जीवः ब्रह्मणः अभिन्नः । ब्रह्म आकाशवत् विभुश्च । अतः जीवात्माऽपि विभुः । यदि जैनमतानुसारेण आत्मनः देह परिमाणवत्वं स्वीक्रियते तर्हि आत्मनः अनित्यत्वप्रसक्ति संजायेत । यतः देहपरिमाणवत्वे सति घटादिवत् आत्मनोऽपि विनाशप्रसंगः स्यात् ।

आत्मनः देहपरिमाणत्वे स्वीकृते सति मनुष्यशरीरपरिमाणः आत्मा नानायोनिषु विभिन्नानि शरीराणि कथं धारयेत्? शिशुदेहपरिमाणेनात्मना यौवनदेहस्य व्याप्तिः कथं सम्भवेत्? अस्मिन् विषये जैनानाम् एतत् कथनं समीचीनं नास्ति यत् प्रदीपवत् आधारानुसारम् आत्मनः संकोचविकासधर्मशालित्वं संभवतीति । यतः एवं स्वीकृते सति देहानुसारम् आत्मनः चैतन्यमान्द्यं चैतन्यप्राकाश्यं वा प्रसज्येत । देहपरिमाणत्वे स्वीकृते सति तस्य अवयवसमुदायोऽपि स्वीकरणीयः । तन्न युज्यते । यतः 'आत्मा अवयवैः आरब्धः' इत्येवं स्वीकृते सति आत्मनः देहवत् अनित्यत्वं प्रसज्येत । एतत् स्वीक्रियते यत् आत्मा अवयवसमुदायः तर्हि एकस्यैव आत्मनः प्रत्यवयवं चैतन्ये स्वीकृते सति चैतन्यस्य नानात्वं प्रसज्येत । समुदायचैतन्यपक्षेऽपि एकस्यैव आत्मनः देहान्तर ग्रहणे देहभेदत्वात् अवयवभेदोऽपि स्वीकरणीयः तथा सति आत्म' भेदः अपि प्रसज्येत । एवं च कृतनाशाकृताभ्यागमप्रसंगोऽपि आपतेत ।

जैनाः अपि एवं स्वीकुर्वन्ति यत् मुक्तौ आत्मा स्वाभाविकावस्थायां नित्यपरिमाणः अस्ति । यदि मुक्तिदशायाम् आत्मनः अविकारित्वं स्वीक्रियते तर्हि संसारदशायामपि तस्य नित्यपरिमाणत्वम् अर्थात् अविकारित्वम् एव स्वीकरणीयं ननु देहपरिमाणत्वम् मध्यमपरिमाणत्वं वा ।[128]

आचार्य वाचस्पतिमिश्रमहोदयस्य मते शरीरपरिमाणत्वे ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम् तथा चानित्यत्वम् प्रसज्येत । मनुष्यकायपरिमाणो हि जीवो न ह्यस्ति-

---

127- श्वे० ~~3-6,8~~ 5.8
128- शांकरवेदान्ते तत्वमीमांसा पृ० 107

कार्यं कृत्स्नं व्याप्तुमर्हत्यल्पत्वादित्यात्मनः कृत्स्नशरीरव्यापित्वादकात्स्र्न्यम्, तथा च शरीरपरिमाणत्वमिति[129]।

वैशेषिकाणां तथा वैष्णववेदान्तिनां मतानुसारम् आत्मा अणुपरिमाणः। अत्र श्रुतयः तथाहि- 'बालाग्रशतभागस्य भागो जीवः सविज्ञेयः[130]। जीवात्मनः देहादुत्क्रान्तिः, लोकान्तरगति, इहलोके आगतिः, अपि आत्मनः अणुत्वं संकेतयति। तत्र च श्रुतिः- 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेवते सर्वे गच्छन्ति[131]। तस्माल्लोकात् पुनरेति तस्मै लोकाय कर्मणे[132]' जीवो न व्यापकः उत्क्रान्तिमत्वात्, गतिमत्वात्, क्रियावत्वात् खगशरीरवत्[133]। परमाणुरेवायं जीवः न विभुः कुतः उत्क्रान्त्यादिभ्यः। नच सर्वगतस्य तस्य ताः सम्भवेयुः[134]।

अस्मिन् विषये अद्वैतवेदान्तिभिः यः सिद्धान्तपक्षः उपस्थाप्यते आत्मनः परमाणुत्वस्य खण्डनं च येन प्रकारेण क्रियते तस्य स्वरूपम् एवमस्ति।

आत्मनः अणुपरिमाणत्वे स्वीकृते सति तदीयधर्मस्य चैतन्यस्यापि सर्वशरीरे अनुपलब्धिर्भवेत्। किन्तु सर्वशरीरं व्याप्य चैतन्यस्योपलब्धिः भवति। अतः आत्मनः सर्वशरीरव्यापित्वं स्वीकरणीयं नतु अणुपरिमाणत्वम्। नच मध्यमपरिमाणत्वम्। यदि एतत् कथ्यते यत् यथा हरिचन्दनबिन्दुः देहैकदेशवृत्यपि सकलदेशव्यापिनम् आह्लादं जनयति तथैव आत्माऽपि देहैकदेशवर्ती सन्नपि सकलदेशवर्तिनीं वेदनाम् अनुभवति, तदपि न वरम्। यतः चन्दनबिन्दोः देहैकदेशावस्थानं प्रत्यक्षगम्यम् किन्तु आत्मनः देहैकदेशावस्थानं प्रत्यक्षगम्यत्वाभावात् सन्दिग्धम्। अपरं च सर्वशरीरस्य आत्मनः देहैकदेशावस्थानं प्रत्यक्षगम्यत्वाभावात् सन्दिग्धम्। अपरं च सर्वशरीरस्य प्रत्यक्षग्राह्यम्। अतः चैतन्यरूप गुणाधारस्य आत्मनोऽपि सर्वशरीरव्यापित्वं स्वतः सिद्धम्। श्रुतिषु यद्यपि आत्मनः अणुपरिमाणत्वम् अपि क्वचित् क्वचित् दृश्यते

---

129- भामती 2-2-34
130- श्वे० उ० 5-6
131- कौषितकी 1-2
132- बृ० उ० 6-4-6
133- अ०सि० पृ० 851
134- ब्र०सू० शा०भा० 2-3-19 (रत्नप्रभा)

तद्यथा -'स वा एष महानज आत्मा''[135] सत्यं ज्ञानमनन्तं ब्रह्म'[136] ''आकाशवद सर्वगतश्च नित्यः[137], नित्यं विभुं सर्वगतम्'[138] । तत्वमस्यादि महावाक्येभ्योऽपि जीवब्रह्मणोः तादात्म्यश्रवणात जीवस्य विभुत्वं सिद्ध्यति।

यदि एवमुच्यते यत श्रुतिष्वेव जीवस्य अणुपरिमाणत्वमपि निर्दिष्टम । अतः आत्मनः विभुत्वे स्वीकृते सति तादृशीनां श्रुतीनाम अप्रामाण्यं प्रसज्येत । अस्य समाधानमिदमस्ति यत एतादृशीषु श्रुतिषु बुद्धिरूपोपाधिकस्य जीवस्य एवाणुत्वम निर्दिष्टं नतु निरूपाधिकस्य आत्मनः । श्रुतिरेव अत्रापि प्रमाणम । तद्यथा- 'बुद्धेर्गुणेनात्मगुणेन आराग्रमात्राह्यवरोऽपि दृष्टः ।''[139]

श्रुतिषु निरूपितयोः आत्मनः अणुत्वविभुत्वयोर्मध्ये सामंजस्येन आत्मा अणुरूपः, विभुरूपश्च वर्तते इत्येवमपि न कर्तव्यम । अर्थात भूमारूपः ~~अत्र~~ आत्मा विश्वात्मा,अणुरूपः आत्मा,जीवात्मा इत्येवं प्रकारेणानि आत्मनः अणुत्वं न स्वीकरणीयम् । यतः 'तत्वमस्यादि' वाक्यानि जीवब्रह्मणोः अभिन्नत्वं प्रतिपादयन्ति । अतः ~~आत्म~~ आत्मा नाणुपरिमाणः, अपितु विभुपरिणामः एव वर्तते ।

5-3- । आत्मनाः चिद्रूपत्वम

योऽयं विज्ञानमयः''[140] 'प्रज्ञानघान एव''[141] इत्यादि श्रुतयः आत्मनः चिद्रूपत्वं निरूपयन्ति । चिद्रूपस्य ब्रह्मणः जीवस्यापि नित्यत्वात आत्मा अपि चिद्रूपः । अत्र च सूत्रम 'ज्ञोऽत एव'[142] एवं प्रकारेण ब्रह्म एवाविकृतमपि उपाधिसम्पर्कात जीवभावेन अवतिष्ठते । ब्रह्मणः चैतन्यत्वं 'विज्ञानमानन्दं ब्रह्म'[143] 'सत्यं ज्ञानमाननतां ब्रह्म[144] सुषुप्त्यादौ चैतन्यस्य साक्षित्वेन अवस्थानात आत्मनः चैतन्यत्वं न अपास्तम । अतः आत्मा चिद्रूपः वर्तते इति अद्वैतवेदान्तिनां सिद्धान्तः ।

135- बृ० उ० 3-4-20
136- तै० उ० 2-1-1
137- मा० का० 3-3
138- मु० उ० 1-1-6
139- श्वे० उ० 6-8
140- बृ० 4-3-7
141- " 4-5-13
142- ब्र० सू० 2-2-18
143- बृ० उ० 3-9-28
144- तै० 2-1-1

प्राभाकरमीमांसकानां मते आत्मा संवित्स्वः । प्रत्यक्षे ज्ञानं, ज्ञाता, ज्ञेयं चेति त्रिपुटी भासते । ज्ञाता संविदाश्रयः । ज्ञेयं संविदः विषयः । तच्च संविदः कर्मत्वेण भासते । ज्ञानं च स्वाभिन्नत्वेन भासते । एवं प्रकारेण आत्मा ज्ञाता संविद इत्येतत्सर्वम् एकमेव ।

आत्मा ज्ञानक्रियायाः कर्म न भवति । 'अहं सुखी' इत्यादि स्थलेष्वपि ज्ञानविशिष्टस्य आत्मनः कर्मत्वं नैव । आत्मनः ज्ञानकर्मत्वे स्वीकृते सति ज्ञानक्रियायाः कर्ता अपि आत्मा कर्मापि आत्मा इति कर्तृकर्मभावस्य विरोधः प्रसज्येत । अतः आत्मनः ज्ञानकर्मत्वं न स्वीकरणीयम् ।

नैयायिकानाम् एतत् मतं यत् 'आत्मा ज्ञानक्रिययोः फलभाग् भवतीति तस्य कर्मत्वं स्वीकरणीयम्' इति मतं वेदान्तिभिः न स्वीकृतम् । यतः ज्ञानक्रिययोः फलशालित्वेऽपि ज्ञानक्रियाभ्यां सह एव समवेतत्वसद्भावः इति आत्मनः कर्मत्वं न स्वीकरणीयम् ।

आत्मनः ज्ञानक्रियां प्रति अकर्मत्वेऽपि तस्य स्वप्रकाशत्वं कथं स्वीकरणीयम् इत्यस्मिन् विषये प्राभाकराणाम् इदं कथनमस्ति यत् संविदप्रकाशरूपः ज्ञेयविषयस्तु संविदः कर्मत्वेन स्वीकरणीयः । ज्ञातृरूपः आत्मा च संविदः आश्रयत्वेन प्रकाशते । अतः प्राभाकराणां मते विषयस्य आत्मनश्च न स्वप्रकाशत्वम् । तेषां कथनानुसारम् आत्मा संविदः आश्रयत्वेन भासते नतु स्वप्रकाशत्वेन । अस्मिन् विषये वेदान्तिनाम् इदं कथनमस्ति यत् संविदिता, संविदाश्रयतया अपरोक्षो न भवति । संविदिता यदि संविदाश्रयः प्रकाशान्तराधीनः वा सन् अपरोक्षः-स्यात् तर्हि तस्य नित्यज्ञानमपि न स्वीकरणीयः । अतः प्राभाकरमतं न स्वीकरणीयम् । अतः ज्ञानक्रियायाः अकर्मभूतः आत्मा स्वप्रकाशः इति स्वीकरणीयम् ।

'अत्रायं पुरुषः स्वयंज्योतिः' इत्यादि श्रुतयः अपि आत्मनः स्वप्रकाशकत्वं स्थापयन्ति ।

---

145- बृ०उ० 4-3-9

## 5-4-0 जीवस्य स्वरूपम्

अविद्योपाधिकं ब्रह्मैव जीवः । तद्यथा - जीवो हि अविद्यावेशवशात् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्यविद्यया कृतं दुःखभोगमभिमन्यते[146]। जाग्रत्स्वप्नसुषुप्तिषु तिसृष्ववस्थासु जीवोऽवतिष्ठते । स्थूलसूक्ष्मकारणशरीराभिमान्ययं जीवः क्रमशो विश्वतैजसप्राज्ञसंज्ञां लभते । अविद्यावशीभूतो जीव एव शारीरिकेन्द्रियिकमानसिकदुःखानां भोक्ता । अविद्यापगमे ब्रह्मसाक्षात्कारे जाते स्वस्वरूपं ब्रह्मत्वमधिगच्छति ।

जीवस्य नानात्वमेकत्वं चेति पक्षद्वयम् । तद्यथा बृहदारण्यकोपनिषद्भाष्ये 'एवमेकत्वं नानात्वं च हिरण्यगर्भस्य तथा सर्वजीवानाम्'[147], एवमेव शारीरकभाष्ये - ''जीवस्य तु न परस्मादन्यत्वम् प्रतिपिपादयिषति किन्त्वनुवदति एवाविद्याकल्पितम् लोकप्रसिद्धं जीवभेदम् । एवं हि स्वाभाविककर्तृत्वभोक्तृत्वाद्यनुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते[148]। इत्येवं प्रकारेण पूर्वोक्तेण यत् कथितम् तत्र एकजीववाद-अनेकजीववादयोः बीजानि दृष्टुं शक्यन्ते । 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'[149] इत्यस्य सूत्रस्य भाष्ये भगवत्पादः शंकराचार्यः यद् कथयति तदपि द्रष्टव्यं वर्तते । ततश्च जीवेश्वरयोरुपकार्योपकारकभावेऽभ्युपगमनात् किं स्वामिभृत्यवत्सम्बन्ध आहोस्विद् अग्निविस्फुलिंगवद् इत्यस्यां विचिकित्सायामनियमो वा प्राप्नोति । अथवा स्वामिभृत्यप्रकारेष्वेव ईशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध एव सम्बन्ध इति प्राप्नोति ।

---

146- ब्र० सू० 2-3-46

147- बृ० उ० भा० 1-46

148- ब्र० सू० शा०भा० 1-3-19

149- ब्र० सू० शा० 2-3-43

5-4-1 एकजीववादः

भगवत्पादः शंकराचार्यः कथयति यत् एकस्य अद्वितीयस्य ब्रह्मणः तस्य मायाशक्त्या ईश्वरः तथा अविद्योपाधिना जीवः इति सद्वयं जायते । यावत् पर्यन्तं बुद्ध्याद्युपाधिना सह जीवस्य सम्बन्धः भवति, तावत्पर्यन्तमेव जीवस्य जीवत्वं संसारित्वं च ।[150] अस्यकथनस्य व्याख्यानं शंकराचार्योत्तरवर्तिभिः अद्वैतवेदान्तिभिः निम्नलिखितक्रमेण कृतम् ।

वाचस्पतिमिश्रः - अविद्या जीवस्याधिकरणम् यथाहिविभ्रमो रज्जूपादान एवं प्रपंचविभ्रम ईश्वरोपादानः, तस्माज्जीवधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते,नत्वाधारतयाः, विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति' ।[151]

प्रकटार्थविवरणकारः अस्मिन् विषये एवं कथयति यत् 'अथ कः ईश्वरः को वा जीवः? अनादिरनिर्वाच्या भूतप्रकृतिचिन्मात्रसम्बन्धिनी माया तस्यां चित्प्रतिबिम्बः ईश्वरः । तस्य एव पिरिच्छिन्नानन्तप्रदेशेषु आवरणविक्षेपशक्तिदर्शनादविद्याभिधानेषु चित्प्रतिबिम्बो जीव इति ।''

विद्यारण्यः त्रिगुणात्मिकायाः प्रकृतेः माया-अविद्याचेति सद्वयं स्वीकरोति। शुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना अविद्या । मायायां प्रतिबिम्बितं चैतन्यं जीवः ।

एवमेव केषाचिंदाचार्याणामिदमपि कथनमस्ति यत् पारमार्थिकी व्यावहारिकी प्रातिभासिकीचेति जीवस्य स्थितिः त्रिविधा वर्तते । तत्रावच्छिन्नः पारमार्थिको जीवः तस्मिन् अवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य तस्य अकल्पितत्वेन ब्रह्मणा अभिन्नत्वात् ।

तमावृत्य स्थितायां मायायां कल्पितान्तःकरणे चिदाभासो अन्तःकरण तादात्म्यापत्त्या अहमित्यभिमन्यमानो व्यावहारिकः तस्य मायिकत्वेऽपि यावत्व्यवहारम् अनुवृत्तेः ।

150- अद्वैतवेदान्त-राममूर्तिशर्मा पृ० 152
151- भामती 1-4-3

स्वप्ने तमपि आवृत्यस्थितया मायावस्थाभेदरूपया निद्रया कल्पिते स्वप्नदेहादौ अहमभिमानी प्रातिभासिकः[152] ।

विवरणमतानुयायिनाम् अनुसारम् अविद्यायां चैतन्यस्य आभासः जीवः तथा बिम्बस्थानापन्नं चैतन्यम् ईश्वरः । तद्यथा- तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीयः ईश्वरः तथा सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यम् ईश्वरस्य, तत्पारतन्त्र्यं जीवस्य युज्यते[153] ।

'वेदान्ततत्त्वविवेके' नृसिंहाश्रमः यत् कथयति तस्य सारः सिद्धान्तलेशसंग्रहे अप्पयदीक्षितेन एवमुक्तः ''त्रिगुणात्मिकाया मूलप्रकृतेर्जीवेशावभासेन करोति माया चअविद्या च स्वयमेव भवति इति श्रुति सिद्धौ द्वौ स्वभेदौ । रजस्तमोऽनभिभूत-शुद्धसत्त्वप्रधाना माया, तदभिभूतमलिनसत्वा अविद्येति मायाविद्याभेदं परि-कल्प्य मायाप्रतिबिम्बेश्वरो, अविद्याप्रतिबिम्बो जीव इति उक्तम् । एकैव मूल-प्रकृतिः विक्षेपप्राधान्येन माया शब्दिता ईश्वरोपाधिः आवरणप्राधान्येन अविद्या अज्ञानशब्दिता जीवोपाधिः[154] ।

सर्वज्ञात्ममुनेः मतमिदमस्ति यत् - 'चैतन्यमेव तु तमस्वि तदप्रबुद्धाम्

सर्वज्ञता दिह विश्वमिति विभागम् ।।

जीवेश्वरौ च जगदित्यपि निर्मिमीत

इत्येव वेदशिरसः प्रथितः प्रचारः[155] ।। इति

विद्यारण्यमुनिना दृग्दृश्यविवेके' यत् कथितं तस्य सारः अप्पयदीक्षितेन सिद्धान्तलेशसंग्रहे एवं प्रकारेण समुद्धृतः जलाशयतरंगबुद्बुदन्यायेन उपर्युपरि कल्पनात् जीवस्त्रिविधः । जीवेश्वरयोः सम्बन्धाभिप्राये कथ्यते यत् चैतन्यतत्त्वम् उभयत्र एकमेव वर्तते[156] । जीवः ईश्वरश्च अंशः नास्ति । यतः निरवयवस्य अंशः भवितुं न शक्नोति । ईश्वरः मायाशक्तिसम्पन्नः, जीवश्च अविद्योपाध्युपहितः । ईश्वरे सर्वज्ञत्वं, सर्वशक्ति-

---

152- सि० ले० सं० पृ० 129
153- सि० ले० सं० पृ० 132
154- सि० ले० सं० 102
155- सं० शा० पृ० 386 (द्वितीयाध्याये)
156- ब्र०सू० शा०भा० 2-4-43

ज्ञत्वं, सर्वव्यापकत्वं चास्ति । किन्तु जीवः अल्पज्ञः तुच्छः, अत्यन्तम्, लघुश्च वर्तते । तद्यथा- बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः सविज्ञेयः स चानन्त्याय कल्पते'' ।।[157]

शंकराचार्यस्य मतानुसारं निरतिशयोपाधिसम्पन्नः ईश्वरः, अत्यन्तहीनोपाधि उपहितेषु जीवेषु शासनं करोति । तद्यथा- 'निरतिशयोपाधिसम्पन्नश्चेश्वरो निहीनोपाधिसम्पन्नजीवान्प्रशास्तीति न किंचित् विप्रतिषिध्यते ।[158]

जीवः एकः वा अनेको वा

जीवः एकः अस्ति अथवा अस्य नानात्वं विद्यते इत्यस्मिन् विषये मतभेदाः सन्ति । केचित् आचार्याः एकजीववादस्य अन्ये च अनेकजीववादस्य समर्थनं कुर्वन्ति । एकजीववादस्यापि विभिन्नाः व्याख्या उपलभ्यन्ते । अनेकजीववादस्यापि विभिन्नाः व्याख्या दृश्यन्ते । एकजीववादस्य कः अर्थः विद्यते तथा अनेकजीववादस्य कः अर्थः विद्यते इत्यस्मिन् विषयेऽपि विदुषाम् ऐकमत्यं नास्ति ।

अत्र प्रश्नः एषः अस्ति यत् चैतन्यस्य अविद्यायाम् अथवा अविद्यायाः कार्ये यः आभासः अथवा प्रतिबिम्बः उद्भाव्यते अथवा असीमितस्य सीमितवस्तुनि यः अवच्छेदः परिकल्प्यते तत्र मूलचैतन्यस्य एकत्वात् जीवः एकः वर्तते अथवा प्रतीयमानां स्थितिमनुसृत्य जीवस्य असंख्यत्वं वर्तते ।

केचित् आचार्याः मूलतः जीवः एक इति स्वीकृत्य अनुभूतेः अनुरोधात् तस्य विभिन्नाः अभिव्यक्तयः संजायन्ते इति कथयन्ति । एवं प्रकारेण ते एकजीववादस्य समर्थनं कुर्वन्ति । केचित् अन्ये आचार्याः प्रतीयमानायाः स्थितेः प्राधान्यम् अंगीकृत्य जीवानाम् अनेकत्वं स्वीकुर्वन्ति । ये आचार्याः दृष्टिसृष्टिवादं स्वीकुर्वन्ति ते एकजीववादसमर्थकाः तद्यथा - सिद्धान्तबिन्दौ (पृ.१२) - वेदान्तसिद्धान्तः एकजीववादाख्यः; इममेव दृष्टिसृष्टिवादमाचक्षते ।

(अ) आविद्यक एकजीववादः

चित्सुखाभ्याम् एवमुच्यते यत्र 'ब्रह्मैव स्वाविद्यायासंसरति स्वविद्यया मुच्यते'[159]

157- श्वे० उ० 5/9
158- ब्र० सू० शा०भा० 2-3-45
159- चित्सुखी पृ० 572

अर्थात् अविकृतस्यैव ब्रह्मणः आविद्यकः जीवभावः वर्तते । अतः ब्रह्मणः एकत्वात् जीवस्यापि एकत्वमस्ति । अस्य मतस्यानुसारम् एकमात्रजीवेन एकमात्रं शरीरम् एव सजीवम्, अन्यानि शरीराणि तु निर्जीवानि तथा स्वप्नविषयवत् अलीकानि । जाग्रदवस्थायां दृश्यमानः अयं जाग्रत्प्रपंचः तदन्तर्गताश्च जीवाः द्रष्टुः अज्ञानकल्पिताः । यावत्पर्यन्तम् अज्ञानं तिष्ठति, तावत्पर्यन्तमेव जागत्प्रपंचः सत्यत्वेन अनुभूयते ।

सः एकः जीवः कः ? इत्यस्य प्रश्नस्य समाधाने एतदुच्यते यत् - 'यः द्रष्टा स एव जीवः तस्मात् अन्यत् सर्वम् अलीकम्'[160] ।

(आ) मुख्यैकजीववादः
---------------

केषांचित् एकजीववादिनां मते केवलं हिरण्यगर्भ एव मुख्यः जीवः अन्ये च सर्वे जीवाः हिरण्यगर्भस्य प्रतिबिम्बभूताः । हिरण्यगर्भः ब्रह्मणः प्रतिबिम्बः अन्ये जीवाश्च । हिरण्यगर्भस्य प्रतिबिम्बाः । अतः प्रतिबिम्बस्य प्रतिबिम्बत्वात् हिरण्यगर्भातिरिक्तम् अन्ये सर्वे जीवाः न मुख्याः अपितु जीवाभासाः । इदं मतं सविशेषानेकशरीरवादः अथवा मुख्यैकजीववादः इत्येवं प्रकारेण चाभिधीयते ।

(इ) अविशेषैकजीववादः - केचित् अन्ये आचार्याः इदं कथयन्ति यत् हिरण्यगर्भोऽपि कल्पभेदात् विभिन्नेषु कल्पेषु विभिन्नः भवति । एवं प्रकारेण च कः मुख्यः कः वा अमुख्यः जीवः इति निर्णेतुं न शक्यते । अतः तेषां मतानुसारं एकः जीव अविशेषेण सर्वेषु शरीरेषु तिष्ठति । इदम् मतम् 'अविशेषैकजीववादः' इत्येवं प्रकारेण अभिधीयते ।

अत्रायं प्रश्नः उदेति यत् यदि सर्वेषु शरीरेषु एकस्यैव जीवस्य स्थितिः स्वीक्रियते तर्हि एकस्य शरीरस्य सुखादुःखादिकं शरीरान्तरे कथं नोत्पद्यते?

अस्मिन् विषये यदुच्यते यत् देहभेदत्वात् देहान्तरे सुखादुःखादयुत्पत्तिर्नजायते ।

अपरः प्रश्नः एषः अस्ति यत् एकस्य जीवस्य अज्ञाने विनष्टे सति सर्वेषां जीवनां मुक्तिः कथं न जायते? अस्मिन् विषये सर्वज्ञात्ममुनेः एतद् कथनं द्रष्टव्यं वर्तते

---

160- शांकरवेदान्ते तत्वमीमांसा पृ० 129

यत् अविद्या एका तस्यां प्रतिबिम्बितं चैतन्यमपि एकम् । स एव जीवः । अन्तःकरणम् एव जीवस्य अभिव्यक्तिस्थानम् । अविद्यायां कल्पितं अन्तःकरणं देहभेदेन विभिन्नम् । अविद्याकल्पितैः अन्तःकरणैश्च अविद्याप्रतिबिम्बितजीवनां विभेदः स्वीकरणीयः । यस्मिन् अन्तःकरणे ब्रह्मसाक्षात्कारः उदेति तदन्तःकरणपरिच्छिन्नः प्रतिबिम्बः एव मुक्तो भवति । ये प्रतिबिम्बाः इतरान्तःकरणपरिच्छिन्नाः ते तदानीमेव मुक्ताः न भवन्ति । एवंप्रकारेण एकजीववादेऽपि बद्धमुक्तव्यवस्था स्वीकरणीया एव वर्तते ।

मधुसूदनसरस्वतीनामपि एषः विचारः अस्ति यत् एकजीववादे अपि बद्धमुक्तव्यवस्था वर्तते एव । जीवस्य एकत्वानेकत्वविषये अप्पयदीक्षितेन सिद्धान्तलेशसंग्रहे यानि मतानि उद्धृतानि तान्यपि द्रष्टव्यानि सन्ति । तेषां संक्षेपेण उल्लेखः अत्र क्रियते । अप्पयदीक्षितेन जीवस्य स्वरूपविषये यदुक्तं तदपि अवधेयं वर्तते । तद्यथा -

(क) यथा स्वतः शुभ्रः पटो धौतः उल्लिप्तो घटितमस्यादिकिकारयुक्तो लांछितो वर्णपूरितो रंचित इति अवस्थाचतुष्टयम् एकस्यैव चित्रपटस्य तथा परमात्मा माया तद्कार्योपाधिरहितः शुद्धः मायोपहितः ईश्वरः अपंचीकृत भूतकार्यसमष्टि सूक्ष्मशरीरोपहितः हिरण्यगर्भः पंचीकृतभूतकार्यसमष्टिस्थूलशरीरोपहितो विराटपुरुष इति अवस्था चतुष्टयम् एकस्यैव परमात्मनः । अस्मिंश्च चित्रपटस्थानीये परमात्मनि चित्रस्थानीयः स्थावरजंगमात्मको निखिलः प्रपंचः । |6|

यथा चित्रगतमनुष्याणां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते तथा परमात्माध्यस्तदेहिनाम् अधिष्ठानचैतन्यसदृशाः चिदाभासाः कल्प्यन्ते ते च जीवनामानः संचरन्तीति । अध्यात्मं तु विश्वतैजसप्राज्ञक्रमेण त्रीणि रूपाणि ।

(ख) अथायं जीवः एक उत अनेकः ? अत्र केचित् आहुः एको जीवः तेन च एकमेव शरीरं सजीवम् । अन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि तदज्ञानकल्पितं सर्वं जगत् तस्य स्वप्नदर्शनवत् यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थापि नास्ति

---

|6|- सि० लो० सं० पृ० ।19

जीवस्य एकत्वात् ।"[162]

(ग) अन्येत्तु अस्मिन्नेकशारीरिक जीववादे मनः प्रत्ययमलभमाना 'अधिकत्तु भेद-निर्देशात्'[163] 'लोकवत्तु लीलाकैवल्यम्'[164] इत्यादि सूत्राणि आश्रित्य अनेकशारीरिकजीववाद-माश्रितवन्ते ।

(घ) अपरेऽस्तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यं जीवत्वम् इत्यत्र नियामकं नास्तीति मन्यमानाः एक एव जीवो अविशेषेण सर्वं शरीरमधितिष्ठति ।[165]

(ङ) योगिनस्तु कायव्यूहसुखाद्यनुसन्धानं व्यवहितार्थग्रहणवद् योगप्रभावनिबन्धनम् इति न तदुदाहरणमित्यविशेषानेकशारीरिकजीववादं रोचयन्ते ।[166] इतरे तु प्रतिजीवम् अविद्याभेदमभ्युपगम्यैव तदनुवृत्तिनिवृत्तिभ्यां बद्धमुक्तव्यवस्थां समर्थयन्ते ।

अत्र एतदपि ज्ञातव्यम् अस्ति यत् सर्वज्ञात्ममुनिः एकजीववादमनुसृत्यापि बद्ध-मुक्तव्यवस्थां स्वीकरोति । सः कथयति यत् अविद्यायां प्रतिबिम्बितं चैतन्यम् एव जीवः अविद्यायाः एकत्वात् तस्यां प्रतिबिम्बितः जीवोऽपि एक एव । एकस्यामेवा-विद्यायां प्रतिबिम्बस्य नानात्वासम्भवात् जीवस्य नानात्वमपि असंभावि ? अन्तः करणमेव जीवस्याभिव्यक्तिस्थानम् । तच्चान्तःकरणम् अविद्यायां कल्पितम्, देहभेदेन च विभिन्नम् । अविद्याकल्पितैः अन्तःकरणैः च अविद्याप्रतिबिम्बजीवानां भेदः स्वीकरणीयः । यस्मिन् चान्तःकरणे ब्रह्मसाक्षात्कारः उदेति तदन्तःकरणपरिच्छिन्नाः प्रतिबिम्बाश्च मुक्ताः तिष्ठन्ति । तथा च एकजीववादेऽपि बद्धमुक्तव्यवस्था उपपद्यते ।[167]

5-4-2 अनेकजीववादः

एकजीववादस्य प्रक्रियायाः सुरूलां गौरवं चानुभूय भामतीप्रस्थानस्य आचार्यैः अनेकजीववादः स्वीकृतः । यासां श्रुतीनां भावाः अनेकजीववादपरका दृश्यन्ते, तासां तादृशानि व्याख्यानान्यपि भामतीप्रस्थानप्रवर्तकैः आचार्यैः एव कृतानि ।

162- सि० ले० सं० पृ० 160
163- ब्र० सू० 2-1-22
164- ब्र० सू० 2-1-33
165- सि० ले० सं० पृ० 164
166- सि० ले० सं० पृ० 165
167- शांकरवेदान्ते तत्वमीमांसा पृ० 131

गौडपादाचार्य, सुरेश्वराचार्य-प्रभृतयः अनेके अन्ये आचार्या अपि अनेकजीववादस्य समर्थनं कृतवन्तः ।

चित्सुखाचार्यः मधुसूदनसरस्वती प्रभृतयः आचार्याः उभयपक्षयो विश्लेषणं कुर्वन्ति ।

एकजीववादिनाम् आचार्याणां कथनं एतदस्ति यत् ब्रह्म एकम्, अविद्यापि एका । अतः उपहित चैतन्यरूपः जीवः अपि एक एव । व्यवहारे यत् जीवबहुत्वं दृश्यते तत्र ते जीवाभासत्वस्य अन्तःकरणावच्छिन्नत्वस्य एकजीवानेकशरीरत्वस्य च परिकल्पनाः कृताः । एतेषाम् आचार्याणाम् इदमपि कथनमस्ति यत् जीवबहुत्वे अविद्याबहुत्वमपि कल्पनीयं भवति । अतः तत्र कल्पनागौरवम् अस्ति । अस्यापेक्षया जीवाभासत्वस्य कल्पनायां लाघवं वर्त्तते ।

एकजीववादस्य विरोधे अनेकजीववाद-समर्थकानाम् निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते । एकजीववादे स्वीकृते सति बन्धमोक्षव्यवस्थायाः उपपत्ति दुर्लभा । यदि एकजीववादः अंगीक्रियते तर्हिसमस्तः जागत्व्यवहारः कल्पितः इति स्वीकरणीयम् स्यात् तच्च न समीचीनम् । एकजीववादे स्वीकृते सति जीवन्मुक्तेः सिद्धान्तः स्वीकर्त्तुं न शक्यते । व्यवहारदशायां देहेन्द्रियसंघातानुसारं जीवस्य अनेकत्वम् अनुभवसिद्धम् ।

अनेकैराचार्यैः एकजीववादस्य विपरीतमनेकजीववादः समर्थितः । जीवानेकत्वस्य प्रतिपादनं गौडपादाचार्यस्य निम्नलिखितकथनेष्वपि द्रष्टुं शक्यते । तद्यथा -

(क) "घटादिषु प्रलीनेषु घटाकाशादयो यथा ।
आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि ॥"[168]

(ख) "यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥"[169]

योगवासिष्ठे जीवानाम् अनेकत्वम्, अनन्तत्वं चाश्रित्य एतत्कथितमस्ति यत् जीवाः ब्रह्मणः तथैव निर्गताः तथा निर्झरात् जलकणानि निर्गच्छन्ति । तद्यथा-

"एवं जीवश्चितो भावा भवभावनयोहिताः ।

168- मा० का० 3-3-4
169- मा० का० 3-3-5

ब्रह्मणः कल्पिताकारा लक्षशोऽप्यथ कोटिशः ।।
स्ववासनादशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः'' ।170

यद्यपि भगवत्पादः शंकराचार्यः एकजीववादस्य समर्थकः इति कथ्यते, तथापि 'जन्माद्यस्य यतः' इति सूत्रस्य भाष्ये-'अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृत्वभोक्तृत्वसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य'' इत्येवं प्रकारेण तस्य यत्र कथनमस्ति तदाश्रित्य उत्तरवर्तिभिः आचार्यैः एतत् प्रतिपादितं यत् जीवाः अनेके सन्ति । केचित् सुखिनः केचित् दुःखिनः एवं य एव सुखिनः, त एव कदाचित्दुःखिनः तद्यथा भामत्यां वाचस्पतिमिश्राः- 'अत्र नामरूपाभ्यां व्याकृतस्य इति चेतनभावकर्तृत्वसंभावनया प्रधानाद्यचेतनकर्तृकत्वं निराकारव्यकर्तृकत्वं च व्यासेधति । यत्तु खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं,यथा घटादि । विवादाध्यासितं च जगन्नामरूपव्याकृतं, तस्माच्चेतनकर्तृकं संभाव्यते। चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना, बाह्यं निष्पादयति --- अतएव घटस्य निर्वर्त्यस्याप्यन्तः संकल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति । यथाहुः 'बुद्धिसिद्धं तु तदसत् इति । तथाचाचेतनो बुद्धावनालिखितं करोतीति न शक्यं सम्भावयितुमिति भावः । स्यादेतत्-चेतना ग्रहा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यति,कृतम् अतस्वभावेन ब्रह्मणेत्यत आह- अनेककर्तृभोक्तृ संयुक्तस्येति । ------- किमंग पुनः कर्तुमित्यर्थः ।171

बद्धमुक्तव्यवस्थायाः उपपादनार्थम् अनेकजीववादः आश्रयणीयः । बद्धमुक्तव्यवस्थायाः मिथ्यात्वं न कर्तव्यम् । श्रुतिवाक्येषु ब्रह्मजीवस्य मुक्तिः अन्यस्य च बन्धः इति उद्घोषितम् दृश्यते । 'प्रतिषेधादिति चेन्न शब्दात्' इति सूत्रस्य भाष्ये' ब्रह्मैव सन् ब्रह्माप्येति इति श्रुतिमुद्धृत्य भाष्यकारेण तत्रापि जीवानां बद्धमुक्तव्यवस्था समर्थिता । तथाहि -'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ० 4-4-6) इत्यतः परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत्,नेत्युच्यते, यतः शरीरादात्मन एव उत्क्रान्तिप्रतिषेधः प्राणानां

---

170- यो वा० 4-43 1-3
171- भामती पृ० 86

न शरीरात्'[172] ।

अविद्यायां कल्पितानाम् अन्तःकरणानां देहभेदेन भेदात् यदि बद्धमुक्त-व्यवस्था उपपद्यते तर्हि अन्तःकरणम् एव उपाधित्वेन ग्रहीत्वा अनेकजीववादः कथं न ग्राह्यः ? जीवानां परस्परभेदस्य प्रत्यक्ष सिद्धत्वात् जीवभेद प्रतिपादनार्थं अन्तःकरणम् एव उपाधित्वेन ग्राह्यम् नाविद्या इति अनेकजीववादिनां मतम् । केषांचित् मतानुसारं यथा स्वप्नदृष्टपदार्थानां निवृत्तिः निद्रायाः निवृत्या सह संजायते । तथैव अविद्यायाः निवृत्तेः अनन्तरम् अनन्तजीवयुक्तप्रपंचस्य कल्पनायाः अपि अनुवृत्तिः संजायते । तथैव अविद्यायाः निवृत्तेः अनन्तरम् अनन्तजीवयुक्तप्रपंचस्य कल्पनाया अपि अनुवृत्तिः संजायते । किन्तु अस्य मतस्य दोषः अयमस्ति यत् अस्मिन् मते जीवस्य सृष्टुत्वं प्रसज्यते । जगतः सृष्टा वस्तुतः ईश्वरः अस्ति नतु जीवः[173] ।

ब्रह्मणः प्रतिबिम्बभूतः हिरण्यगर्भः, एव मुख्यो जीवः । अस्मिन् मते अयं दोषः अस्ति यत् कस्मिंश्चित् एकस्मिन् हिरण्यगर्भे कल्पभेदत्वात् जीवत्वस्य स्थापना कर्तुं न शक्यते । तृतीयं मतमिदमस्ति यत् अविद्यायाः एकत्वात् तत् प्रतिबिम्बितं चैतन्य-मपि एकमेव । तदेव जीवः[174]

अनेकजीववादस्यापि अनेकानि रूपाणि दृश्यन्ते । तद्यथा-प्रथमं मतमिदमस्ति यत् अविद्याजन्यान्तकरणोपाधिद्वारा ब्रह्म एव अनेकजीवभावत्वं प्राप्नोति[175] अस्मिन् सन्दर्भे केषांचित् आचार्याणाम् इदं कथनमस्ति यत् ईश्वरस्य सर्वज्ञत्वात् जीवानां संख्या निश्चितरूपेण ज्ञाता स्यात् । एवं प्रकारेण च जीवनां संख्या अनन्ता इति कथमुच्यते? अस्य शंकायाः समाधानम् एवं प्रकारेण कर्तुं शक्यते यत् अविद्यायाः अनादित्वात् अविद्याजन्यजीवानां गणना एकस्मिन् काले कर्तुमशक्या ।अतः तेषाम् आनन्त्यम् उच्यते । -

अपरं मतमिदमस्ति यत् अज्ञानस्य निवृत्तौ मोक्षः भवति तथापि जीवन्मुक्तौ अज्ञानस्य आंशिकी निवृत्ति भवति । अतः जीवानाम् अनेकत्वं सिद्ध्यति । अपरं मतमिदमस्ति यत् यस्मिन् जीवे अज्ञानम् आश्रितं स एव बद्धः । यस्मिन् नास्ति स मुक्तः ।

---

172- ब्र० सू० शा० भा० 4-2-12
173- ब्र० सू० शा० भा० 3-1-33
174- ब्र० सू० शा० भा० 1-4-3
175- ब्र० सू० शा० भा० 1-4-3

अतः बद्धमुक्तव्यवस्थायाः कारणात् जीवानाम् अनेकत्वं युक्तम् । अपरं मतमिदमस्ति यत् प्रत्येकं जीवे अविद्यायाः भिन्नरूपत्वेन वर्तमानत्वात्जीवानाम् अपि भिन्नत्वम् अस्ति ।

5-4-3 अनेकजीवादस्य ग्राह्यत्वम्

एकजीववादानेकजीववादयोर्मध्ये कः श्रेष्ठः ग्राह्यश्च? अस्मिन् विषये संक्षिप्त-रूपेण इदं कथयितुं शक्यते यत् एकजीववादापेक्षया अनेकजीववादो युक्तिसंगतः प्रति-भाति । अस्य प्रमुखं कारणमिदमस्ति यत् यदि एक एव जीवः सर्वेषां शरीराणाम् अधिष्ठानत्वेन स्वीक्रियते तर्हि विभिन्नेषु शरीरेषु सुखदुःखानुभूतिः केन प्रकारेण जायेत? अतः जीवाः अनेके सन्तीति मतं सुसंगतम् । वाचस्पतिनाऽपि भामत्याम् अनेकजीववादस्य समर्थनं कृतम् ।

5-4-4 जीवब्रह्मणोः सम्बन्धः

शंकराचार्यः जीवब्रह्मणोः अभेदं प्रतिपादयति । तस्य मते जीवः परमार्थतः ब्रह्मरूप एव । श्रुतयोऽपि एवमेव प्रतिपादयन्ति । तद्यथा - 'अजो नित्यः शाश्वतोऽयं पुराणः' '(कठ0 उ0 2-10) 'तत्सृष्टवा तदेवानुप्राविशत्' (तै0 उ0 2-72) 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा0 6-3-2) 'अयमात्मा ब्रह्म' (बृ0 उ0 2-4-10) 'अहं ब्रह्मास्मि' (बृ0 उ0 2-4-10)

शंकराचार्यः जीवब्रह्मणोः औपाधिकभेदम् अंगीकरोति । जीवब्रह्मणोः औपाधिकभेदं प्रतिपादयत् स एवं कथयति यत् यथा उपाधिपरिच्छिन्नात् घटाकाशात् अनुपाधिकोऽपरिच्छिन्नः आकाशः भिन्नः, तथैव अविद्याकल्पितात् शरीरात् कर्तृभोक्तृविज्ञानात्माख्यादन्यः---- परमेश्वरः ।

अन्तराधिकरणस्य 'अनवस्थितेरसम्भवाच्च नेतरः' अस्य सूत्रस्य भाष्ये शंकराचार्यः कथयति यत् - 'यद्यपि विज्ञानात्मा परमात्मनोऽनन्यः एव, तथा-[176] प्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभासयत्वे नोपपद्यते ।

176- ब्र0 सू0 शा0भा0 1-2-17

सर्वत्र प्रसिद्धाधिकरणभाष्येऽपि शंकराचार्यः कथयति- 'एकः कर्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च । एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणाः । [177]

एवमेव दहराधिकरणभाष्ये शंकराचार्यः कथयति - 'यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निर्वर्तयन्कूटस्थनित्यदृक्स्वरूपमात्मानमहं ब्रह्मास्मीति न प्रतिपाद्यते तावज्जीवस्य जीवत्वम् । यदा तु देहेन्द्रियमनोबुद्धिसंघातात् व्युत्थाप्य स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति, तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुद्ध्यास्माच्छरीराद्यभिमानात्समुत्तिष्ठन्स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति ।'' [178]

अत्रायं प्रश्नः उदेति यत् पारमार्थिकदृष्ट्या ब्रह्म एव सत्यम् निर्गुणं निरुपाधिकं च तर्हि तस्मात् निर्गुणात् निर्विशेषात् च ब्रह्मणः सगुणस्य सविशेषस्य जीवस्य उद्भवः कथं व्याख्यातव्यः ? अस्मिन् विषये आधुनिकानां पाश्चात्यविदुषां कथनमपि द्रष्टव्यानि सन्ति । उदाहरणतः ब्रेडले महोदयः कथयति यत् परमसत्तां वयं न जानीमः, कथं केनप्रकारेण च विभक्ताऽपि सा अद्वितीया इति कथ्यते । [179]

'बोसांके' महोदयः कथयति परमसत्तासु कथमात्मानं पुरूत्पादयति कथं च तासां माध्यमेनात्मानं परिचिनोति । शंकराचार्यःअस्य प्रश्नस्य समाधानमअनिर्वचनीयस्वरूपतायाः मायायाः माध्यमेन करोति । तथाहि- 'अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवा इति ।

---

177- ब्र० सू० शा०भा० 1-2-8
178- ब्र० सू० शा०भा० 1-3-19
179- We do not know why or how the absolute divides itself into centres, or the way in which so divided, it still remains one (Appearance and Reality- page 226-27)

(2) But why the Absolute mind should reproduce itself through finite organisms why it should try to realise itself through them; are questions which Bosanquet admits cannot be answered" (D.M.Datta Chief Current of contemporary Philosophy P.16).

मायायाः स्वरूपम् अनिर्वचनीयमस्ति इत्येतत् सम्यक् स्पष्टीकृतम् भगवता शंकराचार्येण विवेकचूडामणौ। तथाहि -

'सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
सांगाप्यनंगाप्युभयात्मिका नो महाद्भुतानिर्वचनीयरूपा ।।[180]

शांकरपूर्ववेदान्तेऽपि जीवब्रह्मणोः अभेदः प्रतिपादितो दृश्यते । अस्मिन् विषये शंकराचार्येण शारीरकभाष्ये आश्मरथ्य-औडुलोमिकाशकृत्स्नप्रभृतीनां सिद्धान्ताः उल्लिखिताः ।

आश्मरथ्यस्य मते जीवब्रह्मणोर्मध्ये कथंचित् भेदः कथंचित् अभेदः अस्ति । भामत्याम् अपि अस्य मतस्य निरूपणं एवं दृश्यते - 'यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिंगा न वह्नेरन्यन्तं भिद्यन्ते, तद्रूपनिरूपणात्वात्; नापि ततोऽत्यन्तमभिन्ना वह्नेरिव परस्परव्यावृत्त्यभावप्रसंगात्, तथा जीवात्मनोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसंगात् नाप्यत्यन्तं न भिद्यन्ते, परस्परं व्यावृत्त्यभावप्रसंगात्, सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च । तस्मात् कथंचित् भेदो जीवात्मनामभेदश्च ।

औडुलोमेः मतानुसारं जीवो ब्रह्मणः भिन्नः । भाविष्यत्कालिकाभेदम् आश्रित्य भेदकालेऽपि द्वयोरभेदः उच्यते । यावत्कालपर्यन्तं मुक्तिर्भवति तावत्कालपर्यन्तमेव जीवब्रह्मणोः भेदः वर्तते । बद्धाः जीवः ब्रह्मणः भिन्नः, मुक्तः जीवः ब्रह्मणः अभिन्न एव ।

काशकृत्स्नस्य मते जीवब्रह्मणोः वास्तविकः अभेदः वर्तते । भामत्यां वाचस्पतिना काशकृत्स्नमतस्य उल्लेखः एवं कृतः - न जीवः आत्मनोऽन्यः, नापि तद्विकारः, किन्त्वात्मैवाविद्योपधानकल्पितावच्छेदः । आकाश इव घटमणिकादि कल्पितावच्छेदो घटाकाशो मणिकाकाशो नतु परमाकाशादन्यस्तद्विकारो वा ततश्च जीवात्मनोपक्रमः परमात्मनोपक्रमस्तस्य ततोऽभेदात्'' ।[182]

शंकराचार्यः काशकृत्स्नस्य मतमेव समर्थयति । तद्यथा - 'अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितानामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्ववेदान्तवादिभिरभ्युपगन्तव्यः[183]। शंकराचार्यस्य मते जीव-

---

180- भनमतिनि विवेकचूडामणि, श्लोक 111
181- भामती पृ० 415 (प्रतिज्ञा सिद्धेर्लिंगमाश्मरथ्यः)
182- भामती पृ० 416 (1-4-22)
183- ब्र०सू० शा० भा० 1-4-22

ब्रह्मणोर्मध्ये विस्फुलिंग अग्निवत् कार्यकारणसम्बन्धो नास्ति । अतः सः आश्मरथ्यस्य मतं न स्वीकरोति । यदनुसारं बद्धावस्थायां जीवब्रह्मणोः भेदः , मुक्तावस्थायां चाभेदः भवति । शंकराचार्यस्य मतं संक्षेपतः इदमस्ति यत् जीवब्रह्मणोः पारमार्थिकः अभेदः , औपाधिकश्च भेदः वर्तते । जीवब्रह्मणोः पारमार्थिकाभेद औपाधिकभेदसन्दर्भे भगवता शंकराचार्येण स्वभाष्येषु अवच्छेद-प्रतिबिम्ब-आभास इत्येतेषां पदानां यथावसरं प्रयोगः कृतः । कुत्रचित् तेन जीवब्रह्मणोः पारस्परिकः सम्बन्धः घटाकाश महाकाशवत् निरूपितः कुत्रचिच्च सर्परज्जुदृष्टान्तेन व्याख्यातः । परमात्मा एव देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदाभासते तद्वत् ।[184] एतान् दृष्टान्तान् आश्रित्यैव शांकरोत्तरवेदान्ते अवच्छेदवादः प्रतिबिम्बवादः , आभासवादः इत्येतस्य वादत्रयस्य प्रवर्तनं वाचस्पतिमिश्रेण, प्रकाशात्मयतिना,सुरेश्वराचार्येण च कृतम् । एतेषां वादानां तुलनात्मकं समीक्षणमस्माभिः पूर्वमेव कृतम् तत्रैव च स्पष्टमेवेदं प्रतिपादितं यत् 'अन्तःकरणावच्छिन्नं चैतन्यं जीवः । अन्तःकरणोपाधिनां नानात्वात् जीवस्यापि नानात्वमिति भामतीपन्थिनां मतम् । तदेव संगतमिति अस्मदीयोऽप्यभिप्रायः ।

---

184- बृ0 सं0 शा0 भा0 1-2-6

5-5-0 जगतः स्वरूपम्
------------------

अद्वैतिवेदान्तिनां मतानुसारं ब्रह्मं एव जगद्रूपेण प्रकाशते । जगतः उत्पत्तिः ब्रह्मणः भवति ब्रह्मण्येव जगतः स्थितिः ब्रह्माणि एव जगतः लयश्च भवति । जगतः ~~स्वरूप~~ * व्यावहारिकसत्यत्वं वर्तते, नतु पारमार्थिकम् । जगद् ब्रह्मणः कार्यम् अतः जगद् ब्रह्मणः न भिद्यते । कारणसत्तानिबन्धाना एव कार्यसत्तानिबन्धाना । इदम् जगद् गगनकुसुमवद् अलीकं न अपितु मायामयत्वाद् मिथ्या वर्तते । ब्रह्मज्ञानानन्तरं मनसः लये सति जगत्प्रपंचोऽपि लीयते । किन्तु तस्य व्यावहारिकसत्यत्वमस्ति । एवं प्रकारेण इदं जगद् न ब्रह्मवत् सद् न च आकाशकुसुमवद् असद् । न च सदसद् । अतः भाष्यकारः अनिर्वचनीये नामरूपे इत्येवं प्रकारेण जगतः अपि अनिर्वचनीयत्वं साधयति । तथापि सः एवं स्वीकरोति यद् कार्यम् आकाशादिकं बहुप्रपंचं जगद् कारणं परं ब्रह्म । तस्माद् कारणाद् परमार्थतो अनन्यत्वं व्यतिरेकेण अभावः कार्यस्यावगम्यते । अत्र श्रुत्यपि 'वाचारम्भणं विकारो नामधेयम्' इति ।

अद्वैतवेदान्तिनः सत्तात्रैविध्यं स्वीकुर्वन्ति । तद्यथा -' त्रैकालिक-निषेधाप्रतियोगित्वरूपा ब्रह्मणः सत्ता पारमार्थिकी ब्रह्मज्ञानेतरज्ञानाबाध्यत्वरूपा प्रपंचस्य सत्ता व्यावहारिकी । तथा ब्रह्मज्ञानेतरज्ञानबाध्यत्वरूपा शुक्तिरजतादेः सत्ता प्रातिभासिकी । स्वोपाधानसमसत्ताकत्वे सति कार्यत्वं परिणामत्वम् । स्व-स्वरूपापरित्यागेन रूपान्तरेण प्रतीतिः विवर्तः । अन्यप्रकारेण इदं कथ्यते यद् 'सतत्व-तोऽन्यथा प्रथा परिणामः । अतत्वतोऽन्यथा प्रथा विवर्तः ।।[185] एवं प्रकारेण पारमार्थिकसत्तात्मकं ब्रह्म व्यावहारिकजगद्रूपेण भासते । अतः इदं जगद् ब्रह्मणः विवर्तः इति अद्वैतिवेदान्तिनां मतम् ।

अत्रेतद् ज्ञातव्यं वर्तते यद् शंकराचार्येण मायोपाधिकं ब्रह्म एव जगतः कारणत्वेन निर्दिष्टम् नतु निरुपाधिकं ब्रह्म । अनिर्वचनीय-मायारूपेण उपाधिना युक्तं सगुणं

---

185- (अ) परिणामो नाम उपादानसमसत्ताककार्यापत्तिः ।
विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः ।
(आ) सतत्वतोऽन्यथा प्रथा विकार इत्युदीरितः
अतत्वतोऽन्यथा प्रथा विवर्त इत्युदाहृतः ।।

ब्रह्म ईश्वरमित्यभिधीयते । स एव चेश्वरः जगतः उपादानकारणं निमित्तकारणं च।

जगतः उपादानकारणविषये अद्वैत शंकरोत्तराद्वैतवेदान्तिनां मध्ये मतभेदः अस्ति । केषाचित् मतानुसारं ब्रह्म एव जगतः उपादानकारणम् । किन्तु अन्येषां मतानुसारं माया अस्ति उपादानकारणम् । संक्षेपशारीरककारः सर्वज्ञात्ममुनि एतत् कथयति यत् ब्रह्म जगतः उपादानकारणं ब्रह्म । विशुद्धं ब्रह्म किन्तु मायाद्वारकारणम् । 186

5-5-। जगतो मिथ्यात्वम्

'ब्रह्म सत्यं जगन्मिथ्या ब्रह्मैव' इत्येवं प्रकारेण यः सिद्धान्तः अद्वैत-वेदान्तिभिः प्रवर्तितः, तस्य महत्वं स्वतः सिद्धम् वर्तते । वस्तुतः अद्वैतवादस्य प्राणत्वेन संतिष्ठते' इदं वाक्यम् । ब्रह्मणः सत्यत्वविषये अस्माभिः पूर्वप्रकरणे विचारः कृतः । तद्यथा - नित्यमेव सत्यम्, तदेव ब्रह्म । अधुना जगत् मिथ्या इत्यस्य विवेचनम् अपेक्षितं वर्तते । किमिदं मिथ्यात्वम् इत्यस्य प्रश्नस्य समाधानम् बहुभिः आचार्यैः बहुधा कृतम् । अतः स्वमतस्य निरूपणात्पूर्वम् अन्येषाम् पूर्ववर्तिनाम् आचार्याणां यानि मतानि शास्त्रग्रन्थेषु उपलभ्यन्ते तेषाम् उल्लेखः अत्र संक्षेपेण क्रियते -

5-5-।(।) मिथ्यात्वस्य लक्षणानि

सदसद्विलक्षणात्वम् मिथ्यात्वम् इति पदमपादाचार्याः।प्रतिपन्नोपाधौ त्रैकालिक-प्रतियोगित्वं मिथ्यात्वं तथा, ज्ञाननिवर्त्यत्वं मिथ्यात्वम् इति द्वितीयं प्रकाशात्मयतिः । 'स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् इति चित्सुखाचार्यः । सद्विविक्तत्वं मिथ्यात्वम् इति आनन्दबोधभट्टाचार्यः । तद्यथा संक्षेपेण- आद्यं स्यात् पंचपादयुक्तम् ततो विवरणोदितम् । चित्सुखीयं चतुर्थं स्यात् अन्त्यमानन्दबोधजम् ।''

(क) सदसद्विलक्षणात्वम् मिथ्यात्वम् । यत् न सत् नापि असत् तदेव सद-सद्विलक्षणम् तदेव मिथ्या ।

अत्रेदं ज्ञातव्यं वर्तते यत् द्वैतवेदान्तिनः बाध्यत्वमेव असत्वं (यथा शुक्तिरूप्यस्य) आबाध्यत्वं च सत्वम् । यथा ब्रह्मणः विश्वप्रपंचस्य च । अस्यार्थः अयमस्ति यत्- यत् न सत्, तत् असत्, यत् नासत्, तत् सत् इति सदसदोः परस्परं वैलक्षण्यम् ।

186- सि0 ले0 सं0 पृ0 77

अतः सदसद्विलक्षणत्वम्' इत्येवं प्रकारेण लक्षणं भवितुं नार्हति ।

किन्तु अस्य विपरीतम् अद्वैतिनां मतं तु इदमस्ति- यत् कालत्रयेऽपि न बाध्यते तत् सत्(यथा ब्रह्म) यश्च कालत्रयेऽपि प्रतीतिगोचरं न भवति तदसत् ।।(यथा आकाशकुसुमम्)

अत्र एतत् बोधव्यं यत् अद्वैतिनां मतानुसारं सत्वासत्वे न परस्परविरहव्यापके अपितु परस्परविरहव्याप्ये । शुक्तिरजते सत्वाभावस्य सत्वेऽपि असत्वाभावोऽपि अस्ति नतु असत्वसद्भावः । एवमेव शुक्तिरजते असत्वाभावस्य सद्भावेऽपि सत्वसद्भाव नास्ति । अतः सत्वासत्वे न परस्परविरहव्यापके । अर्थात् यत्र सत्वं, तत्र असत्वस्य सद्भावो न । यत्र च असत्वं तत्र सत्वस्य सद्भावः न । अतः द्वयोः सत्वासत्वयोः परस्परविरहव्याप्यत्वम् अस्ति । प्रकारान्तरेण एतत् कथयितुं शक्यते यत् सत्वासत्वयोः सद्भावः एकत्र न संभवति, किन्तुः तयोः अभावस्तु एकत्र संभवति । यथा शुक्ति-रजते उभयोः अभावः वर्त्तते । अतः 'सदसद्विलक्षणत्वं मिथ्यात्वम्' इति प्रथम मिथ्यात्वलक्षणे द्वैतवादिभिः यः दोषः उद्भाव्यते सः न समीचीनः ।

(ख) 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्' इति द्वितीयं मिथ्यात्वलक्षणम् प्रकाशात्मयतिना उपस्थापितम् पंचपादिकाविवरणे । अस्यैव लक्षणस्य प्रकारान्तरेण(किंचित् शाब्दिकं परिवर्तनं कृत्वा) समुपस्थापना कृता चित्सुखाचार्यैः । तद्यथा -

'' सर्वेषामेव भावानां स्वाश्रयत्वेन सम्भवे
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ।।''[187]

चित्सुखीयम् एतत् लक्षणम् अद्वैतसिद्धिकारैः निम्नलिखितप्रकारेण उपन्यस्तम् ''स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्''[188] । इदमेव लक्षणं धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायाम् उपन्यस्तम् । तद्यथा -

''स्वाश्रयत्वेनाभिमत यावन्निष्ठात्यन्ताभावप्रतियोगित्वम् ''

अत्र एतत् ज्ञातव्यं वर्त्तते यत् प्रकाशात्मयतिना प्रयुक्तं त्रैकालिकनिषेध प्रतियोगित्वम् इति पदं चित्सुखाचार्येणापि विशेष्यत्वेन प्रयुक्तेन अत्यन्ताभावप्रतियोगित्वम्

187- तत्वप्रदीपिका पृ0 67
188- अद्वैतसिद्धि पृ0 81

इत्यनेन पदेन सह साम्यं भजते । अपि च प्रकाशात्मयतीना प्रतिपन्नोपाधौ' इति यदुक्तं तस्यैव चित्सुखेन 'स्वाश्रयत्वेन सम्मते' इत्येवं प्रकारेण उल्लेखः कृतः । एवम् उपर्युक्तस्य लक्षणाद्वयस्य समार्थकत्वं सुस्पष्टम् ।

स्वस्याश्रयत्वेन आधारत्वेन वा यत् प्रतिभासते तत् स्वाश्रयत्वेन सम्मतम् । एवमेव उपाधित्वेन आश्रयत्वेन वा यत् प्रतीयते सः प्रतिपन्नोपाधिः । एवंप्रकारेण उपर्युक्ते लक्षणद्वये प्रतिपन्नोपाधौ,स्वाश्रयत्वेन सम्मते इति वा उक्तत्वात् अनयोर्लक्षणयोः आकाशकुसुमादौ अतिव्याप्तिर्नजायते । यतः आकाशकुसुमादीनां कस्याप्याधारस्य प्रतीतिगोचरता नास्ति । अत्रेयं शंका उदेति यत् आकाशस्य कश्चन आधारः न दृश्यते । अतः आकाशे अस्य लक्षणस्य अव्याप्तिः जायेत? अस्य समाधानमिदमस्ति यत् समस्तस्य प्रपंचस्याधारभूतं ब्रह्म । अतः आकाशस्यापि आधारत्वेन ब्रह्मणः सत्वात् नास्य लक्षणस्य आकाशादौ अव्याप्तिः ।

(ग) <u>ज्ञाननिवर्त्यत्वं मिथ्यात्वम्'</u> इत्येतत् तृतीयं मिथ्यात्वलक्षणमपि प्रकाशात्मयतिभिः अन्यस्तम् । अस्य अर्थः अयमस्ति यत् 'ज्ञानेन निवर्त्यते तत् मिथ्या' अत्र एषा शंका उदेति यत् यदि निवर्तनमेव मिथ्यात्वम्' इति स्वीक्रियते तर्हि उत्तरज्ञाननिवर्तिते पूर्वज्ञानेऽपि इदं लक्षणम् अतिव्याप्तं स्यात् । अर्थात् उत्तरज्ञाननिवर्तितस्य पूर्वज्ञानस्यापि मिथ्यात्वं प्रसज्येत? अस्याः शंकायाः समाधानमिदमस्ति यत् ज्ञाननिवर्त्यत्वम् इत्यनेन ज्ञानत्वेन ज्ञाननिवर्त्यत्वम् इत्ययम् अर्थः अभिप्रेतो नास्ति । यत्र उत्तरज्ञानेन पूर्वज्ञानं विनश्यते तत्र ज्ञानं न ज्ञातात्वरूपेण पूर्वज्ञाननाशे हेतुः अपितु आत्मविशेषगुणरूपेण । अर्थात् परवर्ति आत्मविशेषगुणः पूर्वोत्पन्नस्य आत्मविशेषगुणस्य नाशकः भवति ।

अयमर्थः अर्थात् (ज्ञानस्य आत्मविशेषगुणत्वं) केन प्रकारेण भवति इत्यस्मिन् विषये एवं कथ्यते यत् आत्मविशेषगुणानां ज्ञानेच्छाप्रयत्नादीनां परस्परनाशकत्वं स्वतः सिद्धम् । तद्यथा -' ज्ञानजन्या भवेदिच्छा इच्छाजन्याकृतिर्भवेत्' । एवं च परभाविना ज्ञानेन यथा पूर्वभाविनः ज्ञानस्य नाशः तथा परभाविन्यया इच्छया अपि पूर्वभाविनयः ज्ञानस्य नाशः भवति । एवं प्रकारेण ज्ञानत्वस्य ज्ञाननिवर्तकहेतुत्वं न कल्पनीयम् इच्छायाम् अव्याप्तेः । अतः ज्ञानेच्छयोः साधारणः आत्मविशेषगुणत्वरूपः धर्मः एव ज्ञाननिवर्तकत्वेन स्वीकरणीयः । अत्र एतदपि न चिन्तनीयं यत्

ज्ञानप्रागभावस्यापि ज्ञाननाश्यत्वात् तत्रास्य लक्षणस्य अतिव्याप्तिः भविष्यति । यतः ज्ञानं, ज्ञानप्रागभावम्, ज्ञानत्वेन न, अपितु प्रतियोगित्वेन नाशयति । अतः ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् इति तृतीयलक्षणमपि निर्दुष्टम् ।

(घ) ''स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्'' इत्येवं प्रकारेण चित्सुखाचार्येण मिथ्यात्वस्य यत् लक्षणं उक्तं तस्य प्रकाशात्मयतिना प्रतिपादितेन लक्षणेन सह साम्यं वर्तते । धर्मराजाध्वरीन्द्रकृतं तथा मधुसूदनसरस्वतीकृतं मिथ्यात्वलक्षणमपि प्रकाशात्मयतिकृत प्रतिपादितेन लक्षणेन सह साम्यं धारयति । अतः एतेषां पृथक् पृथक् समीक्षणम् आवश्यकं नास्ति ।

(ङ) सद्विविक्तत्वं मिथ्यात्वम्' इति पंचमं मिथ्यात्वलक्षणम् आनन्दबोधेन उपस्थापितम् । अस्यार्थः अयमस्ति यत् सत्याद्भिन्नं तत् मिथ्या इति । अत्रायं प्रश्नः उदेति यत् सत्त्वं नाम सत्ताजातिविशिष्टत्वम् । एवं सति मिथ्यात्वलक्षणं ब्रह्मण्यपि अपि अतिव्याप्तं स्यात् । यतः अद्वैतवेदान्तमते ब्रह्मणः निर्धर्मकत्वेन सत्ताजातिशून्यत्वम् अस्तीति प्रतिपाद्यते ।

अस्याः शंकायाः समाधानम् अद्वैतिभिः एवं क्रियते यत् अद्वैतवेदान्ते जातिरेव न स्वीक्रियते । अतः सत्ताजातेरपि अस्तित्वम् अद्वैतवेदान्तिनः न स्वीकुर्वन्ति ।

सत्ताजातिशून्यस्य सत्त्वाभावः अपि कर्तुं न युज्यते । यतः प्रतिवादिभिः जातिवादिभिः अपि सत्यत्वेन अभ्युपगम्यमानायां सत्ताजातौ सत्ताजातेः अस्वीकारात् । सत्ताजातिशून्यायाः सत्तायाः यथा सद्रूपत्वम् तथा सत्ताजातिशून्यस्य ब्रह्मणोऽपि इति ब्रह्मणः सत्यत्वेन न तत्र मिथ्यात्वलक्षणम् अतिव्याप्तम् ।

अथेयं शंका उदेति यत् असद्रूपाणाम् आकाशकुसुमानाम् अपि सद्विविक्तत्वात् तेषु अस्य लक्षणस्य अतिव्याप्तिः प्रसज्येत । अस्याः शंकायाः समाधानमिदमस्ति यत् निर्दोषप्रमाणेन यत् न सिद्ध्यति तदेव सद्विविक्तम् । स्वप्नदृष्टवस्तूनां सिद्धिः निर्दोषप्रमाणेन न सिद्ध्यति । अतः तेषां मिथ्यात्वं युज्यते । किन्तु आकाशकुसुमादीनाम् इदं रूपेण प्रतीतिगोचरत्वाभावात् तत्र नास्त्यस्य लक्षणस्य अतिव्याप्तिः ।

तत्र मिथ्यात्वस्य निर्दोषलक्षणपंचकम् मधुसूदनसरस्वत्या अवधृतम् । तथाहि -

1- सदसद्विलक्षणत्वं मिथ्यात्वम् (पदमपादः) ।

2- प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम् (प्रकाशात्मयति) ।

3- ज्ञाननिवर्त्यत्वम् मिथ्यात्वम् (प्रकाशात्मयतिः)

4- स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् (चित्सुखाचार्यः) ।

5- सद्विविक्तत्वं मिथ्यात्वम् (आनन्दबोधः) तद्यथा- ''आद्यं स्याद् पंचपाद्युक्तं ततो विवरणोदिते । चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्'' इति ।।

5-5१ ।(2) जगन्मिथ्यात्वे प्रमाणम्

जगद् मिथ्या वर्त्तते इत्येतत् अनुमान-प्रमाणेन सिद्ध्यति । तद्यथा -''अयं पटः एतत् तन्तुनिष्ठात्यन्ताभावप्रतियोगी दृश्यत्वाद् यथा घटवद्'' । एवं प्रकारेण दृश्यवस्तुमात्रस्य उपादाननिष्ठात्यन्ताभावप्रतियोगित्वाद् 'उपादाननिष्ठात्यन्ताभाव लक्षणा मिथ्यात्वसिद्धिः । यथा घटोपादानभूतायां मृत्तिकायां घटाभावः । कार्यकारणयोर्मध्ये कार्यं मिथ्या, कारणं सत्यम् इति 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रभाष्येऽपि सुस्पष्टम् । अतः ब्रह्मणः सत्यत्वं, जगतश्च मिथ्यात्वं सूत्रेऽपि स्पष्टं निर्दिष्टं बादरायणेन तथा भाष्यकारेण ।

अद्वैतसिद्धिकारैः प्रपंचमिथ्यात्वस्य स्थापनार्थम् अनुमानचतुष्टयं प्रदर्शितम् । हेतूनां चतुष्टयत्वाद् अनुमानचतुष्टयमित्युच्यते । तद्यथा विमतं मिथ्या दृश्यत्वाद्, विमतं मिथ्या जडत्वाद्, विमतं मिथ्या परिच्छिन्नत्वाद्, विमतं मिथ्या अंशित्वाद्, शुक्ति-रूप्यवद् । दृश्यशब्दस्य अर्थबोधे भामतीप्रस्थानां विवरणप्रस्थानां च मतभेदः अस्ति।

(क) विमतं मिथ्या दृश्यत्वात -

भामतीप्रस्थानामनुसारं दृश्यत्वं नाम वृत्तिव्याप्यत्वम् । अत्रायं प्रश्नः उदेति यद् वेदान्तवाक्यजन्यवृत्तिव्याप्यत्वाद् ब्रह्मणोऽपि दृश्यत्वसद्भावप्रसंगेन मिथ्यात्व-प्रसक्तिः स्यात्? अस्य समाधानमिदमस्ति यद् वेदान्तवाक्यजन्य वृत्तेः विषयभूतं ब्रह्म तु न शुद्धब्रह्म । अपितु तद् वृत्त्युपहितं ब्रह्म । अपि च ब्रह्मणः स्वप्रकाशत्वेन तात्सिद्ध्यर्थं वृत्तेरनपेक्षत्वाद् । 'यत्तदग्राह्यम्' इति श्रुत्या शुद्धब्रह्मणः वृत्ति-व्याप्यत्वनिषेधात् ।

विवरणपक्षिनां मते तु शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वम् । शुद्धब्रह्मतु न शब्दाजन्यवृत्तेर्विषयः । अपितु महावाक्यजन्यवृत्तेर्विषयः इति ब्रह्मणिः न दृश्यत्वसद्भावः ।

अथवा सप्रकारकवृत्तिविषयत्वं दृश्यत्वम् । ब्रह्म तु निष्प्रकारकज्ञानस्यैव विषयः न तु सप्रकार ज्ञानस्य इति न तत्र दृश्यत्व प्रसक्तिः ।अथवा चिदविषयत्वं दृश्यत्वम् । चिदविषयत्वं च प्रकारान्तरेण चिद्सम्बन्धित्वम् । सम्बन्धः भेदव्यापकः भवति । एकस्मिन्नेव चैतन्ये चैतन्यसम्बन्धः स्थातुं न शक्नोति । अतः ब्रह्मणि न दृश्यत्वसद्भावप्रसक्तिः ।

(ख) विमतं मिथ्या जडत्वात्' इति द्वितीयानुमाने विपक्षिभिः एषा शंका उपस्थाप्यते यत् जडत्वं नाम अज्ञानत्वम् । वृत्युपहितचैतन्यमेव ज्ञानम् । केवलचैतन्यं न ज्ञानम् । अतः केवलचैतन्यस्य जडत्वात् तत्र मिथ्यात्वप्रसंगः । अस्याः शंकायाः समाधानमिदमस्ति यत् अर्थोपलक्षितः निर्विषयकः प्रकाश एव ज्ञानम् । एतद् च अर्थोपलक्षितप्रकाशयस्य ज्ञानत्वं मोक्षदशायम आत्मनि अस्तीति तत्र अज्ञानहेतोरभावात् न मिथ्यात्वप्रसक्तिः । अथवा आत्मा स्वप्रकाशः अन्ये पदार्थाः न स्वप्रकाशाः । यत् न स्वप्रकाशं तदेव जडम् । यथा घटपटादि । अतः स्वप्रकाशरहितं जडत्वम् एव मिथ्यात्वे हेतुः ।

(ग) विमतं मिथ्या परिच्छिन्नत्वात्' इति तृतीयानुमाने परिच्छिन्नत्वं हेतुत्वेन उपन्यस्तम् परिच्छेदः त्रिधा देशतः कालतः, वस्तुतश्च । अत्यन्ताभावप्रतियोगित्वं देशतः परिच्छेदः । कालान्तरवृत्ति ध्वंस प्रतियोगित्वं कालकृतः परिच्छेदः । अन्योन्याभाव-प्रतियोगित्वमेव वस्तुकृतः परिच्छेदः । अयं च परिच्छिन्नत्वहेतुः आत्मनि नास्ति । अतः न तत्र मिथ्यात्वप्रसंगः ।

(घ) 'विमतं मिथ्या अंशित्वात् शुक्तिरूप्यवत्' इत्येवं प्रकारेण चतुर्थमनुमानं मधुसूदनसरस्वत्या उपन्यस्तम् । अस्योदाहरणमस्ति 'विमतः घटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात् पटान्तरवत्[189] । अत्र पटान्तरे अवयवित्वस्य हेतुः वर्तते एतद् तन्तौ पटान्तरस्य अन्यन्ताभावः वर्तते तथा च पटान्तरे एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगीत्वस्य साध्यः निश्चितः वर्तते । अतः पटे एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वस्य सत्वात् मिथ्यत्वं सिद्धम् । एतदेव अंशित्वस्य हेतुना अनुमानम् ।

189- चित्सुखी पृ० 69 ।

अत्र एतद् ज्ञातव्यं वर्त्तते यत् गुणादिकं पक्षीकृत्यापि मिथ्यात्वसिद्धिः सम्भवति यथोक्तम्-

''अंशिनः स्वांशकात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवं गुणादिषु'' ।।[190]

अनुमानप्रकारस्तु एवम् एतत्पटं एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिसत्वात् इतरपटवत् ।

प्रपंचस्य मिथ्यात्वे आगमप्रमाणस्याप्यस्तित्वं स्वीकरणीयम् तद्यथा - 'एकमेवाद्वितीयम्' इति श्रुतिवाक्यम् प्रपंचमिथ्यात्वे प्रमाणम् । अत्र 'एकशब्देन विजातीय वस्त्वन्तरनिषेधः, एव' शब्देन स्वगतभेदनिषेधो' अद्वितीयशब्देन तत्सजातीय वस्त्वन्तरनिषेधः । एवं प्रकारेण ब्रह्मभिन्न वस्त्वन्तरस्य निषेधात् श्रुतिरपि जगतः मिथ्यात्वं साधयति ।

5-5-2 मिथ्यात्वस्य मिथ्यात्वम्

ब्रह्मभिन्नस्य जगतः मिथ्यात्वम् अस्ति इति यत् अद्वैतवेदान्तिभिः प्रतिपाद्यते, तत्रायं प्रश्नः उदेति यत् 'जगति यत् मिथ्यात्वम् अस्ति तत् सत्यं वा मिथ्या वा?' मिथ्यात्वस्य सत्यत्वे सत्यद्वयं स्वीकरणीयम् । ब्रह्मणः, मिथ्यात्वस्य च । एवं सति 'एकमेवाद्वितीयं ब्रह्म' इत्यस्य सिद्धान्तस्य व्याघातः संजायते । अस्य विपरीतं यदि मिथ्यात्वस्य मिथ्यात्वं स्वीक्रियते तर्हि जगतः सत्यत्वापत्तिः संजायते । तथा च अनुमानम्-जगत् सत्यं मिथ्याभूतमिथ्यात्मकत्वात् आत्मवत्'' । अर्थात् वस्तुविशेषस्य मिथ्यात्वे निश्चिते तत् वस्तुविषयकं सत्यत्वं व्याहन्यते । किन्तु सत्यत्वापहारकस्य मिथ्यात्वस्य मिथ्यात्वे तस्य वस्तुनः (जगतः) सत्यत्वं साध्यते । यथोक्तं माध्वैः - ''मिथ्यात्वं यद्यबाध्यं स्यात् सदद्वैतमतक्षति । मिथ्यात्वं यदि बाध्यं स्यात् जगत्सत्यत्वमापतेत्'' । इत्थं च 'एकमेवाद्वितीयं ब्रह्म' एतत् अद्वैतमतम् अनुपपन्नं स्यात्? अस्मिन् विषये अद्वैतवेदान्तिनाम् उत्तरस्य सारः अयमस्ति यत् 'मिथ्यात्वस्य मिथ्यात्वेऽपि स्वीकृते सत्यपि मिथ्यात्वमिथ्यात्वेन जगतः सत्यत्वं न प्रतितिष्ठति । एकस्मिन्

---

190- चित्सुखी पृ० 69

कल्पितयो धर्मिणि परस्परविरुद्धयोः धर्मयोः मध्ये एकस्य मिथ्यात्वेन अपरस्य सत्यत्वं न सिद्ध्यति । (तद्यथा-'तत्र हि विरुद्धयोः धर्मयोः एकतरमिथ्यात्वे अपरसत्यत्वं, यत्र निषेध्यतावच्छेदकम् उभयवृत्तिः न भवेत्, यथा च परस्परविरह-रूपयोः परस्परात्यन्ताभावरूपयोः वा रजतत्व-रजतत्वाभावयोः शुक्तौ यथा वा परस्पर विरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव ।[9]

### 5-5-3 मिथ्यात्वस्य मिथ्यात्वनिरसनम्

जगतमिथ्यात्वस्य मिथ्यात्वे अपि प्रपंचसत्यत्वं न साध्यते । यतः प्रपंचमिथ्यात्वस्य प्रपंचवत् मिथ्यात्वेन समसत्ताकत्वात् । प्रपंचस्य सत्यत्वे प्रपंच मिथ्यात्वनिवृत्तिः न सम्भवति । येन प्रपंचमिथ्यात्वनिवृत्तिः तेनैव प्रपंचस्यापि निवृत्ति जायते । धर्मिणः अभावे धर्मः न तिष्ठति । तद्यथा - 'एकस्मिन्धर्मिणि कल्पितयोः गोत्वाश्वत्वयोः परस्परविरुद्धधर्मयोर्मध्ये गोत्वस्य मिथ्यात्वेऽपि अश्वत्वस्य सत्यत्वं न प्रतितिष्ठते । तत्र गजत्वादेरपि स्थितिसम्भवात् । अतः एकस्मिन् धर्मिणि विरुद्धयोः धर्मयोः मध्ये एकस्य मिथ्यात्वे प्रतिपादिते सति अपरस्य सत्यत्वं न सिद्ध्यति ।

परस्परविरुद्धधर्मयोर्मध्ये एकस्य मिथ्यात्वे अपरस्य सत्यत्वं तत्रैव भवति यत्र परस्परविरुद्धधर्मिणोः निषेधमूलीभूतधर्मोऽपि विभिन्नः स्यात् । शुक्तौ रजतं नास्ति'- इत्यत्र रजतत्वं रजतत्वाभावं च इति परस्परविरुद्धौ धर्मौ एकस्मिन् मूल धर्मिणि न वर्तेते । अतः तयोः मध्ये एकस्य निषेधे अपरस्य सत्यत्वं स्यात् । किन्तु 'जगन्मिथ्या' इत्यत्र मिथ्यायाः असत्यत्वेऽपि जगतः सत्यत्वं न सिद्ध्यति ।

अद्वैतिनां मतानुसारं मिथ्यात्वस्य मिथ्यात्वे दृश्यत्वं हेतुः । दृश्यत्वरूपः अवच्छेदकः धर्मः यथा मिथ्यात्वे वर्तते तथा जगत्यपि । अतः असौ उभयवृत्तिः । यत्र निषेध्यतावच्छेदकम् उभयवृत्तिर्भवति तत्रैव विरुद्धयोर्धर्मयोर्मध्ये एकतरस्य मिथ्यात्वे सिद्धे सति अपरस्य सत्यत्वम् सिद्ध्यति । अत्र तु निषेध्यतावच्छेदकं दृश्यत्वादि एकमेव ।

अपरं च प्रपंचमिथ्यात्वस्यापि प्रपंचवत् मिथ्यात्वेन समसत्ताकत्वात् प्रपंचस्य सत्यत्वं न सिद्ध्यति । प्रपंचसत्वे प्रपंचमिथ्यात्वस्य निवृत्तिः न सम्भवति । धर्मिणः प्रपंचस्याभावे प्रपंचस्य सत्यत्वं क्व तिष्ठेत् । प्रपंच-तन्मिथ्यात्वयो एकेनैव ब्रह्मज्ञानेन प्रपंचे-बाधिते सति प्रपंचधर्मस्य सत्यत्वमिथ्यात्वादिकस्यापि बाधो जायते ।

---

9।-

कल्पितयो र्धर्मिणि परस्परविरुद्धयोः धर्मयोः मध्ये एकस्य मिथ्यात्वेन अपरस्य सत्यत्वं न सिद्धयति । (तद्यथा-'तत्र हि विरुद्धयोः धर्मयोः एकतरमिथ्यात्वे अपरसत्यत्वं, यत्र निषेध्यतावच्छेदकम् उभयवृत्तिः न भवेत्, यथा च परस्परविरहरूपयोः परस्परात्यन्ताभावरूपयोः वा रजतत्व-रजतत्वाभावयोः शुक्तौ यथा वा परस्पर विरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव [19]।

5-5-3 मिथ्यात्वस्य मिथ्यात्वनिरसनम्

जगतमिथ्यात्वस्य मिथ्यात्वे अपि प्रपंचसत्यत्वं न साध्यते । यतः प्रपंचमिथ्यात्वस्य प्रपंचवद् मिथ्यात्वेन समसत्ताकत्वात् । प्रपंचस्य सत्यत्वे प्रपंच मिथ्यात्वनिवृत्तिः न सम्भवति । येन प्रपंचमिथ्यात्वनिवृत्तिः तेनैव प्रपंचस्यापि निवृत्ति जायते । धर्मिणः अभावे धर्मः न तिष्ठति । तद्यथा -'एकस्मिन्धर्मिणि कल्पितयोः गोत्वाश्वत्वयोः परस्परविरुद्धयोर्मध्ये गोत्वस्य मिथ्यात्वेऽपि अश्वत्वस्य सत्यत्वं न प्रतितिष्ठते । तत्र गजत्वादेरपि स्थितिसम्भवात् । अतः एकस्मिन् धर्मिणि विरुद्धयोः धर्मयोः मध्ये एकस्य मिथ्यात्वे प्रतिपादिते सति अपरस्य सत्यत्वं न सिद्धयति ।

परस्परविरुद्धधर्मयोर्मध्ये एकस्य मिथ्यात्वे अपरस्य सत्यत्वं तत्रैव भवति यत्र परस्परविरुद्धधर्मिणोः निषेधमूलीभूतधर्मोऽपि विभिन्नः स्यात् । शुक्तौ रजतं नास्ति'-इत्यत्र रजतत्वं रजतत्वाभावं च इति परस्परविरुद्धौ धर्मौ एकस्मिन् मूल धर्मिणि न वर्तेते । अतः तयोः मध्ये एकस्य निषेधे अपरस्य सत्यत्वं स्यात् । किन्तु 'जगन्मिथ्या' इत्यत्र मिथ्यायाः असत्यत्वेऽपि जगतः सत्यत्वं न सिद्धयति ।

अद्वैतिनां मतानुसारं मिथ्यात्वस्य मिथ्यात्वे दृश्यत्वं हेतुः । दृश्यत्वरूपः अवच्छेदक धर्मः यथा मिथ्यात्वे वर्तते तथा जगत्यपि । अतः असौ उभयवृत्तिः । यत्र निषेध्यतावच्छेदकम् उभयवृत्तिर्भवति तत्रैव विरुद्धयोर्धर्मयोर्मध्ये एकतरस्य मिथ्यात्वे सिद्धे सति अपरस्य सत्यत्वम् सिद्धयति । अत्र तु निषेध्यतावच्छेदकं दृश्यत्वादि एकमेव ।

अपरं च प्रपंचमिथ्यात्वस्यापि प्रपंचवद् मिथ्यात्वेन समसत्ताकत्वात् प्रपंचस्य सत्यत्वं न सिद्धयति । प्रपंचसत्वे प्रपंचमिथ्यात्वस्य निवृत्तिः न सम्भवति । धर्मिणः प्रपंचस्याभावे प्रपंचस्य सत्यत्वं क्व तिष्ठेत् । प्रपंच-तन्मिथ्यात्वयो एकेनैव ब्रह्मज्ञानेन बाधो जायते । प्रपंचे-बाधिते सति प्रपंचधर्मस्य सत्यत्वमिथ्यात्वादिकस्यापि बाधो जायते ।

---

[19]- अ०सि० रा० 213

प्रपंचमिथ्यात्ववत् प्रपंचसत्यत्वमपि प्रपंचवत् व्यावहारिकम् । एवं प्रकारेण मिथ्यात्वस्य मिथ्यात्वे स्वीकृते सत्यपि 'एकमेवादिवतीयं ब्रह्म' ब्रह्मसत्यं जगन्मिथ्या' इत्यादि श्रुतीनाम् अद्वैतपरकं प्रामाण्यं न व्याहन्यते ।।

प्रपंचस्य निषेधेन प्रपंचाभावः तथा प्रपंचाभावस्य निषेधेन प्रपंचः नावशिष्यते इति यथा दृश्यं नास्तीत्यत्र एकस्य निषेधेन प्रपंचस्य तथा प्रपंचाभावस्य उभयोरेव निषेधः संजायते ।

अस्य विपरीतम्- 'रजतं नास्ति' अत्र निषेध्यं- रजतं, निषेध्यतावच्छेदकं च रजतत्वम् । अत्र रजताभावस्य निषेधः कर्तुं न शक्यते यतः निषेध्यतावच्छेदकं रजत्वं (धर्मः) तत्र नास्ति। एवमेव 'रजताभावो नास्ति' अत्र निषेध्यतावच्छेदकं/ रजताभावत्वम् अनेन रजतस्य निषेधः कर्तुं न शक्यते । यतः रजते रजताभावत्वं कदापि न तिष्ठति । एतदेव कारणं यत् एतादृशेषु स्थलेषु प्रतियोगिनः निषेधः अभावः अभावस्य निषेधात् प्रतियोगी अवशिष्यते । अस्य/ मतस्य पुष्टिः वार्तिककारेणापि कृता । यथा -

"निवृत्ताज्ञानतत्कार्ये लब्धा आत्मन्यथात्मनि ।
निषेध्यहेतौ प्रध्वस्ते निषेधोऽपि निवर्तते ।।
प्रमातृत्वादिना यावत्किंचिदत्र विवक्षितम् ।
तदभावश्च तत्सर्वं नैतीति प्रतिषिध्यते ।। [192]

5-5-4 अजातवादः

जगतः अलीकतायाः सन्दर्भे ये अनेके मतवादाः प्रचलिताः सन्ति, तेषु अजातवाद अपि एकः अस्ति । अन्ये सन्ति सृष्टिदृष्टिवादः, दृष्टिसृष्टिवादश्च । जगत् शशशृंगवत् अलीकम् । जगत् अलातचक्रवत् गन्धर्वनगरवत्, इन्द्रजालवत् अलीकम् । अजातवादस्यार्थः अयमस्ति यत् जगत् नासीत्, नास्ति न भविष्यति । जगतः सत्ता नास्ति । अलीकत्वमेव जगतः स्वरूपम् । जीवस्य तथा जगतः आपातप्रतीतिः प्रातिभासिकी वर्तते जीवेश्वरयोः विभागः नास्ति आकाशवत् आत्मतत्वमपि अविभाज्यं वर्तते ।

---

192- बृ०उ० वा० पृ० 1025

माण्डूक्यकारिकायां गौडपादेन अजातवादस्य यत् प्रतिपादनं कृतं तदनुसारं जीवस्य उत्पत्तिर्न भवति । तस्य जन्माभावे न बहुत्वं युज्यते नच कर्मफलत्वम् । कर्तृभोक्तृरूपेण जीवानां या बहुत्वप्रतीतिः भवति सा स्वप्नदृश्यवद् अथवा इन्द्रजालवत् मिथ्या । तद्यथा -

''न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतद् तदुत्तमं सत्यं यत्र किंचिन्न जायते ।।
धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।
जन्म मायोपमं तेषां सा च माया न विद्यते ।। 193
''यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ।।''

आत्मनः जीवस्य चानन्यत्वम् अभेदश्च वर्तते । अतः जीवानां नानात्वं असमंजसम् । तथा हि - जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते । नानात्वं निन्द्यते यच्च तस्यैव हि समजंसम् ।।'' अत्र एषा शंका उदेति यत् यदि आत्मनः जीवस्य चानन्यत्वं /नानैकत्वमस्ति तर्हि आत्मनः अतिरिक्तं जीवशब्दस्य प्रयोगः एव कथं भवति? अस्य उत्तरमिदमस्ति यत् आत्मा अर्थात् ब्रह्म स्वमायया आत्मानं जीवत्वेन कल्पयति । आत्मा एव जीवभावस्य कल्पनां करोति । तद्यथा - कल्पयत्यात्मनात्मानमात्मा/ मायया ।(2.12) आत्मा देवः स्व (क)

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।। (2-16)
अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।।(2.17)
प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः ।। (2.19)
मायैषातस्य देवस्य यया सम्मोहितः स्वयम् ।।'' (2.19)

गौडपादः कथयति यत् अखण्डम् आत्मतत्वमेव परमार्थिकंसत्यम् । परमार्थसत्यं तदस्ति यस्य न प्रलयः भवति नचोत्पत्तिः । नच बद्धो भवति नच साधकः, न मुक्तो भवति नच मोक्षुः । तद्यथा -

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वैमुक्त इत्येषा परमार्थता ।।'' 194

---

193- (क)अद्वैतवेदान्त मे तत्व और ज्ञान(उर्मिला शर्मा) पृ0 123
(ख) अद्वैतवेदान्त- राममूर्तिशर्मा- 141- (ग) मा0का0 3/48,41 71
194- गौ का0 2-32 (क) आत्मा देवः स्वमायया (पाठभेद)

आत्मा अजः अस्तीति सत्यम् तथापि ये जनाः अस्यात्मनोऽपि जन्मकल्पनां कुर्वन्ति तैः इदं ज्ञातव्यं यत् यः पदार्थः अजन्मा मरणरहितः च अस्ति तस्य जन्म कथं भवेत्? अमृतस्य मर्त्यत्वं मर्त्यस्य चामृतत्वं कदापि न संभवति । तद्यथा - 'न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा । प्रकृतेरन्यथाभावो न कथंचिद् भविष्यति ।।[95] पंचदश्याः चित्रदीपप्रकरणे विद्यारण्य मुनिरपि एवं कथयति यत् चित्रस्थानि वस्त्राणि यथा वस्त्राभासाः वर्तन्ते (यतः वस्तुतः भित्तिरेव तत्सर्वम्) न तु वस्तुतः वस्त्राणि तथैव एकमात्रमद्वयतत्त्वमेव सत्यम् । अद्वयतत्त्वस्य भित्तौ ईश्वरजीवजगद्रूपेण यत् किंचिद् दृश्यते तत्सर्वम् कल्पनामात्रम् । -

तद्यथा -

चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् ।
चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ।।

गौडपादाचार्यस्य उपर्युक्तानां कथनानां विवेचनेन एतत्स्पष्टं भवति यत् शंकराचार्यात्पूर्वम् अजातवादः प्रवर्तितः अभवत् । गौडपादाचार्यनिरूपितस्य अजातवादस्य प्रभावः शंकराचार्यस्य अद्वैतवादे स्वाभाविकरूपेण दृश्यते किन्तु उभयोराचार्ययोः सिद्धान्तेषु किंचित् वैषम्यम् उपलभ्यते । अजातवादविषयेऽपि किंचित् वैषम्यं वर्तते । शंकराचार्यस्य विवर्तवादः सुप्रसिद्धो वर्तते । अतः एतत् कथयितुं शक्यते यत् अजातवादस्य शंकराचार्य वाचस्पतिमिश्र प्रभृतिभिः उपेक्षा न कृता किन्तु तस्य प्रकारान्तरेण समाजंस्यं कृतम् ।

### 5-5-5 दृष्टिसृष्टिवादः

दार्शनिकचिन्तनस्य प्रमुखविषयेषु जगतः स्वरूपनिर्णयोऽप्यन्यतमो वर्तते । अस्मिन् सन्दर्भे स्वभावतः एव एतादृशाः प्रश्नाः समुदिताः भवन्ति यथा जगतः उद्भवः - कस्माज्जातः ? किमस्ति अस्य कारणम्? कोऽस्त्यस्योत्पादकः उद्भावकौ वा? जगत् सत्यम् अस्ति मिथ्या वा? ब्रह्मणा सह अस्ति कश्चित् अस्य सम्बन्धो न वा? जगतः अभावे जीवस्य किं स्थानम्? जीवब्रह्मणोः ऐक्ये जीवस्य मोक्षे वा जगतः स्थितिः कीदृशी? एतेषाम् अन्येषां च प्रश्नानां समाधानाय बहोः कालात् बहुभिः

---

195- गौ का 3-2।

ऋषिभिः मुनिभिः शास्त्रप्रवर्तकैः भाष्यकारैः व्याख्याकारैश्च सततं प्रयत्नाः कृताः अनेके च सिद्धान्ताः समुद्भाविताः । किन्तु तेषु सिद्धान्तेष्वपि जगतः कारणताविषये आचार्याणां तथैव ऐकमत्यं नास्ति, यथा तेषाम् अन्येष्वप्यनेकेषु दार्शनिकमतवादेषु न दृश्यते । नैकेषु एतादृशेषु जगत्स्वरूपपरकेषु अथवा जगद्-कारणतासम्बन्धेषु सिद्धान्तेषु प्रकाशात्मयतिप्रभृतिभिः आचार्यैः प्रवर्तितः 'दृष्टिसृष्टिवादः' अपि एकोऽस्ति । अस्यैव यद् किंचिद् विवेचनमत्र प्रस्तूयते ।

दृष्टिसृष्टिवादस्य अद्वैतवेदान्तीय-विचारपरम्परायाः आधारः अपि भागवत्-पादशंकराचार्यस्य 'ब्रह्म सूत्रभाष्यम्' एव अस्ति । 'ब्रह्मसत्यं जगन्मिथ्या' जीवो ब्रह्मैव नापरः'' इत्यादि-श्रुतिवाक्यानां भाष्योपभाष्येषु विभिन्नैः आचार्यैरपि विभिन्नाः सिद्धान्ताः प्रतिपादिताः ।

शांकरोत्तरवर्तिभिः आचार्यैः शांकरभाष्ये समुपलब्धानाम् विचाराणां व्याख्यानावसरेषु ये वादाः औपचारिकरूपेण प्रवर्तिताः, तेषु वाचस्पतिमिश्रस्य अवच्छेदवादः, प्रकाशात्मयतेः प्रतिबिम्बवादः सुरेश्वराचार्यस्य आभासवादः, प्रकाशानन्द-यते 'दृष्टिसृष्टिवादः' चित्सुखाचार्यस्य सृष्टिदृष्टिवादश्च प्रमुखाः वर्तन्ते । प्रायः एते सर्वे एव वादाः जगतः मिथ्यात्वं ब्रह्मणः जीवस्य च नापरत्वं प्रतिपादयन्ति । किन्तु मिथ्यात्वस्य व्याख्याने तथा जगतः कारणत्वविषये, एतेषां मतभेदाः वर्तन्ते । माध्यमिकबौद्धानां शून्यवादः, योगाचारबौद्धानां विज्ञानवादः, सर्वज्ञात्ममुनेः एकजीववादः अपि अस्मिन् सन्दर्भे उल्लेखनीयाः वर्तन्ते, किन्तु अत्र दृष्टि-सृष्टिवाद एवास्त्यस्माकं प्रमुखतया विचारविषयः ।

अथ कोऽयं दृष्टिसृष्टिवादः? अस्य प्रश्नस्य स्वरूपबोधार्थं तथा निर्णयार्थं मधुसूदनसरस्वत्या अद्वैतसिद्धौ समुद्भावितानि समालोचितानि च लक्षणानि सर्व-प्रथमं द्रष्टव्यानि भवन्ति[1]। मधुसूदनसरस्वतत्या अद्वैतसिद्धौ जगतः मिथ्यात्वसिद्ध्-यर्थं दृष्टिसृष्टिवादस्यापि उल्लेखः न कृतः । स कथयति यत् 'शुक्तिरूप्यस्वप्नादिवद् दृष्टिसृष्ट्यन्यथानुपपत्यापि जगतो मिथ्यात्वसिद्धिः । 'अथ केयं दृष्टिसृष्टिः' इत्यस्य प्रश्नस्य समाधानार्थं मधुसूदनसरस्वती पूर्वपक्षरूपेण सिद्धान्तपक्षत्वेन च दृष्टिसृष्टिशब्दस्य दशसंख्याकानि व्याख्यानानि निर्वचनानि वा निर्दिशति तेषां स्वरूपं विश्लेषणं च निम्नलिखितरूपेण निर्दिष्टुं शक्यते -

(1) अद्वैतसिद्धिः पृ. 462

अथ केयं दृष्टिसृष्टिः (1) दृष्टिरेव सृष्टिरिति वा, (2) दृष्टिव्यतिरिक्त-सृष्ट्यभावो वा, (3) दृष्टिव्यतिरेकेण सृष्ट्यभावो वा (4) दृष्टिसामग्रीजन्यत्वं वा (5) दृष्टिसमानकालीनसृष्टिर्वा, (6) दृष्टिसमानसत्ताकसृष्टिर्वा, (7) सदसद्विलक्षणत्वं वा (8) त्रिविधसत्त्वबहिर्भूतत्वे सत्यसद्विलक्षणत्वं वा, (9) अज्ञातसत्त्वाभावो वा, (10) ज्ञातैकसत्त्वं वा ? आद्ये, वृत्तिरूपा चैतन्यरूपा वा दृष्टिरभिमता । प्रथमे चरमवृत्तिविषयब्रह्मणोऽपि दृष्टिसृष्ट्यापत्तिः द्वितीये, सर्वदाऽपि सृष्ट्यापत्तिः । न द्वितीयः, चैत्रेण सृष्टः मया दृष्ट इति वैलक्षण्येन व्यवहारानुपपत्तिः । न तृतीयः, 'ज्ञातो घटः, न ज्ञानमि'ति अनुभवविरोधात् । न चतुर्थः, एकसामग्री-प्रसूतत्वेन घटादिदृष्ट्यभिन्नत्वेन अनन्तरोक्तदोषात् । न पंचमः, शब्दादिज्ञानसमान-कालीन(कालोत्पन्न) घटादौ सिद्धसाधनात्, तद्वदन्यत्रार्थान्तरतापत्तेश्च । न षष्ठः उभयसत्त्वेऽप्युपपत्तेः सिद्धसाधनात् । न सप्तमः, अस्यैवमिथ्यात्वेन तत्साधनायैव तदुपन्यासानुपपत्तेः । नाष्टमः, त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्याप्यन्तर्भावेन दृष्टिसृष्टित्वपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः । न नवमः, तुच्छसाधारण्यात् । न दशमः, सुखादौ सिद्धसाधनम्, तद्वदन्यत्राप्यर्थान्तराच्चेति चेत् । दृष्टिरेव सृष्टिरिति ।

उपर्युक्तप्रकारेण विकल्पितेषु नवमं दशमं च पक्षं विशेषणान्तरयोगेन विशेषयन् सिद्धान्तमाह - न, दोषाप्रयुक्तत्व निबन्धनस्य ज्ञातैकसत्त्वस्याज्ञातसत्त्वा-भावस्य वा, प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैकसत्त्वस्य वा, दृष्टन्तरावेद्यत्वे सति ज्ञातैक-सत्त्वस्य वा विवक्षितत्वात् । तथा च न सुखाद्यंशे सिद्धसाधनम्, तद्वदन्यत्रार्थान्तरं वा ।। सिद्धान्त पक्षस्यायं सारः अस्ति यत् ज्ञातैकसत्त्वं नाम स्वज्ञानव्याप्यत्वम् अर्थात् यदा यदा विषयः तदा तदा ज्ञानम् ।

अस्य सिद्धान्तपक्षस्य सन्दर्भे एषा शंका उदेति यत् - 'यदि दृष्टेः समान-मेव सृष्टिः अवस्थायिनी वर्त्तते, तर्हि जीवः, ईश्वरः विशुद्धचैतन्यम् इत्येतेषाम् यत् अनादित्वप्रतिपादनं क्रियते, तस्य सिद्धिः कथं सम्भवति? अस्याः शंकायाः समाधानम् एवं क्रियते यत् दृष्टिसृष्टिपक्षत्वे सत्यपि प्रपंचः कारणरूपेण स्थायी वर्त्तते । अतः यत्र कुत्र जीवेश्वरप्रभृतीनाम् अनादित्वं प्रतिपादितं, तत्रापि अनस्यूतकारणत्वम् समीक्ष्यैव तथोक्तम् ।

सिद्धान्तबिन्दौ मधुसूदनसरस्वती दृष्टिसृष्टिवादविषये यत् कथयति, तदपि द्रष्टव्यं वर्त्तते । तद्यथा - 'अज्ञानोपहितं बिम्बचैतन्यम् ईश्वरः, अज्ञानप्रतिबिम्बितचैतन्यं जीवः इति वा अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः अज्ञानोपहितं जीवः इति वा मुख्यो वेदान्तसिद्धान्तः 'एकजीववादाख्यः' । इममेव 'दृष्टिसृष्टिवादम्' आचक्षते । अस्मिन् पक्षे जीव एव स्वाज्ञानवशात् जगदुपादानं निमित्तं च । दृश्यं सर्वं प्रातीतिकम् । देहभेदात् च जीवभेदभ्रान्ति । एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहित श्रवणमनन दार्ढ्यात् आत्मसाक्षात्कारे सति मोक्षः[196] ।

दृष्टिसृष्टिवादस्य प्रतिपादनं गौडपादकारिकायां योगवासिष्ठे तथा संक्षेपशारीरकेऽपि दृश्यते । तद्यथा - 'मिथ्यादृष्ट्या एवेमाः सृष्टयो मोहसृष्टयः स्वप्नवद्दीर्घरूप्यो दृष्टिसृष्ट्या पुनः पुनः । सर्वाण्येव विकिरेयमविद्या परिवर्त्तते[197] ।। तथा माण्डूक्यकारिकायाम् "स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा । तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः"[198] ।। वैतथ्यं सर्वभावानां स्वप्नमाहुर्मनीषिणः । अन्तः स्थानात्तु भावानां[198(क)]
संवृतत्वेन हेतुना ।

संक्षेपशारीरके सर्वज्ञात्ममुनिना अपि जाग्रत पदार्थानां मिथ्यात्वं स्वप्नदृष्टान्तेन प्रतिपादितम् । तद्यथा - "आबोधतः सकलमेव हि सत्यमिथ्या, भ्रान्तिप्रमाणविनिवर्त्यनिवर्तकत्वम् । स्वप्नेऽपि दृष्टमिदमेवमिहापि जाग्रतकाले भवत्वखिलमापरमात्मबोधात्[199]"

दृष्टिसृष्टिवादविषये ये अन्ये आक्षेपाः यत्र तत्र समुद्भाविताः दृश्यन्ते तेषु केचित् निम्नलिखिताः सन्ति -

(1) यदि दृष्टिसृष्टिवादः आश्रीयते, तर्हि एषा शंका उदेति यत् ज्ञानात्पूर्वं घटादेरसत्वात् घटेन सह इन्द्रियसन्निकर्षः कथं स्यात्? अस्याः शंकायाः समाधानम् एवं क्रियते यत् प्रतिकर्मव्यवस्थायाः उपपादनं मन्दाधिकारिणां कृते वर्त्तते, न तु ज्ञानिनां कृते । (2) दृष्टिसृष्टिवादानुसारं विषयाभावे सति ज्ञानस्यापि अभावः प्रसज्यते । एवं सति च 'इदं रजतम्' इत्यत्र भ्रमसमये अधिष्ठानस्य ज्ञानं कथं सम्भवेत्? अस्य प्रश्नस्य समाधानमिदमस्ति यत् भ्रमकाले शुक्तित्वरूप अधिष्ठानस्य असत्वेऽपि अज्ञानस्य अवस्थितौ तत्र कश्चित् विरोधः नास्ति । यतः दृष्टिसृष्टिवादानुसारं

---

196- सिद्धान्तबिन्दुः - पृ० 92 197- यो० वा० 3 ।14-56
198- मा०का० 2-31 199- सं० शा० 2-22
(क) मा.का. 2.1

भातिपदार्थाः यथा ज्ञानस्य विषयाः भवन्ति, तथैव अज्ञानस्यापि विषयाः भवन्ति । तद्यथा - 'नहि सत्ता काल इव सत्ताविरह कालेऽपि अज्ञानं विरुध्यते ।200
(3) दृष्टिसृष्टिवादे अंगीकृते सति 'इदं रूप्यम्' 'नेदं रूप्यम्' इति ज्ञानयोः भिन्न-विषयत्वेन बाध्यबाधकभावः कथम् उत्पद्यते ? अस्योत्तरम् इदमस्ति यत् भिन्न-विषयत्वेऽपि विषययोः सारूप्यात् स्वप्नबाध्यबाधकयोरिव सदृशविषयकज्ञानानामपि बाध्यबाधकोपपत्तिः संभवति । (4) दृष्टिसृष्टिपक्षे रजतवत् रजताभावेऽपि मिथ्या अतः प्रातिभासिकरजतस्य व्यावहारिकरजताभावद्वारा बाधः कथं भवेत्? बाधश्च अनुभवसिद्धः । अस्य प्रश्नस्य समाधानं इदमस्ति यत् यथा स्वप्नपदार्थानां स्वप्नपदार्थैः बाधः अनुभवसिद्धः यथा वा व्यावहारिकस्य तमसः व्यावहारिकात् प्रकाशात् बाधः संभवः, तथैव प्रातिभासिकस्य रजतस्य प्रातिभासिकात् रजताभावात् बाधः संभवति ।

(5) यदि दृष्टिसृष्टिवादः स्वीक्रियेत तर्हि सुषुप्तिप्रलयादौ जीवब्रह्मादि विभागस्य प्रतीयमानत्वं कथं सिद्ध्येत्? तथा सति च तुरियावस्थायां जीवस्य लयो ब्रह्मणि कथं संभवेत्? अस्योत्तरम् इदमस्ति यत् सुषुप्तौ कार्यरूपेण संस्काराणाम् अभावेऽपि कारणरूपेण संस्काराणां स्थितिः वर्त्तते एव । अतः सुषुप्ति-अवस्थातः तुरियावस्थायां ब्रह्मणि विलयार्थम् जीवस्य उत्थानम् अनुपपन्नं नास्ति ।

(6) दृष्टिसृष्टिरपि दृष्टिसृष्टिरूपत्वात् (अर्थात् दृष्टिसृष्टिरपि दृष्टिसृष्टित्वेन) घटादेः अदृष्टिसृष्टित्वापत्तिः स्यात्?

अस्याः शंकायाः समाधानमिदमस्ति यत् ज्ञानस्य ज्ञेयत्वेऽपि विषयस्य अज्ञेयत्वाभाववत् दृष्टिसृष्टेः दृष्टिसृष्टित्वेऽपि घटादेरपि दृष्टिसृष्टित्वोपपत्तिः सम्भवति ।

---

200- अद्वैतसिद्धिः पृ0 462

(7) दृष्टिसृष्टिपक्षे समादृते सति प्रत्यभिज्ञायाः विरोधो जायते, यतः पूर्वकाले प्रतीतस्य वस्तुनः सत्ता वर्तमानकाले भवितुं न शक्नोति ।

न चैषा भ्रान्तिः दीपादौ परिणामभेदस्येव इह बाधकस्याभावात्? भिन्नकालानां आत्मभिन्नानां प्रत्यभिज्ञा भ्रान्तिः । आत्मनि एकव्यतिरेक-कालावच्छेदेन घटादौ प्रत्यभिज्ञा न भ्रान्तिः । एककालावच्छिन्नघटादौ आत्मनि चाभेदे बाधकाभावात् । अस्य प्रश्नस्य समाधानमिदमस्ति यत् आत्मनः भिन्नाः ये घटादि पदार्थाः सन्ति तेषां प्रत्यभिज्ञाऽपि भ्रमरूपा एव वर्तते । अतः दृष्टि-सृष्टिवादस्य प्रत्यभिज्ञया सह विरोधो नास्ति ।

(8) यदि दृष्टिसृष्टिवादः स्वीक्रियते तर्हि 'सोऽयं देवदत्तः' इति दृष्टान्तम् आश्रित्य तत्वमस्यादि वाक्ये जहदजहल्लक्षणया ऐक्यस्थापनम् असंगतं स्यात्? यतः चैतन्यगत-भेदवत् अभेदोऽपि दृष्टिसृष्टिरूपत्वात् बाधितः जायते ।

अस्या शंकायाः समाधानमिदमस्ति यत् यद्यपि धर्मवत् धर्म्यभेदोऽपि बाधित एवेति जहदजहल्लक्षणाऽपि न युज्यते, तथापि यदा धर्मभेदो बाधान्न गृहीतः, किन्तु धर्म्यभेद एव, तदा 'सोऽयमित्यादौ जहदजहल्लक्षणासंभवेन दृष्टान्त-त्वोपपत्तिः वर्तते एव ।

(9) दृष्टिसृष्टिवादे स्वीकृते सति साक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभा-वात् तत्वज्ञानत्वाभावेन ततो मुक्तिर्नस्यादिति? अस्य समाधानमिदमस्ति यत् अबाधित-विषयत्वेनैव तत्वज्ञानत्वोपपत्तिः तस्य च दृष्टिसृष्टित्वे ऽप्यक्षतेः ।

(10) दृष्टिसृष्टिवादे स्वीकृते सति 'ध्रुवा द्यौर्ध्रुवा पृथ्वी ध्रुवासः पर्वता इमे ध्रुवं विश्वमिदं जगदित्यादि श्रुतिविरोधः स्यात्? अस्य समाधानमिदमस्ति यत् अनित्य-तावादिभिरपि ध्रुवत्वस्यान्यथानयने आवश्यके दृष्टिसृष्टिप्रक्रियाप्रतिमाद्यनुरोधेन आकल्प-संतानाविच्छेदपरत्वमेवोक्तम् । अन्यथा 'ध्रुवो राजेत्यादावगतेः । अर्थात् ध्रुव पदस्य अर्थः - 'चिरकालस्थायिता' इत्यस्ति नतु नित्यता ।

(11) ननु सुषुप्तौ प्राणादि प्रपंचस्य सत्वात् किमर्थं पुनः सृष्टिरिति वाच्यम् नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्' इत्यादिना सुषुप्तौ सकलकार्यप्रपंच-लयश्रवणात् ।

अस्योत्तरमिदमस्ति यत्' हिता नाम नाड्यो हृदयात्पुरी ततमभिप्रतिष्ठन्ते, नाभिः

प्रत्यवसृत्य पुरीतति शेते' इत्यादिना सुषुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्वं प्रतिपाद्यते । ननु सुषुप्तिकालेऽपि वाक्यान्तरविरोधात् । प्राक् सत्वमात्रेण च क्रमाभिधानपर्याप्तेः । '

(12) यदि दृष्टिसृष्टिवादः स्वीक्रियते तर्हि 'यथोर्णनाभिः, यथाग्नेः क्षुद्रा विस्फुलिंगा, सर्वे लोका' इत्याद्युक्तयः अयुक्ताः स्युः? यतः दृष्टिसृष्टिवादानुसारं लूतायां तन्तोः कारणत्वम् अग्नौ च विस्फुलिंगानां जनकत्वं न संभवति । अस्य समाधानम् इदमस्ति यत् ऊर्णनाभ्यादेस्तन्त्वादिजन्मोक्तिस्तु लौकिक भ्रमसिद्धकार्य-कारणभावप्रसिद्धिम् अनुरुध्य सर्वलोकादिसृष्टिश्च तत्तद्बष्टिव्यक्तिमभिप्रेत्य उच्यते ।

(13) दृष्टिसृष्टिवादे एकः एव जीवः जगतः सृजनं करोति । अतः दृष्टिसृष्टिवादे अंगीकृते सति एकविधात् कारणात् विविधस्य जगतः सृजनं कथं संभवति? अस्य प्रश्नस्य समाधानमिदमस्ति यत् दृष्टिसृष्टिवादेऽपि एकः जीवः जगतः रचयिता इति न प्रतिपाद्यते । अपितु येन अज्ञानेन जीवः विशिष्टः भवति तस्य विशेषणीभूतस्य अज्ञानस्य वैचित्र्यमेव जगति परिलक्ष्यते । न चाविद्या सह कृत जीवकारणत्वे जगद्वैचि-त्र्यानुपपत्तिः, जगदुपादानस्य विचित्रशक्तित्वात् ।''

अस्य कथनस्य समर्थनं योगवासिष्ठवार्तिकादि ग्रन्थेष्वपि दृश्यते । तथाहि - 'अविद्यायोन्यो भावाः सर्वे मी बुद्बुदा इव । क्षणमुद्भूय गच्छन्ति ज्ञानैक जलधौ लयम्'' इत्यादि । तस्मात्ब्रह्मातिरिक्तं कृत्स्नं द्वैतजातं ज्ञानैकस्वरूप समा-विद्यकमेवेति प्रातीतिकसत्वं सर्वस्येति । विश्वं रज्जुसर्पादिवत् प्रातिभासिकमात्रम् । सुप्तोत्थितस्य जीवस्य दृष्टिरेव सृष्टिः ।

अत्र एतदपि ज्ञातव्यं वर्त्तते यत् 'दृष्टिसृष्टिवादस्य सम्बन्धे अद्वैतवेदान्तिनां परस्परं मतैक्यं नास्ति, । एकं मतमिदमस्ति यत् जाग्रतकालिकघटादिज्ञानानां स्थिति-रपि स्वप्नकालिक पदार्थानां स्थितेः समाना । अतः जाग्रदकालिकघटादि जाग्रति-कपदार्थानाम् अनुभवः अपि चाक्षुषः नास्ति । यतः अर्थसृष्टे पूर्वं अर्थैः सह इन्द्रियाणां सन्निकर्षः नास्ति ।

अस्य मतस्य विरोधे विपक्षिभिः एषा शंका उद्भाव्यते यत् यदि जागतिकपदार्थाः कल्पिताः सन्तीति मन्यते, तर्हि तेषां कल्पयिता कः ? अविद्या-पाधिरहितः आत्मा अथवा अविद्योपहितः आत्मा?

प्रथमः पक्षः न युक्तः । मोक्ष-प्रपंचयोर्मध्ये भेदाभावस्य प्रसक्तत्वात् । द्वितीय-पक्षोऽपि नाश्रयणीयः । यतः अविद्या स्वतः कल्पिता, अविद्यायाः कल्पनातः पूर्व-मेव अविद्योपहितस्य आत्मनः अस्तित्वम् असंगतं स्यात् । अविद्यायाः कल्पनातः पूर्वम् अविद्योपहितस्य आत्मनः कल्पना न युक्ता ।

किन्तु उपर्युक्तद्वितीयपक्षे उद्भावितायाः शंकायाः समाधानम् एवं प्रकारेण कर्तुं शक्यते यत् पूर्वपूर्वकल्पितया अविद्यया उपहितः आत्मा एव उत्तरोत्तरायाः अविद्यायाः कल्पयिता । केषांचित् विदुषाम् इदं मतमस्ति यत् अविद्यादिषट्-पदार्थानाम् अनादित्वम् अस्ति । अतः तेषु दृष्टिसृष्टिवादः चरितार्थो न भवति । किन्तु अविद्यायाः भिन्नः यः कार्यप्रपंचः अस्ति तस्मिन् एव दृष्टिसृष्टिवादः चरितार्थो भवति ।[201]

मण्डनमिश्राणां मते सर्वं द्वैतजातं अविद्याकल्पनामात्रं भवति । अविद्यावशात् 'एकमेव अद्वितीयं चैतन्यं जीवरूपेण जगद्रूपेण ईश्वररूपेण च प्रतिभासते । यथा रज्जुसर्पस्य तज्ज्ञानस्य च एकस्मात् अज्ञानादुत्पत्तिः भवति, तथैव एकस्मात् अज्ञानात् जीवः जगत् तज्ज्ञानं च उत्पद्यन्ते । अतः सर्वं दृश्यं जगत् प्रातिभासिकं वर्त्तते । तस्य व्यावहारिकी सत्ता नास्ति । दृष्टेः अर्थात् ज्ञानात् बहिः न कस्यापि वस्तुनः अस्तित्वम् । यत्तु ज्ञाने न प्रतिभासते तन्नास्ति । जीवस्य एतद् मिथ्या विषयदर्शनं एव मिथ्या विषयसृष्टेः मूलम् । जाग्रदविषयाः अपि तथैव अविद्याकल्पिताः सन्ति, यथा स्वाप्नविषयाः मानसकल्पिताः भवन्ति ।

जीवस्य मिथ्यात्वेन विषयदर्शनं विषयभोगादेरपि मिथ्यात्वम् साधयति । एवं प्रकारेण यावत्पर्यन्तं जीवस्य मिथ्यादर्शनं तावत्पर्यन्तमेव दृश्यप्रपंचस्य अस्तित्वम् । द्रष्टुः जीवस्याभावे दृश्यप्रपंचस्यापि अभावः । इत्थं जीवस्य दृष्टिरेवविश्वसृष्टेः कारणम् । अतः अयं सिद्धान्तः दृष्टि सृष्टिवाद' इत्युच्यते ।

वाचस्पतिमिश्रस्य मते इदं विश्वं जीवगताविद्यायाः विलासमात्रम् । स कथयति यत् -'पूर्वपूर्वविभ्रमसंस्कारः अविद्यायाः मूलम् । पूर्वतनभ्रमसंस्कारात् अध्यासश्च संस्काराः । इत्थेवं अध्यासविभ्रमसंस्कारयोः चक्रम् अनादिकालात् आवर्त्तते । जीवः स्वीयसंस्कारानुरूं दृश्जगत्प्रपंचं निर्मिमीते । अविविद्धिदृष्टिविभ्रम एव दृश्यप्रपंचसृष्टेः मूलम् ।[202]

201- सि० ले० सं०

202- भामती ।

वाचस्पतेः एनम् कथनमाश्रित्य विद्वद्भिः एतदुच्यते यत् अस्मिन् कथने दृष्टिसृष्टिवादः प्रसज्यते इति । यदि एवं स्वीक्रियते तर्हि अस्य सामंजस्यं लोकवत्तु लीलाकैवल्यम्''( ब्र० सू० 2-1-33) (विश्वसृष्टिः परमेश्वरस्य लीलामात्रम्) इत्यनेन सूत्रेण सह कथं भविष्यति?

अस्मिन् विषये वाचस्पतिसमर्थकैः आचार्यैः इदं कथ्यते यत् वाचस्पतिमिश्रेण ज्ञानकाले एव ज्ञेयविषयस्य सत्ता न स्वीकृता,अपितु अज्ञानावस्थायामपि विषयस्य सत्ता स्वीकृता । जाग्रतप्रपंचस्य व्यावहारिकसत्यत्वमपि स स्वीकरोति ।वाचस्पतिः उपाधिभेदेन जीवानां बहुत्वमपि स्वीकरोति । एवंप्रकारेण दृष्टिसृष्टि- दृष्टिसृष्टि-वादस्य अवच्छेदवादस्य च ऐक्यं नास्ति । अतः वाचस्पतिमिश्रः 'दृष्टिसृष्टिवादस्य' समर्थकः नास्ति । वाचस्पतिमिश्र सुरेश्वराचार्य-प्रकाशात्मयति चित्सुखाचार्यप्रभृतिभिः दृष्टिसृष्टिवादः न समर्थितः । तत्र सन्ति उपर्युक्तातिरिक्तान्यन्यान्यपि कारणानि तद्यथा -

(1) दृष्टिसृष्टिवादे स्वीकृते सति वेदोक्तयज्ञादीनां स्वर्गादीनां च मिथ्यात्वं स्यात् । दृष्टिसृष्टिवादानुसारं प्रत्यक्षज्ञानस्य ज्ञेयविषयादीनां च भ्रममात्रत्वात् वेदस्य अप्रामाण्यम् आपतेत ।

(2) दृष्टिसृष्टिवादः जगतः व्यावहारिकसत्तायाः निराकरणं करोति, किन्तु अवच्छेद-वादे जगतः व्यवहारिकीसत्तापि स्वीक्रियते ।

(3) विज्ञानवादि-बौद्धानां मतानुसारम् आत्मनः अस्तित्वं नास्ति । किन्तु दृष्टि-सृष्टिवादे आत्मरूपस्य पदार्थस्य पारमार्थिकसत्यता स्वीक्रियते ।

(4) आभासवादि-मतानुसारं जाग्रतिकपदार्थानां सत्ता तावत्पर्यन्तं वर्तते, यावत्पर्यन्तं परमार्थसत्यस्य बोधः न जायते । किन्तु दृष्टिसृष्टिवादिनां मतानुसारं जाग्रतिकविषयाणां सत्ता दृष्टिसमकालिकी एव वर्तते ।

(5) वाचस्पतेः मतानुसारं यद्यपि प्रपंचः जीवाश्रितायाः अविद्यायाः परिणामः अस्ति प्रतिजीवं च प्रपंचभेदः अस्ति,तथापि वाचस्पतिः प्रमाणप्रमेय प्रभृतीनां व्यावहारिकीं सत्तां स्वीकरोति । व्यावहारिक पदार्थानां ज्ञानं जीवाः इन्द्रियाश्रितप्रमाणानां माध्यमेनैव निष्पादयन्ति । मधुसूदनसरस्वत्या सिद्धान्तबिन्दौ एकजीववादस्य

दृष्टिसृष्टिवादेन सह अभिन्नत्वं प्रतिपादितम् । 'इममेव दृष्टिसृष्टिवादमाचक्षते एवं प्रकारेण तेन एतदपि प्रतिपादितं यत्र जीवः एकः एवास्ति इति । किन्तु वाचस्पतिः अनेक जीवाश्रितनैका विद्यावादसिद्धान्तम् अनुसरति ।

अतः वाचस्पतेः अनेकजीवाश्रितानेका विद्यापरके अवच्छेदवादे दृष्टिसृष्टिवादः अन्तर्भूतो न भवति इति अस्मदीयो विचारः ।

5-5'-6 सृष्टिदृष्टिवादः

सगुणः मायामयः परमेश्वरः इदं आपेक्षिकं सत्यम् जगत्सृजति । तच्च जीवनां दृष्टिगोचरं भवतीति अयं मतवादः 'सृष्टिदृष्टिवादः' इत्याख्यायते । अस्य मतस्यानुसारं प्रपंचस्य आरम्भकाः षट पदार्थाः अनादित्वेन स्वीक्रियन्ते ।

(1) अधिष्टानभूतं ब्रह्मचैतन्यं (2) ईश्वरः (3) जीवः, (4) जीवेश्वरयोर्भेदः (5) अविद्या (6) अविद्याया विशुद्धा चैतन्येन सह सम्बन्धः ।

सृष्टिदृष्टिवादिनां एषः विचारः अस्ति यत्र श्रुतिनिर्दिष्ट-क्रमानुसारं सृष्टं जगत् अज्ञातसत्तया युक्तम् अस्ति । तत्तत् विषयेषु तत्तत् प्रमाणानां प्रवृत्तेरनन्तरम् आवरणभंगद्वारा तत्तत् विषयाणां अपरोक्षावभासः भवति । अतः सृष्टिः दृष्टेः जननी अस्ति ।

अस्य मतस्य ग्राह्यत्वमपि भाष्यभामतीकारप्रभृतिभिर्न स्वीक्रियते । जगत् ब्रह्मणो विवर्तोऽस्मि । अत एतेषाम् अद्वैतवेदान्तिनामनुसारं विवर्तवाद एव ग्राह्यो ननु सृष्टिदृष्टिवादः । केषांचित् विदुषां मतानुसारं दृष्टिसृष्टिवादः सृष्टिदृष्टिवादश्च विवर्तवादस्य प्रकारभेदौ वर्तेते। किन्तु मम मतानुसारं इदम् न अर्वाचीनम्।

5-5-7 विवर्तवादः

स्वरूपेण अवस्थितस्य वस्तुनः अन्यथाभावः द्विधा भवितुम् अर्हति परिणामरूपेण विवर्तरूपेण च। तत्र सतत्त्वतोऽन्यथा प्रथा परिणामः । वस्तुनः यथार्थतः स्वरूपं परित्यज्य वस्त्वन्तरप्राप्तिः परिणामः । अतत्त्वतोऽन्यथाप्रथा विवर्तः । वस्तुनः स्वरूपापरित्यागेन स्वरूपान्तरेण मिथ्याप्रतीतिः विवर्तः । यदा किंचन कारणभूतं वस्तु अवास्तविकतया कार्यरूपवस्त्वन्तरत्वं प्राप्नोति तदा प्राथमिक-वस्तुनः द्वितीयवस्तुरूपेण विवर्तः इत्युच्यते । यथा रज्जुः स्वरूपापरित्यागेन सर्पाकारेण मिथ्या प्रतिभासते । एवं शुक्तेः मिथ्या रजतरूपेण भानं विवर्तः । विवर्ते कार्यकारणयोः विषमा सत्ता भवति । मुक्तं धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायाम् -

'विवर्तो नामोपादानविषमसत्ताककार्यापत्तिः' इति । तथा च स्वोपादानसत्ता-विषमसत्ताकत्वे सति कार्यत्वं विवर्तत्वं इति लक्षणं पर्यवस्यति ।

परिमलकारः अप्पयदीक्षितः परिणामविवर्तयोः प्रयोगम् एवं करोति - 'तत्वतोऽन्यथाभावः परिणामः, अतत्वतोऽन्यथाभावो विवर्तः (1-2-21) इति ।

परिणामवादः अद्वैतसम्मतो नास्ति । यतः यदि जगद् ब्रह्मणः परिणामत्वं अंगी क्रियते तर्हि जगतः उपादानकारणत्वेन ब्रह्मैव अंगीकर्तव्यम् । तथासति ब्रह्मण्यपि विकारः जायेत तथा ब्रह्मणः अविकार्यत्वसमस्य व्याख्या कर्तुं न शक्येत । अतः तन्न युक्तम् । यतः 'पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते' इति भाष्यवाक्यानुसारं ब्रह्म विना अन्य तत्वानि जगत् कारणत्वेन अंगीकर्तुं न शक्यन्ते ।[202]

विवर्तवादानुसारेण ब्रह्म जगतः विवर्तः एव । रज्जुसर्पदृष्टान्ते रज्जुः येन प्रकारेण सर्परूपे विवर्ते प्रतीयते, तथा ब्रह्म जगतः विवर्तोपादानकारणरूपेण तिष्ठति । एवं पारमार्थिकसत्यरूपं ब्रह्म व्यावहारिकजगद्रूपेण भासते इति इदं जगद् ब्रह्मणः विवर्तरूपम् ।

ननु चिन्मात्रं ब्रह्म जडरूपेण परिणामं लभते इति चेद् न । ब्रह्मणि परमार्थतः परिणामो नास्ति । वस्तुतः अपरिणामी एव परिणामत्वेन भासते । अत एव च ''सर्वं खल्विदं ब्रह्म' ''आत्मैवेदं सर्वम्'' ''नेह नानास्ति । किंचन'' ''सदेव सोम्येदमग्र आसीद् इत्यादयः श्रुतयः अद्वैतवादं स्थापयन्ति । एवमेव वेदेऽपि 'इन्द्रो मायाभिः पुरुरूप ईयते' रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय''[203] इत्यादयः ऋचः स्फुटतयैव भेदज्ञानस्य मायानिबन्धनत्वं प्रतिपादयन्ति ।

एवं श्रुत्यन्तरे भेददर्शननिन्दा च स्पष्टा भवति - ''मृत्योस्स मृत्युमाप्नोति' 'य इह नानेव पश्यति'' इति । ततश्च अद्वितीयं ब्रह्मैव पारमार्थिकम् भेदज्ञानं च अविद्योपाधिकमेव इति निश्चेतव्यम् ।

ब्रह्मणि न कोऽपि धर्मः अस्ति । निर्धर्मकत्वात्, नित्यशुद्धबुद्धमुक्तस्वभावत्वात् कूटस्थत्वाच्च । शंकराचार्यः बृहदारण्यकोपनिषद्भाष्ये आहः- ''नच

---

202- ब्र० सू० 2-1-27(शा०भा०)
203- ऋ० 6-47-28)

निरवयवं विक्रियमाणं दृष्टं क्वचित्'' अन्यत्र च ''नच निरवयवस्य अनेकधर्मवत्वे दृष्टान्तोऽस्ति'' इति च । संक्षेपशारीरके सर्वज्ञात्ममुनिना अपि अयमेव सिद्धान्तः प्रतिपादितः । तद्यथा-

''विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः ।
व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः ।''

अमुमेव सिद्धान्तं पुरस्कृत्य वाचस्पतिः एवमाह -''यद्यपि श्रुतिशतादैकान्तिकाद्वैत-प्रतिपादनपरात परिणामो वस्तुतो निषिद्धः, तथापि क्षीरादिदृष्टान्तेन पुनः स्तद्वास्तवप्रसंगपूर्वपक्षो आपाद्य सर्वथायं पक्षो न घटयितुं शक्यत इत्यपबाध्य श्रुतेस्तु शब्दमूलत्वात् 'आत्मनि चैवं विचित्राश्च हि' इति सूत्राभ्यां विवर्तदृढीकरणे-नैकान्तिकाद्वयलक्षणः श्रुत्यर्थः परिशोध्यत इत्यर्थः । तस्मादस्त्यविकृतं ब्रह्म तत्वतः ।''[204]

5-5-8 सत्तात्रैविध्यम्

अद्वैतवेदान्ते सत्वं त्रिविधम् पारमार्थिकसत्वं, व्यावहारिकसत्वं, प्रातिभासिकसत्वं च । 'यस्य सत्वं कालत्रयेऽपि अबाधितं भवति, यस्य ज्ञानं कालत्रयेऽपि ज्ञानान्तरेण न बाध्यते, तस्य पारमार्थिकसत्वम् । ब्रह्मणः सत्ता पारमार्थिकी इत्युच्यते । एतद् ब्रह्म त्रिकालाबाध्यत्वेन वर्तते । अत्र त्रिकालाबाध्यत्वं परमार्थत्वेन उच्यते । ब्रह्मभावानन्तरं पुनरपि तस्य जीवस्य जन्म नास्तीत्यतः परमार्थत्वेन इयं सत्ता स्वीक्रियते ।

यस्य सत्वं ज्ञातृकाले न बाध्यते, ज्ञातुः सत्वावस्थायां यस्य सत्वं ज्ञानान्तरेण बाध्यते परन्तु वैदिकज्ञानेन बाध्यते, तस्य व्यावहारिकत्वम् । तथा हि इदं दृश्यमानं जगत् अस्मदादीनां जीवितावस्थायां स्वस्थावस्थायां च ज्ञानान्तरेण न बाध्यते, वैदिकप्रमाणेन ज्ञानेन तु अस्य सत्वं बाध्यते, ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वात् इति अस्य जगतः व्यावहारिकसत्वम् ।

यस्य सत्वं प्रतीतिसमये एव वर्तते परन्तु ब्रह्मज्ञानातिरिक्त ज्ञानान्तरेण लौकिकप्रमाणेन वा बाध्यते, तस्य प्रातिभासिकत्वम् । प्रतिभासकालोत्पन्नाः प्रातिभासिकाः इति व्युत्पत्तेः । तथा हि शुक्तिरूप्यस्य, रज्जुसर्पस्य वा सत्वं प्रतीतिकाले एव स्वीक्रियते, परक्षणे एव शुक्तिज्ञानेन रज्जुज्ञानेन च बाधात्, इति शुक्तिरूप्यस्य रज्जुसर्पस्य च

---

204- भामती पृ0 475-76

प्रातिभासिकसत्वम् ।

तदुक्तं पंचपादिकाविवरणे- 'त्रिविधं सत्वम्,परमार्थसत्वं ब्रह्मणः ,अर्थक्रियासामर्थ्य सत्वं मायोपाधिकं आकाशादेः , अविद्योपाधिकं सत्वं रजतादेः '' इति । त्रिविधानां सत्तानां स्वरूपमेव प्रतिपादितं वेदान्तग्रन्थेषु -

''कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।

बाधाभावाद पदार्थानां सत्वं त्रैविध्यमिष्यते ।।

तात्त्विकं ब्रह्मणः सत्वं व्योमादेर्व्यावहारिकम् ।

शुक्त्यादेरर्थजातस्य प्रातिभासिकमिष्यते ।।

लौकिकेन प्रमाणेन यद बाध्यं लौकिके वधौ ।

तत्र प्रातिभासिकं सत्वं बाध्यं सत्यमेव मातरि ।। वैदिकेन प्रमाणेन यदबाध्यं वैदिकोऽवधौ तदव्यावहारिकं सत्वं बाध्यं मात्रा सहैवहि ।। इति

ब्रह्मणः तात्त्विकी सत्ता पारमार्थिकी, आकाशादीनां सत्ता व्यावहारिकी, शुक्त्यादिषु रजतादि प्रतीतिसमा या सत्ता सा प्रातिभासिकी इति सत्वात्रयाणां विचारः ।

'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः '' इत्येनं शांकरसिद्धान्तम् आश्रित्य इदं कथ्यते यत्र भगवता शंकराचार्येण जगतः मिथ्यात्वं प्रतिपादितम् इति । शंकराचार्यस्य मते जगतः मिथ्यात्वस्वीकरणस्य किं कारणम् इति प्रश्नः उदेति? भगवत्पादशंकराचार्यस्य ग्रन्थानां पठनात् अस्माभिः ज्ञायते यत्र शंकराचार्यः जगतः सर्वथा असत्वं तथा शुक्तिरजतवत प्रातिभासिकत्वं वा न कल्पयति । सः प्रातिभासिकपदार्थेभ्यः जगत्र उत्कृष्टं वर्तते इति स्वीकरोति । तस्य मतानुसारं व्यवहारावस्थायाम् अबाधितत्वात् जगतः व्यावहारिकत्वम् अस्ति[204] । प्रातिभासिकपदार्थानां रजतादीनां सत्ता तावत्पर्यन्तमेव अवतिष्ठते यावत्पर्यन्तं तेषाम् बाधः अधिष्ठानभूतानां शुक्तिकादि पदार्थानां ज्ञानात् न जायते । किन्तु जगतः सत्ता तावत्पर्यन्तं वर्तमाना भवति यावत्पर्यन्तं ब्रह्मसत्यम्'- इत्यादि बोधात् जगतो बाधः न जायते ।

शंकराचार्यः स्वभाष्यग्रन्थेषु व्यावहारिक प्रातिभासिकसत्तायोर्भेदं स्पष्टरूपेण प्रकाशयति । तथा व्यावहारिकसत्तायाः स्थायित्वं स्पष्टरूपेण स्वीकरोति ।

---

204- 'तस्मात् प्राग् ब्रह्मात्मताप्रबोधाद् उपपन्नः सर्वो लौकिकोऽश्च वैदिकश्च व्यवहारः ''(ब्र० सू० शा०भा० 2-2-14)

व्यावहारिकजगतः स्वप्नजगतश्च वैधर्म्यं प्रतिपादयन् सः कथयति यत् स्वप्ने अनुभूयमानानां पदार्थानां सत्ता तावत्पर्यन्तं अवतिष्ठते यावत्पर्यन्तं जागरितावस्था प्राप्तुं न शक्यते । जागरितावस्थायां स्वप्नानुभूतपदार्थानां बाधः संजायते । किन्तु जागरितजगतः पदार्थानां सत्ता जागरितावस्थायामपि न बाध्यते । यथोक्तम् शंकराचार्येण ''बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्या मयोपलब्धो महाजनसमागम इति --- नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते ।'' एतदतिरिक्तं स्वप्नदर्शनं स्मृतिसमं भवति, किन्तु जागरितपदार्थदर्शनम् नु उपलब्धिसमं भवति । यथोक्तं शंकराचार्येण-अपि च स्मृतिरेषा यत्स्वप्नदर्शनम् उपलब्धिस्तु जागरितदर्शनम् इति । अत एव व्यावहारिकजगतः स्वप्नजगतवत् प्रातिभासिकत्वम् अंगीकर्तुं न शक्यते ।

अस्ति सन्दर्भे भामतीप्रस्थानप्रवर्तकानां वाचस्पतिमिश्राणां कथनम् द्रष्टव्यं कति । तद्यथा - 'बाधाबाधौ वैधर्म्यम् । स्वप्नप्रत्ययो बाधितो जगत्प्रत्ययश्चाबाधितः । त्वयापि चावश्यं जागत्प्रत्ययस्याबाधितत्वमास्थेयं, तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते । जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेद् । नहि बाध्यमेव बाधकं भवितुमर्हति । तथा च न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्याद् स्वप्नवदिति । तस्माद् बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम् ।[205]

शंकराचार्य जगतः पारमार्थिकसत्तां न स्वीकरोति । किन्तु अस्य आशयः अयं नस्ति यद् सः पदार्थानां बाह्यसत्तायाः अपलापं करोति इति । 'नाभावोपलब्धेः' इति सूत्रस्य भाष्ये सः स्पष्टं कथयति - 'उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भः कुड्यं घटः पटः '' इति ।[206]

बौद्धानां योगाचारः अथवा विज्ञानवादः इत्येवं प्रकारेण एकः सम्प्रदायः अस्ति तस्य जन्म शून्यवादस्य प्रतिक्रियात्वेन समभवत् । शून्यवादिनां माध्यमिकबौद्धानां मतानुसारं समस्तं जगद् शून्यमतोऽसत्यम् अथवा शून्यम् अतोऽसद् । किन्तु

205- भामती पृ० 555
206- 2-2-28( ब्र० सू० शा० भा०)

अस्य मतस्य विपरीतं विज्ञानवादिनां बौद्धानां एतद्कथनमस्ति यत् स्वसंवेदनम् अर्थात् विज्ञानं बुद्धिः चित्तं, मनः एव सत्यम् । बाह्यः पदार्थाः असत्याः । अतः अग्राह्या एवंप्रकारेण विज्ञानवादिनो बौद्धाः अपि बाह्य जगतः अपलापं कुर्वन्ति ।

भगवत्पादशंकराचार्योऽपि ब्रह्मणः एव सत्यत्वं जगतश्च मिथ्यात्वं स्वीकरोति । किन्तु मिथ्याशब्दस्य, शून्यशब्दस्य च अर्थयोः भेदः अस्ति । शंकराचार्यः पारमार्थिकदृष्ट्या जगतः मिथ्यात्वं प्रतिपादयन् अपि व्यावहारिकदृष्ट्या तस्य सत्यत्वं अंगीकरोति । एवमेव जगतः ग्राह्यत्वमपि स्वीकरोति । किन्तु विज्ञानवादिनो बौद्धाः व्यावहारिकदृष्ट्याऽपि जगतः सत्यत्वं ग्राह्यत्वं च नांगीकुर्वन्ति । विज्ञानवादि-बौद्धानां मतं संक्षेपेण इदमस्ति यत् स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् तदुक्तम् - 'नान्योऽनुभाव्यो बुद्ध्यास्ति तस्य नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ।।'[207] इति विज्ञानवादिबौद्धानां मतानुसारं ग्राह्यग्राहकयोः अभेदः अस्ति । यथा-यद्वेद्यते येन वेदनेन, तत्ततो न भिद्यते यथा ज्ञानेनात्मा । वेद्यन्ते तैश्च नीलादयः । यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः सः एकस्मिन् दिक्चन्द्रावभास इव भ्रमः अत्राप्य-नादिरविच्छिन्न प्रवाहा भेदवासनैव निमित्तम्- यथोक्तम् -

(क) सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ।।'' इति ।

(ख) अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ।। इति च ।।[208]

नच रसवीर्यविपाकादि समानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यम् । वस्तुतो वेद्यवेदकाकारविधुराया-अपि बुद्धेः व्यवहर्तृपरिज्ञानुरोधेन विभिन्नग्राह्य-ग्राहकाकाररूपवत्तया निर्मिराद्युपहताक्ष्णा केशोण्डुकनाडीज्ञान भेदवत् अनाद्युपप्लव-वासनासमर्थ्यात् व्यवस्थोपपत्तेः पर्यनुयोगायोगाव । यथोक्तम् -

''अविद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ।।''

207- सर्व द० सं० पृ० 70
208- स० सि० सं० पृ० 12

''अविद्यवेदकारा यथा भ्रान्तैर्निरीक्ष्यते
किं-ल्वितलक्षणग्राह्यग्राहकाकार विप्लवा ।।

विज्ञानवादिनां खण्डनं शंकराचार्यः एवं करोति -

(अ) बाह्यपदार्थानाम् उपलब्धिः इन्द्रियसन्निकर्षेण जायते । अतः तेषां अपलापः कर्तुं न शक्यते - इन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात्।''[209] स्तम्भादीनाम ज्ञानम उपलब्धेः विषयत्वेन भवति नतु उपलब्धित्वेन । ''नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभते । उपलब्धिविषयत्वेनैव स्तम्भकुड्यादीन सर्वे लौकिका उपलभन्ते''।[210]

बाह्याः पदार्थाः प्रमाणैः ज्ञातुं शक्याः । अतः तेषां व्यावहारिकसत्तायाः अभावः कथं कर्तुं शक्यते? यदि बाह्यपदार्थानाम् अस्तित्वं न स्वीक्रियते तर्हि विषयस्य अभावे ज्ञानस्य विषयसारूप्यं कथं अंगीकर्तुं शक्यते --- ''इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थः उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादि-विकल्पैर्न सम्भवतीत्युच्येत उपलब्धेरेव'' ज्ञानविषयोः सहोपलम्भानियमादपि अनयोर्भेदः न सिद्धयति । सहोपलम्भानियमादपि अनयोर्भेदः न सिद्धयति । सहोपलम्भो कारणम् अनयोः उपायोपेयभावसम्बन्धः नतु अभेदसम्बन्धः । विषयः ज्ञानस्योपायः, ज्ञानं विषयस्य उपेयः । ज्ञाने तस्य विषये च भेदः आवश्यक । यथा घटज्ञाने पटज्ञाने च विशेष-णमयोः मध्ये भेदः अस्ति विशेष्यरूपे ज्ञाने न । ज्ञानं एकमेव किन्तु विषयो भिन्नः । अतः ज्ञानस्य विषयस्य च भेदः स्वतः सिद्धः । तयोर्भेदः नास्ति । 'नच ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति, असति विषये-विषय सारूप्यानुपपत्तेः'' । एवं प्रकारेण भगवत्पादः शंकराचार्यः विज्ञानवादस्य खण्डनं कृत्वा विज्ञानतिरिक्तस्य बाह्यजगतः सत्तां स्वीकरोति ।''

-------------------------------

209' ब्र० सू० शा० भा० 2/2/28

210- ,, ,,, ,,

211- ,, ,, ,,

5-5-8(1) व्यावहारिक प्रातिभासिकसत्तयो भेदः

भगवता शंकराचार्येण ~~ब्रह्मसूत्रे~~ सत् असत् प्रातिभासिकरूपेण पदार्थानाम् उल्लेखाः कृतः सत्वं नाम त्रिकालाबाधितत्वम् यथा ब्रह्म । सर्वदा निरस्स्वरूपं असत् यथा शशश्रृंगादि । व्यवहारकालावधिदृश्यमानं व्यावहारिकं यथा वियदादि प्रपंचः । प्रातिभासिकः प्रतीतिसमयकालिकः यथा शुक्तिरजतादि । एवं प्रकारेण भगवता शंकराचार्येण सत्तायाः त्रैविध्यं स्वीकृतम् । एतासु सत्तासु व्यावहारिकी सत्ता, प्रातिभासिकी सत्ता । च न सत्/नात्यन्तम् असत् अतः अनयोः अनिर्वचनीयत्वम् । मिथ्यात्वं अनिर्वचनीयत्वम् । नतु अत्यन्तासत्वम् । ब्रह्म ज्ञानान्तरं जगतः बाधत्वात् जगत् अनिर्वचीनयं एवम् मिथ्या इत्युच्यते नतु शशश्रृंगवत् अत्यन्तासत्वम् । यद्यपि सदसदविलक्षणत्वात् व्यावहारिक-प्रातिभासिकसत्तयोः समानरूपेण मिथ्यात्वम् अस्ति तथापि व्यावहारिकसत्ता प्रातिभासिकसत्तायाः अपेक्षया उत्कृष्टा वर्तते । यथा - ''प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपंचः व्यवस्थितरूपो भवति, सन्ध्याश्रयस्तु प्रपंचः प्रतिदिनं बाध्यते । ''

5-5-8(1) नागेशभट्टस्य मतम् (व्यावहारिक प्रपंचासत्वम्)

नागेशभट्टस्य मतानुसारं शशश्रृंगादिवत् एव व्यावहारिक प्रातिभासिक-प्रपंचयोः निःस्स्वरूपत्वं तत्प्रतीतेः अर्थशून्यत्वात् ।[213]

असत्वात् प्रातिभासिकव्यावहारिकौ भायविधप्रपंचज्ञानयोरपि विषयः असदेव । प्रातिभासिकसत्तायां, व्यावहारिकसत्तायां च सत्वस्य अभावः वर्तते । सत्वं तत्र आरोपितं भवति । वस्तुतः असत्वेऽपि सत्वारोपात् । व्यावहारिक-प्रातिभासिक प्रपंचयोः निःस्वरूपत्वम् उच्यते । तद्यथा ''प्रातिभासिकव्यावहारिकौ भायविधा प्रपंच-ज्ञानयोरपि विषयः असदेव । असत्वादेव तस्य उत्पत्तिविनाशबहिष्ट्वादिकमपि नास्ति । 214

ब्रह्म जगतः उपादानकारणं नास्ति । अन्यथा तस्मिन्नपि विकारित्वं प्रसज्येत '' अरोपितमेव तत्सर्वम् । असदर्थ प्रकाशनमेव माया नाम परमार्थतः असतोऽपि तस्य अरोपितं सत्वम्, अतएव सदसदात्ममिति तस्य व्यपदेशः, वस्तुनो असत्वात् सत्वस्य त्वारोपा[215]'' वस्तुतः जगत् ब्रह्ममात्रमेव । अस्मिन्विषये नागेशस्य अधो लिखितानि कथनानि अपि द्रष्टव्यानि सन्ति । 216

(क)'' अनिर्वचनीयोत्पत्तौ घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्तेः ।''

213- नागेशस्तु शशश्रृंगादिवदेव प्रातिभासिकव्यवहारिकयोरपि प्रपंचयोः निरस्वरूपत्व तत्प्रतीतेरर्थशून्यत्वमाचष्टे(पंचपादिका, मद्रास भूमिका 93)

(ख) वस्तुतो मृदि घटविकारो भ्रम एव, न तु कोऽपि पदार्थः इति तदनन्यत्वमिति' सूत्रेणोक्तम् ।''[217]

(ग) भ्रमविषयेण तु न विकारित्वं कामुककृतैः कान्ताविषये- विकल्पैः कान्ताया विकारित्वाभावात् ।।''[218]

5-5-8(38 नागेशभट्टमत निरसनम्

नागेशस्य भट्ट मतं निम्नलिखितप्रकारेण खण्डितं जायते ।-

(1) जगत् ब्रह्मणः विवर्तोऽस्ति न तु विकारः परिणामो वा । अतः ब्रह्मणि विकारित्वं न प्रसज्यते । 'तदनन्यत्वम्' इत्यस्मिन् सूत्रे जगतः ब्रह्मरूपत्वं सूचितं भवतीति एतादृशं नागेशभट्टकथनं युक्तं नास्ति । अस्य सूत्रस्य भाष्ये भगवता शंकराचार्येण व्यावहारिकजगतः सत्यतायाः प्रतिपादनं तथा स्वाप्निकजगतः तस्य भिन्नत्वं च प्रतिपादितम् ।

नागेशभट्टस्य इदं कथनमस्ति यत् प्रातिभासिकव्यावहारिकसत्तयोर्मध्ये कोऽपि भेदो नास्ति यतः उभे एव अनिर्वचनीये । किन्तु एतत् कथनं समीचीनं नास्ति यतः उभयोः अनिर्वचनीयत्वे अपि व्यवहारकालबाध्यत्व व्यवहारकाला- बाध्यत्वरूपः भेदस्तु तत्र वर्तते एव । आकाशादि-प्रपंचः स्वकारणभूतात् परब्रह्मणः पृथग् नावस्थीयते । अतः ब्रह्मणः व्यतिरिक्तरूपे एव वियदादिप्रपंचस्य मिथ्यात्वम् । शंकराचार्येण यत्रकुत्रापि कार्यस्य मिथ्यात्वं प्रतिपादितं तत्र कारणात् भिन्नस्य कार्यस्यैव मिथ्यात्वं प्रतिपादितम् न तु कारणात्मकस्य कार्यस्य ।

5-5-9 कार्यकारणानन्यत्वविमर्शः

अद्वैतवेदान्तिनां मते कार्यकारणयोः अनन्यत्वं दृश्यते । नेदं कारणं एव कार्यम् इति कार्यकारणयोः अभेदः । अपितु कारणम् एव कार्यरूपेण प्रकाशते इति कार्यस्य कारणव्यतिरेकेण अभावः इति । तथा च भाष्यकारः -कारणात् कार्यस्य परमार्थतः अनन्यत्वं कारणव्यतिरेकेण कार्यस्य इति । भामतीकारः वाचस्पतिमिश्रः एकमुदाहरणं दर्शयित्वा वेदान्तमतं स्पष्टयति -'पट इति हि प्रत्यक्षबुद्ध्या तन्तव एवातनवितान-

214- पंचपादिका, मद्रास भूमि 93
215- ,, ,,
216- ,, ,,
217- पं० पा० वि० पृ० 87
218- ,, ,, ,,

वस्था आलभ्यते, नतु तदतिरिक्तः पटः प्रत्यक्षमुपलभ्यते । एकत्वं तु तन्तूनामेक-प्रावरणलक्षणार्थक्रियावच्छेदादबहूनामपि । यथैवदेशकालावच्छिन्न धबखदिरप-[219] लाशादयो बहवोऽपि वनमिति । अर्थात् तन्तूनां अवस्थाविशेष एव पटः इति । तन्तुतः भिन्नं पट नामकं वस्तु नास्ति । सांख्यादयः पटादीनां सत्यत्वं वेदन्तिनः तेषां मिथ्यात्वं च मन्वते ।

एवं दधिघटरुचकाद्यर्थिभिः क्षीरमृत्तिकासुवर्णादीनि प्रतिनियतानि कारणानि उपादीयन्ते । नहि दध्यर्थिभिः क्षीरम् उपादीयते । उत्पत्तेः प्राक् कार्यस्य कारणे असत्वे नैतत् उत्पद्येत उत्पत्तेः प्राक् सर्वस्य सर्वत्रासत्वे कस्मात् क्षीरादेव दधिः उत्पद्येत, मृत्तिकायाः एव च घट उत्पद्येत न क्षीरात् । तस्मात् स्वीकरणीयः कार्यस्य कारणे सद्भाव ।

नन्वेवं सति कारकव्यापारः अनर्थकः प्रसज्येत । यथैव हि प्राक्सिद्धत्वात् कारणस्वरूपसिद्धये न कश्चित् व्याप्रियते इति चेत्, न, कार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्य अर्थवत्वोपपत्ते । कार्याकारः अपि कारणस्य आत्मभूतः, अनात्मभूतस्य आरम्भयत्वायोगात् । नच विशेषदर्शनमात्रेण वस्तुन भेदः स्वीकरणीयः । तस्मात् कार्यस्य कारणे सद्भावः नानुपपन्नः ।

ब्रह्मसूत्रशांकरभाष्यस्य आरम्भाधिकरणे भाष्यकारेण 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादवाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति छान्दोग्यश्रुतिम् अवलम्ब्य कार्यकारणविवेकः उपस्थापितः ।

कार्यस्य कारणानन्यत्वात् कारणविज्ञानेनैव सर्वं कार्यं विज्ञातं भवतीति यदादौ प्रतिज्ञातं तदुपपाद्य-ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्वमसि' (छा-6-8-7) इति सर्वस्यापि जगतः, श्रोतुश्च श्वेतकेतोः ब्रह्मात्मकत्वं निरुपितम् ।

'ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् इति मुण्डकश्रुतिः सर्वत्र कार्यस्य वाचारम्भणत्वेन नाममात्रत्वं प्रतिज्ञाय कारणस्य कार्यापेक्षया सत्यत्वावधारणम् तथैव विकारस्य नाममात्रत्वं च प्रतिपादयति । ब्रह्मसूत्रेऽपि कार्यकारणयोः अनन्यत्वस्य प्रतिपादनं दृश्यते ।

---

220- जन्माद्यस्य यतः (1-1-2) प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् (1-4-23)

तदनन्यत्वमारम्भणशब्दादिभ्यः '(2-1-14)

(1) यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।

(2) अपगादग्नेरग्नित्वं वाचारम्भणो विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।

अत्र भाष्यम्- प्राक् रूपत्रयविवेकविज्ञानाद् या अग्निबुद्धिरासीत्, ते साग्निबुद्धिरपगता, अग्निशब्दश्चेत्यर्थः । ---बुद्धिशब्दमात्रमेव ह्यग्निः, यत आह वाचारम्भणमग्निर्नाम विकारो नामधेयम्, नाममात्रमित्यर्थः । अतोऽग्निबुद्धिरपि मृषैव । किं तर्हि तत्र सत्यम् । त्रीणि रूपाणीत्येव सत्यम्, नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः ।[221]

अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्यशुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।।[222]

भगवद्गीतायामपि भगवतः प्रकृतिद्वारेणैव जगदुत्पत्तिप्रलयकारणत्वमुक्तम् । तद्यथा -

''एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।।
मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ।।[223]

कार्यकारणप्रक्रियाया सन्दर्भे वाचस्पतिमिश्रस्यनिम्नलिखितानि कथनानि द्रष्टव्यानिवर्त्तन्ते वाचस्पति मिश्रस्य--

(क) यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा, रज्ज्वां सत्यामस्ति, रज्ज्वामेव च लीयते । एवम् अविद्यासहितब्रह्मोपादानं जगत् ब्रह्मण्येवास्ति तत्रैव च लीयत इति सिद्धम् ।[224]

(ख) पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामो अनिर्वचनीयत्वात् भेदेनाभिन्न इवेति सिद्धस्यापि साध्यत्वम् इत्यर्थः ।[225]

(ग) इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेण, अपितु यथा सर्पस्योपादानं रज्जुः, एवं ब्रह्म जगदुपादानं द्रष्टव्यम् । न खलु नित्यस्य निष्कलस्य

---

221- छा० भा० 6-4-1 पा० 514
222- छा० 6-8-4 524
223- गी० 7-6-7
224- भा० 1-1-2 पृ० 95
225- भाम० 1-1-26 पृ० 828

ब्रह्मणः सर्वात्मैकदेशेन वा परिणामः सम्भवति नित्यत्वाद्,अनेकदेशत्वादित्युक्तम् । न च मृदः शरावादयो भिद्यन्ते, न चाभिन्नाः, न वा भिन्नाभिन्नाः, किन्तु अनिर्वचनीया एव । यथाह श्रुतिः मृत्तिकेत्येव सत्यम् इति । नहि कार्यैकदेशस्यास्तीति ।[226]

(आ) ब्रह्मसूत्रशांकरभाष्ये 'असदिति चेन्नः, प्रतिषेधमात्रत्वात्' इति सूत्रस्य भाष्ये कार्यस्थितिकाले हि यथा कार्यं कारणात्मना सत्,तथा प्रागुत्पत्तेरपीति गम्यते इत्युक्त्वा वाचस्पतिः असत्कार्यवादं निराकुरुते । तद्यथा- "यथा कार्यं स्वरूपेण सदसत्त्वाभ्यां न निर्वचनीयम् । अपितु कारणरूपेण शक्यं सत्त्वेन निर्वक्तुमिति । एवं च कारणसत्तैव कार्यस्य सत्ता न ततोऽन्येति कथं तदुत्पत्तेः प्राक् सति कारणे भवेत्यसत्? स्वरूपेण तूत्पत्तेः प्राक् उत्पन्नस्य ध्वस्तस्य वा सदसत्त्वाभ्यामनिर्वाच्यस्य न सतोऽसतो वा उत्पत्तिरिति निर्विषयः सत्कार्यवादप्रतिषेधः इत्यर्थः"[227] । अत्र जगतः प्रतीयमानरूपेण अनिर्वचनीयस्याभ्युपगमात्,तस्य चोत्पत्तिनिषेधात्, अनिर्वचनीयप्रातिभासिकरजताद्युत्पत्तिः अस्मिन् प्रस्थाने नास्ति असमञ्जसम् इति भाति ।[228] अत्र कार्यस्य कारणरूपेण सत्त्वम् । स्वतस्तु अनिर्वचनीयतेत्यतः सत्कार्यवादः साधितः । भाष्ये परं "न तु शब्दादिमत् कार्यं कारणात्मना हीनं प्रागुत्पत्तेः इदानीं वा अस्ति"[229] इति कारणात्मनैव सत्वं सर्वास्ववस्थासु जगतः इत्येतावन्मात्रमुक्तम्, नतु कार्यस्य सदसत्त्वाभ्याम् अनिर्वचनीयत्वम् । तद्यथा -

सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्याम् अनिर्वचनीये संसारप्रपंचबीजभूते सर्वज्ञस्य ईश्वरस्य माया शक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते ।[230]

5-5-9(1) भाष्यभामत्योर्वैषम्यम्

तथापि भामतीप्रस्थानभाष्यप्रस्थानयोः अनिर्वचनीयत्वविषये किंचित्वैलक्षण्यमस्माभिर्द्रष्टुं शक्यते । वाचस्पतिः मण्डनानुसारेण सदसद्भ्यामनिर्वचनीयत्वं (काठिन्य) मनुते, किन्तु भाष्यकारः, तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वं च स्वीकरोति । भाष्यकारसंमतमनिर्वाच्यत्वम् उपदेशसाहस्र्यां सम्यक् विवृतम् । तद्यथा -

---

226- भामती 1-4-27, पृ0 429
227- भामती 2-1-7 पृ0 446
228- वेदान्तप्रक्रियाप्रत्यभिज्ञा पृ0 420
229- सूत्र भा0 2-1-7
230- सू0भा0 2-1-14 पृ0 201

''तच्चाकाशाख्यं भूतम् अनेन प्रकारेण परमात्मनः संभूतं प्रसन्नादिव सलिलान्मलमिव फेनम् । न सलिलं न च सलिलादत्यन्तभिन्नं फेनम् । सलिलव्यतिरेकेणादर्शनात् सलिलं तु स्वच्छम्, अन्यत् फेनान्मलरूपात् । एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानीयाभ्यां शुद्धः प्रसन्नस्तद्विलक्षणः ।। 231। अनेन तत्वान्यत्वाभ्यामनिर्वचनीयत्वं सुस्पष्टम् । अपिच ''यः कारणं सर्वस्य जगतः ,यदात्मके नामरूपे सलिलादिव स्वच्छान्मलमिव फेनम् अव्याकृते व्याक्रियेते । यश्च ताभ्यां नामरूपाभ्यां विलक्षणः । स्वतो नित्यशुद्धबुद्धमुक्तस्वभावः '' ।। 232 तस्माद् यदात्मरूपेणैव जगतः सत्वाद् न सत्कार्यवादनिषेधः, सत्कार्यत्वं च तस्य सतो व्यतिरेकेणैव प्रतीयते तर्हि न भाष्य प्रस्थानान्यत्वमस्य । यावता तु सदसत्वाभ्यामनिर्वचनीयत्वादेव तस्य नोत्पत्तिरिति सत्कार्यवादनिषेधः प्रत्याख्यायते तावता स्वांशेन विलक्षणत्वमस्त्येव भाष्यप्रस्थानाद् ।

कार्य-कारण-सिद्धान्ते अद्वैत-सांख्ययोः सादृश्यं दृश्यते । उत्पत्तेः प्राक् कार्यस्य कारणे सद्भावः इति सांख्यैरिव अद्वैतिभिः अपि अभ्युपगम्यते ।। कार्याकारः अपि कारणस्य आत्मभूतः, अनात्मभूतस्य आरम्भत्वायोगात् । परन्तु सांख्याः कारणस्य इव कार्यस्यापि सत्यत्वं स्वीकुर्वन्ति, अद्वैतिनां मते तु कार्यम् अनृतम्, कारणम् एव सत्यम् इति ।

-----------------------------------

231- छा० सा० गद्य पा० 24-25

232- बृ० भा० 1-4-7 पा० 655

5-5-10 सृष्टिप्रक्रियाया मायास्वभावत्वम्

भगवान् भाष्यकारः ''लोकवत्तु लीला-कैवल्यम्'' इति सूत्रभाष्ये जगद् ईश्वरस्य क्रीडा इति अंगीकरोति किन्तु निष्प्रयोजनप्रक्रियायातः ईश्वरं रक्षितुं वाचस्पतिः द्वौ मार्गौ अनुसरति । तयोः प्रथमो (क) निष्प्रयोजनप्रवृत्तेः समर्थनम् । द्वितीयः (ख) ईश्वरीय लीलायाः विलोपः च । (क) निष्प्रयोजन प्रवृत्तेः समर्थने वाचस्पतिना उक्तम् -'' अदृष्टहेतुकौत्पत्तिकी श्वासप्रश्वासलक्षणाप्रेक्षावतां क्रिया प्रयोजनानुसन्धानमन्तरेण दृष्टा''[238] इति । अर्थात् जन्तुनः श्वासप्रश्वास प्रक्रिया स्वतः यथा जायते तथा सृष्टिप्रक्रिया अपि संभवति इति । किन्तु चेतने स्वतः प्रक्रिया नास्ति । (ख) प्रपंच-सृष्टिः मायाशक्त्या संभवति । अपि च नेयं पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनम्, अपित्वनाद्यविद्या निबन्धाना ।अविद्या च स्वभावत एव कार्योन्मुखी न प्रयोजनमपेक्षते - अग्नेः दाहकस्वभाववत् भवति मायायाः स्वभावो जगत्रचना । स्वभावस्य च कारणं न चिन्त्यते ।

एवं वाचस्पतिना जगद्रचनायां लीलाकैवल्यं त्यक्त्वा मायास्वभावसिद्धान्तः समर्थितः । एनं तात्पर्यं अमलानन्दः एवं विशदयति ''जीवभ्रान्त्या परं ब्रह्म जगद्बीजमजूघुषत । वाचस्पतिः परेशस्य लीलासूत्रमलूलुवत्''[234] । इति ।
वाचस्पतिः 'लीलाकैवल्यम् इत्यस्य शब्दस्य मायास्वभावः इत्यर्थः इति प्रतिपादयति । तथा च कर्माविभागादिति चेन्नानादित्वात्' तथा ''उपपद्यते चाप्युपलभ्यते च' इत्यादि सूत्राणि च मायास्वभावसिद्धान्तपरकाणीति निश्चयति । मायया जगत्रचना कथं संभवति इत्यस्मिन् विषये तेनोक्तम् - ते चावधिं प्राप्य परमेश्वरेच्छा प्रचोदिता यथा कूर्मदेहे निलीनान्यंगानि ततो निःसरन्ति यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासार-सुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात् पूर्वसमाननामाण्युत्पादयन्ते ।[235]

---

233- भामती 2-1-33 पृ0 480

234- कल्पतरु 2-1-33 पृ0 472

235- भामती 1-3-30 पृ0 3304

5.5.11 पंचीकरणापेक्षया त्रिवृत्करणस्य ग्राह्यत्वम्

5.5.11(1) पंचीकरणस्य स्वरूपम्

पंचभूतानां पंचीकरणेन प्रपंचः उत्पद्यते' इति सुप्रसिद्धः सिद्धान्तः प्रंचदश्यां विद्यारण्यमुनिना एवं प्रकारेण निर्दिष्टः -

''द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।

स्वस्वेतर-द्वितीयांशैर्योजनात् पंचपंच ते'' ।।

इति एवं घटपटादिवत् दृश्यमानमेतद् जगत् पंचभूतानां सकाशात् उत्पन्नमिति सिद्धम् ।

पांचभौतिकं शरीरमित्युच्यते । अस्मिन् शरीरे पंचभूतानां प्रभावः कीदृशः ? अर्थात् पृथिव्या अर्धांशः अस्मिन् शरीरे तिष्ठति। अवशिष्टार्धांशे भूतचतुष्टयानां चत्वारः पादांशाः तिष्ठन्ति । यथा च शरीरं पांचभौतिकं भवति । पुनश्च पुनश्च देहे अस्मिन् करणत्वेन एकादशेन्द्रियाणि सन्ति । तत्र दशानामिन्द्रियाणां अध्यक्षः मनः इत्युच्यते । पंचमहाभूतेषु एकैकेषु सत्वरजतमोगुणानि सन्ति । आकाशस्य सात्विकांशात् श्रोत्रत्वगक्षिरसनघ्राणाख्यानि पंच इन्द्रियाणि क्रमात् शब्दादिविषयग्राहकाणि भवन्ति । सम्भूय वर्तमानैः ज्ञानेन्द्रियैः अन्तःकरणमुत्पन्नम् । तदन्तःकरणम् चिदहंकार-बुद्धि मनोरूपेण चतुर्धा भिद्यते। एवं आकाशादिपंचभूतनां रजोंशेन पंच कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाभिधानि उत्पन्नानि । एतेषां विषयत्वेन अपादानगमनविसर्गानन्दात्मिकाः क्रियाः प्रसिद्धा लोके । पंचकर्मेन्द्रियैः सहितैः प्राणः उत्पन्नः । अयं प्राणः स्थानविशेषेण वृत्तिभेदेन प्राणापानव्यानोदानसमानाभिधायकत्वेन पंचधा व्यवहारं प्राप्नोति । पंचभूतानां तमांशेन प्रपंचः इत्युक्तेः शरीरादयः उत्पद्यन्ते । प्रत्येकं शरीरे गुणत्रयाणां सत्वं सिद्धम् । एवं पंचभूतनां पंचीकरणेन निर्मिते शरीरे सत्यज्ञानात्मकः एकः आत्मा भासते इति सृष्टिनिरूपणम् ।

विवर्तवादनिरूपणम्

अद्वैतवेदान्ते विवर्तवादः स्वीक्रियते । किन्तु केचित् भाष्यकाराः भास्कर-भर्तृप्रपंच यादवप्रकाशादयः परिणामाद्वैतिनः अपि सन्ति । तेषु भास्करः उपाधि परिणामस्वीकर्त्ता । भर्तृप्रपंचः यादवप्रकाशश्च स्वरूपपरिणामवादमेव स्वीचक्रतुः ।

शंकराचार्येण विवर्तवादः एव स्वीकृतः । परिणामो नाम उपादानसमसत्ताककार्यापत्तिः इति विवर्तपरिणमयो र्भेदः । विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः ?

परिणामाद्वैतिनां मते ब्रह्म सविशेषमेव । विजातीयविशेषाणां, स्वगत-विशेषाणां च ब्रह्मणि अभ्युपगमात् ।

५.५.।।(आ) त्रिवृत्करणस्य स्वरूपम्

छान्दोग्यश्रुतौ सतः 'तेजोऽबन्नरूपाणां तिसृणां देवतानां सृष्टिम् उक्त्वा 'तासां त्रिवृतं त्रिवृतं एकैकां करवाणि' इत्यादिना त्रिवृत्करणं उक्तम् ।पूर्ववेदान्ताचार्यैः पंचीकरणप्रक्रिया एव स्वीक्रियते । किन्तु वाचस्पतिः पंचीकरणस्य स्थाने त्रिवृत्करणस्य प्रमुखतां कल्पयति । वाचस्पतेः त्रिवृत्करणं वेदान्तकल्पतरुकारेण अमलानन्देन एवं वर्णितम्

''सम्प्रदायाध्वना पंचीकरणं यद्यपि स्थितम् ।

तथापि युक्तियुक्तत्वात् वाचस्पतिमतं शुभम् ।

पृथिव्यबनलात्मत्वं गगने पवने च चेत् ।

रूपवत्त्वमहत्त्वाभ्याम् चाक्षुषत्वं प्रसज्यते ।।

अर्धभूयस्त्वतः क्षित्याद्यभिधावनकल्पने । व्यवहारपथा प्राप्ता मुधा पंचीकृतिर्भवेत् ।

अनपेक्ष्य परं वेदसिद्धोऽस्येषोऽपेक्ष्यते यदि । त्रिवृत्कृतिः श्रुता पंचीकृतिर्न क्वचन श्रुता ।[236]

त्रिवृत्करणं नाम तेजोजलपृथ्वीरूपाणां त्रयाणां भूतानां मध्ये प्रथमं एकैकं द्विधा-द्विधा समं विभज्य पुनरेकैकभागस्य द्विधा-द्विधा विभागं कृत्वा स्व-स्वतृतीयं स्थूलभागं परित्यज्य अन्यदीयस्थूलभागयोः निक्षिप्य एकैकस्य भागस्य संयोजनम् । तत्र एकैकस्य त्रिवृत्करणे प्रथमार्धस्य प्राधान्यं अपरार्धस्य भागद्वयोर्गुणी-भावः गुणप्रधानभावनंगीकारे समानपरिमाणसूत्रत्रय-निर्मितरज्जुवत् त्रिवृत्करणं एकमेव स्यात् नतु तिसृणां पृथक् पृथक् त्रिवृत्करणम् इति । एवं हि गुणप्रधानभावेन 'इदं तेजः'' इमाः आपः, ''इदम् अन्नम्' इत्येवं पृथग् विभागः स्यात् । ईत्येवम् ईक्षित्वा सा सदरूपा देवता सूर्यबिम्बवत् जीवात्मरूपेण एतासां तिसृणां देवतानाम् अन्तः प्रविश्य नामरूपव्याकरणार्थं तासां देवतानां एकैकां त्रिवृतं त्रिवृतम् अकरोत् ।

ननु श्रुत्यन्तरेषु आत्मनः आकाशः संभूतः आकाशात् वायुः ततः तेज इत्येवम् आकाशादि पंचभूतसृष्टिं प्रदर्श्य भूतपंचकानां पंचीकरणमुक्तम् । तत् कथमत्र आकाशं

236- वेदान्तकल्पतरु ।68

वायुं च परिवर्त्य भूतत्रयस्यैव सृष्टिम् उक्त्वा त्रिवृत्करणम् उक्तम् । अस्योत्तरम्-भूतत्रयप्रक्रिया श्रुत्यन्तरसिद्धाकाशादि सृष्टेः यथा उपलक्षणं, तथा त्रिवृत्करण-श्रुत्या च पंचीकरणमपि उपलक्षितम् । तथा च श्रुत्यन्तरसिद्धयोः आकाशवाय्वोः तेजप्रभृतिषु अन्तर्भावम् अभिप्रेत्य सर्वस्य सन्मात्रत्वं मन्तव्यम् इति मन्वाना श्रुतिः त्रिवृत्करणमेव आचक्षते । एवं रूपवद्द्रव्ये आकाशवाय्वोः अपि अवस्थानात् रूपवतां त्रयाणां तेजोऽबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदन्तर्भूतं तद्विकारत्वात् त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुति यथा त्रिवृत्करणे अपि त्रीणि रूपाणि सत्यं तथा पंचीकरणे अपि समानन्यायः । यदा पंचभूतानि प्रत्येकं द्वेधा विभज्य पुनरेकैकं भागं चतुर्धा कृत्वा स्वभागातिरिक्तेषु पूर्वेषु एकेषु भागेषु एकैकशो निक्षिप्यते तदा पंचीकरणं श्रुत्युपलक्षितं लभ्यते तत्राणि पंचानां भागाणां पृथक् करणे पंचैव तन्मात्रापि अवशिष्यन्ते ।

5-5-11(इ) त्रिवित्करणस्य ग्राह्यत्वम्

अमलानन्दः त्रिवृत्करणस्य औचित्यं पंचीकरणस्य अनौचित्यं च प्रकाशयति । तस्य मतानुसारेण पंचीकरणं स्वीक्रियते चेत् वाय्वाकाशौ पृथिव्यादि त्रयाणां भूतानाम् अंशित्वात् प्रत्यक्षस्य विषयौ भवतः। किन्तु त्रिवृत्करणे एतत् न संभवति ।

भामत्यां ''यद्यप्याकाशाद्य भूतसृष्टिः, तथापि तेजोऽबन्नानामेव त्रिवृत्करणस्य विवक्षितत्वात्तत्र तेजसः प्राथम्यात्तेजः प्रथमभुक्तम्''[2837] इत्यादि वाक्यात् वाचस्पतिः त्रिवृत्करणस्य उत्थापक आसीदिति अस्माभिर्ज्ञायते । अतः अस्य मते छान्दोग्योप-निषदि प्रतिपादिताः ''तदैक्षत बहुस्यां प्रजायेय तत्तेजोऽसृजत तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजत' इति श्रुतिः तेजसः सृष्टिं प्रतिपादयति इति मनुते ।

2837- भामती पृ० 168

## अध्यायस्य सारः समाहारश्च

तत्वमीमांसायाः सन्दर्भेऽपि भामतीप्रस्थानानुयायिनाम् आचार्याणां कथनानि ब्रह्मसूत्र-शांकरभाष्याधारितानि एव प्रायः वर्तन्ते । 'ब्रह्मसत्यं जगन्मिथ्या' इत्येतत् वाक्यम् अद्वैतवेदान्तीयतत्वमीमांसायाः समग्रां रूपरेखां संक्षिप्तरूपेण अभिव्यनक्ति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मणः स्वरूपलक्षणं, तथा 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति ब्रह्मणः तटस्थलक्षणम् । ब्रह्मणः एकत्वमद्वितीयत्वं, सत्यत्वं, स्वप्रकाशत्वं चिद्रूपत्वम्, आनन्दत्वम्, निर्गुणत्वम्, निर्विशेषत्वं च भामतीपरिस्थितिभिः सम्यग् प्रतिपादितम् । मायावच्छिन्नं (वाचस्पतेः मतानुसारम्) चैतन्यम् ईश्वरः, अन्तःकरणावच्छिन्नं चैतन्यं जीवः इति ।

भामतीपरिस्थितिभिः आत्मनः विभुत्वम् चिद्रूपत्वं च स्वीक्रियते । वाचस्पतेः मतानुसारं एकजीववादापेक्षया अनेकजीववादपक्षः एव ग्राह्यः । जगत् ब्रह्मणः विवर्तः वर्तते । तस्मात् अतः अजातवादः दृष्टिसृष्टिवादप्रभृतयः भामतीपरिस्थितानामनुसारं ग्राह्याः न सन्ति । सृष्टिप्रक्रियायाः लीलात्वम् अपास्य मायास्वभावत्वं च प्रतिपाद्य भामतीपरिस्थितिभिः त्रिवृत्करणस्य सिद्धान्तः स्वीकृतः ।

उपर्युक्तप्रकारेण एतत् स्पष्टमस्ति यत् तत्वमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य आचार्यैः ये सिद्धान्ताः प्रवर्तिताः, ते भारतीयदार्शनिकचिन्तनपरम्परायाम् अतीव महत्वं धारयन्ति ।

--------

षष्ठोऽध्याय:

6.1.0 भामतीप्रस्थानस्य सन्दर्भे ज्ञानमीमांसाया: क्षेत्रविमर्श:

अद्वैतवेदान्ते ज्ञानाज्ञानयो: स्वरूपविमर्श:अतीव प्रामुख्यं भजते इत्येतत् 'अथातो ब्रह्मजिज्ञासा' इत्यस्मात् सूत्रादेव सुस्पष्टं ज्ञायते । ज्ञातुं इच्छा अर्थात् ज्ञानस्य या इच्छा भवति सा एव जिज्ञासा इत्युच्यते । वेदान्तस्य चरमं प्रयोजनं ब्रह्मज्ञानमस्ति । किन्तु अध्यासवशाद् अविद्यावशाद्वा एतद् ज्ञानं सदैव आविर्भूतं न भवति । अत: ब्रह्मात्मरूपेण ज्ञानेन सह तस्य अविद्यापरक: अध्यासपरको वा अविरोधात्मको विपरीतो वा पक्षोऽपि विभावनीयो वर्तते । एवंप्रकारेण ज्ञानस्य स्वरूपनिर्धारणाय अज्ञानस्य स्वरूपनिर्धारणमपि आवश्यकमस्ति । शारीरकभाष्यस्य उपक्रमे अध्यासस्य निरूपणं कृत्वा भगवता शङ्कराचार्येणापि एतद् स्पष्टीकृतं यद् अविद्याया: निरूपणं विना विद्याया: निरूपणं कर्तुम् न शक्यते । अविद्या अज्ञानं वा विद्याया: अथवा ज्ञानस्य अभाव इति नापितु अविद्याया: अपि भावरूपता वर्तते ।

भामतीप्रस्थानस्य आधार: मुख्यतया शारीरकभाष्यमेवास्ति । अत: ज्ञानाज्ञानयो: निरूपणस्य सन्दर्भे वाचस्पतिमिश्रप्रभृतिभिरपि सूत्रकारभाष्यकारप्रवर्तित: पन्था एव प्राय: अनुसृत: ।

अज्ञानम् , अप्रमा , अविद्या , अध्यास: , महामोह: , भ्रम: , महासुप्ति: , माया , इत्येतेषां शब्दानां प्रयोग: आचार्यै: (किंचित् वैमत्ये सत्यपि) प्राय: पर्यायत्वेन कृत: । भामतीप्रस्थाने अविद्याया: यत् स्वरूपमस्ति तस्य तुलनात्मकं [illegible] समीक्षणं पूर्ववर्तिषु अध्यायेषु कृतम् ।

ज्ञानं , प्रमा , विद्या , बुद्धि:, प्रज्ञा , प्रज्ञानम् , संवित् , बोध: , उपलब्धि: , अनुभूति:,इत्येतेषां शब्दानां प्रयोगोऽपि आचार्यै: (किञ्चित् वैमत्ये सत्यपि) प्राय: पर्यायत्वेन कृत: । भामतीप्रस्थानेऽपि एतादृशी एव स्थिति: दृश्यते ।

केषांचित् मतानुसारं प्रमा - अप्रमारूपेणैव ज्ञानं द्विधा भवति । किन्तु केषांचित् अयमपि विचारः अस्ति यत् प्रमायाः एव मुख्यत्वम् । भामतीप्रस्थाने विद्याशब्दस्यप्रयोगः अधिकः दृश्यते ।

भामतीप्रस्थानुसारं ज्ञानमीमांसायाः अन्तर्गताः ये विषयाः, तेषु निम्नलिखितानां विषयाणां विश्लेषणमत्र संक्षेपतः प्रस्तूयते । प्रमायाः स्वरूपं, प्रमाणस्य स्वरूपं भेदाश्च, वृत्तेः स्वरूपम् , शाब्दप्रमाणस्य परोक्षापरोक्षत्वम् , ज्ञानस्य मोक्षसाधनत्वम् । यद्यपि एतेषां विषयाणामतिरिक्ताः अन्येऽपि विषयाः भामतीप्रस्थाने चर्चिताः दृश्यन्ते , किन्तु तेषामप्यन्तर्भावः अत्र चर्चितेषु विषयेषु संजायते इति कृत्वा संक्षेपेणैवात्र व्याख्यास्यामः ।

### 6·1·1 प्रमायाः स्वरूपम्

प्रमायाः विश्लेषणं कुर्वता वाचस्पतिना कथितं - "तत्त्वपरिच्छेदकः प्रमा", अस्य कथनस्य प्रकारान्तरेणापि उल्लेखः एवं कृतः । ------ अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा । प्रकटार्थविवरणकारस्य मतानुसारं ~~संविद्व्यञ्जकः~~ "मनःपरिणामसंविद्व्यञ्जको ज्ञानं प्रमा । सिद्धान्तबिन्दौ मधुसूदनसरस्वती प्रमायाः निरूपणमेवं करोति, "विषयगताभिव्यक्तियोग्यत्वभागावच्छिन्नः चिदंशः प्रमितिः ।

रत्नप्रभायां गोविन्दानन्दः प्रमायाः अर्थः - 'बोधः' इति करोति । एवंप्रकारेण च तस्य मतानुसारं प्रमायाः लक्षणमस्ति - 'वृत्तिद्धो बोधः प्रमा' । पञ्चपादिकाविवरणे प्रकाशात्मयतिना ज्ञानस्यलक्षणमेवं प्रकारेण कृतम् - अन्तःकरणपरिणामविशेषचैतन्यस्य विषयावच्छेदोपाधिः करणव्युत्पत्त्या ज्ञानं भावव्युत्पत्त्या तु संवेदनमेव अर्थप्रकाशो ज्ञप्तिः ज्ञानमित्युच्यते । ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात् । तस्य चमत्काराश्रयत्वात् । अन्तःकरणपरिणामे ज्ञानत्वोपचारात्[5] ।

उपर्युक्तप्रकारेण अद्वैतवेदान्तनये प्रमायाः

निरूपणार्थम् आचार्यैः यत् कथितं तस्य साररूपेण धर्मराजाध्वरीन्द्रः प्रमायाः लक्षणद्वयं प्रस्तौति । तद्यथा- अनधिगताबाधितविषयज्ञानत्वम् , एवं अबाधितविषयज्ञानत्वम् ।

प्रथमं लक्षणं नैयायिकचिन्तनप्रेरितं स्मृतिव्यावर्तकमस्ति । द्वितीयं लक्षणं तु मीमांसकचिन्तनप्रेरितं स्मृतिसाधारणमिति सुस्पष्टमेव ।

अस्मिन् सन्दर्भे एतत् ज्ञातं वर्तते यत् प्राचीननैयायिकाः ज्ञानशब्दस्यप्रयोगं सामान्यरूपेण कुर्वन्ति । किन्तु नव्यनैयायिकाः प्रमाप्रमाशब्दयोः प्रयोगं कुर्वन्ति । किन्तु वेदान्तनये विद्या-बोध-सम्यक्ज्ञान-सम्यक्दर्शन-आत्मज्ञान-आत्मसाक्षात्कार- इत्येतेषां शब्दानां प्रयोगः प्रमायाः पर्यायत्वेन क्रियते ।

प्रमायाः अनधिगतत्वविषये नैयायिकादीनां विप्रतिपत्तिमाशङ्क्य धर्मराजाध्वरीन्द्रः कथयति यत् सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः । किन्तु यावत् घटस्फुरणं तावत् घटाकारान्तःकरणवृत्तिः एक एव । एवंप्रकारेण प्रमायाः उपर्युक्तं लक्षणद्वयं अद्वैतवेदान्तनये प्रचलितमस्ति । तथा प्रमा-विद्या-ज्ञान-प्रभृति-शब्दाः अपि पर्यायत्वेन स्वीक्रियन्ते ।

'तत्तु समन्वयात्' इत्यस्यसूत्रस्य भाष्ये शंकराचार्येण ज्ञानस्य क्रियात्वं निरसितम् । तद्यथा- ज्ञानं तु प्रमाणजन्यम् । प्रमाणन्तु यथाभूतवस्तुविषयम् । अतो ज्ञानं कर्तुम् अकर्तुम् अन्यथाकर्तुम् वा अशक्यम् । केवलं वस्तुतन्त्रमेव तद् । न चोदनातन्त्रं नापि पुरुषतन्त्रम् ।तस्मात् मानसत्वेऽपि ज्ञानस्य महद् वैलक्षण्यम् ।

अत्र भामत्यां वाचस्पतिना यदुक्तं तदपि द्रष्टव्यं वर्तते । तद्यथा- 'चैतन्यप्रधानो वृत्तिवचनः जानातिः' । तस्माद् ब्रह्मज्ञानं मानसीक्रियापि न विरोधगोचरः , पुरुषचित्तव्यापाराधीनस्तुचिद्-वस्तुस्वरूपविरोधिनी , यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता क्रियैवेत्येवकारेण वस्तुतन्त्रत्वमपाकरोति । भेदेन निदर्शनमिथुनद्वयोपन्यासः ।

अत्र वेदान्तकल्पतरुकारस्य मतमपि द्रष्टव्यं वर्तते । तद्यथा- अनेन ज्ञानमेव तत्र क्रिया इति भाष्ये क्रियाशब्देन क्रियागतमवस्तुतन्त्रत्वं लक्षयित्वा प्रतिषिध्यत इति व्याख्यातम् । अत एव हि ब्रह्मज्ञानं न चोदनातन्त्रमिति दार्ष्टान्तिके चोदनातन्त्रत्वं प्रतिषेधति । , नब्रवीति न क्रियेति । 7

6·2·0 प्रमाणस्य स्वरूपं भेदाश्च

धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायां 'प्रमाकरणं प्रमाणम्' इत्येवंप्रकारेण प्रमाणस्य लक्षणं कृतम् । तत्र प्रमा का इत्यस्मिन् विषये सः कथयति स्मृतिव्यावृत्तं प्रमात्वम् , अनधिगताबाधितविषयज्ञानत्वम् । इति । स्मृतिसाधारणं तु अबाधितविषयज्ञानत्वम् ।

अद्वैतवेदान्तनये प्रत्यक्षानुमानोपमानागमार्थापत्तिरनुपलब्धिप्रमाणानि स्वीक्रियन्ते । भामतीप्रस्थानस्य सन्दर्भे प्रमाणद्वयमेव विशेषतः विचारणीयं वर्तते । प्रत्यक्षप्रमाणमागमप्रमाणञ्च । अनयोः द्वयोः प्रमाणयोरपि ते एव पक्षाः अत्र विश्लेषणीयाः सन्तीति, एषां निरूपणे भामतीप्रस्थानुयायिनां विशिष्टाः विचाराः सन्ति ।

प्रत्यक्षप्रमाणस्य तथा आगमप्रमाणस्य विश्लेषणम् अग्रे करिष्यामः । अत्र अनुमानादिप्रमाणानां यत् स्वरूपं वेदान्तपरिभाषायामुपलभ्यते तस्य संक्षेपेण उल्लेखः क्रियते ।

<u>अनुमानम्</u> - अनुमितिकरणमनुमानम् । अनुमितिश्च व्याप्तिज्ञानजन्यव्याप्तिज्ञानानुव्यवसायादिस्तत्त्वेन तज्जन्यत्वाभावात् नानुमितित्वम् । अनुमितिकरणं च व्याप्तिज्ञानम् , तत्संस्कारोऽवान्तरव्यापारः । न तु तृतीयलिङ्गपरामर्शोऽनुमितौ करणम् , तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात् । 8

<u>उपमानम्</u> - सादृश्यप्रमाकरणमुपमानम् । तथाहि नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः ,अयं पिण्डो गोसदृश इति । तदनन्तरं भवति निश्चयः अनेन सदृशी मदीया गौरिति । तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसदृशज्ञानं करणम् । गोनिष्ठगवयसदृशज्ञानं फलम् । न चेदं प्रत्यक्षेण संभवति गोपिण्डस्य तदेन्द्रियासंनिकर्षात् । नाप्यनुमानेन , गवयनिष्ठगोसादृश्यस्य अतल्लिङ्गत्वात् । 9

अर्थापत्तिः- उपपाद्यज्ञानेन उपपादककल्पनं अर्थापत्तिः । तत्रोपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिः तत्तत्रोपपादकम् । यथा रात्रिभोजनेन विना दिवा भुञ्जानस्य पीनत्वं नोपपन्नम् इति । तादृशपीनत्वस्य स्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् ।

अनुपलब्धिः - ज्ञानकरणाजन्याभावानुभवासाधारणकारणम् अनुपलब्धिरूपम् प्रमाणाम् । अनुमानजन्यातीन्द्रियभावानुभव-हेतावनुमानादिावतिव्याप्तिवारणाय अजन्यान्तं पदम् । अदृष्टादौ साधारणकारणे अतिव्याप्तिवारणाय असाधारणेति पदम् । अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणाय अनुभवेति विशेषणाम् ।

6•2•। प्रत्यक्षप्रमायाः स्वरूपम्

अद्वैतवेदान्तिनां मतानुसारं वृत्तिविशिष्टं चैतन्यम् अथवा वृत्तिद्वारा अभिव्यक्तं चैतन्यमेव प्रमा । एवं च चैतन्यस्याभिव्यञ्जका विषयाकारा वृत्तिः प्रमाणम् ।

वेदान्ते प्रत्यक्षपदं चैतन्यार्थे रूढम् । चैतन्यं च स्वप्रकाशकम् । तद्यथा-(क) अपरोक्षव्यावृत्तयोग्यस्य धीपदस्य नः । [10]

सम्भवे स्वप्रकाशस्य लक्षणासम्भवः कुतः ।।

(ख) अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति सिद्धम् ।। [11]

(ग) साक्षादपरोक्षाद्ब्रह्म [12]

अस्याः एव धारणायाः उल्लेखः भामत्यां वाचस्पतिनाऽपि कृतः । तद्यथा - "स्वप्रकाशत्वं चित्वम्"[13] अबाधितास्वयंप्रकाशतैवास्य सत्ता । यद्यपि उपर्युक्तप्रकारेण सर्वेषां ज्ञानानां प्रत्यक्षत्वं प्रसज्यते , तथापि सर्वाणि ज्ञानानि प्रत्यक्षे न समाविशन्ति । तदेव ज्ञानं प्रत्यक्षं, यस्य विषयः करणं च उभयमेव प्रत्यक्षं स्यात् । अनुमितौ विषयः यथा अग्निः परोक्षो भवति । अतस्तत्र नापरोक्षत्वप्रसक्तिः ।

उपर्युक्तप्रकारेण प्रत्यक्षप्रमायां करणविषययोः प्रत्यक्षत्वे सर्वेषां वेदान्तिनां मतैक्यमस्ति । किन्तु करणविषययोर्मध्ये प्राधान्यं

कस्य वर्तते इत्यस्मिन् विषये अद्वैतवेदान्तिनां पारस्परिको मतभेदो वर्तते ।

विवरणपद्धतीनां मतानुसारं प्रत्यक्षज्ञाने विषयस्य प्राधान्यमस्ति । किन्तु भामतीपद्धतीनां मतानुसारं करणस्य प्राधान्यम्। तद्यथा वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रः कथयति - पूर्वाचार्याणां (विवरणपद्धतीनाम्) आशयः संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनम्। किन्तु प्रमेयविशेषनिबन्धनमित्युपपादितम् ।[14] अन्येषां (भामतीपद्धतीनाम्) त्वेवमाशयः - करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वं न विषयविशेषनिबन्धनम्। एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात् ।[15]

उपर्युक्तप्रकारेण प्रमेय (विषय) विशेषनिबन्धनं प्रत्यक्षमिति विवरणपद्धतीनां मतमस्ति । विषयः अर्थात् यद्वस्तु यस्य आकारं गृहीत्वा अवलम्ब्य वा ज्ञानमुत्पद्यते । यथा घटपटादयः स्थूलपदार्थाः सुख-दुखादयः सूक्ष्मपदार्थाः । कश्चित् विषयः प्रत्यक्षः अथवा अपरोक्षः अस्तीति अस्य निर्धारणं केन प्रकारेण भवति, इत्यस्मिन् विषये एतद्ज्ञातव्यं वर्तते यत् विषयगतायाः अपरोक्षतायाः अर्थोऽस्ति-विषये अपरोक्षत्वाभिधानस्य भावः । अर्थात् विषयस्य जडत्वेऽपि स्वभावात् तस्य चैतन्येन सहाभिन्नत्वम् । किन्तु जडस्य स्वभावः चैतन्यस्य ~~स्वभावात्~~ भिन्नः । अतः कथं तयोः ~~अभेदः~~ अभेदत्वम् ? व्यावहारिकदृष्ट्यापि जडचैतन्ययो पार्थक्यं स्पष्टमेव । अतः अत्र इमे प्रश्नाः उदीयन्ते । (क) चैतन्यस्य केन रूपेण सह जडस्याभिन्नत्वम् ? (ख) तयोर्मध्ये अभेदस्य स्वरूपं किम् ?

उपर्युक्तप्रश्नद्वयस्य समाधानं पद्मपादाचार्यः एवं प्रस्तौति -(क) अन्तरपरोक्षानुभवात् न विषयस्यापरोक्षता भिद्यते ।[16] (ख) अन्तरापरोक्षानुभवावगुण्ठित एव जागरणे अप्यर्थोऽनुभूयते । अन्यथा जडस्य प्रकाशानुपपत्तेः । यथाऽवगुण्ठितो घटः प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशो भवति ।[17] अस्मिन् सन्दर्भे पंचपादिकाविवरणे प्रकाशात्मयतिनोक्तं यत् लोके विषयस्यापरोक्षता - संविदभेदादथवा विषयस्याव्यवधानतया

स्वसंविज्जनकत्वादथवा प्रमाणकारणेन्द्रियसंप्रयुक्तत्वाद्वा अवगन्तव्या ।[18] एतेषु त्रिषु विकल्पेषु संविदभेद एव विषयस्यापरोक्षत्वमिति अद्वैतवेदान्ताभिमतम् । यतः द्वितीयः विकल्पः प्रथमस्य विकल्पस्यैव विस्तारः । तृतीयः विकल्पस्तु नैयायिकप्रभावितः ।

किन्तु अत्रापि एष प्रश्नः उदेति यत् संविदः अन्तर्गतं ब्रह्मचैतन्यं (शुद्धचैतन्यं) अभिव्यक्तचैतन्यं (जीवचैतन्यं) उभयमेव समाविष्टम् । अतः केन चैतन्यरूपेण सह विषयस्याभेदत्वम् ? अस्योत्तरं विवरणदृष्ट्या अप्पयदीक्षितः परिमले पूर्वपक्षत्वेन इत्थं उदाहरति ।[19] अभिव्यक्तचैतन्याभिन्नत्वमर्थस्यापरोक्ष्यम् । तत्तु नित्याभिव्यक्तजीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम् । अत एव यत्साक्षादपरोक्षात्ब्रह्मेति श्रुतिः। अभिन्नत्वं च जडविषयस्य न, अपि तु विषयावच्छिन्नस्य चैतन्यस्य जीवचैतन्येन सह भवति ।

विवरणपद्धिथिनाम् उपर्युक्तस्य कथनस्य प्रत्याख्यानं भामतीपद्धिथिभिः एवं क्रियते । - । ज्ञानगतापरोक्षतायाः निर्णयात्पूर्वम् विषयस्यापरोक्षतायाः निरूपणं न संभवति । अत्र कारणानि -

(क) स्वरूपसदभेदविवक्षायां चाक्षुषवृत्त्यभिव्यक्तपर्वतावच्छिन्नचैतन्येन व्यवहितव्यक्त्यवच्छिन्नचैतन्यस्य तेन व्यवहितवह्नेश्च स्वाभाविकाभेदसत्वेन व्यवहितवह्नेरप्यपरोक्षत्वापत्तेः ।[20]

(ख) स्फुरदभेदविवक्षायां तादात्म्याध्यासविषये दुःखशोकादौ तदानीं सद्रूपब्रह्माभेदस्फुरणादापरोक्ष्याभावापत्तेः ।

(ग) स्वावरणनिवृत्त्यनुकूले चैतन्याभेदवत्वविवक्षायामावरणनिवर्तकत्वाग्रहणाधीनमापरोक्ष्यग्रहणम् । आपरोक्ष्यग्रहणाधीनमावरणनिवर्तकत्वग्रहणमिति परस्पराश्रयापत्तेः ।[21]

उपर्युक्तप्रकारेण विवरणमतस्य खण्डनं कृत्वा परिमलकारेण भामतीमतावलम्बिनां मतस्य सारः एवं प्रकटितः - अथवा प्रत्यक्षप्रमायाः विषयत्वमेव विषयस्यापरोक्षतायाः निमित्तम् । अथवा

एवंविधः यः ज्ञानजन्यव्यवहारः भवति, अयं घटः अहं घटं पश्यामि अस्याशयः अयमस्ति यत् तस्य व्यवहारयोग्यत्वमेव विषयस्य अपरोक्षता । घट एव प्रत्यक्षघट उच्यते । अयं घटः एतादृशज्ञानजन्यघटव्यवहारयोग्यः

~~अन्योयः वह्निः तादृशः नास्ति । अहं व~~

अनुमेयः वह्निः तादृशः नास्ति । अहं ब्रह्मास्मि एतादृशेण व्यवहारेण जीव-चैतन्य-ब्रह्मचैतन्ययोः परोक्षापरोक्षत्वमस्ति तस्याभेदः अपरोक्ष एव । तद्यथा- एवमपरोक्षज्ञानलक्षणव्यवस्थितौ तज्जन्यव्यवहारयोर्योग्यत्वमर्था-परोक्ष्यमिति ।[22]

अस्मिन् विषये धर्मराजाध्वरीन्द्रेण विवरणपद्धतिना मतं समर्थितम् । तद्यथा-

(क) घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम्[23]

(ख) प्रमात्रभेदो नाम न तदैक्यम् , किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः।[24]

(ग) घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता , अधिष्ठानसत्तातिरिक्तया आरोपितसत्तायाः अनङ्गीकारात् ।[25]

(घ) विषयचैतन्यं च पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता , नान्येति सिद्धं घटादेरपरोक्षत्वम् ।[26]

धर्मराजाध्वरीन्द्रेण ज्ञानगतप्रत्यक्षस्य तथा विषयगतप्रत्यक्षस्य लक्षणे पृथक् पृथक् निर्दिष्टे । तद्यथा -

(क) तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम् ,तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् ।[27]

(ख) स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् । तत्र संयोग-संयुक्ततादात्म्यादीनां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः ।[28]विषयस्योपरि एव ज्ञानस्य स्वरूपभेदः निर्भरः अस्ति । विषयं लक्ष्यीकृत्यैव ज्ञानस्य स्मृत्यादयः भेदाः स्वीक्रियन्ते । अबाधितविषयत्वमेव प्रमात्वम् । अतः वृत्तेरपरोक्षत्वं च अपरोक्षार्थविषयत्वमिति तत्त्वविवेकदीपनस्य पूरणीटीकायां अग्निहोत्रयज्वापि स्पष्टयति । पञ्चपादिकाविवरणे प्रकाशात्मयतिना यत् कथितं , तदेवास्मिन् सन्दर्भे वर्तते । तद्यथा- अर्थोपाध्यपरोक्षसंविदवच्छेदकं ज्ञानविशेषरूपेण द्रष्टव्यं मपरोक्षम् ।[29]

भामतीपद्धतिना मतस्याधारः अयमस्ति यत् कारणस्य स्वरूपे एव कार्यस्य स्वरूपं निर्भरं भवति । प्रमा तदेव प्रत्यक्ष-

प्रमा भवति यदा तस्याः कारणं प्रत्यक्षं भवति । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिः स्वीकरणीया स्यात् । तद्यथा- न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम् , अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वम्पदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् ।[30]

अमलानन्देनापि वेदान्तकल्पतरौ एतत् कथितम् यत् अपरोक्षप्रमायाः हेतोः उत्पन्नत्वं एव ज्ञानस्य (वृत्त्यवच्छिन्नचैतन्यस्य) प्रत्यक्षतायाः नियामकम् । तद्यथा- तत्रापरोक्षप्रमाकरणादेव तत्साक्षात्कारः ------------------ शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः , प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायाः साक्षात्कारे देहात्मभेदविषयानुमितेरपि तदापत्तिः । दशमस्त्वमसीत्यत्रापि तत्सन्निवादपक्षादेव साक्षात्कारः ,अन्धादेस्तु परोक्षधीरेव ।[31]

अप्पयदीक्षितः अपि कल्पतरुपरिमले विवरणमतस्य खण्डनं कृत्वा एवं कथयति यत् - स्वाविषयकज्ञानाजन्यज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वक्तव्यम् ।[32] अस्मिन् सन्दर्भे तस्यैतत् कथनमपि द्रष्टव्यं वर्तते यत् यदीश्वरज्ञानमुपादेयगोचरज्ञानतया बहुस्यां प्रजायेयेतिवादिदं ज्ञानस्य तज्जन्येषूक्तज्ञानेष्वतिव्याप्तिवारणाय सामानाधिकरण्यं ज्ञाने विशेषणं देयम्[33]।

संक्षेपतः ज्ञानगतप्रत्यक्षविषये भामतीपद्धिथानां मतस्य सारः अयमस्ति यत् स्वविषयविषयक-स्वसमानाधिकरण-ज्ञानाजन्यज्ञानत्वम् ज्ञानगतप्रत्यक्षत्वम् ।

किन्तु अस्मिन् मतेऽपि एषा आशङ्का उपस्थाप्यते यत् कालकृतपरत्वापरत्वयोः प्रत्यक्षे उक्तलक्षणस्य अव्याप्तिः स्यात् । एवमेव द्वित्वादिप्रत्यक्षेऽपि लक्षणमव्याप्तं स्यात् ।अपेक्षाबुद्धेः अप्रत्यक्षत्वात् । ब्रह्मविद्याभरणे अद्वैतानन्दयतिना विवरणपद्धिथनां पक्षतः एतादृशाः आक्षेपाः उपस्थापिताः ।

अतः उपर्युक्तरूपेण विवरणपद्धिथभिः भामतीपद्धिथभिश्च करणविषययोः प्रधान्यविषये स्वकीयपक्षप्रतिपादनाय यत् कथितं तत् निर्दोषं नास्ति । सम्भवतः एतदेव परिभाव्य धर्मराजाध्वरीन्द्रेण

उभयोः मतयोः समन्वयः कृतः वेदान्तपरिभाषायां कृतः । तद्यथा- सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत् किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किं वा विषयगतस्य ? आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदः इति ब्रूमः । तथाहि- त्रिविधं चैतन्यं विषयचैतन्यं, प्रमाणचैतन्यं, प्रमातृचैतन्यं चेति । तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम् । अन्तःकरणाद्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम् । अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् ।[34]

(ख) यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते ।

(ग) अयं घटः इत्यादिप्रत्यक्षस्थले घटादेः तदाकारवृत्तेश्च बहिरेकत्रदेशे समवस्थानात् तदुभयावच्छिन्नं चैतन्यमेकमेव विभाजकयोरप्यन्तःकरणवृत्ति - घटादिविषययोरेकदेशत्वेन भेदजनकत्वात् । मठान्तर्वर्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशात् भिद्यते ।[36]

(घ) अयं घटः इति प्रत्यक्षस्थले घटाकारवृत्तेः घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वाऽन्नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वम् ।[37]

उपर्युक्तप्रकारेण एतत् स्पष्टं भवति यत् धर्मराजाध्वरीन्द्रः प्रत्यक्षविषये यत् कथयति तत्र भामतीप्रस्थानां तथा विवरणप्रस्थानां मतानि समाविष्टानि सन्ति। भामतीप्रस्थानः करणस्य प्राधान्यं स्वीकृत्य प्रमाणचैतन्येन सह विषयावच्छिन्नचैतन्याभिन्नत्वम् प्रत्यक्षत्वमिति प्रतिपादयन्ति । विवरणप्रस्थानस्तु प्रमातृचैतन्यस्य विषय चैतन्येन सहाभिन्नत्वं प्रत्यक्षत्वम् इति कथयन्ति । अतः उत्तरवर्ति वेदान्तशास्त्रीयमीमांसायां उभयोरेव प्रस्थानयोः आदरः दृश्यते ।

### 6·2·2 प्रत्यक्षप्रमाणस्य स्वरूपम्

'मानाधीना मेयसिद्धिः' इति न्यायमतमनुसृत्य भामतीप्रस्थानः प्रत्यक्षप्रमाणस्य माध्यमेन प्रत्यक्षविषयं निरूपयति । प्रत्यक्षप्रमाणजन्यं ज्ञानं प्रत्यक्षप्रमाणम् । एतादृशप्रत्यक्षज्ञानविषयत्वं च विषयगतप्रत्यक्षमिति तेषां मतम् ।

विवरणप्रस्थानस्तु विषयस्य प्रत्यक्षत्वम् आदौ

प्रतिपाद्य तदवलम्ब्य प्रत्यक्षप्रमाणं निरूपयन्ति । अस्यायमर्थः यत् अपरोक्षविषयस्यैव विषयगतप्रत्यक्षज्ञानम् । एतादृशप्रत्यक्षज्ञानस्य साक्षात्साधनं च प्रत्यक्षप्रमाणम् । विषयप्रत्यक्षतानिबन्धना ज्ञानप्रत्यक्षता । ज्ञानप्रत्यक्षानिबन्धना च प्रत्यक्षप्रमाणता ।

भामतीपद्धिथनः प्रत्यक्षज्ञानस्य स्वरूपमवधार्य विषयप्रत्यक्षतां निरूपयन्ति । यतः प्रत्यक्षविषयमवलम्ब्य प्रत्यक्षज्ञानस्वरूपनिर्धारणं न सम्भवति । विषयप्रत्यक्षस्य स्वरूपमवधार्यापि ज्ञानगतप्रत्यक्षनिरूपणं सम्भवति । इत्येवंप्रकारेण प्रत्यक्षज्ञानमेवप्रथमं अवगन्तव्यं तदनन्तरं च विषयगतप्रत्यक्षं निरूपणीयम्। संक्षेपतः भामतीपद्धिथनां मतस्य सारः अयमस्ति यत् ज्ञानगतप्रत्यक्षमेव प्रत्यक्षम् ।

विवरणपद्धिथनां मतानुसारं विषयगतप्रत्यक्ष - निरूपणं प्रत्यक्षज्ञाननिरूपणं विनैव सम्भवति । अतः विषयगतप्रत्यक्षमेव आदौ निर्धारणीयम् । तदनन्तरं च ज्ञानगतप्रत्यक्षम् ।

उपर्युक्तप्रकारेण भामतीपद्धिथनः ज्ञानगतप्रत्यक्षमेव प्रत्यक्षं मन्वते । किन्तु विवरणपद्धिथनः विषयगतप्रत्यक्षमेव प्रत्यक्षमिति निरूपयन्ति । अस्य मतभेदस्य किं कारणमित्यस्मिन् विषये एतत् अवगन्तव्यं यत् भामतीपन्थिनः , प्रमाणस्वरूपानुरूपं हि प्रमाणगम्यस्य प्रमेयस्य वा स्वरूपं भवतीति मन्वते । प्रमाणं कारणं , कारणस्वभावविरुद्धं कार्यं न संभवति ।

विवरणपद्धिथनां मतानुसारं तु विषयस्य प्रत्यक्षेणैव तद्गतज्ञानस्य प्रत्यक्षत्वं सिद्ध्यति । अतः विषयस्य प्रत्यक्षमेव प्रथमतः निर्धारणीयम् । ज्ञेयविषयः साक्षात् सम्बन्धेन ज्ञानगोचरः भवति चेत् तदेव विषयगतप्रत्यक्षमवधारणीयम् । तद्विषयमवलम्ब्य यत् ज्ञानमुदेति तत् ज्ञानगतप्रत्यक्षम् तस्य प्रत्यक्षज्ञानस्य प्रमाणं च प्रत्यक्षप्रमाणम् ।

अत्रैतदवधारणीयं यत् वेदान्तवाक्यश्रवणादिभ्यः यत् ब्रह्मज्ञानमुदेति ~~तत्~~ तस्य परोक्षजन्यत्वात् भामतीपद्धिथनः परोक्षत्वं निरूपयन्ति ।

किन्तु विवरणपद्धिनामेतत् कथनमस्ति यत् ब्रह्मज्ञानस्य परोक्षत्वं न स्वीकरणीयम् । परोक्षेण प्रत्यक्षस्य अज्ञानस्य नाशः भवितुं न शक्नोति । अतः तत्त्वमस्यादिवाक्यजन्यज्ञानस्य अपरोक्षत्वमेव स्वीकरणीयमिति । अस्य विपरीतं भामतीपद्धिना मते वेदान्तवाक्यश्रवणादुत्पन्नं ज्ञानं परोक्षम् । यतः निरन्तरनिदिध्यासनादिना यत् ब्रह्मज्ञानं भवति तदेव प्रत्यक्षम् ।

विवरणपद्धिना मते अपरोक्षविषयकं ज्ञानमेव ज्ञानगतप्रत्यक्षम् । किन्तु भामतीपद्धिना मते अर्थगतापरोक्षत्वस्य निरूपणासंभवात् तद्विषयकज्ञानस्यापरोक्षत्वं निर्णेतुम् न शक्यते ।

ज्ञानगतप्रत्यक्षस्य कः अर्थः, इत्यस्मिन् विषये भामतीपद्धिना एतत् कथनमस्ति यत् – ज्ञानजन्यज्ञानत्वं ज्ञानापरोक्षम् । यत्ज्ञानं ज्ञानान्तरेण न जन्यते तत् प्रत्यक्षम् (चाक्षुषादिप्रत्यक्षे अन्तःकरणावृत्त्यवच्छिन्ने चैतन्ये नित्याभिव्यक्तसाक्षिचैतन्ये च समन्वितं भवति ।) अनुमित्यादीनां ज्ञानजन्यत्वात् तत्रास्य लक्षणस्य नातिव्याप्तिः । ज्ञानजन्यत्वं नाम प्रत्यक्षज्ञानविषयातिरिक्तस्य विषयविषयकस्वसमानाधिकरणज्ञानाजन्यत्वमिति बोध्यम् । एवं च स्वविषयविषयकस्वसमानाधिकरण-ज्ञानजन्यज्ञानत्वमपरोक्षत्वम् । अस्मिन् सन्दर्भे भामतीपद्धिना निम्नलिखितानि कथनानि प्रष्टव्यानि सन्ति – नैव साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् ।[38] अस्मिन् विषये वेदान्तकल्पतरुकारस्यमतमप्येतदस्ति । तद्यथा तत्रापरोक्षप्रमाकरणादेव तत्साक्षात्कारः अन्तःकरणं च सोपाधिके आत्मनि जनयत्यहंवृत्तिमिति सिद्धमस्यात्मपरोक्षधीहेतुत्वम् । तत्तु शाब्दजनितब्रह्मात्मैक्यधीसन्ततिवासितं तत्पदलक्ष्यब्रह्मात्मतां जीवस्य साक्षात्कारयति, अक्षमिव पूर्वानुभवसंस्कारवासितं तद्वेदान्तोपलक्षितैक्यविषयप्रत्यभिज्ञाहेतुः, शाब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः[39] । विवरणमतावलम्बिभिः भामतीपद्धिना मतं न स्वीक्रियते । विवरणपद्धिना मते विषयस्य अपरोक्षत्वयोग्यमेव तद्ग्राहकज्ञानापरोक्षत्वस्य नियामकम् ।

विवरणमते ब्रह्म एव अज्ञानस्य आश्रयः विषयश्च । अन्तःकरणप्रतिबिम्बचैतन्यं च जीवः । स च जीवः यद्यपि सर्वव्यापी न स ब्रह्मवत् प्रपंचोपादानमितिविषयेण सह जीवस्य स्वाभाविकः अभेदसम्बन्धः नास्ति।

एवं च जीवचैतन्यविषययोर्मध्ये सम्बन्धस्थापनार्थम् अन्तःकरणं चक्षुरादिद्वारा विषयं प्राप्य तदाकारेण परिणमते । तथाहि - विषयस्यापरोक्षता संविदभेदाद्वा , विषयस्याव्यवधानतया ।
स्वसंविद्जनकत्वाद्वा प्रमाणकरणेन्द्रियसम्प्रयुक्तत्वाद्वा भवति ।।[40]

विवरणपद्धतिना कथनस्यायमाशयः यद् विषयस्यापरोक्षत्वस्वभावत्वमेव अपरोक्षज्ञानस्य नियामकम् । अत्रेयं शङ्का उदेति यद् अपरोक्षस्वभावत्वं तु चैतन्यस्यैव । विषयस्य तु जडत्वात् तस्य अपरोक्षस्वभावत्वं न सिद्ध्यति । अतः विषयस्यापरोक्षत्वं कथम् ? अत्र उच्यते - विषयस्यापरोक्षस्वभावेऽपि अपरोक्षः संविदा सह अभिन्नत्वेन तस्यापरोक्षत्वम् । अभिव्यक्तचैतन्येन सह अनुमेयवह्न्यादीनां अभिन्नत्वेन न भास्यतेइति तत्र लक्षणस्य नातिव्याप्तिः एवं च प्रत्यक्षायोग्येषु धर्माधर्मादिविषयेषु अपि प्रत्यक्षलक्षणस्य नातिव्याप्तिः ।

### 6•2•3• प्रत्यक्षस्य भेदाः

धर्मराजाध्वरीन्द्रेण प्रत्यक्षस्य लक्षणद्वयं पूर्वोक्तरूपेण निरूपितम् । तदनुसारं प्रत्यक्षस्य ज्ञानत्वपक्षमाश्रित्य (अर्थात् ज्ञानगतप्रत्यक्षस्य) द्वौ भेदौ निरूपितौ । तद्यथा - ईश्वरसाक्षिप्रत्यक्षम्-जीवसाक्षिप्रत्यक्षम् । एवमेव प्रत्यक्षस्य विषयत्वमाश्रित्य (अर्थात् विषयगतप्रत्यक्षस्यापि) द्वौ भेदौ निरूपितौ । तद्यथा- सविकल्पकप्रत्यक्षं , निर्विकल्पकप्रत्यक्षं च ।

जीवसाक्षिप्रत्यक्षस्य लक्षणं धर्मराजाध्वरीन्द्रेण एवं निरूपितम् । जीवो नाम अन्तःकरणावच्छिन्नं चैतन्यम् । अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यां अनयोर्भेदः । विशेषणं च कार्यान्वयिव्यावर्तकम् वर्तमानम् , अर्थात् कार्यान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् विशेषणत्वम् । अर्थात् कार्यान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वं उपाधित्वम् यथा 'रूपविशिष्टो घटः' इत्यत्र रूपं विशेषणम् । 'कर्णशष्कुल्यवच्छिन्नं नभः' श्रोत्रं' इत्यत्र कर्णशष्कुलिः उपाधिः । प्रकृते च अन्तःकरणस्य जडतया विषयाभासकत्वायोग्येन विषयाभासकचैतन्योपाधित्वम् । अयं च जीवसाक्षी प्रत्यात्मं एकत्वे मैत्रावगते चैत्रस्यानुसन्धानप्रसङ्गः ।[41]

ईश्वरसाक्षी तु मायोपहितं चैतन्यम् । तच्चैकम् । तदुपाधिभूता- मायायाः एकत्वात् 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादि श्रुतौ मायाभि- रिति बहुवचनस्य मायागतसत्वरजस्तमोरूपोगुणाभिप्रायतया वोपपत्तेः -------- ततश्च तदुपहितं चैतन्यं ईश्वरसाक्षि । तच्चानादिः तदुपाधेर्मायायाः अनादित्वात्[42]।

धर्मराजः एतदपि स्पष्टयति यत् - मायावच्छिन्नं चैतन्यं परमेश्वरः मायायाः विशेषणत्वे ईश्वरत्वम् उपाधित्वे साक्षित्वमिति ईश्वरसाक्षित्वयोर्भेदः। न तु धर्मिणोः ईश्वरतत्साक्षिणोः ।[42]

विषयगतप्रत्यक्षमपि द्विविधम् । सविकल्पकनिर्विकल्पकभेदात् । तत्र सविकल्पकं वैशिष्ट्यावगाहिज्ञानं यथा घटमहं जानामीत्यादि ज्ञानम् । यथा सोऽ- यं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्यज्ञानम् । घटमहं जानामीत्यादिज्ञानं घटरूप- विशेषणविशिष्टज्ञानावगाहिज्ञानत्वात् वैशिष्ट्यावगाहीत्यर्थः । संसर्गो विशेष्येण विशेषसम्बन्धः । वैशिष्ट्यम् तद्रहितत्वं संसर्गानवगाहित्वम् ।यथा सोऽयं देवदत्तः ।

अत्रेयं शङ्का उदेति यत् सा यं देवदत्तः इदं ज्ञानं इन्द्रियजन्य- त्वात् कथं प्रत्यक्षम् ? एतत्तु शाब्दं स्यात् , अस्य समाधानं धर्मराजा- ध्वरीन्द्रेण एवं कृतम् - नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं दूषितत्वात् । किन्तु योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम् । तथा सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम् । एवं तत्त्वमसीत्यादि - वाक्यजन्यज्ञानस्यापि तत्रप्रमातुरेव विषयतया तदुभयाभेदस्य सत्वात् ।।[43]

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पत्वम् अत्रोच्यते वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम् । अनभिमतसंसर्गस्या- पि वाक्यजन्यज्ञानविषयत्वापत्तेः , किन्तु तात्पर्यविषयत्वम् ।[44]

अत्र एतत् ज्ञातव्यं यत् मीमांसकानां मते सर्वाणि ज्ञानानि सर्वप्रथमं आलोचनमात्राणि भवन्ति । अस्यार्थः अयमस्ति यत् वस्तुतः सर्वप्रथमं वस्तुनः अविशिष्टस्वरूपमात्रस्य ज्ञानं भवति । तद्यथा -

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ।।

निर्विकल्पकसविकल्पकयोर्मध्ये कस्य प्राधान्यं वर्तते इत्यस्मिन् विषये तिस्रः पर- म्पराः प्रचलिताः सन्ति । [illegible]

[illegible] । [illegible] '/4

तद्यथा- बौद्धदर्शने केवलं निर्विकल्पक ज्ञानमेव प्रत्यक्षम् इति न्यायबिन्दौ प्रतिपादयति धर्मकीर्तिः[45]। जैनदर्शने सांख्ययोगे च सविकल्पस्यैव प्रमाणत्वं स्वीकृतम् । तद्यथा- न तावत् निर्विकल्पकं अध्यवसायविकल्पत्वात् तस्य । हिताहित-प्राप्तिपरिहारसमर्थम् हि प्रमाणम् ।-------- तन्निश्चयात्मकम् ---।[46] प्रतिविषयाध्यासो दृष्टम् ।[47] न्यायवैशेषिके तथा पूर्वमीमांसायां तथा अद्वैतवेदान्ते निर्विकल्पकसविकल्पकयोर्द्वयोः एव प्रत्यक्षत्वं स्वीक्रियते । तद्यथा - न्यायवार्तिकतात्पर्यटीकायां स्वनामधन्यः वाचस्पतिमिश्रः - इह द्वयी प्रत्यक्ष-जातिः अविकल्पिका सविकल्पिका चेति । तत्र उभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन संगृहीतापि स्वशब्देनोपात्ता ।तत्र विप्रतिपत्तेः । तत्र अविकल्पिकयाः पदम् अव्यपदेश्यमिति सविकल्पिकायाश्च व्यवसायात्मकमिति ।

एवंप्रकारेण अद्वैतवेदान्तानुसारं प्रत्यक्षस्य भेदाः निम्नलिखिताः सन्ति । -

प्रत्यक्षम्
- ज्ञानगतप्रत्यक्षम्
  - ईश्वरसाक्षिः
  - जीवसाक्षिः
- विषयगतप्रत्यक्षम्
  - सविकल्पकम्
  - निर्विकल्पकम्

## 6.3.0 वृत्तेः स्वरूपम्

वृतु वर्तने इत्यस्मात् धातोः क्तिन् प्रत्ययात् निष्पन्नः अयं वृत्तिशब्दः साधारणतया अस्तित्वस्य विशिष्टायाः स्थितेः विशिष्टायाः अवस्थायाः वाचकः अस्ति । किन्तु अद्वैतवेदान्ते वृत्तेः संकल्पना ज्ञानमीमांसायाः विशेषतः प्रत्यक्षस्य प्रक्रियायाः अङ्गत्वेन समादृता वर्तते । सांख्ययोगे अपि वृत्तेः प्रत्ययस्य निरूपणं ज्ञानमीमांसायाः अङ्गत्वेन दृश्यते । अस्मिन् विषये पूर्वाचार्याणां यानि कथनानि सन्ति तेषां विहगावलोकनमावश्यकमिति कृत्वा तेषां समुल्लेखः क्रियते ।

शङ्कराचार्यस्य मतानुसारं अन्तःकरणस्य विशिष्टा स्थितिः अथवा अवस्था एव वृत्तिः । तद्यथा- यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । कामादयश्चास्य वृत्तयः कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन

एव इति[48]। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकं तदेव वृत्ति - भेदात् क्वचिद् भिन्नवत् व्यपदिश्यते - मनो बुद्धिरहङ्कारश्चित्तं चेति[49]।

वार्तिककारमतम्

सुरेश्वराचार्यस्य मतानुसारं बुद्धेः परिणामः वृत्तिः । अर्थाद् विषयोन्मुखत्वे सति तदनुकूलबुद्धेः व्यापारः वृत्तिरित्युच्यते ।वृत्तयः अग्निस्थानीयचैतन्यस्य तप्तायःस्फुलिङ्गवत् भवन्ति । तथाहि -

(क) अपि प्रत्यक्तमो नित्यं भास्वच्चैतन्यबिम्बितम् ।
बुद्धितद्वृत्तयश्चैवं तप्तायोविस्फुलिङ्गवत् ।।[50]

(ख) अन्तःकरणवृत्तिर्या चक्षुरादिसमाश्रया ।
रूपादिविषयाभासा लौकिकी दृष्टिरुच्यते ।।
तस्याक्षक्रियमाणत्वाज्जन्मनाशादिवर्जिता ।[51]

प्रकटार्थकारमतम्

(ग) मनःपरिणामसंविद्व्यंजको ज्ञानम् ।

धीर्भीरित्येतत् सर्वम् मन एव इति श्रुतिः। धीशब्दतावाच्यज्ञान- परिणामवन्मनो अन्वाहि संवेदनं च विषयावच्छिन्नं चैतन्यभेदप्रकाशनशक्ति- मत् सत्वप्रधानं मनः अदृष्टादिसहकृतं दीर्घप्रभाकारेण स्वकर्मदेशं सरीसर्ति -------।[52] एवं प्रकटार्थकारोपि कथयति यत् चक्षुरादीन्द्रियाणां सम्मुखं विषयस्योपस्थितौ मनसः तदनुकूलः यः परिणामः भवति स एव वृत्ति - शब्दवाच्यः इति ।

विद्यारण्यस्य मतम्

विद्यारण्योपि विवरणप्रमेयसंग्रहे एवं कथयति यत् अन्तःकरण- स्य विषयज्ञानानुकूलः परिणामः एव वृत्तिः । तथाहि - ज्ञायते अनेन इति करणव्युत्पत्याबुद्धिवृत्तिर्ज्ञानम् -------[53] अध्यासपरिनिष्पन्नान्तःकरणसम्पि- ण्डितस्य आत्मनो ज्ञानाकारपरिणामो युज्यते ।

मधुसूदनसरस्वतीमतम्

मधुसूदनसरस्वती वृत्तेः निरूपणमेवं करोति : - शरीरमध्ये स्थितः सर्वशरीरव्यापकसत्वप्राधान्येन सूक्ष्मभूतारब्धः अन्तःकरणाख्यो

अविद्याविवर्तो दर्पणादिवदतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान् घटादिविषयान् व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत् । ----देहमध्यविषयवर्ति दण्डायमानस्तद्भागो वृत्तिज्ञानाख्यः[54] ।

धर्मराजाध्वरीन्द्रस्य मतमपि अस्मिन् विषये निम्नलिखितमस्ति । तद्यथा- तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते , स एव परिणामो वृत्तिरित्युच्यते[55] ।

वाचस्पतिमिश्रस्य मतम्

वाचस्पतिमिश्रस्य कथनं वृत्तेः विषये निम्नलिखितमस्ति । 'एकमपि चान्तःकरणमनेकक्रियाकारी भविष्यति , यथा प्रदीपः एको रूपप्रकाशवर्तिविकारस्नेहशोषणहेतुः तस्मान्नान्तःकरणभेदः । एकमेव त्वन्तःकरणं मननात्मन इति , चाभिमानादहंकार इति चाध्यवसायाद्बुद्धिरिति चाख्यायते । वृत्तिभेदाश्चाभिन्नमपि भिन्नमिवोपचर्यते त्रयमिति । तत्वेन त्वेकमेव[56]' ।

6.3.। वृत्तेः प्रयोजनम्

अद्वैतवेदान्ते ज्ञानमीमांसायाः सन्दर्भे पूर्ववर्तिनां विभिन्नानाम् आचार्याणां विभिन्नेषु ग्रन्थेषु ये विचाराः उपलभ्यमानाः आसन् तेषां सारः वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण सम्यक्तया निर्दिष्टः । प्रत्यक्षप्रमाणस्य विश्लेषणं कुर्वता धर्मराजाध्वरीन्द्रेण अन्तःकरणवृत्तेः विषयेऽपि अनेके प्रश्नाः पूर्वपक्षरूपेणोपन्यस्ताः तथा तेषां समाधानाय अनेकाः युक्तयः निर्दिष्टाः । एवंप्रकारेणान्तःकरणवृत्तेः विश्लेषणस्य सन्दर्भे अद्वैतवेदान्तिनां मतस्य सारः अपि वेदान्तपरिभाषायां द्रष्टुं शक्यते ।

प्रत्यक्षप्रमाणस्य लक्षणं निर्दिशता धर्मराजाध्वरीन्द्रेण उक्तम् - प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम् । प्रत्यक्षप्रमा चात्र चैतन्यमेव । 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः । अत्रायं प्रश्नः उदेति यद् वेदान्तनये प्रमा ज्ञानम् , चैतन्यं ब्रह्म इत्यादिरूपेण ज्ञानचैतन्ययोरैक्यं वर्तते । अतः ज्ञानचैतन्ययोरभिन्नत्वाद् अनादित्वाच्च कथं चक्षुरादेः ज्ञानकरणत्वम् ? अस्य प्रश्नस्य समाधानाय उच्यते - न तावदन्तःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात् । सादित्वं च तन्मनो असृजत इत्यादि श्रुतेः । वृत्तिरूपज्ञानस्य

वृत्तिरूपज्ञानस्य मनोधर्मत्वे च काम: संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव[59] इति मानम् । धीशब्देन वृत्तिरूपज्ञानाभिधानात् । अत एव कामादेरपि मनोधर्मत्वम्। अत्र पुन: एष आक्षेप: क्रियते यत् - कामादेरन्त:करणधर्मत्वे स्वीकृते सति 'अहमिच्छामि' एतादृश: अनुभव: आत्मधर्मत्वमवगाहमान: कथमुपपद्येत अस्य आक्षेपस्य समाधानाय उच्यते - अय:पिण्डस्य दग्धृत्वाभावे अपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् यथा अयो दहतीति व्यवहारस्तथा सुखाधाकारपरिणाम्यन्त:करणैक्याध्यासात् अहं सुखी दुखीत्यादिव्यवहार:[60] ।

अन्त:करणस्य इन्द्रियत्वात् इन्द्रियाणां च अतीन्द्रियत्वात्कथं अहमित्यत्र प्रत्यक्षविषयता उपपद्येत अस्या: शङ्काया: समाधानार्थं उच्यते - न तावदन्त:करणमिन्द्रियमित्यत्र मानमस्ति 'मन:षष्ठानीन्द्रियाणि' इति भागवत्गीतावचनम् 'वेदानध्यापयामास महाभारतपंचमान्' इत्यादिवत् संख्यापूरकत्वं निर्दिशति न तु तज्जातीयत्वम् । अपि च इन्द्रियेभ्य: परा ह्यर्था: अर्थेभ्यश्च परं मन: इत्यादि काठकश्रुत्या मनस: अनिन्द्रियत्वावगम: । एवमेव मनसो अनिन्द्रियत्वे अपि सुखादिप्रत्यक्षस्य साक्षात्त्वं युज्यते । यत: नहि इन्द्रियजन्यत्वे साक्षात्त्वम् । अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्ते: । ईश्वरज्ञानस्य अनीन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च[6]।

अत्र एतत् ज्ञातव्यं वर्तते यत् - प्रत्यक्षत्वरूपकार्यतावच्छेदकस्य प्रयोजकेन केनापि भाव्यम् इति सर्व एव दार्शनिका: स्वीकुर्वन्ति । किन्तु प्रयोजक: क: इत्यस्मिन् विषये दार्शनिकानां मतभेदो वर्तन्ते । नैयायिकानां मतानुसारमिन्द्रियार्थजन्यत्वमेवात्र प्रयोजकत्वम् । किन्तु धर्मराजाध्वरीन्द्र: अस्मिन् सन्दर्भे निम्नलिखितप्रकारेण स्वकीयमतं प्रकटयति - सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत् , किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किं वा विषयगतस्य ? आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूम: ।तथा हि - त्रिविधं चैतन्यं प्रमातृचैतन्यं , प्रमाणचैतन्यं , विषयचैतन्यं चेति । तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम् , अन्त:करणवृत्त्यवच्छिन्नं चैतन्यं ~~विषय~~ प्रमाणचैतन्यम् , अन्त:करणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् ।

तत्र यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसान्त:करणमपि चक्षुरादिद्वारा

निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स एव परिणामे वृत्तिरित्युच्यते ।[62]

अन्तःकरणं मनश्च इत्यनर्थान्तरम् अतः अत्र एष प्रश्नः उदेति यत् मनसः परिणामः कीदृशः अर्थात् मनः अणुपरिमाणम् , मध्यपरिमाणम् अथवा महत्परिमाणं वा अस्ति अणुपरिमाणत्वे स्वीकृते सति वृत्तिः न सम्भवति देहव्यापि सुखाद्युपलब्ध्यनुपपत्तेश्च । महत्परिमाणे चोत्क्रान्तिगत्यादिकं नोपपद्यते , श्रुतिषु तु मनसः उत्क्रान्तिगत्यादिश्रवणात् । अतः मनसः मध्यपरिमाणत्वमाश्रित्य धर्मराजाध्वरीन्द्रेणोक्तं- तैजसान्तःकरणमिति । एवंप्रकारेणाद्वैतवेदान्तनये मनसः मध्यपरिमाणत्वं स्वीकृतम् ।मध्यपरिमाणत्वे अपि च तस्य परिणामो भवति स एव च परिणामो वृत्तिरित्युच्यते । असौ परिणामः प्रत्यक्षे एव भवति अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशागमनं वह्न्यादेश्च चक्षुराद्यसन्निकर्षात्

धर्मराजाध्वरीन्द्रः वृत्तिमाश्रित्य अनुमानादिषु प्रत्यक्षलक्षणस्य व्याप्तेः निराकरणार्थमनेकान् पूर्वपक्षान् उद्भाव्य तेषां निराकरणं कृत्वा सिद्धान्तस्य निर्देशं निम्नलिखितप्रकारेण करोति :- तदयं निर्गलितोर्थः स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् । तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यंजकवृत्तिजनने विनियोगः । सा च वृत्तिश्चतुर्विधा -संशयः निश्चयः गर्वः स्मरणमिति । एवंविधवृत्तिभेदेन एकमप्यन्तःकरणम् मन इति बुद्धिरिति अहङ्कार इति चित्तमिति व्याख्यायते । तदुक्तम् -

" मनोबुद्धिरहङ्कारश्चित्तं करणमन्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ।। "[63]

### 6.3.2 वृत्तेः द्रव्यत्वम्

नृसिंहाश्रमेण अद्वैतदीपिकायां असौ प्रश्नः पूर्वपक्षरूपेण उद्भावितः यत् वृत्तिः द्रव्यमस्ति गुणः कर्म वा?

अस्मिन् सन्दर्भे एतत् वक्तव्यं वर्तते यत् सांख्ययोगमतानुसारं ज्ञानं वृत्तिरूपमेव । तच्च द्रव्यमेव । तथाहि - " व्युत्थाने यच्चित्तस्य वृत्तयो- दीपस्य शिखा इव द्रव्यरूपा भंगुरा अवस्थापरिणाममूषानिषिक्तद्रुतताम्रवत्

स्वसंयुक्तार्थाकारास्त्रिगुणकार्यत्वात् सुखदुःखमोहाश्रयतया शान्तघोरमूढाख्या भवन्ति ताभिरवशिष्टा अविलक्षणा वृत्तयः[64]।

वृत्ते: गुणत्वं न अपि तु द्रव्यत्वं वर्तते इत्यस्य प्रतिपादनं सांख्यसूत्रे तथा योगवार्तिके अपि उपलभ्यते । तथाहि - " वृत्तिश्च गुणो न भवति भागगुणाभ्यां तत्वान्तरं वृत्तिः सम्बन्धार्थम् सर्पतीति सांख्य-सूत्राद्भागो विभक्तांशः अग्निविस्फुलिङ्गवदिति ।" 65

भाट्टमीमांसका: ज्ञानस्य क्रियात्वं स्वीकुर्वन्ति किन्तु नैया-यिकानां अद्वैतवेदान्तिनां च मतनुसारं ज्ञानं न क्रिया न वा गुणः अपि तु द्रव्यमेव यतो गुणः निष्क्रियः भवति × किन्तु वृत्तेः द्रव्यत्वे एष आक्षेपः अस्ति यत् द्रव्यत्वे सति वृत्तिः आत्मनि समवेता न भविष्यति । किन्तु वेदान्तिनां एष एव सिद्धान्त यत् वृत्तिः अन्तःकरणस्य अवस्थाविशेषः । अतः वृत्तिः द्रव्यम् । तथाहि - " ननु यदि वृत्तिरन्तःकरणस्यैवावस्थाविशेष-णो द्रव्यमित्युच्यते , तदा कथं प्रतिक्षणं विषयज्ञानानां विनाशः । द्रव्य-स्याक्षणिकत्वात् तद्विनाशहेतोरनिराकरणाच्च । न चोत्तरवृत्त्या पूर्ववृत्ति-निरास इति वाच्यम् । एकद्रव्यवति द्रव्यान्तरनारम्भादिति चेन्न तु वृत्तिवि-नाशो वृत्यन्तरं हेतुः 66

### 6·3·3 वृत्तेः कार्यप्रणाली

विषयज्ञान वृत्तेः प्रणाली त्रिधा निरूपयितुं शक्यते । तद्यथा -(क) " चैतन्येन सह विषयस्य सम्बन्धं स्थापयमाना वृत्तिः ।
(ख) चैतन्ययोः अन्तःकरणावच्छिन्नचैतन्यस्य तथा विषयावच्छिन्नचैतन्यस्य मध्ये विद्यमानस्यावरणस्य अभिभवद्वारा विषयज्ञानं सम्पादयती वृत्तिः। उपर्युक्तेषु प्रथमरूपस्य प्रवर्तनं विवरणप्रस्थाने द्वितीयस्य वार्तिकप्रस्थाने तृतीयस्य भामतीप्रस्थाने दरीदृश्यते । तृतीयस्य स्पष्टतयोल्लेखः भामत्यां नोपलभ्यते , तथाप्यस्मिन्सन्दर्भे भामत्याः दृष्टिकोणं तृतीयेन मतेन सह साम्यं धारयति ।

अप्पयदीक्षितविरचिते सिद्धान्तलेशसंग्रहे तथा मधु-सूदनसरस्वतीविरचिते सिद्धान्तबिन्दौ त्रयाणामवोल्लेखः दृश्यते । श्रुतकत्वकं नोक-

धर्मराजाध्वरीन्द्रेणापि वेदान्तपरिभाषायां प्रथमतृतीययोरुल्लेख: स्पष्टतया कृत: । द्वितीयस्य च प्रकारान्तरेण ।

विवरणप्रस्थानानुसारमन्त:करणे प्रतिम्बितं चैतन्यं जीव इत्युच्यते । जीवस्य विषयेण सह सम्बन्ध: अन्त:करणस्यावस्थाविशेषेण भवति सा अवस्थाविशेष: एव वृत्ति: । यथा अन्धाकारावगुण्ठितं घटं दीपकस्य प्रभा प्रकाशते । एवमेव तैजसान्त:करणस्य वृत्ति: जडविषयं व्याप्य तमभिव्यक्तियोग्यं करोति । एवंप्रकारेण जीव : विषयस्य यत् ज्ञानं करोति तज्ज्ञानम् अन्तकरणवृत्तिद्वारैवोपपद्यते । जीवचैतन्यद्वारा जडविषयस्य व्याप्तिरेव चित्सम्बन्धा । यथा स्वच्छं स्फटिकं समीपस्थितस्य जपाकुसुमस्य रक्तिमच्छायया रक्तिमं दृश्यते तदैवान्त:करणस्यावस्थाविशेष अभिव्यक्तेन जीवचैतन्येन सम्बद्ध: विषय: अपि प्रकाशो भवति । असावुपराग एव विषय-जीवचैतन्ययो: सम्बन्धस्थापक: । अनेनैव विषय: जीवं प्रति प्रकाशते । तथाहि -(क) " यथा तमसा अवगुण्ठितो घट: प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशीभवति , एवम् ।[67]

(ख) विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यमित्युच्यते ।[68]

(ग) ततश्चात्मन: अन्त:करणावस्थाविशेषोपाधिजनितो विशेषो विषयानुभवशब्दितो विषयस्थापरोक्षैकरस: फलमिति क्रियैकविषयता फलस्य युज्यते ।[69]

(घ) ------तदेवं स्फटिकमणावुपाधानोपराग इव चिदात्मन्यपि अहङ्कारोपराग: ।[70]

आवरणरूपस्य निरूपणं कुर्वन् मधुसूदनसरस्वती आवरणस्य लक्षणं निम्नलिखितप्रकारेण निर्दिशति : -

" प्रमाणजन्यान्त:करणवृत्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थमावरणमित्युच्यते"।[71] अत्रैतत् ज्ञातव्यं वर्तते यदविद्याया: आश्रय: जीव: अस्ति इति वाचस्पतिमिश्रस्यापि कथनं वर्तते ।अज्ञानरूपस्य आवरणस्य प्रभावात् जीव: विषयं ज्ञातुं समर्थ: न भवति । अन्त: -करणवृत्ते: कार्यम् एतदेवास्ति यत् अस्यावरणस्य भङ्ग स्यादिति ।

भामतीप्रस्थानानुसारं जीवः अविद्यायाः आश्रयः सन्नपि अन्तःकरणावच्छिन्नं चैतन्यमित्युच्यते । आवरणातिरोभावस्य कः अर्थः वर्तते इत्यस्मिन् विषये भामतीपन्थिनां विचारः अयमस्ति यत् अज्ञानस्य एकं विशिष्टं रूपमेव विषयाणां ज्ञानस्य प्रतिबन्धकं भवति। मधुसूदनस्य मतमस्मिन् सन्दर्भे एतत् अस्ति यत् वृत्तौ जातायां त्वं(व्)च्छेदकाभावात् विद्यमानमप्यविद्यमानसममेवेति न स्वकार्यसमर्थमज्ञानम् । तेनाभिभूतमित्युच्यते[72] । अस्यैव मतस्य उल्लेखः वेदान्त - परिभाषायां धर्मराजाध्वरीन्द्रेणापि कृतः । तद्यथा -

" अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्वदा घटादेर्भानप्रसङ्गः, अनावृत - चैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात्[73] ।

केषांचिद् मतमेतदस्ति यत् आवरकस्याज्ञानस्यैकः अंशः एव नश्यति न तु समग्रमज्ञानम् । अतः पुनरपि आवरणं सक्रियं संजायते । सिद्धान्तलेशसंग्रहे अप्पयदीक्षितः अस्य मतस्योल्लेखं निम्नलिखितप्रकारेण करोति -

" चैतन्यमात्रावरकस्याज्ञानस्य विषयावच्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशेन नाशः "[74] । अत्र एतदपि ज्ञातव्यं वर्तते यत् केषांचिन्मतानुसारमज्ञानस्य द्वौ भेदौ वर्तेते । मूलाज्ञानम् , तूलाज्ञानम् च । अतः आवरणमपि द्विविधम् । तस्य चाभिभवः केन प्रकारेण भवतीत्यस्मिन् विषये सिद्धान्तबिन्दुकारस्य निम्नलिखितानि कथनानि अवधेयानि वर्तन्ते -

" द्विविधमावरणम् । एकमसत्वापादकमन्तःकरणावच्छिन्नसाक्षिचैतन्यनिष्टम् । अन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्टम् । घटमहं जानामीत्युभयावच्छेदानुभवात् । तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रेण निवर्तते । यदाश्रयं यदाकारं अनुमितावपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् । द्वितीयं तु साक्षात्कारेणैव निवर्तते । यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशतीति नियमात् । परोक्षज्ञानस्य च विषयेन्द्रियसन्निकर्षाभावेनान्तःकरणमात्राश्रयत्वात् । अपरोक्षज्ञानस्यैव विषयेन्द्रियसन्निकर्षजन्यत्वेन विषयान्तःकरणसन्निकर्षजन्यत्वेन विषयान्तःकरणोभयनिष्टत्वात्[75] ।

अप्पयदीक्षितेन सिद्धान्तलेशसंग्रहे उपरागशब्दस्यप्रयोगः सम्बन्धार्थे एव कृतः । अत्रैतत् ज्ञातव्यं वर्तते यत् सम्बन्धः त्रिविधः भवति ।

स्वरूपसम्बन्धः , अभेदसम्बन्धः तादात्म्यसम्बन्धः संयोगसम्बन्धः च । एते - णामतिरिक्तं नैयायिकैः जीवविषययोर्मध्ये विषयविषयिभावसम्बन्धः अपि निर्दिष्टः । अप्पयदीक्षितेन सिद्धान्तलेशसंग्रहे स्वरूपसम्बन्ध-अभेदसम्बन्ध-संयोगसम्बन्ध-विषयविषयिभावसम्बन्धप्रभृतीनां विश्लेषणं कृत्वा संयोगज-संयोगसम्बन्धस्याप्युल्लेखः कृतः । तद्यथा -

क " वृत्यापि हि पूर्वसिद्धयोः निष्क्रिययोः जीवविषयचैतन्ययोस्तादात्म्यस्य संयोगस्य वा भावत्याधानम् अत्र केचिदाहुः । विषयविषयिभावसम्बन्ध एवेति । " अपरे तु साक्षादपरोक्षचैतन्येसंसर्गेण एव मुखादेः अपरोक्ष्यदर्शनादपरोक्ष्यविषये साक्षात्संसर्गः मृष्टव्यः । तस्मात् वृत्तेर्विषयसंयोगे वृत्तिरूपावच्छेदकलाभात् तद-वच्छेदेन तदुपादानस्य जीवस्यापि संयोगजसंयोगः सम्भवति कारणाकारणसंयोगात् कार्याकार्यसंयोगवत् कार्याकार्यसंयोगात् कारणाकारणसंयोगस्यापि युक्तिस्थौल्येना-भ्युपगन्तुं युक्तत्वादित्याहुः ।[76]

### 6·3·4 वृत्तेः अनिवार्यत्वम्

--------------

न्यायप्रभृतिषु दर्शनेषु वृत्तेः अस्तित्वं न स्वीक्रियते , तां विनैव च खण्डज्ञानानां निर्वाहः जायते तर्हि सांख्ये वेदान्ते च वृत्तेः कल्पनायाः का आवश्यकता वर्तते ? वदान्तिनः अपि प्रपंचस्याधिष्टानत्वेन चैतन्यं स्वीकुर्वन्ति । चैतन्यं तु स्वप्रकाशम् । एवं सति पृथक्पृथक् विषयाणां ज्ञानायान्यस्य वृत्ति-रूपस्य माध्यमस्य का आवश्यकता अपि च वृत्तिः जडा अप्रकाशरूपा च तर्हि सा अज्ञानस्य निवारणं कथं कर्तुम् शक्नोति

अपि च वृत्तेः विषये किं प्रमाणं , प्रत्यक्षादिप्रमाणानां विषयः सा न भवितुं शक्नोति । अतः वेदान्तिभिः वृत्तेरस्तित्वं कथं स्वी-कृतमिति चिन्तनीयं वर्तते ।

उपर्युक्तानामन्येषां च प्रश्नानां समाधानं नृसिंहाश्रमेण अद्वैतदीपिकायां कृतम् । तद्यथा - " अनुगतकार्यमनुगतमेवकारणमन्वयव्यतिरेकाभ्यां निरूपयते । तच्चानुगतिरूपं चक्षुःसंप्रयोगादिषु न सम्भवति प्रत्येकं तेषामननुगतत्वात् ।

न च इन्द्रियसंयोगत्वमनुगतम् । तस्य व्यासङ्गकालीनेन्द्रियसम्प्रयोगे अपि गतत्वात् । अतिप्रसक्तस्य कारणतावच्छेदकत्वात् । न च समनस्केन्द्रियसंप्रयोगत्वमनुगतम् । तथा मनसः सहकारिणास्तत्कार्यनिरूपितकारणातानवच्छेदकत्वात् ।[77]

(घ) अस्तु तर्हि बाह्येन्द्रियसंप्रयोगत्वेनेन्द्रियसंप्रयोगस्तत्र कारणम् , मनसः सहकारिणो विरहाद्व्यासङ्गो अविद्यानिवृत्तिविरह इति चेत् न[78], आत्मविद्यानिवृत्तिस्थले तदसम्भवात् ।

प्रकाशात्मयतिना पंचपादिकाविवरणे वृत्तेः अनिवार्यतायाः प्रतिपादनमेवं कृतम् :—

(क) ननु स्वप्रकाशमानस्य प्रदीपादिवत् स्वसंसर्गिशेषवस्तुप्रकाशित्वे प्राप्ते कथमहङ्कारोपाधिनियमः कल्प्यते न चान्तःकरणपरिणाम संसृष्टविषयादन्यत्र चैतन्यमुपरक्तमपि न प्रकाशयतीति युक्तम् । प्रकाशसंसर्गस्यैव प्रकाशमानताभिधानात् । विषयान्तरेषु चैतन्यस्य असंगितया नोपराग इति चेत् , अन्तःकरण अपि तद्संगितया नोपराग इति तदुपाधिनापि न किंचिदपि प्रकाशेत ।[79]

(ख) अन्तःकरणावच्छिन्ने हि जीवः प्रतिबिम्बस्थानीयः परिच्छिन्नः तत्संसृष्टमेव विषयं प्रकाशयेत् । ब्रह्म तु विषयस्थानीयं सर्वगतत्वात् सर्वमवभासयिष्यति । न च ब्रह्मणि सर्वदर्शित्वं मुखावदातत्ववत् जीवमनुगच्छति । जीवगतं वा किंचिज्ज्ञत्वं मुखश्यामत्वादिवत् न ब्रह्मानुगच्छतीति सर्वमुपपन्नमिति । नैतत्सारम् - तथा सति विषयावच्छिन्नचैन्यस्य ब्रह्मचैतन्यतया अहङ्कारावच्छिन्नजीवानुषङ्गाभावात् सर्वज्ञत्वमिव विषयावभासे अपि जीवस्य न स्यात् ।[80]

(ग) ननु जीवोपाधेरन्तःकरणस्य विषयस्य च परस्परान्वयादुभयावच्छिन्नमपि चैतन्यमन्योन्यसंसृष्टमिति युक्तो जीवस्य विषयावभास इति । नैतत् युक्तम् - तथा सति सर्वगतेन ब्रह्मणा नित्यसंसृष्टमन्तःकरणमिति तदुपाधौ जीवचैतन्याभेदाभिव्यक्ते ब्रह्मसार्वज्ञं जीवस्य नित्यवत् प्रकाशेत ।[81]

~~घ---ननु जीवोपाधेरन्तःकरणस्य विषयस्य च~~

(घ) ननु मन एववविद्यानिवृत्तिमात्रे अनुगतं कारणं रूपाधविद्यानिवृत्तौ च चक्षुरादिकमपि विशेषकारणमिति चेन्न । व्यासङ्गे मनसश्चक्षुरादेश्च सत्वे अपि कार्यदर्शनात् । ननु तदा मनसश्चक्षुरादिसंयोगाभावात् कार्याभाव इति चेन्न , तस्य अतीन्द्रियस्य व्यतिरेकग्रहायोगात् ।[82]

वृत्तेः विश्लेषणार्थम् विभिन्नैराचार्यैः उपर्युक्तप्रकारेण

यदुक्तं तस्य सारः निम्नलिखितप्रकारेण निरूपयितुं शक्यते -
(क) वृत्तेरर्थः - अन्तःकरणस्य विषयाकारेण परिणामः वृत्तिः । विषयप्रत्यक्षसमये अन्तःकरणं वृत्त्या विषयरूपेण परिणमते । अन्तःकरणवृत्त्या विषयगतस्य अज्ञानस्य नाशे सति विषयगतं चैतन्यमनावृतं भवति । अन्तःकरणं हि सत्वांशाधिकापंचीकृत पंचभूतपरिणामत्वेन तैजसत्वात् विषयेण सन्निकृष्टं सत् विषयाकारं लभते । अन्तःकरणस्य विषयाकारसदृशाकारः यः अयं परिणामः स एव वृत्तिरित्युच्यते । प्रत्यक्षज्ञानस्यावसरे अन्तःकरणवृत्तिरिन्द्रियद्वारा बहिर्निर्गत्य विषयदेशं गत्वा विषयाकारं च प्राप्य विषयमवभासयति इत्यद्वैतवेदान्तिनां सिद्धान्तः ।

अत्रायं प्रश्नः उदेति यत् जीवस्य इन्द्रियद्वारेणैव विषयावभाससम्भवात् अन्तःकरणवृत्तिः कथं स्वीकरणीया अस्य प्रश्नस्य समाधानार्थं निम्नलिखितानि मतनि अद्वैतवेदान्तग्रन्थेषूपलभ्यन्ते । -
1. आवरणाभिभवार्थम् वत्तिः स्वीकरणीया इत्येकं मतम् ।
2. विषयेण सह चैतन्यस्य सम्बन्धार्थम् वृत्तिः स्वीकरणीया इत्यपरं मतम् ।

आवरणाभिभवार्थम् वृत्तिः इत्यस्य मतस्य समर्थनाय ये तर्काः प्रस्तूयन्ते त एवंप्रकारेण वर्तन्ते -
(क) घटाद्यवच्छिन्नचैतन्यस्यावरकं किंचिदज्ञानमस्तीत्यभ्युपगन्तव्यम् । आवरकाज्ञाने स्वीकृते सति घटादेः सर्वदा भानप्रसङ्गः नापतति । अनावृतचैतन्यैव भानप्रयोजकत्वात्। घटाद्यावरकमज्ञानं मूलाज्ञानं न । अपि तु अवस्थापदवाच्यं तूलाज्ञानम्। यतः मूलाज्ञानस्य ब्रह्मज्ञानमात्रबाध्यत्वात् संसारदशायां च तादृशस्याज्ञानस्य नाशः न भवति । किन्तु घटाद्यावरकस्याज्ञानस्य तु अपनयः दृश्यते एव । अतः तस्य भङ्गः स्वीकरणीयः । स चावरणभङ्ग अन्तःकरणवृत्त्या क्रियतेत्येवंप्रकारेण वृत्तेरावरणाभिभवार्थम् सिद्ध्यति ।

तत्र पुनरेषा प्रश्नः उदेति यत् साक्षिचैतन्येन आवरणभङ्गः कथं न स्वीक्रियते । अस्याः शङ्कायाः समाधानार्थमितदुच्यते यत् आवरणसाधकत्वात् आवरणेन सह साक्षिचैतन्यस्य विरोधः नास्ति । आवरणसाधक एव आवरणनिवर्तकः भवितुं न शक्नोति । अतः साक्षिचैतन्यमात्रं नाज्ञानावरणनाशकम् । साक्षिचैतन्यं विषयावच्छिन्नचैतन्यावरकस्याज्ञानस्य निवर्तनं कर्तुम् नार्हम् ।

वृत्त्युपहितं चैतन्यमपि घटावच्छिन्नचैतन्यावरकस्याज्ञानस्य नाशकं

नास्ति । वृत्युपहितचैतन्यस्य परोक्षापरोक्षसाधारणत्वात् । वृत्युपहितचैतन्यस्य आवरणभङ्गावरणानिवारकत्वे स्वीकृते सति जीवस्य सर्वदैव विषयभानप्रसङ्गः आपद्येत । अतः परोक्षव्यापृतायाः अपरोक्षविषयविशिष्टायाः अन्तःकरणवृत्तेरेव विषयावरणभङ्गजनकत्वं स्वीकरणीयम् ।

अत्र पुनरेषः प्रश्नः उदेति यत् अन्तःकरणवृत्तेः जडत्वात् कथं तया अज्ञानावरणस्य विनाशः उपपद्येत ज्ञानस्यैव अज्ञाननाशकत्वात् । अत्रोच्यते यत् 5 "यदा सतः स्वतः तृणतूलादिभासकस्य सौरालोकस्य तृणतूलाद्यदाहकत्वे अपि सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्वं तद्वत्स्वतः अविद्यातत्कार्यभासकस्य चैतन्यस्य अविद्याद्यदाहकत्वे अपि वृत्यवच्छेदेन तद्दाहकत्वं युक्तम् । एवंप्रकारेण अपरोक्षवृत्युपहितचैतन्यस्य परम्परया आवरणभङ्गजनकत्वे अभ्युपगते सत्यपि आवरणाभिभावार्थम् वृत्तिरिति स्वीकर्तुम् शक्यते ।

2 <u>सम्बन्धार्था वृत्तिः</u>

अथात् विषयेण सह चैतन्यस्य सम्बन्धार्थमन्तःकरणवृत्तिः स्वीकरणीया इत्येवंप्रकारेण यदपरं मतं विद्यते तस्य सन्दर्भे अपि अनेके प्रश्नाः उद्भाव्यन्ते । तद्यथा -

(क) जीवस्य व्यापकत्वात् स्वत एव सर्वगतः । अतः कथमुच्यते तत्सम्बन्धार्था वृत्तिरिति अत्रोच्यते - अविद्योपाधिकः अपरिच्छिन्नः जीवः सर्वगतत्वेन घटादिप्रदेशे विद्यमानः घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति । एवंप्रकारेण जीवस्य सर्वगतत्वनिबन्धनः यउ सम्बन्धः स न घटादिविषयभानप्रयोजकः । अपि तु अपरोक्षवृत्यधीनः सम्बन्धः ।

(ख) अविद्योपाधिकस्यापरिच्छिन्नजीवस्य स्वत एव समस्तवस्तुसम्बन्धस्य वृत्ति - विरहदशायामपि विषयसम्बन्धाभावः कथमित्यस्य प्रश्नस्य समाधानाय उच्यते- नहि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषिध्यते । किन्तु घटादिभानप्रयोजकः सम्बन्धविशेष एव निषिध्यते । स च सम्बन्धविशेषः विषयस्य जीवचैतन्यस्य च व्यंग्यव्यंजकभावलक्षणः ज्ञातृज्ञेयत्वलक्षणः कादाचित्कः विषयाकारवृत्तिनिबन्धनः कर्तुः जीवस्य ज्ञातृत्वे विषयस्य घटादेः ज्ञेयत्वे तथाकारवृत्तिविषयत्वमपेक्षितमिति वृत्तेः तथाविधसम्बन्धप्रयोजकत्वमिति ।

अत्रैतद् ज्ञातव्यं वर्तते यत् घटादेः चैतन्याभिव्यंजकत्वं च चैतन्यप्रतिवि प्रतिबिम्बग्राहित्वं तच्च घटादेः स्वच्छान्तःकरणसंसर्गात् भवति ।एवं च चित्प्रति-

-बिम्बं ग्राहित्वरूपाभिव्यंजकसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्गमनाङ्गीकारः

यद्यपि जीवचैतन्यविषयाधिष्टानचैतन्ययोः उपाधिकृतः भेदः अस्ति तथापि तयोर्मध्ये वृत्तिकृतः अभेदः उपपद्यते । प्रकाशकेन विषयाधिष्टान-ब्रह्मचैतन्येनैव सह जीवचैतन्यस्यैकीभावः जीवस्य प्रकाशकत्वमुपपद्यते । असावेकीभावः वृत्यधीनः । अतः जीवचैतन्य-विषयाधिष्टानचैतन्ययोरभेदसिद्ध्यर्थाम् वृत्तिः स्वीकरणीया इति ।

6·4·0 आगमप्रमाणस्य (शब्दप्रमाणस्य स्वरूपम्)

अद्वैतवेदान्तिनः आगमस्य शब्दस्य पृथक् प्रमाणत्वं ~~स्वीकुर्वन्ति~~ स्वीकुर्वन्ति । अस्मिन् सन्दर्भे अद्वैतवेदान्तस्यागमप्रमाणविचारपरम्परायाः समाहारः धर्मराजाध्वरीन्द्रस्य शब्देषु निम्नलिखितप्रकारेण वर्तते -

" यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम् । वाक्यजन्यज्ञाने च आकाङ्क्षा -योग्यता- आसत्तयः तात्पर्यज्ञानं चेति चत्वारि कारणानि । भामतीप्रस्थानस्य ~~विषये~~ सन्दर्भे आगमप्रमाणविषयकाः निम्नलिखिताः पक्षाः एवात्र संक्षिप्तरूपेण विश्लेषणीयाः भवन्ति ।

(1) प्रत्यक्षागमयोर्मध्ये कस्य प्राबल्यम्

(2) पदपदार्थयोः सम्बन्धविषययोः शक्तेः ग्राह्यत्वाग्राह्यत्वविचारः ।

(3) शाब्दप्रमायाः परोक्षापरोक्षात्वम् ।

यद्यपि अन्ये अपि विषयाः अपि महत्वपूर्णाः सन्ति तथापि तेषां विषये भामतीप्रस्थानस्य अन्यैः प्रस्थानैः सह सामंजस्यं वर्तते ।

6·4·1 प्रत्यक्षागमयास्तारतम्यम्

प्रत्यक्षागमयोर्मध्ये कस्य प्राबल्यं वर्तते इत्यस्मिन् विषये वाचस्पतिमिश्रस्य ~~[illegible]~~ एतन्मतं वर्तते यद् कुत्रचित् प्रत्यक्षस्य प्राबल्यं कुत्रचिच्च श्रुतिप्रमाणस्य । सैव श्रुतिः प्रत्यक्षात्प्रबला भवति यस्याः स्वकीये अर्थे तात्पर्यम् विवक्षितं भवति । यथा " एकमेवाद्वितीयं ब्रह्म " । अस्याः श्रुतेः स्वार्थएव मुख्यं तात्पर्यम् । अतः सा प्रत्यक्षात्बलीयसी ।

किन्तु "यजमानः प्रस्तरः " अस्याः श्रुतेः तात्पर्यम् स्वार्थप्रति-

पादने नास्ति । अत: एतादृशी श्रुति: प्रत्यक्षात् दुर्बला भवति । एतादृशानां श्रुतिवाक्यानां प्रत्यक्षानुसारमर्थकल्पनं सर्वथा उचितम् । अर्थवादवाक्यानामपि स्वार्थे तात्पर्य्यम् न भवति । एवंप्रकारेण वाचस्पतिमिश्रस्यैतन्मतमस्ति यत् स्वार्थे तात्पर्यवता श्रुतिवाक्यानामेव प्रत्यक्षादिप्राबल्यं स्वीकर्तव्यम् । अस्मिन् सन्दर्भे वाचस्पते: निम्नलिखितानि कथनानि द्रष्टव्यानि सन्ति । तद्यथा-

" न च ज्येष्टप्रमाणप्रत्यक्षविरोधात् आम्नायस्यैव तदपेक्ष्यस्याप्रामाण्यमुपचरितार्थत्वं चेति युक्तम् । तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्काया: बोधकतया स्वत:सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वे पि उत्पत्तौ प्रत्यक्षापेक्षत्वात् तद्विरोधानुत्पत्तिलक्षणमप्रमाण्यमिति चेन्न •, उत्पादकप्रतिसन्धिद्ध्वन्तित्वात् । न ह्यागमज्ञानं सांव्यावहारिकं प्रत्यक्षत्वस्य प्रमाण्यमुपहन्ति, येन करणाभावान्न भवेत् । अपि तु तात्त्विकम् न च तत्तस्योत्पादकम् । अतात्त्विकप्रमाण~~प्रमाण~~ प्रमाणभावेभ्योऽपि सांव्यावहारिकप्रमाणेभ्य: तत्वज्ञानोत्पत्तिदर्शनात् ।[83]

अस्याशय: अयमस्ति यत् किमागम: स्वकार्ये प्रमितौ प्रत्यक्षमपेक्षते , उत्पत्तौ वा । नाद्य: ,तस्यापौरुषेयतया निरस्तदोषाशङ्कस्य बोधकतया स्वत: सिद्धप्रामाण्यस्य तत्रानपेक्षत्वात् । नापि द्वितीय: , उत्पादकाप्रतिद्वन्द्वित्वात् । आगमज्ञान प्रत्यक्षस्य तात्त्विकत्वमुपहन्ति , न तु सांव्यावहारिकत्वम् । सांव्यावहारिकं च आगमज्ञानोत्पत्तौ कारणम् । न चातात्त्विकं सांव्यावहारिकं कथं तात्त्विकज्ञानोत्पत्तिं प्रति कारणमिति वाच्यं , वर्णे समारोपितस्य ह्रस्वत्वादे: ध्वनिधर्मस्य तत्वप्रतिपत्तिकारणत्वदर्शनात् । न चानन्यपरं वाक्यं स्वार्थे उपचरितार्थम् युक्तम् । उक्तं हि शाबरस्वामिना - " न विधौ परशब्दार्थ इति । नाप्यनपेक्षितस्य ज्येष्टत्वं बाधकत्वे कारणम् , किन्तु बाध्यत्वे ।दृष्टं हि ज्येष्टस्य रजतज्ञानस्य कनीयसा शुक्तिज्ञानेन बाध: , अन्यथा शुक्तिज्ञानस्योत्पत्यसम्भवापत्ते: तत्र च पारमर्षम् सूत्रमपि प्रमाणम् - " पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवद् ।[6] तथाभियुक्तवचनमपि प्रमाणम् । -" पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।

अन्योन्यनिरपेक्षाणां यत्र जन्म धिया भवेद् ।।

अहङ्कारालम्बनमात्मानमभ्युपगच्छद्भिरपि तस्य तात्त्विकत्वं नाभ्युपेतव्यम् । अहमिहे - वास्मि सदने जानान इति सर्वव्यापकस्य प्रादेशिकत्वेन ग्रहणत्वात् । न चेदं देहस्य प्रादेशिकत्वम् , तथा सति अहमिति गौणत्वे वा जानान: न स्यात् । तथा च

• नैयमिकाग्निगोत्रवचना अग्निगोत्रशब्द: प्रकारान्तरावद्वृतभेदे कौण्डपायिनामयनगते

कर्मणि मासमग्निहोत्रं जुहोतीत्यत्र साध्यसादृश्येन गौणः , माणवके चानुभव - सिद्धाभेदे सिंहात् सिंहशब्दः । न त्वहंकारस्य मुख्ये अर्थे देहादिभ्यो भिन्नत्वेन अनुभूयते , येन परशाब्दः शारीरादौ गौणो भवेत् ।

तत्सिद्धं गौणत्वमुभयदर्शिनो गौणमुख्यविवेकज्ञानेन व्याप्तं तदिह व्यापकम् क विवेकज्ञानं निवर्तमानं तद्व्याप्यगौणतापि निवर्तयति । तस्मादहमर्था-स्याविवेकतायां देहादौ अहंशाब्दप्रयोगः गौण इति वक्तुमशाक्यम् किन्तु आध्यासिकः इति सिद्धम् ।। विवरणपन्थिनः श्रुतिमात्रं प्रत्यक्षाद्बलीयः इति मन्वते । किन्तु भामतीपन्थिनः कथयन्ति यत् तात्पर्यवती श्रुतिरेव प्रत्यक्षात्बलीयसी न तु श्रुतिवा - क्यम् ।

### 6•4•2 शाब्दप्रमायाः परोक्षत्वापरोक्षत्वविमर्शः :

शाब्दप्रमायाः परोक्षापरोक्षत्वविषये विवरणप्रस्थानभामतीप्रस्था-नयोः मध्ये महान् भेदः अस्ति । विवरणानुयायिनां मतानुसारं शाब्दप्रमायाः अप-रोक्षत्वं वर्तते । किन्तु भामतीपन्थिनः शाब्दप्रमायाः परोक्षत्वं स्वीकुर्वन्ति । उभयोः मतयोर्विश्लेषणमत्र संक्षेपेण प्रस्तूयते ।

विवरणप्रस्थानानुयायिनः शाब्दप्रमायाः अपरोक्षत्वं प्रतिपादयन्ति । स्वकीयविचारस्य समर्थनाय विवरणपन्थिनः भाष्यकारस्य - " प्रमाणजन्यं ज्ञानं वस्तुतन्त्रमेव तत् " इत्येतत् कथनमुद्धृत्य कथयन्ति यत् दशामस्त्वमसि इत्यत्र दशामत्वस्य ज्ञानमपरोक्षम् तथैव आगमवाक्यात् जन्यः ब्रह्मसाक्षात्करः अपि अपरोक्षः ।

नैष्कर्म्यसिद्धौ सुरेश्वरोपि ~~बदति~~ कथयति यत् आत्मावबोधः प्रत्यक्षादि-प्रमाणानां साक्षाद्विषयः नास्ति । स तु सम्यक्ज्ञानस्य विषयः । आत्मवाक्यजन्यं ब्रह्मणः ब्रह्मत्वेन ज्ञानमेव सम्यक्ज्ञानम् । बलवत्प्रमाणेनोत्पन्नं सम्यक्ज्ञानं जीवगतमोहं विनाशयति । ब्रह्मस्वरूपस्य साक्षात्कारे जीवगतमज्ञानमेव प्रतिबन्धकम् । तद्यथा -

" अशेषार्थहित्वात्मानवबोधविषयस्य चानागमिकप्रत्यक्षादिलौकिकप्रमाणविषयत्वाद् वेदान्तागमवाक्यादेव सम्यक्ज्ञानम् । [84]

" बलवदिप्रमाणोत्थं सम्यक्ज्ञानं न बाध्यते ।
नाकाङ्क्षते न चान्यद्बाधनं प्रतिपादनम् । " [85]

बृहदारण्यकसम्बन्धभाष्यवार्तिके अपि सुरेश्वराचार्यः एवं कथयति यत् तत्वमस्यादि वेदान्तवाक्यजन्यसम्यक्ज्ञानेन अविद्या लुप्यते तथा आत्मसाक्षात्कारः संजायते । वस्तुतः

आत्मसाक्षात्कारे स्वरूपत: एवापरोक्षता वर्तते । तद्यथा -

" तत्वमस्यादिवाक्योत्थसम्यक्धीजन्ममात्रत: ।
अविद्यासहकार्येण नासीदस्ति भविष्यति ।।[86]

वाक्यजन्यबोधो अपरोक्षज्ञानत्वमस्तीति एकया अन्यया रीत्या अपि सुरेश्वरेण प्रतिपादितम् । तथाहि -

" तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण: " अस्य भाष्यस्य वार्तिके सुरेश्वर: कथयति -

" बुभुत्साच्छेदिनीप्रज्ञां सर्वज्ञाननिरासत: ।
सर्वज्ञेयसमाप्तेश्च कुर्याद्वाक्यार्थबोधत: ।। "[87]

अस्य वार्तिकस्य विश्लेषणं कुर्वता आनन्दाश्रमेण "शास्त्रप्रकाशिकायां (बृहदारण्यकभाष्यवार्तिकटीकायां) एवमुक्तम् - " प्रज्ञां कुर्वीतित्यस्यार्थमाह । बुभुत्सेति । वाक्यार्थज्ञानाज्ज्ञेयस्य सर्वस्य ज्ञानत्वादज्ञानस्य च निरस्तत्वादशेषाकाङ्क्षाशान्तिरतो वाक्यार्थधीरूपतां सर्वाकाङ्क्षाध्वंसित्वेन परमपुरुषार्थहेतुं प्रज्ञां तत्वमस्यादिवाक्यवशादेवापादयेदित्यर्थ:"।[88] तत्वमसि प्रभृतिवाक्यश्रवणेन अननुभूतस्य वस्तुन: शब्दजन्यं परोक्षज्ञानं भवति । पुनरस्यैव परोक्षरूपेण ज्ञातस्य ब्रह्मण: तथा आत्मन: तादात्म्यस्य साक्षात्कारार्थम् शब्दजन्यां प्रज्ञां परिनिश्चितां कुर्यादिति सुरेश्वराचार्य: । तद्यथा -

" उच्यते वचसा बुद्धौ वस्तुमात्रं समर्प्यते ।
विज्ञातस्य सतत्वस्य तादात्म्यप्रतिपादनम् ।।
भावनाज्ञानसन्तानै: प्रमाकरणमुच्यते ।
अस्मिन् काले तु सा प्रज्ञा निष्ठां नीता कृता भवेत् " ।।[89]

परोक्षरूपेण प्राप्तं ज्ञानमपरोक्षं कर्तुम् परिनिष्ठिता अपेक्षिता भवति । तस्या: सम्पादनार्थम् शब्दज्ञानस्याभ्यास: उपायरूपेणावश्यक: । अत: आत्मसाक्षात्काररूपफलस्य प्राप्त्यर्थम् शब्दस्य करणत्वं मनननिदिध्यासनादीनां सहकारित्वं च स्वीकर्तव्यम् । समर्थश्रवणाभावे मनननिदिध्यासनादिभि: ब्रह्म साक्षात्कार: तथैवासंभव: यथा बीजं विना जलसेचनादिभि: अंकुरस्योद्भव: असंभव:

वाचस्पतिना "मनसैवानुद्रष्टव्यम्" इति श्रुतिमाश्रित्य मनस: करणत्वं निर्दिष्टम् । तस्मिन् विषये अद्वैतसिद्धिकारस्य एतन्मतं द्रष्टव्यं वर्तते - " न च मनसैवापरोक्षज्ञानम् , मनस: कुत्राप्यसाधारणत्वेन प्रमाकरणत्वाभावात् , आत्मन: स्वप्रकाशत्वात् , सुखादीनां साक्षिवेद्यत्वात् "। अस्यार्थ: अयमस्ति यत् मनस:

कारणत्वं तु सर्वेषु ज्ञानेष्वपेक्ष्यते । शाब्दस्तु लौकिकपदार्थानां परोक्षरूपेण तथा आत्मसाक्षात्कारसदृक्षापदार्थानामपरोक्षरूपेणानुभावं कारयति ।

'अथातो ब्रह्मजिज्ञासा' इत्यस्य व्याख्यायां भाष्यकारेण अवगतिपर्यन्तं ज्ञानं ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म इत्युक्तम् । अस्यापि व्याख्यानं प्रकटार्थविवरणे एवं दृश्यते । आचार्येण त्वं ब्रह्मास्मि इत्युपदिष्टे अहं ब्रह्मास्मीत्याचार्यो मामुपदिदेश न ममावगतिरायाति " इति परोक्षमेव मन्यते । ततः असाववगतिपर्यन्तं ज्ञानमिच्छति ।

भामतीप्रस्थानानुसारं [illegible] शाब्दपरोक्षवादः स्वीकरणीयः नास्ति । तेषां मतानुसारं शाब्दः परोक्षज्ञानस्यैव साधनम् । अतः शाब्दजन्या प्रमा परोक्षा एव । अस्मिन् सन्दर्भे भामतीपन्थिनां निम्नलिखितानि कथनान्यवधेयानि वर्तन्ते - " साक्षात्काररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्वज्ञानेनोच्छिद्यते , न तु परोक्षावभासेन , दिङ्मोहालातचक्रचलद्वृक्षामरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्वप्रत्ययैर्निवृत्तिदर्शनात् , नो खल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्वानां दिङ्मोहादयो निवर्तन्ते । तस्मात् त्वंपदार्थस्य तत्पदार्थत्वेन साक्षात्कारः एषितव्यः ।"

वेदान्तकल्पतरुकारः अमलानन्दः एनां शङ्कामुद्भावयति यत् शाब्दः यदि परोक्षस्य हेतुः तर्हि सः भ्रमनिवारकः न स्यात् । शाब्दात्मकाः वेदाश्च भ्रमत्वापदकाः एव स्युः । तद्यथा - " अपरोक्षे ब्रह्मणि शाब्द एवापरोक्षज्ञानहेतुरन्यथा तु तत्र परोक्षज्ञानस्य भ्रमत्वापातादिति " । अस्याः शङ्कायाः समाधानं कुर्वन् अमलानन्दः स्वयमेव कथयति - स्वतः अपरोक्षस्यापि ब्रह्मणः पारोक्ष्यं भ्रमगृहीतं तत्रापरोक्षप्रमाकरणादेव तत्साक्षात्कारः " । अन्तःकरणं च सोपाधिके आत्मनि जनयति अहं वृत्तिमिति सिद्धमस्यात्मन्यपरोक्षधीहेतुत्वम् । तत्तु ब्रह्मजनितब्रह्मात्मैक्यधीसन्ततिवसितं तत्पदलक्ष्यब्रह्मात्मतां जीवस्य साक्षात्कारयति , अक्षमिव पूर्वानुभूतसंस्कारावसितं तत्वेदान्तोपलक्षितैक्यविषयप्रत्यभिज्ञाहेतुः क्लृप्तः प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायाः साक्षात्कारत्वे देहात्मभेदविषयानुमितेरपि सदापत्तिः दशमस्त्वमसीत्यत्रापि तत्सन्निवादधादेव साक्षात्कारः , अन्धादेस्तु परोक्षधीरेव " । अपि च - " वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ।। "93

अपि च - " साक्षादपरोक्षादित्येवमाकारैव धीः शाब्दादुदेति , न तु परोक्षं

ब्रह्मेति ।

भामतीकारः वाचस्पतिमिश्रः अस्मिन् सन्दर्भे यद् कथयति तदपि अवेद्यं वर्तते । - " न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलं, अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सावाक्यार्थभावनापरिपाक~~सहित~~सहितमन्तः - करणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । न चायमनुभवतो ब्रह्मस्वभावो, येन न जन्येत, अपि त्वन्तःकरणस्यै वृत्तिभेदो ब्रह्मविषयः । " 94

शब्दापरोक्षवादिभिरत्रैषा शङ्का उद्भाव्यते यद् तत्वमसीत्यादिशब्दजन्यमपरोक्षजीवादभिन्नं ब्रह्मज्ञानमपरोक्षमेव भवति । अतः श्रवणजन्यब्रह्मज्ञाने यस्य शब्दस्य कारणता स्वीक्रियते स एव शब्दः अविद्यानिवर्तकः चरमसाक्षात्कारे अपि कारणत्वमर्हति । अतस्तत्रान्यकारणस्य कल्पना नोचिता " - किन्तु भामतीप~~न्थि~~ पन्थिनः एतन्न स्वीकुर्वन्ति । तेषां मतमिदमस्ति यत् शब्दादपरोक्षज्ञानं भवितुं न शक्नोति । यतः वेदान्तवाक्यश्रवणानन्तरमपि ~~xxxxxxxxxx~~ प्रथमभ्रमद्वारा गृहीतस्यब्रह्मणः पारोक्ष्यं तु अस्त्येव । तद्यथा -

। " यदि ब्रह्म स्वतः अपरोक्षमिति तद्विषयजन्यमपिज्ञानमपरोक्षं भवेद्, तदा श्रवणजन्यज्ञानमपि अपरोक्षमिति श्रुतवेदान्तस्य पुंसः तस्मिन्नपरोक्ष्यभ्रमानुवृत्तिर्न स्यात् । अनुवर्तते च तदनन्तरमपि भ्रमगृहीतं ब्रह्मणि परोक्ष्यमिति न शब्दादपरोक्षज्ञानम् । अतः अपरोक्षज्ञानस्य कारणत्वं शब्दे स्वीकर्तुम् न शक्यते । " मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके मनः अस्य दैवं चक्षुः " तथा मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतिभिरप्येतद् स्पष्टम् भवति यद् ब्रह्मसाक्षात्कारस्य कारणत्वसामर्थ्यमन्तःकरणे अस्ति न तु शब्दे ।

अत्रैषा शङ्का उदेति यद् असंभावनाप्रभृतिदोषैः प्रतिबद्धमन्तः - करणं भ्रमनिवारणे समर्थम् न भवति । यतः श्रवणजन्यपरोक्षज्ञानस्य सत्वे अपि पारोक्ष्यभ्रमस्यानुवृत्तिः भवत्येव । अतः शब्दस्यापरोक्ष्यप्रमाहेतुत्वं कथं प्रत्याख्यातुं शक्यते । अस्याः शङ्कायाः समाधानं भामतीपन्थिभिः एवंप्रकारेण क्रियते यद् - " शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः, प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायाः साक्षात्कारत्वे देहात्मभेदविषयानुमितेरपि तदापत्तिः " । 96 अपरं च दशमस्त्वमसि एतादृशेषु स्थलेष्वप्यत्र शब्दादपरोक्षज्ञानमिवोदितं दृश्यते ।

तत्रापि शाब्दात् अपरोक्षज्ञानमिव भामतीपथिनां मतानुसारं शाब्दसहकृतेन्द्रियस्य माध्यमेनैव श्रोता स्वीयस्य दशमत्वस्य साक्षात्कारं करोति न तु शाब्दात् । अतः दशमस्त्वमसीत्यत्रापि यज्ज्ञानं भवति तत्परोक्षमेव न तु प्रत्यक्षम् ।

### 6•4•3 ब्रह्मसाक्षात्कारे शाब्दज्ञानस्य करणाकरणत्वविमर्शः

(1) प्रसंख्यानस्य करणत्वम् -

ब्रह्मसाक्षात्कारस्य करणविषये अद्वैतवेदान्ते विभिन्नाः मतभेदाः सन्ति । ब्रह्मदत्तस्य तथा मण्डनमिश्रस्य च मतानुसारेण तत्त्वमसीत्यादिवाक्यार्थाभिधानमर्थात् प्रत्ययाभ्यासरूपं प्रसंख्यानमेवब्रह्मसाक्षात्कारे कारणमिति मण्डनमिश्रमतम् ।

(2) ध्यानस्य मनसः करणत्वम् -

किन्तु साक्षात्कारस्य ध्यानफलत्वं मन्यमानः वाचस्पतिः कथयति - " ध्यानस्य हि साक्षात्कारः फलं साक्षात्कारश्चोत्सर्गतः तत्त्वविषयः ।"[97] ध्यानाभ्यासपरिपाकेन साक्षात्कारो विज्ञानम् ।[98] आगमाचार्योपदेशपूर्वकमनननिदिध्यासनप्रकर्षपर्यन्तजः अस्य ब्रह्मसाक्षात्कारोपजायते ।[99] तथा श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात् ।

कल्पतरुकारः अमलानन्दो पि वाचस्पतिमतं समर्थयति । "अपि च संराधाने सूत्राच्छास्त्रार्थध्यानजाप्रभा । शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः ॥"[100] " सत्यं न ब्रह्मसाक्षात्कारः आगमयुक्तिफलम् , अपि तु युक्त्यागमार्थज्ञानाहितसंस्कारसचिव श्रोत्रेन्द्रियेण षड्जातिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति । एवं वेदान्तज्ञानाभ्याससहित संस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति "।[101] अतः एतत् ज्ञायते यत् आत्मसाक्षात्कारस्य करणं केवलं प्रसंख्यानं नापि तु प्रसंख्यानसहकृतं मन एव ।

(3) शाब्दस्य करणत्वम् -

विवरणाकारः प्रकाशात्मयतिः आत्मसाक्षात्कारे प्रसंख्यानस्य ध्यानस्य वा करणत्वं न स्वीकरोति । तस्य मते शाब्दः केवलमात्मसाक्षात्कारस्य करणम् । तथाहि - " तं त्वौपनिषदमिति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्वं शाब्दस्य दर्शितमुपपन्नं भवति , अपरोक्षावगतेरेव सम्यगवगतित्वात् ।

श्वेतकेतुः आरुणेयस्योपदेशेन ब्रह्मसाक्षात्कारं करोति । आचार्य-

वान् पुरुषो वेद " " तस्य तावदेव चिरम् " " तमसः पारं दर्शयति " "तत्वमसि" इत्यादयः श्रुतयः अपि एतत्प्रतिपादयन्ति यत् महावाक्यश्रवणमेव ब्रह्मसाक्षात्कारस्य एकमात्रोपाय इति प्रकाशात्मयतिरभिप्रैति ।

अत्रायं संशयः वेदान्तवाक्यात्ब्रह्मणः अपरोक्षज्ञानं कथं सिद्ध्यतीति शब्दः सदैव ब्रह्मज्ञानं जनयतीति तेनापरोक्षज्ञानस्योत्पत्तिर्न सम्भवति । अस्याः शङ्कायाः समाधानमेवं भवति - इन्द्रियस्य यथा अपरोक्षज्ञानजनकत्वम् एवं शब्दस्यापि अपरोक्षज्ञानजनकत्वं सम्भवति , यतः शब्दज्ञानेपि अपरोक्षार्थविषयत्वस्य सत्वात् ।

मधुसूदनसरस्वती शब्दात् अपरोक्षज्ञानं मनुते । सः वदान्तकल्पलतिका-सिद्धान्तबिन्दु- अद्वैतसिद्धिप्रभृतिषु ग्रन्थेषु शब्दापरोक्षावादं समर्थयति । वेदान्तवाक्यार्थसुनिश्चितार्थः [102] तं त्वौपनिषदं पुरुषं पृच्छामि नावेदविन्मनुते बृहतम् [103] योऽस्माकमविद्यया परं पारयामि [104] तमसः पारं दर्शयति [105] इत्यादि श्रुतयः वेदान्तवाक्यश्रवणादेव आत्मसाक्षात्कार इति प्रतिपादयन्ति ।

वार्तिककारः सुरेश्वराचार्यः विवरणप्रस्थानवत् तं त्वौपनिषदं पुरुषम् इति श्रुतिः तथा शास्त्रयोनित्वात् [106] इति सूत्रस्याधारेण च उपनिषद्वाक्यस्य कारणत्वमङ्गीकरोति । न तु मनसः । " यन्मनसा न मनुते " [107] इति श्रुत्या मनसः करणत्वं निषेधयति । अत्रायं संशयः "मनसैवानुद्रष्टव्यम्" इति श्रुतिः ब्रह्मसाक्षात्कारे मनसः असाधारणकारणत्वमवबोधयति । किन्तु तन्न युक्तम् । यतः आभासवादे आत्मानात्मादि सर्वेषु पदार्थेषु मनसः साधारणकारणत्वं स्वीक्रियते न तु असाधारणकारणम् ।

" आत्मानात्मपदार्थेषु विज्ञानोत्पत्तिसाधनम् ।
मनः साधारणं दृष्टं सर्वज्ञानैकहेतुतः ॥ " [108]

भामतीकारः वाचस्पतिः शब्दस्यापरोक्षज्ञानत्वं खण्डयति । तस्य मते आत्मसाक्षात्कारस्य कारणं नास्ति । यतः आत्मसाक्षात्कारस्तु प्रत्यक्षप्रमाणस्य फलं भवति न तु शब्दस्य । यथा कुटजबीजाद् वटाङ्कुरोत्पत्तिः न सम्भवति तथा शब्दादपरोक्षज्ञानं न । दशमस्त्वमसीत्यत्रापि तत्सचिवादक्षादेव साक्षात्कारः अन्धादेस्तु परोक्षधीरेव " [109] । दशमोऽहमस्मीत्यपरोक्षं ज्ञानमन्तःकरणेन वा सम्भवति । [110]

वाचस्पतिमिश्रस्य मतानुसारेण अन्तःकरणेनैवात्मसाक्षात्कारः सम्भवति। यद्यप्यात्मसाक्षात्कारे शाब्दज्ञानस्योपयोगिता वर्तते तथापि शाब्दज्ञानमात्मसाक्षात्कारस्य कारणत्वरूपेणाङ्गीकर्तुम् न शक्यते । तस्मान्निर्विचिकित्सवाक्यार्थ - भावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्वदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् ।[1]

प्रकाशात्मयतिः सुरेश्वराचार्यश्च ब्रह्मसाक्षात्कारस्य प्रधानकारणत्वेन शाब्दमेव स्वीकुर्वतः । भामतीकारस्तु शाब्दस्योपयोगितां केवलमन्तःकरणसंस्काराय अस्तीति मनुते । भाष्यकारः शङ्कराचार्यः गीताभाष्ये शमदमादिसंस्कृतस्य मनसः आत्मदर्शने करणत्वं कल्पयति ।

भामतीकारः शाब्दद्वारा अपरोक्षज्ञानस्योत्पत्तिसिद्धान्तं खण्डयति । किन्तु वेदान्तवाक्यजन्यभावनायुक्तस्यान्तःकरणस्य साक्षात्कारकरणत्वे एषा शङ्का उदेति यत् भावनाजन्यसाक्षात्कारवत् भ्रमज्ञानस्य स्वीकरणे किं दोष इति । अन्तःकरणस्य करणत्वात् भावनाजन्यसाक्षात्कारस्य भ्रमत्वं न युक्तम् । ब्रह्मसाक्षात्कारे मनसः करणत्वं श्रुतिसिद्धं भवति । 'एषोऽणुरात्मा चेतसा वेदितव्यः'[2] 'दृश्यते त्वग्र्या बुद्ध्या'[3] इत्यादिश्रुतयः ब्रह्मसाक्षात्कारं प्रति मनसः करणत्वं स्पष्टयति । 'अहमेवेदं सर्वम् सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः'[4] इत्यादिश्रुतिरपि स्वप्नकालिकनिर्गुणब्रह्मसाक्षात्कारं प्रति मनसः करणत्वं समर्थयति । केवलं प्रसंख्यानमात्मसाक्षात्कारे कारणं न भवति । यतः ज्ञानस्य कारणरूपेण तन्न प्रतीयते । तद्यथा-

न तु प्रसंख्यानं स्वयं कारणम् । तस्य क्वचिदपि ज्ञानकरणत्वाक्लृप्तेः । कामातुः कामिनीसाक्षात्कारादावपि प्रसंख्यानसहकृतस्य मनस एव करणत्वोपपत्या अवक्लृप्तज्ञानकरणान्तरकल्पनायोगादित्याहुः ।[5]

एवंप्रकारेण विवरणप्रस्थाने भामतिप्रस्थाने च ब्रह्मसाक्षात्कारस्य करणत्वविषये मतवैलक्षण्यं वर्तते । विवरणे शाब्दस्य ब्रह्मसाक्षात्कारस्य करणत्वं स्वीकृतम् । किन्तु भामतीप्रस्थाने आत्मसाक्षात्कारस्य करणरूपेण मनः स्वीक्रियते ।

### 6.4.4 महावाक्यानाम् अखण्डार्थत्वम्

"वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् " इति भाष्यवाक्यं वेदान्तवाक्यानां महत्त्वं स्पष्टतया प्रतिपादयति । अनेकेषु वेदान्तवाक्येषु निम्नलिखितानि वाक्यानि महावाक्यानीत्युच्यन्ते । " प्रज्ञानं ब्रह्म " (इति ऋग्वेदस्य ऐतरेयोपनिषदि) "अहं ब्रह्मास्मि " (इति यजुर्वेदस्य बृहदारण्यकोपनिषदि)" तत्त्वमसि " (सामवेदस्य छान्दोग्योपनिषदि) "अयमात्मा ब्रह्म " (अथर्ववेदस्य माण्डूक्योपनिषदि) ।

जीवब्रह्मणोरैक्यमेतेषु वाक्येषु प्रतिपादितम् । अत: परमतत्त्वस्य प्रतिपादकत्वादेतेषां महावाक्यत्वं प्रथितम् ।अस्मिन् विषये प्रकटार्थविवरणे एका शङ्का निम्नलिखितप्रकारेणोद्भाविता दृश्यते - " ननु वाक्यमनेकपदार्थात्मिके स्वार्थाम् धीमुत्पादयन् कथमद्वैतमवभासयेत् "।[16] अस्या: शङ्काया: समाधानमद्वैतवेदान्तिभिरेवंप्रकारेण क्रियते ब्रूत् वाक्यानि केवलं संसर्गात्मकान्येव न भवन्ति अपि तु अखण्डार्थकान्यपि भवन्ति । अस्मिन् सन्दर्भे अखण्डार्थस्यार्थ: क: इत्यस्यनिरूपणं कृत्वैवास्य प्रश्नस्य समाधानं कर्तुम् शक्यत इति । महावाक्यानामखण्डार्थत्वविषये आचार्याणां निम्नलिखितानि कथनान्यवधेयानि वर्तन्ते ।

तत्वप्रदीपिकायां चित्सुखाचार्य: अस्मिन् विषये निम्नलिखितान् पूर्वपक्षानुद्भावयति -

" किमिदमखण्डार्थत्वम् ? किं निर्विशेषवस्तुपरत्वम् उत निर्भेदार्थविषयत्वम् ? आहोस्विदपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वम् अथवा तेषामेवैकप्रातिपदिकार्थमात्रपर्यवसायित्वम् संसर्गगोचरप्रमाजनकत्वम वा ?[17] तथा एतेषु पंचमस्य ग्रहणं कृत्वा कथितं यत् अखण्डार्थम् नामापर्यायशब्दानां संसर्गगोचरप्रमितिजनकत्वम् अथवा अपर्यायशब्दानां यैका प्रातिपदिकार्थता वर्तते । तद्यथा - "[illegible]

" संसर्गासङ्गि सम्यक् धीहेतुता या गिरामियम् ।

उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।। "[18] इति ।

तत्वमसीति वाक्ये वाक्यघटकतत्वप्रतिपादिकवृत्त्या स्मारितस्य स्वरूपचैतन्यमात्रस्य एव प्रमाजननात् पदवृत्तिस्मारितान्यस्य प्रमानुत्पादाल्लक्षणसमन्वय: । तत्त्वमस्यादि आत्मस्वरूपमात्रविवक्षया प्रयुक्तत्वादखण्डार्थम् बोधयति । किंच जीवेश्वरयो: किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयो: अत्यन्तविलक्षणयो: तत्त्वमस्यादिमहावाक्यानि

परस्परविरुद्धार्थप्रतिपादकानि कथमखण्डैकरसं ब्रह्म प्रतिपादयन्ति इति चेत् उच्यते साक्षादैक्यप्रतिपादकत्वाभावे अपि लक्षणाया सम्बन्धत्रयेण अखण्डैकार्थम् प्रतिपादयन्ति इति । सम्बन्धत्रयं नाम - पदयोः सामानाधिकरण्यम् , पदार्थयोः विशेषणविशेष्यभावः , प्रत्यगात्मपदार्थयोः लक्ष्यलक्षणभावश्चेति । तथा चोक्तं नैष्कर्म्यसिद्धौ - " सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम् ।। "[19] इति ।

अस्मिन् सन्दर्भे भामतीपन्थिना निम्नलिखितानि कथनानि विशेषतः अवधेयानि वर्तन्ते ।

(क) एवमविशिष्टमपर्यायानेकशब्दप्रकाशितम् । एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ।।[20]

"उपाधिभेदाद्भिन्नो थर्यो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थम् महत्खं कुम्भकं यथा ।। "[21]

अस्मिन् विषये परिमलकारस्यापि मतं द्रष्टव्यं वर्तते - " न च तत्वमस्यादिवाक्यार्थेष्वभेदरूपः संसर्गः अस्तीत्यसम्भवः शङ्कनीयः ।, सम्बन्धस्य द्विष्टत्वनियमेनाभेदस्य संसर्गित्वाभावात् । कोकिलः पिक इत्यादिपर्यायानेकशब्दप्रकाशिते वाक्यार्थत्वाभावाल्लक्ष्येऽतिव्याप्तिवारणार्थम् अपर्यायेति विशेषणम् ।"[22] किंच तत्वमस्यादिवाक्यम् , अखण्डार्थम् , उपाधिभेदभिन्नार्थैक्यप्रतिपादकत्वात् । विवरणपन्थिनः ब्रह्मसाक्षात्कारे महावाक्यस्य करणत्वं प्रतिपादयन्ति । किन्तु भामतीपन्थिनः कथयन्ति यत् ब्रह्मसाक्षात्कारे मन एव करणं न तु महावाक्यम् ।

महावाक्यानामखण्डार्थप्रतिपादकत्वे केचिदाचार्याः लक्षणा आश्रयणीया इति कथयन्ति । किन्तु अन्येषामेतत् कथनमस्ति यत् अभिधयैवाखण्डार्थत्वं साधयितुं शक्यते ।

## 6•5•0 ज्ञानस्य मोक्षसाधनत्वम्

तमेव विदित्वाऽतिमृत्युमेति , नान्यः पन्था विद्यतेऽयनाय इत्यादि श्रुतयः मोक्षस्य ज्ञानैकसाध्यत्वं द्योतयन्ति । मोक्षप्राप्त्यर्थम् ज्ञानमावश्यकमिति भाष्यादिष्वपि द्रष्टुं शक्यते । ब्रह्मावगतिरेव मोक्षः , तदेव परमः पुरुषार्थः । तद्यथा- " ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः , निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् ।[23]

वाचस्पतिमिश्रैरास्मिन्विषये यदुक्तं तदपि विशेषत: ज्ञातव्यं वर्तते । तद्यथा- न सूत्रकारवचनमात्रादिषिकर्मता ज्ञानस्येत्यर्थं हावगतिपर्यन्तमिति न केवलं ज्ञानमिष्यते किन्तु अवगतिं साक्षात्कारं कुर्वत् अवगतिपर्यन्तं सन् वाच्याया: इच्छाया: कर्म । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । तस्माद्ब्रह्म जिज्ञासितव्यम् उक्तलक्षणेन मुमुक्षुणा न खलु तत्ज्ञानं विना सवासनविविधदु:खनिदानमविद्या उच्छिद्यते । न च तदुच्छेदमन्तरेण विगलितनिगलितदु:खानुशङ्कानन्दघनब्रह्मात्मता साक्षात्काराविर्भावो जीवस्य । तस्मादानन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम् ।[24]

## 6•5•। मोक्षस्वरूपम्

श्रुतिवाक्येष्वेतत्प्रतिपादितं यद् य: परमं ब्रह्म जानाति , स: ब्रह्मैव भवति। मिथ्याज्ञाने निवृत्ते जाते सति चैतन्यस्वरूपआत्मा तथैव प्रतिभासते , यथा मलिनताया: दूरंगते सुवर्ण: मेघारहितरात्रौ तारकाश्च । किन्तु यावद् मिथ्याज्ञानं न निवर्तते तावत्पर्यन्तं जीव: शरीराद्यभिमानयुक्त: सन् द्रष्टा श्रोता मन्ता विज्ञाता इत्यादिरूपेणावभासते ।यथा स्फटिकमणे: स्वच्छे शुक्लेऽपि स रक्तनीलाद्युपाधिभि: उपहितत्वात् स्वस्मिन् स्वच्छे शुक्लरूपे च नोपलभ्यते तथैवात्मापि देहेन्द्रियाद्युपहितत्वात् स्वविशुद्धचैतन्ये नोपलभ्यते ।

देहेन्द्रियाद्युपाधिभि: अविविक्ततस्य जीवस्य यथैव विवेकज्ञानं जायते स अशरीरी मुक्तश्च भवति ।जीवस्य सशरीरत्वं बन्ध: , अशरीरत्वं च मोक्ष: । मोक्षस्य केनापि कालविशेषेण सम्बन्धो नाङ्गीकर्तुं शक्यते ततश्च मोक्षो नित्य: , कूटस्थ: पारमार्थिकश्च भवति । मोक्षत्वं साध्यं न ,अपि तु सिद्धवस्तुन: प्रकाशमानमात्रमेव ।

मोक्षस्य नित्ये पारमार्थिके सत्यपि अयम् अनादिरविद्यावासनाकारणाद्
अन्यथा दृश्यते । किन्तु विवेकज्ञानेन यदा जीवस्य स्वीयं स्वरूपमाविर्भवति तदा स
स जीवो मुक्तो भवति । मोक्षावस्थायां कस्यापि धर्मान्तरस्य प्राप्तिर्न भवति ।
अपि तु स्वस्य रूपस्यैवाविर्भाव: ज्ञानं वा जायते । ज्ञानेन कस्यापि वस्तुन: सिद्धिर्न भवति । अतो मोक्ष: सिद्ध एव । बन्धनं न वास्तविकमपि तु अविद्याकृतमेव ।

मोक्षावस्थायां जीव: ब्रह्मस्वरूपो भवति । परन्तु जीवब्रह्मणो: अविभागत्वसम्बन्धो विचारकाणां मतभेद: दृष्टिगतो भवति । अस्मिन् सन्दर्भे भगवान् बादरायण: जैमिने: औडुलोमिनश्च मतमुल्लेखयन् स्वकीयं मतं प्रतिपादितवान् ।
जैमिने: मतानुसारं मुक्त: पुरुष: ब्रह्मस्वरूपो भवति । ब्रह्मण: अपहतपाप्मत्व-

सत्यसंकल्पत्वसर्वेश्वरत्वादिगुणानां प्राप्तिः तस्य जायते ।[25]

किन्तु औडुलोमिरेतन्मतं नानुसरति । तस्य मते सत्यसंकल्पत्वादिगुणाः औपाधिकाः वर्तन्ते । अतः नैते आत्मनः स्वरूपमस्ति । अतः मोक्षावस्थायामात्मनः चैतन्यस्वरूपत्वस्याभिनिष्पत्तिः भवतीति । भगवान् बादरायणः जैमिनेः तथा औडुलोमिनोर्मतयोर्मध्ये सामंजस्यं स्थापयितुं प्रयासं कृतवान् । तदीयदृष्टावेतयोः द्वयोर्मतयोः कश्चन वास्तविकविरोधो नास्ति । एतद्द्वयमपि दृष्टिकोणभेदेन समीचीनमेव वर्तते । यद्यपि पारमार्थिकदृष्ट्या मुक्तात्मा चैतन्यमात्रस्वरूपः , तथापि व्यावहारिकदृष्ट्या तदीयसत्यसंकल्पाद्यैश्वर्याणामुपादानमपि असंगतं नास्ति ।

अस्मिन् प्रसङ्गे एतदप्युल्लेखनीयमस्ति यद् यद्यपि बदरायणःमुक्तपुरुषस्य सत्यसंकल्पत्वादीन्यैश्वर्याणि स्वीकरोति तथापि जगदुत्पत्तिसंहारेषु सः तदीयं निमित्तत्वं नाङ्गीकरोति । तन्मते जगद्व्यापारसामर्थ्यम् परमेश्वर एव वर्तते , न तु मुक्तात्मनि ।[26]

## 6.5.2 मुक्तपुरुषस्य स्वरूपम्

जीवेश्वरस्वरूपविचारकाले अस्माभिः दृष्टं यदत्र विषये प्रतिबिम्बवादः आभासवादवच्छेदवादेषु भूयान् मतभेदो वर्तते । प्रतिबिम्बवादस्य सर्वेष्वनुयायिषु मतैक्यं नास्ति । केचन जनाः जीवेश्वरयोः द्वयोः प्रतिबिम्बत्वं मन्वते ।

संक्षेपशारीरककारस्य सर्वज्ञात्ममुनेर्मते जीवश्वरौ द्वावपि प्रतिबिम्बरूपौ भवतः । तन्मते अविद्यायां चैतन्यस्य प्रतिबिम्बः ईश्वरो वर्तते । तथा अविद्यायां कार्यभूते अन्तःकरणे चैतन्यस्य प्रतिबिम्बः जीव इत्युच्यते । अतः सर्वज्ञात्ममुनेर्मते जीवः मुक्तिदशायां विशुद्धचैतन्यरूपेणावतिष्टते ।

यद्यपि विवरणकारः प्रकात्मयतिरपि प्रतिबिम्बवादस्य समर्थको वर्तते तथापि जीवेश्वरयोरुभयोरेव प्रतिबिम्बत्वं नाङ्गीकरोति । प्रतिबिम्बभेदार्थमुपाधिभेदः आवश्यकः ।[27] बिम्बभूतचैतन्यस्यैकत्वे उपाधिभेदं विना प्रतिबिम्बभेदोऽङ्गीकर्तुम् न शाक्यते । विवरणकारः मायाऽविद्ययोः भेदं नाङ्गीकरोति । न चायं संक्षेपशारीरककार इव अविद्यातत्कारणकार्यरूपभेदान् च स्वीकरोति । अत एव तन्मते जीवेश्वरयोर्द्वयोरेव प्रतिबिम्बत्वं नापि तु जीवः प्रतिबिम्बरूपः , ईश्वरश्च बिम्बरूपो वर्तते

विवरणकारः अविद्यायां प्रतिबिम्बितं चैतन्यं जीवरूपेण तथा बिम्बस्था

नीय चैतन्यमीश्वररूपेण स्वीकरोति। स्वमतस्य समर्थने तस्यायं तर्को वर्तते यद् ईश्वरस्य बिम्बरूपे स्वीकृते सत्येव बिम्बप्रतिबिम्बदृष्टान्तेन ईश्वरे स्वातन्त्र्यस्य ,जीवे च पारतन्त्र्यस्य संगतिः जायते। विवरणप्रस्थानानुसारं ईश्वरस्य बिम्बस्थानीयत्वात् मुक्तिदशायां जीवः ईश्वरतामाप्नोति न तु शुद्धब्रह्मरूपताम्। एतन्मतानुसारं यावद् सर्वेषां जीवानां मुक्तिर्जायते। तावन्मुक्तो जीवः तथैव ईश्वररूपेणैव अवतिष्ठति न तु ब्रह्मभावापन्नतया , यथानेकदर्पणेषु यदि एकस्यैव मुखस्य प्रतिबिम्बः पतति तथा तेष्वेकस्मिन् दर्पणे अपसारिते तत्र पतितः प्रतिबिम्बः बिम्बरूपेणैव अवतिष्टते न तु मुखरूपेण।

उपरिप्रतिपादितयोरुभयोर्मतयोरनुसारं प्रतिबिम्बः बिम्बादभिन्नः। अतो मुक्तिदशायां जीवरूपः प्रतिबिम्बः बिम्बात्मना उपस्थितो वर्तते। एतयोः द्वयोः मतयोः भेदः एतदेवास्ति यद् संक्षेपशारीरककारमते मुक्तिदशायां जीवः ब्रह्मरूपः संजायते। किन्तु विवरणकारमते अयं तावत्पर्यन्तमीश्वररूप एवावस्थितो वर्तते। यावत्पर्यन्तं सर्वो पि जीवाः मुक्ताः न स्युः म विवरणकारः ईश्वरस्य बिम्बत्वं स्वीकरोति न तु प्रतिबिम्बत्वम्। अतः तन्मते मुक्तिदशायां जीवस्य ईश्वरस्वरूपप्राप्तौ पुनः प्रतिबिम्बत्वप्रसक्तिर्नास्ति। ईश्वरो ब्रह्म एव। जीवरूपस्य प्रतिबिम्बस्य निमित्तमेव ब्रह्मणः बिम्बरूपता , ईश्वरता वा वर्तते। जीवरूपप्रतिबिम्बानामपसरणकाले एव तस्य बिम्बरूपता ईश्वररूपता च समाप्यते। किन्तु यावद् प्रतिबिम्बानां सत्ता वर्तते तावद् तस्य बिम्बत्वमपि तिष्टति। इत्थं च विवरणकारस्य प्रकाशात्मयतेः मतानुसारं मुक्तिदशायां जीवस्य तावत्पर्यन्तं जीवरूपता अथवा ईश्वररूपता च तिष्टन्ति यावत्पर्यन्तं समस्तजीवानां मुक्तिर्न भवति। तथा ब्रह्मणः बिम्बत्वस्य ईश्वरत्वस्य च परिसमाप्तिर्न भवति।

एतद्विपरीतमाभासवादी सुरेश्वराचार्यः जीवेश्वरौ चैतन्यस्याभासमात्रं मिथ्या चेति अङ्गीकरोति। उपाधिनाशेन जीवत्वस्य नाशो एव मुक्तिर्वर्तते। अतः एतस्मिन्मते मुक्तेः प्रश्नः एव नोदेति। ब्रह्म न तु जीवरूपेणैव स्वीक्रियते , न च तत् बन्धमोक्षयोरधिकारिरूपेण। यतस्तस्मिन् संसारित्वं तथैव कल्पितं भवति यथा नभस्थले नीलिमा। मोक्षस्य आत्मस्वरूपत्वात्तस्य प्राप्तेः कथनमौपचारिकं वर्तते। आत्मस्वरूपो जीवः सदैव मुक्तो वर्तते। सुरेश्वराचार्यः बृहदारण्यकोपनिषद्वार्तिके व्याधसंवर्धितस्य राजकुमारस्य आख्यायिकाद्वारा मोक्षप्राप्तेः औपचारिकतायाः निरूपणं करोति।

अस्मिन्प्रसङ्गे एतदुल्लेखनीयमस्ति यद् वाचस्पतिमिश्रः ब्रह्मसूत्रस्य अंशा-

धिकरणे बिम्बप्रतिबिम्बदृष्टान्ताधारेण मुक्तपुरुषस्य ब्रह्मरूपतायाः सिद्धान्तस्य समर्थनं करोति । सः कथयति यद् यथा दर्पण पतितः मुखप्रतिबिम्बः दर्पणे नष्टे सति बिम्बरूपेणैवावतिष्ठते तथैव अविद्योपाधेः नाशे जाते सति जीवः ब्रह्मस्वरूपो जायते ।[128]

अमलानन्दो पि बिम्बप्रतिबिम्बदृष्टान्ताधारेण मुक्तपुरुषस्य ब्रह्मरूपतायाः समर्थनं कृतवान् । तथाहि - " दर्पणस्यापगमे तत्रत्यं मुखप्रतिबिम्बं बिम्बभावेनावतिष्टते , न तु प्रतिबिम्बान्तररूपेण , यद्यपि बिम्बात्मतामापन्नं तत्र तद्रूपेण कृपाण प्रतिबिम्बितं , तथापि बिम्बप्रतिबिम्बयोरवदातत्वश्यामत्वादिव्यवस्थानात्त्वद्धार्मसांकर्यमित्यर्थः " ।[129] किन्तु परिमलकारः अप्पयदीक्षितः मुक्तपुरुषस्य तावत्पर्यन्तं ~~जीवस्य~~ ईश्वररूपतां स्वीकरोति , यावद् सर्वे जीवाः मुक्ताः न भवन्ति । सः कथयति यद् मुक्तस्य जीवस्य तावत्पर्यन्तमीश्वररूपतां स्वीकरोति यावद् सर्वेषां जीवानां मुक्तिर्न जायते । दर्पणे नष्टे तत्र ~~प्रतिबिम्बः~~ पतितः प्रतिबिम्बः बिम्बरूपेणैवावस्थितो भवति । यतो हि दर्पणान्तरगतस्य प्रतिबिम्बस्य प्रतियोगित्वरूपधर्मस्य बिम्बस्य निवृत्तिर्न भवति । तथैवैकस्य जीवस्य अन्तःकरणोपाधेर्नाशे जाते अपि प्रतिबिम्बितो जीवः बिम्बरूपमीश्वरमेव प्राप्नोति । न तु विशुद्धं ब्रह्मरूपम् । इत्थं च परिमलकारः अप्पयदीक्षितः मुक्तपुरुषस्य ईश्वरभावापत्तिसिद्धान्तमेव संवर्धयति । सः प्रतिपादयति यद् एतन्मतमेव सूत्रकारभाष्यकारसम्मतमिति । तद्यथा - " मुक्तौ यावत्सर्वमुक्तिबिम्बभूतेश्वरभावमापद्यते , बहुषु दर्पणेषु मुखप्रतिबिम्बे सत्येकदर्पणापाये तत्प्रतिबिम्ब इव यावत्सकलदर्पणापायं बिम्बमुखभावं तावत्पर्यन्तं दर्पणान्तरगतप्रतिबिम्बप्रतियोगित्वरूपबिम्बभावानिवृत्तेः , ततश्च मुक्तस्य परमेश्वरभावापत्त्या तद्रूपेण कामसंकल्पौ खला निरुपाधिकस्यापि बुद्धपुरुषदृष्ट्यासंभवत एव । तदभिप्रायेणोक्तं भाष्ये अपगतपाप्मत्वादिगुणकं परमेश्वरं रूपं विद्यया प्रतिपद्यत इति ।[130]

अस्मिन् प्रसङ्गे एतदपि उल्लेखनीयं वर्तते यद् अप्पयदीक्षितः मुक्तिपरममुक्त्योः भेदं कृतवान् तथा मुक्तौ जीवस्य ईश्वरभावापत्तिं ~~परममुक्तौ निर्विशेषब्रह्मभावापत्तिं~~ परममुक्तौ निर्विशेषब्रह्मभावापत्तिं प्रतिपादितवान् ।

## 6·5·3 जीवन्मुक्तेः स्वरूपं ग्राह्यत्वं च

भगवान् आदिशंकराचार्यः जीवन्मुक्तिसिद्धान्तस्य प्रतिपादको वर्तते -"अनारब्धकार्ये एव तु तदवधेयम्"[131] इति सूत्रस्य भाष्ये सः कथयति यत् ज्ञानप्राप्त्या संचितस्य कर्मराशेरेव क्षयो भवति न तु प्रारब्धकर्मराशेः। तद्यथा - " न तावदनाश्रित्यारब्धकार्यम् कर्माशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन् कुलालचक्रवत्प्रवृत्तवेगस्यान्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनम्। यदि ज्ञानेनोभयकर्मणां क्षयः अङ्गीक्रियते तर्हि शरीरधारणहेत्वाभावेन ज्ञानानन्तरमेव मोक्षस्य प्राप्तिः भवेत्। छान्दोग्योपनिषदनुसारं च तदर्थम् शरीरपातस्य कर्तव्या न स्यात्। तद्यथा- "तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ सम्पत्स्ये "[132] इति। शङ्कराचार्यः कथयति यत् बाधितं मिथ्याज्ञानमपि संस्कारवशात् द्विचन्द्रज्ञानमिव किंचित्कालपर्यन्तं मनुवर्तते। येन मुक्तपुरुषस्य देहादेरवस्थानं जायते। श्रुतिषु स्मृतिषु च वर्णितेन स्थितप्रज्ञलक्षणेनापि जीवन्मुक्तिसिद्धान्तस्य समर्थनं जायेते। तद्यथा - श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते[133] इति।

यदि ज्ञानप्राप्त्या अनारब्धकर्मणां तथा आरब्धकर्मणां क्षयो भवतीति अङ्गीक्रियेत तर्हि स्थितप्रज्ञस्य शरीरधारणं कथं भवेत् एतेन ज्ञायते यत् तत्वगमेनेन अनारब्धकर्मणामेव क्षयो भवति न तु आरब्धकर्मणाम्। आरब्धकर्मणां फलोपभोगस्य कृते ज्ञानप्राप्त्यनन्तरमपि शरीरमवस्थीयते। इत्थं च शङ्कराचार्यः शारीरकभाभाष्ये स्पष्टरूपेणैव जीवन्मुक्तेः सिद्धान्तं समर्थयति।

अस्मिन् सम्बन्धे विवरणप्रमेयसंग्रहकारः विद्यारण्यः कथयति यत् विद्यया अविद्यायाः नाशे अपि अविद्यायाः संस्कारेण देहेन्द्रियादेरवस्थानं वर्तते। यथा पुष्पपात्रात् पुष्पे निःसारिते अपि बन्धस्य संस्कारेण तत्पात्रं किंचित्कालपर्यन्तं सुगन्धितं तिष्ठति। तथैवाविद्यायाः दूरे गते अपि तदीयसंस्कारेण किंचित्कालं यावत् देहेन्द्रियादेरवस्थितिर्भवति। अत्र यदि यदीयं शङ्का भवेत् यत् पूर्वोक्तदृष्टान्ते पुष्पपात्रस्य सुगन्धितावस्थानस्य कारणमिदमस्ति यत् तत्र पुष्पाणां सूक्ष्मावयवः अवतिष्ठन्ति। तथाप्येयं शङ्का समीचीना नास्ति। यतो हि प्रकृतस्थले पि अवशिष्टाविद्यालेश एव देहेन्द्रियादेरवस्थानस्य कारणं मन्यते।

आरब्धकर्मणां क्षयपर्यन्तमविद्यालेशस्यानुवृत्तिमङ्गीकृत्य तेनैव जीवन्मुक्तस्य देहेन्द्रियादेरवस्थानस्य व्याख्या सम्भवति। अत्र विषये चित्सुखीकारस्य कथनमिदमस्ति यत् तत्वज्ञानस्योदये अविद्यालेशस्य निवृत्तिर्न भवति। यता हि प्रबलैः प्रारब्ध-

|34

कर्मभि: तत् प्रतिबद्धा तिष्टति ।

अत्रेयं शङ्का उदेति यत् यदि जीवन्मुक्तदशायामपि अविद्यालेशस्यानुवृत्तिरङ्गीक्रियेत तर्हि वास्तविकदृष्ट्या कथं तस्याः मुक्तित्वमङ्गीकर्तुम् शक्येत । एतस्याः शङ्कायाः समाधानं कुर्वन् अद्वैतसिद्धिकारः मधुसूदनसरस्वती एतत् कथयति यत् जीवन्मुक्तिदशायामविद्यायाः आवरणशक्तेः नाशस्तु जायते किन्तु तदीया विक्षेपशक्तिः जीवस्य बन्धनकारणं नास्ति ।अविद्यायाः आवरणशक्तिरेव तस्य कारणमस्ति । जीवन्मुक्तिदशायामप्यावरणशक्तेर्नाशस्तथा विक्षेपशक्तेरुपस्थितिरेवाविद्यालेशानुवृत्तेस्तात्पर्यम् वर्तते । अतः जीवन्मुक्तिदशायामविद्यालेशानुवृत्तिरसङ्गता न अस्ति ।

एतस्मिन् सम्बन्धे विवरणाकारस्य प्रकाशात्मयतेः कथनमेतदस्ति यत् - " तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथसंपत्स्ये " इति छान्दोग्योपनिषद् 6 वाक्यमेतद् प्रमाणायति यत् तत्वज्ञानानन्तरमपि देहेन्द्रियादेरवस्थानं वर्तते । एतच्च तदैव सम्भावति यदा देहेन्द्रियादिनिमित्तभूतानां कर्मणामवस्थानमङ्गीक्रियेत । अतः तत्वज्ञानात्परमपि किंचित्कालपर्यन्तं प्ररब्धकर्मणामवस्थानस्वीकारः आवश्यको भवति।

विवरणाकारः कथयति यत् प्रारब्धकर्मवतः पुरुषस्य शरीरावस्थायामेव तत्वदर्शनं सम्भावम् । व्यासादिमुनीनां शरीरावस्थायामेव तत्वदर्शनमभूत् । वार्तिककारः सुरेश्वराचार्योऽपि जीवन्मुक्तिसिद्धान्तं समर्थितवान् । बृहदारण्यकोपनिषद्भाष्यवार्तिके सः मण्डनमिश्रस्य सद्योमुक्तिवादं खण्डितवान् । सः कथयति - " यदि सद्योमुक्तिसिद्धान्तः स्वीक्रियेत तर्हि सम्यक्ज्ञाने जाते एव शरीरपातो भवितव्यः । किन्तु तथा न भवति । अतः सद्योमुक्तिसिद्धान्तः नाङ्गीकरणीयः । सुरेश्वरः कथयति यत् सर्वविषयाणां कारणभूतायाः अविद्यायाः अपगते सति मुमुक्षुः जीवनकाल एव मोक्षं प्रप्नोति । अतः एतत् कथनं समीचीनं नास्ति यत् शरीरपातानन्तरमेव मोक्षः सम्प्राप्यते । जीवन्मुक्तिसमर्थने अपि तेन " तस्य तावदेव चिरम् " इत्यादिछान्दोग्योपनिषद्वाक्यं प्रमाणारूपेण प्रस्तुतम् ।

भामतीकारः अपि जीवन्मुक्तिसिद्धान्तं समर्थयति तथा मण्डनमिश्रस्य सद्योमुक्तिवादं खण्डयति । शङ्कराचार्यद्वारा जीवन्मुक्तेः सिद्धान्तस्य समर्थने प्रस्तुतस्य स्थितप्रज्ञस्य दृष्टान्ते मण्डनमिश्रस्य कथनमस्ति यत् स्थितप्रज्ञः साधको भवति न तु सिद्धः । अत एव स्थितप्रज्ञः जीवन्मुक्तरूपेण नाङ्गीक्रियते । मण्डनमिश्रस्यैतदाक्षेपं निराकुर्वन् वाचस्पतिमिश्रः कथयति यत् स्थितप्रज्ञस्य सिद्धरूपता एव स्वीकरणाया न तु साधकरूपता । यदि स्थितप्रज्ञः साधकरूपेण स्वीक्रि-

यते तर्हि साधनाद्वारा उत्तरोत्तरध्यानोत्कर्षेण पूर्वपूर्वप्रत्ययोऽनवस्थिता भविष्यति।, परिणामस्वरूपं च सः स्थितप्रज्ञो न स्थास्यति।

स्थितप्रज्ञस्तु निरतिशयप्रज्ञो भवति। अत एव सः सिद्धः न तु साधकः।[35] जीवन्मुक्तिसिद्धान्तसमर्थने वाचस्पतिमिश्रः इदमपि कथयति यत् हिरण्यगर्भः - मनु-उद्दालकादयो देवर्षिगणाः तत्वज्ञानिनः सन्तो दीर्घजीविनः आसन्।[36] श्रुति-स्मृति-पुराणेषु एतेषां तत्वज्ञतायाः दीर्घजीविताश्च वर्णनान्युपलभ्यन्ते। अनेनैतत्सिद्ध्यति यत् प्रारब्धकर्मणां प्रक्षयार्थम् तत्वसाक्षात्कारे जाते अपि फलोपभोगप्रतीक्षा कर्तव्या भवति।

एतस्मिन् प्रसङ्गे एतदप्युल्लेखनीयं वर्तते यत् वाचस्पतिमिश्रः बहुषु विषयेषु सुरेश्वराचार्यम्, प्रकाशात्मयतिप्रभृतीनां च विरुद्धं मण्डनमिश्रस्य सिद्धान्तं समर्थितवान्। एतस्मादेव कारणात् समालोचकाः वाचस्पतिमिश्रं "मण्डनपृष्टसेवी"ति संज्ञा दत्तवन्तः। किन्तु जीवन्मुक्तेः प्रश्नेऽयं स्पष्टशब्देषु मण्डनमिश्रस्य खण्डनं करोति तथा जीवन्मुक्तेः सन्दर्भे तदीयप्रदर्शितविषयदोषान् परिहरन् जीवन्मुक्तिसिद्धान्तं समर्थयति।

एतद्विपरीतमिष्टसिद्धिकारः विमुक्तात्मा शङ्करस्य सुरेश्वराचार्यस्यानुयायी सन्नपि जीवन्मुक्तेर्विषये ताभ्यां सह असहमतो वर्तते, तथा मण्डनमिश्रस्य सद्योमुक्तिवादस्य समर्थनं करोति।

ब्रह्मानन्दः विदेहमुक्तेरेव वास्तविकी मुक्तिरिति मनुते। एवं सर्वज्ञात्मा मुनिरपि जीवन्मुक्तिं नाङ्गीकरोति। सः कथयति यत् अविद्याविरोधिनि तत्वसाक्षात्कारे उदिते सति लेशमात्रमपि अविद्यायाः अनुवृत्तिर्न सम्भवति। जीवन्मुक्तिप्रतिपादकं[37] "तस्य तावदेव चिरं" इत्यादि शास्त्रं श्रवणादिविधेः केवलमर्थवादमात्रमस्ति। यतो हि जीवन्मुक्तेः प्रतिपादने शास्त्रस्य किमपि प्रयोजनं नास्ति। किन्तु यथाऽस्माभिः दृष्टं भामतीकार-विवरणकारयोरस्मिन् विषये मतैक्यमस्ति यत् जीवन्मुक्ति-सिद्धान्तः समीचीनः ग्राह्यश्च वर्तते इति।

वाचस्पतिः जीवन्मुक्तिं समर्थयति। सः भास्करोक्तजीवन्मुक्तिसिद्धान्तं निराकृत्य भाष्यकारमतानुसारेणार्चिरादिमार्गेण ब्रह्मप्राप्तिं स्वीकरोति। जीवन्मुक्तिलक्षणं मधुसूदनसरस्वतिना अद्वैतसिद्धावेवं प्रतिपादितम्। तद्यथा -

"जीवन्मुक्तश्च तत्वज्ञानेन निवृत्ताविद्यः अपि अनुवृत्तदेहादिप्रतिभासः" इति।

शारीरपाते तु या ब्रह्मण्येव ब्रह्मरूपेणावस्थिति: सापि मुक्ति: , ब्रह्मण्यप्यय: , ब्रह्मनिर्वाणं , ब्रह्मसम्पत्तिरित्यादिशब्दै: उपचर्यते । वेदान्ते मुक्ति: त्रेधा विभाज्यते । तद्यथा- क्रममुक्ति: , सद्योमुक्ति:, विदेहमुक्तिश्च ।

'तत्तुसमन्वयादिति' सूत्रस्य भाष्ये भाष्यकार: मोक्षमधिकृत्यैवं प्रतिपादयति – 'इदं तु पारमार्थिकम् , कूटस्थनित्यम्, व्योमवत्सर्वव्यापि , सर्वविक्रियारहितं, नित्यतृप्तम् , निरवयवम् , स्वयंज्योति: स्वभावम् । यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते , तदेतदशरीरत्वं मोक्षाख्यम्"।[38]

भामतीकारेण वाचस्पतिना श्रुतिस्मृत्युक्तेन स्थितप्रज्ञलक्षणेन जीवन्मुक्तिं वर्णयति । मण्डनमिश्र: स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्य: सिद्ध: , किन्तु साधक एवावस्थाविशेषं प्राप्त: स्यात् । अत्र साधकस्य ध्यानोत्कर्षेण तारतम्यम् , स्थितप्रज्ञस्य च निरतिशयाव~~स्थ~~स्थत्वमित्युक्तं न भाष्यानुसृतम् । न हि शङ्कर: साधनोत्कर्षेण साधकस्य स्थितप्रज्ञत्वमाप्यत इत्यनुमन्यते , किन्तु निदिध्यासनपूर्वकमात्मलक्षणविवेचनेन । तथाहि गीताभाष्ये " स्थिताप्रज्ञा प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स: स्थितप्रज्ञो विद्वान् "[39] इति ।

ब्रह्मसूत्रशाङ्करभाष्ये " अनारब्धकार्ये एव तु पूर्वे तदवधे: " इति सूत्रस्य भाष्ये " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये "(छा॰ 6-14- 2) इति छान्दोग्यश्रुतिमाश्रित्य शरीरपातानन्तरमेव मोक्षं प्राप्नुयात् इति श्रावयति । तद्यथा भामत्याम् –

" कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गति: ।
प्रापयेत्ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ।।"

विदुषोऽपि देहपातात्पूर्वम् स्थितप्रज्ञस्य यथाभासमात्रेण सांसारिकधर्मानुवृत्तिरभ्युपेयते , एवमालिङ्गशरीरपातादविदुषस्तद्धर्मानुवृत्ति: । तथाच प्राप्ताप्राप्ते गत्युपपत्ति: । तद्देशप्राप्तौ च लिङ्गदेह~~विमुक्ते~~ निवृत्तेर्मुक्ति: श्रुतिप्रमाण्यादिति चेन्न , परिधावत उत्क्रान्तिप्रतिषेधात् ।।[40]

2 न खलु ब्रह्मैवेदं विश्वम् अहं ब्रह्मास्मि इति परिभावनाभुवा जीवात्मनो ब्रह्मभावसाक्षात्कारेणोन्मूलितायामनवयवेनाविद्यायामस्ति गन्तव्यगन्तृविभागो विदुष: तदभावे कथमयमर्चिरादिमार्गे प्रवर्तेत --- न च अर्चिरादिमार्गभावनाया: परब्रह्मप्राप्त्यर्थमृतिविदुष: प्रत्युपदेश: , तथा च कर्मान्तरेष्विव नित्यादिषु तत्रापि ---------- ब्रह्मसामीप्यादपरब्रह्मणि लक्षणया नेतव्य: ।।[41]

अत्र अर्चिरादिमार्गेण परब्रह्मणोः प्राप्यत्वं प्रत्याख्यातम् ।
तावदेव चिरमिति न चिरता विधीयते । अपि तु श्रुत्यन्तरसिद्धा चिरतामनूद्य देहपातावधिमात्रविधानम् "[142] अत्र सद्योमुक्तिं खण्डयति ।

स्थितप्रज्ञस्य न साधकः । तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशस्तु स्थितप्रज्ञः । स च सिद्ध एव ।[143]

## 6.5.4 ज्ञानकर्मसमुच्चयवादनिरसनम्

भगवत्पादशङ्कराचार्यैः प्रवर्तिते शांकरवेदान्ते ज्ञानमेव मुक्तेः एकमात्रं साधनं सवीक्रियते । किन्त्वन्येषां कतिपयवेदान्तिनां मते एकमात्रं ज्ञानमेव ब्रह्मसाक्षात्कारस्य साधनं xxxxxxx नास्ति । ज्ञानं ब्रह्मसाक्षात्कारस्यापरिहार्यसाधनं तदेव भवति यदा ज्ञानस्य कर्मणा सह समुच्चयो xx भवेत् । एतेषु विचारकेषु निम्नलिखितानां त्रयाणां नामानि विशेषरूपेणोल्लेखनीयानि वर्तन्ते । ब्रह्मदत्तः, मण्डनमिश्रः, भर्तृप्रपंचश्च ।

ब्रह्मदत्तस्य मतानुसारमुपनिषदां वास्तविकं तात्पर्यम् तत्वमसीत्यादि महावाक्येषु नास्ति । किन्तु "आत्मा वा अरे दृष्टव्यः श्रोतव्यः मन्तव्यो निदिध्यासितव्यश्च" इत्यादि नियोगसूचकवाक्येष्वेव वर्तते । सः विधिशून्यवाक्यानां प्रामाण्यं न स्वीकरोति । नियोगानुप्रवेशाद्वारेणैव विधिशून्यवाक्यानां प्रमाण्यं संभवेत् , तन्मते तन्मते तत्वमस्यादिवाक्यं वस्तुतः स्वरूपबोधकं नास्ति । अज्ञानस्य निवृत्तिः भावनाजन्यसाक्षात्कारात्मकज्ञानेनैव सम्भवति न तु वेदान्तवाक्यजन्यज्ञानेन । इत्थं च सः ज्ञानस्य कर्मणा सह समुच्चयमङ्गीकरोति ।

मण्डनमिश्रः ब्रह्मदत्त इव क्रियायामुपासनायां वा सर्वेषामुपनिषद्वाक्यानां तात्पर्यम् निश्चिनोति । तथा तत्वमसीत्यादि वाक्यानां विधिसंश्लिष्टत्वं स्वीकरोति ।[144] वेदान्तवाक्येनोत्पाद्यमानं ज्ञानं संसर्गात्मकं जायते । अतस्तेन संसर्गशून्यस्यात्मनः वास्तविकरूपस्य बोधो न सम्भवति । किन्त्वेतस्य निरन्तराभ्यासेन ते संसर्गशून्यायाः प्रज्ञायाः उदयो भवति । तेनैव चात्मनो बोधो जायते । अस्य पक्षस्य पुष्ट्यर्थम् मण्डनमिश्रः " विज्ञाय प्रज्ञां कुर्वीत " इति श्रुतिं प्रमाणरूपेणोपस्थापितवान् । तन्मते एतस्याः श्रुतेरयमभिप्रायो वर्तते यत् 'तत्वमसि' 'अयमात्मा ब्रह्म' इत्याद्युपनिषद्वाक्यैः आत्मब्रह्मणोः संसर्गात्मकं रूपं ज्ञात्वा प्रज्ञा साधनीया अर्थात् असंसर्गात्मकस्य तथा साक्षात्कारात्मकस्य ज्ञानस्याभ्यासः सदैव कर्तव्यः । वाक्यादुत्पन्नस्य संसर्गात्मकज्ञानस्य

निरन्तराभ्यासेन असंसर्गात्मकत्वसाक्षात्कारात्मकं ज्ञानमुत्पद्यते । एतदेव ज्ञानं कैवल्यस्य कारणं भवति ।

इत्थं मण्डनमिश्रः अपि ब्रह्मदत्त इव प्रसंख्यानस्य ब्रह्मज्ञाने उपयोगित्वं मनुते । तथाप्येतयोः द्वयोः भेदः अयं वर्तते यद् ब्रह्मदत्तस्य मतानुसारं प्रसंख्यानं स्वयमेव मोक्षस्य कारणमस्ति । किन्तु मण्डनमिश्रस्य मतानुसारं प्रसंख्यानद्वारा परिमार्जितं ज्ञानं मोक्षस्य कारणं भवति । अनयोर्मतयोरपरो भेदः अयं वर्तते यद् ब्रह्मदत्तः कर्मणः प्राधान्यं स्वीक्रियते किन्तु मण्डनमिश्रः ज्ञानस्य च प्रधान्यं निरूपयति । यद्यपि उभावेव ज्ञानकर्मसमुच्चयवादं स्वीकुर्वतः तथापि ब्रह्मदत्तः कर्मभिः सह ज्ञानस्य समुच्चयं स्वीकरोति किन्तु मण्डनमिश्रः ज्ञानेन सह कर्मणां समुच्चयं निरूप्य प्रसंख्यानसिद्धान्तं प्रतिपादयति ।

वाचस्पतिमिश्रः अपि भामतीग्रन्थे श्रीमण्डनस्य प्रसंख्यानविषयकस्य सिद्धान्तस्य समर्थनं कृतवान् । सः भावनाद्वारा ब्रह्मसाक्षात्कारस्य प्रतिपादनमपि कृतवान् । विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः[45] इति तेरर्थम् निरूपयन् सः कथयति - तर्कसहितेन शाब्देन ज्ञानं प्राप्य प्रज्ञां भावनां कुर्वीत[46] भावनोपनीतं चित्तमेव साक्षात्कारस्य हेतुरिति सः अङ्गीकरोति । वेदान्तकल्पतरुकारः अमलानन्दः अपि कथयति यद् वाचस्पतिः मण्डनमिश्रस्य प्रसंख्यानविषयकसिद्धान्तस्य समर्थकः आसीदिति ।

भर्तृप्रपंचः संसारस्य सर्वाणि वस्तूनि भेदाभेदात्मकानि सन्तीति विविभाव्य औपनिषदं ब्रह्म अपि भेदाभेदात्मकमस्तीति प्रतिपादयति । एतन्मते कर्मकाण्डज्ञानकाण्डयोः द्वयोः समानरूपेण प्रधानता वर्तते । भर्तृप्रपंचः मोक्षस्य कृते ज्ञानकर्मणोः द्वयोः समाधिं स्वीकरोति ।[47] मण्डनमिश्र इव भर्तृप्रपंचः मोक्षस्य कृते इदं कथयति यद् तत्वमस्यादिवाक्यैः सर्वप्रथमंपरोक्षज्ञानमेवोत्पद्यते । यावत्पर्यन्तं शाब्दज्ञानं समताान्यस्यमानोपासनया प्रसंख्यानेन ब्रह्मभेदापादके अपरोक्षज्ञाने पर्यवसितं न भवेद् । तावत्पर्यन्तमपरोक्षज्ञानं न भवति । एवंप्रकारेण एते त्रयः अपि ज्ञानकर्मसमुच्चयवादिनः सन्ति । एते मोक्षप्राप्त्यर्थम् ज्ञानकर्मणोः समुच्चयं स्वीकुर्वन्ति । तथाप्येतेषु ब्रह्मदत्तः कर्मणः मण्डनमिश्रश्च ज्ञानस्य प्रधान्यं प्रतिपादयतः । भर्तृप्रपंचस्तु ज्ञानकर्मणोः द्वयोरेव समानरूपेण प्रधान्यं स्वीकरोति । ~~प्रतिपादयति~~

भगवत्पादश्रीशङ्कराचार्यः ज्ञानमेव मोक्षस्य कारणमिति प्रतिपादयति । समन्वयाधिकरणे सः कथयति यद् - आत्मा परमार्थतः मुक्तो

वर्तते केवल[illegible]मज्ञानकारणात् स: बद्ध इव प्रतीयते । अत एव मोक्ष: सिद्ध एव न तु साध्य: । साध्यवस्तुकृते कर्मण: अपेक्षा जायते न तु सिद्धवस्तुकृते । यदि मोक्ष: साध्यरूपेण स्वीक्रियेत तर्हि स: अनित्यो भविष्यति । तत्र च स्वर्गादिषु -सुखवत् अतिशय: तारतम्यं च स्वीकरणीयं स्यात् । अत: मोक्ष: साध्यरूपेण स्वीकर्तुम् न शक्यते [148] एतस्मिन् सम्बन्धे कल्पतरुकार: कथयति यत् यदि वेदान्ते ब्रह्मण: उपासनाया: विधानं स्यात्तर्हि धर्ममीमांसाया: एव एतस्मिन् कार्ये सम्पन्ने जाते सति ब्रह्मजिज्ञासा निष्फलत्वमापद्येत । यदि धर्म इव मोक्ष: अपि साध्यो भवेत् तर्हि कर्मजन्यस्वकार्यफलैरस्य वैशिष्ट्यं किमवशिष्येत अत: मोक्ष: साध्य इति स्वीकर्तुम् न शक्यते ।[149] अयं तु स्वत:सिद्धो वर्तते । ब्रह्मज्ञानेनन अज्ञानस्य दूरं गते सति एव जीव: ब्रह्मरूपतां प्रतिपद्यते । ब्रह्मज्ञानमोक्षयोर्मध्ये कार्यान्तराभाव: श्रुतिषु स्पष्टतयोपलभ्यते। 'ब्रह्मविद् ब्रह्मैव भवति' (मु॰ उ॰ 3•2•9) 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु॰ उ॰ 2•2•9) 'तत्र को मोह: क: शोक: एकत्वमनुपश्यत:' ई॰ ७ इत्यादि श्रुत्या ब्रह्मज्ञानानन्तरमेव ब्रह्मरूपप्राप्ति: इति सिद्ध्यति । एतेन स्पष्टं भवति यत् ब्रह्मज्ञानेन मोक्षस्य साक्षात्कारमस्ति । अत: ब्रह्मज्ञानात्परं मोक्षस्य प्राप्त्यर्थम् किंचिदपि करणीयं नावशिष्यते ।

<u>ज्ञानस्य वस्तुतन्त्रत्वम्</u> -

ब्रह्मज्ञानस्य पुरुषार्थव्यापारतन्त्रता अङ्गीकर्तुम् शक्यते । प्रत्यक्षादिप्रमाणजनितवस्तुज्ञानवद् इदमपि वस्तुतन्त्रं भवति । अत: सिद्धवस्तुस्वरूपस्य ब्रह्मण: तथा तस्य ज्ञानस्य मध्ये कस्यापि अन्यस्य धर्मस्यानुप्रवेश: कल्पयितुं न शक्यते । ध्यानं चिन्तनं च यद्यपि मनसा भवत: तथापि पुरुषतन्त्रत्वात् तयो: अन्यथाकरणमपि संभाव्यते । किन्तु ज्ञानं प्रमाणतन्त्रं भवति । प्रमाणं च यथाभूतवस्तुविषयकमेव भवति । ज्ञानस्य वस्तुतन्त्रत्वात् तस्य करणमकरणमन्यथाकरणं वा न संभाव्यते । ज्ञानं न तु चोदनातन्त्रं न वा पुरुषतन्त्रम् , अपि तु वस्तुतन्त्रं वर्तते ।[150] ज्ञानस्य वस्तु - तन्त्रत्वात् तद् पुरुषव्यापारतन्त्र[illegible]ध्यानचिन्तनाभ्यां सर्वथा भिन्नं वर्तते ।

अत्रेयं शङ्का उदेति यद् ब्रह्मज्ञानमेव यदि मोक्षस्य साधनं तर्हि वेदान्तश्रवणेनैव ब्रह्मज्ञाने गते श्रवणानन्तरं मननिदिध्यासनस्य विधानं कथं भवेद्

अस्या: शङ्काया: सामाधाने भगवत्पादशङ्कराचार्य: कथयति यद् श्रवणमिव मनननिदिध्यासनयो: प्रयोजनमपि ब्रह्मावगतिरेव वर्तते । वस्तुत: आत्मा विधे: विषय: नास्ति । आत्मन: सम्बन्धे श्रूयमाणं विधिवाक्यं तथैव

कुण्ठितं भवति यथा प्रस्तरे प्रयुक्तस्य क्षुरस्य तैक्ष्ण्यं कुण्ठितं जायते । अतः विधिच्छायावचनानां प्रयोजनमात्मनः विषये कस्यापि विधेः प्रतिपादनं न अपि तु स्वाभाविकप्रवृत्तिपरकेभ्यो विमुखीकरणमेव वर्तते । इत्थं च शङ्कराचार्यः एकमात्रं ज्ञानमेव मोक्षस्य साधनमिति प्रतिपादयति । मननिदिध्यासनयोरपि मोक्षस्य साधनत्वं नास्ति ।

नैष्कर्म्यसिद्धिनाम्निग्रन्थे सुरेश्वराचार्योऽपि इदं प्रतिपादयति यत् मोक्षस्य साधनमेकमात्रं ज्ञानमेवास्ति । कर्माणि मोक्षस्य साधनता भवितुं नार्हन्ति।

मोक्षकृते प्रसंख्यानस्य खण्डनविषये तदीयं कथनमस्ति यत् आत्मा स्वतः मुक्तो वर्तते । यद्वस्तु साध्यं भवति तदर्थम् साधनस्यावश्यकता वर्तते । किन्तु आत्मा स्वतसिद्धो भवति । अतः प्रसंख्यानेन तस्य सिद्धिनापेक्ष्यते ।

सः कथयति यत् ब्रह्मणः परोक्षनिवृत्त्यर्थमपि प्रसंख्यानस्यापेक्षा अङ्गीकर्तुम् न शक्यते । यतो हि ब्रह्मणा आभासेन परोक्षमपि वस्तु अपरोक्षवत् प्रतीयते । अतः अज्ञानस्य निवृत्तिरपि प्रसंख्यानस्य प्रयोजनत्वेनाङ्गीकर्तुम् न शक्यते । यतो हि अज्ञाननिवृत्तेः निश्चितसाधनं ज्ञानमेव वर्तते । विषयस्य ज्ञानमपि अभ्यासरूपस्य प्रसंख्यानस्य प्रयोजनं भवितुं नार्हति । यतो हि अभ्यासद्वारा केवलं बुद्धेरैकाग्र्यं सम्भाव्यते न तु प्रमायाः उत्पत्तिरपि । अभ्यासं विनापि प्रमाणं स्वतः विषयावबोधने समर्थम् भवति ।

तत्वमस्यादिमहावाक्येनोत्पन्नं संसर्गात्मकमपरोक्षात्मकं ज्ञानं निरन्तर-ध्यानेनासंसर्गात्मकतामपरोक्षात्मगतो च ददाति । इति मण्डनमिश्रमतं खण्डयन् सुरेश्वराचार्यः कथयति यदिदं मतं प्रमाणविरुद्धत्वादनुपपन्नं वर्तते । शाब्द-ज्ञाने जात एवाविद्यायाः निवृत्या परमपुरुषार्थस्य मोक्षस्य प्राप्तिर्जायते । अतः विधेरभ्युपगमः निरर्थको भवति ।[51] शाब्दज्ञानमयथावस्तुविषयकत्वादप्रमा तथा प्रसंख्यानजन्यं ज्ञानं यथावस्तुविषयकत्वात्प्रमा भवति । इत्येतत्कथनमपि युक्तियुक्तं नास्ति । प्रमाणस्याभिव्यंजकत्वात् । प्रसंख्यानवादिनामेतत्कथनमपि युक्तियुक्तं न वर्तते यत् " विज्ञाय प्रज्ञां कुर्वीत " इति श्रुतिः ज्ञानोत्पत्तौ करणं स्वीकरोतीति । किंच मिथ्याज्ञानस्याभ्यासेन मिथ्याज्ञानमेव भवितुमर्हति , सम्यक्ज्ञानस्य प्राप्तिर्न भविष्यति । अतो भावनया अभ्यासेन प्रसंख्यानेन च सम्यक्ज्ञानस्योत्पत्तिसम्भावो नास्ति ।[52]

केवलं ज्ञानद्वारैवाज्ञानस्य नाशः सम्भवति । अतः ज्ञानकर्मणोः समुच्चयः सर्वथा अनुपपन्नो वर्तते । कैवल्यसंसिद्ध्यर्थम् ज्ञानकर्मसमुच्चये किमपि प्रमाणं

नास्ति । सुरेश्वराचार्यः कथयति यद् ज्ञानस्य हेतोः वैराग्यादेः स्वरूपस्य वस्तुप्रकाशकत्वादेः कार्यस्य संसारविनाशत्वादे कर्मणो हेतुना रागादिना स्वरूपेण अप्रकाशकत्वेन तथा कार्येण संसारोत्पादनतत्वादिना सह नितान्तो विरोधः अस्ति। अतः ज्ञानकर्मणोः समुच्चयः कथमपि न सम्भाव्यते ।

चित्सुखीकारः अपि ज्ञानकर्मणोः समुच्चयः न सम्भवतीति प्रतिपादयति । सः कथयति यद् उत्पत्तिराप्तिविकृतिसंस्कृतिश्च ज्ञानस्य फलानि । "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते यनाय6" " न कर्मणा न प्रजया धनेन " "नास्त्यकृतः कृतेन " "एतावदरे खल्वमृतम् " " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा " इत्यादिश्रुतयः अपि मोक्षस्य ज्ञानकारणतां प्रतिपादयति , कर्मणश्च मोक्षस्य मोक्षसाधनाभाववत्वम् । अतः ज्ञानकर्मसमुच्चयवादः स्वीकरणीयो न वर्तते ।

6•5•4 । कर्मणामुपयोगित्वं ज्ञानोत्पत्तौ , न तु मोक्षे

" ज्ञानादमुक्तिरिति उपनिषद्वाक्यानुसारं भगवत्पादशङ्कराचार्यः ज्ञानमेव मोक्षस्य साधनमिति न तु कर्म इति प्रतिपादयति । कर्म केवलं बन्धनस्य कारणं भवति । ज्ञानकर्मणोः स्वाभाविको विरोधो वर्तते । भगवान् श्रीकृष्णः कथयति - " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।"[53] ज्ञानाग्नौ प्रज्वलिते सत्येव सर्वाणि कर्माणि तस्मिन् भस्मसात्भवन्ति । उपनिषत्स्वपि कथितं यद् मोक्षप्राप्तिः ज्ञानं विना अन्येन केनापि साधनेन न सम्भवति । नित्यमोक्षप्राप्तिः कर्मभिः भवितुं नार्हति । तद्यथा - " तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"

शङ्कराचार्यस्य मते केवलं ब्रह्मणः एकमात्रसत्यत्वं वर्तते । जीवोऽपि परमार्थतः ब्रह्मरूप एव भवति । आत्मज्ञानाभावात्सः आत्मानं बद्धः इव मनुते । अज्ञानमेव बन्धनस्य कारणं भवति । अविद्याया दूरे गते सति जीवो मुच्यते । अज्ञाननिवारणार्थमेव ब्रह्मसूत्रकारः प्रथमसूत्रे ब्रह्मजिज्ञासामुपस्थितवान् । एतस्मिन् सम्बन्धे पद्मपादाचार्यः कथयति यद् सूत्रकारः ब्रह्मज्ञानस्य सकलानर्थस्य निवारकत्वं स्वीकरोति । एतेनैतत् सूचितं भवति यद् सूत्रकारमते सकलानर्थस्य जननी अविद्यैव वर्तते । यदि नामरूपात्मकस्य जगतः जीवस्य च कर्तृत्वं भोक्तृत्वं वा वास्तविकं भवेत्तर्हि ब्रह्मज्ञानेन कथमपि एतस्य निवारणं न भवेद् । ज्ञानमज्ञानमेव निवारयति न तु वास्तविकमपि वस्तु ।

भगवान् भाष्यकारः अपि अनादिनैसर्गिकमिथ्याप्रत्ययरूपमध्यासमेव कर्तृत्वभोक्तृत्वस्य प्रवर्तकत्वेन स्वीकरोति ।इत्थं च सूत्रकार-भाष्यकारयोर्मते जीवस्य

कर्तृत्वभोक्तृत्वमविद्याहेतुकं भवति । अविद्या एव जीवस्य बन्धनहेतुः । विद्योदये जात एव जीवः ब्रह्मरूपतां प्रतिपद्यते । अतः उभयोर्मते विद्यैव केवलं मोक्षस्यैकमात्रसाधनं भवति ।

अ· विविदिषार्थत्वात् ज्ञानोत्पत्तौ कर्मणामुपयोगित्वम्-

शांकरवेदान्ते यद्यपि ज्ञानमेव मोक्षस्य एकमात्रं साधनं स्वीकृतं वर्तते । तथापि ज्ञानोत्पत्तौ कर्मणामुपयोगितायाः सम्बन्धे शांकरवेदान्तेषु मतभेदः वर्तते । अवच्छेवादी आचार्यः वाचस्पतिमिश्रः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इति श्रुतिवाक्यानुसारं कर्मणामुपयोगिता विविदिषायामस्तीति स्वीकरोति । सर्वापेक्षाधिकरणे आचार्यः वाचस्पतिमिश्रः प्रतिपादयति यत् ज्ञानोत्पत्तौ कर्मापेक्षा विविदिषोत्पत्तिरूपेणैव वर्तते । यतः श्रुतिषु विविदिषन्ति यज्ञेनेति प्रतिपादितम् । भामतीकारः श्रुतौ प्रयुक्तम् विविदिषन्तीति पदमाश्रित्यैतेदं मनुते यत् कर्मणामुपयोगिता विविदिषोत्पत्तावेव वर्तते न तु विद्योत्पत्तौ ।

आ· वेदनार्थत्वात् ~~कर्मणां~~ ज्ञानोत्पत्तौ कर्मणामुपयोगित्वनिरसनम् -

किन्तु विवरणकारः प्रकाशात्मयतिः इदं मनुते यत् यज्ञादिकर्मणामुपयोगः विविदिषोत्पत्तौ न अपि तु विद्योत्पत्तावेव वर्तते इति । सुरेश्वराचार्योऽपि कर्मणः उपयोगः विविदिषामात्रमस्तीति स्वीकरोति । तदीयं कथनमिदमस्ति यत् चित्तशुद्धिद्वारा बुद्धौ विविदिषा वैराग्यं तथा प्रत्यक् प्रवण्यस्य च प्राप्त्यनन्तरं कर्म तथैवास्तं गच्छति यथा प्रावृट्कालान्तरे मेघाः।[54]

एवं यज्ञादिकर्मणामुपयोगित्वविषये भामतिप्रस्थाने विवरणप्रस्थाने च मतभेदाः वर्तन्ते । स्वपक्षसमर्थने वाचस्पतिमिश्रः एतत् तर्कयति यत् प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यत्वात् " विविदिषन्ति " इति पदस्य प्रकृत्यर्थवेदनापेक्षया इच्छार्थस्य सन् प्रत्ययस्य प्राधान्यं स्वीकर्तव्यमिति । वेदनस्य प्राधान्ये अपि विविदिषन्तीति पदे प्रकृत्यर्थः प्रत्ययार्थापेक्षया गौणो भवति । यथा पुरुषस्यापेक्षया राज्ञः प्रधानत्वे अपि राजपुरुषशब्दः पुरुषस्यैव सूचको भवति न तु राज्ञः यतः तत्पुरुषसमासे उत्तरपदस्य प्राधान्यं वर्तते । एवमेव विविदिषन्तीति पदमपि इच्छायाः एव सूचको भवति न तु विद्यायाः । इच्छायाः प्रत्ययार्थतया प्राधान्यात् " स्वर्गकामो ज्योतिष्टोमेन यजेत " इत्यादिस्थले पुरुषस्य विशेषणरूपेण तुकामना -स्वर्गकामनयोर्मध्ये शब्दतः कस्यापि प्राधान्य-

रीत्या अप्रतीयमानत्वात् अर्थपरकं प्राधान्यमेव आश्रियते । तथा स्वर्गस्य अर्थात् प्राधान्येन यज्ञस्य फलरूपेण तस्यैवान्वयो विधीयते किन्तु प्रकृतस्थाले तु वस्तुस्थिति: भिन्ना वर्तते । अत्र विविदिषाया: एव फलरूपेण तस्यैवान्वयो विधीयते । यतो हि शाब्दत: एकस्य प्राधान्यं प्रतीयते । अत एव वाचस्पति: यज्ञादिकर्मणामुपयोग: विविदिषोत्पत्तावेव वर्तते इति स्वीकृतवान् ।

अप्पयदीक्षित: अपि कर्मणां विविदिषार्थत्वपक्ष: भाष्यकारसम्मतो भवतीति ज्ञापितवान् । स: कथयति यद् भाष्यकारस्य मतनुसारं शमादीनि विद्याया: साक्षात्साधनानि भवन्ति । अतस्ते विद्याया: अन्तरङ्गसाधनानि वर्तन्ते । तथा यज्ञादीनि विविदिषाया: साधनानि सन्ति । अतस्तानि बहिरङ्गसाधनानि भवन्ति । एवं प्रकारेण भामतीप्रस्थाने यज्ञादिकर्मणामुपयोग: विविदिषोत्पत्तावेव स्वीकृतो वर्तते न तु विद्योत्पत्तौ । किन्तु विवरणप्रस्थाने यज्ञादिकर्मणामुपयोग: ज्ञानेच्छायां (विविदिषायाम्) न , अपि तु वेदने एव ~~स~~ स्वीकृतो वर्तते ।

## श्रवणादिषु अङ्गाङ्गत्वविचार: विधित्वनिरसनं च

श्रवणमनननिदिध्यासनया: अङ्गाङ्गत्वविषये आचार्याणां मतभेदा: वर्तन्ते । भामतीकारस्य मतानुसारं श्रवणमननाभ्यां पूर्वोपासनाजनितसंस्कार~~युक्त~~ युक्तेनान्त:करणेनात्मसाक्षात्कारो भवति । वाचस्पतिमिश्र: यद्यपि अन्त:करणद्वारैवात्मसाक्षात्कारं प्रतिपादयति तथापि स: निदिध्यासनाद् उत्पन्न: संस्कार: आत्मसाक्षात्कारे अन्त:करणस्य सहायक इति स्वीकरोति । एवं च श्रवणमनने निदिध्यासनस्योपकारके । अत एव वाचस्पतेर्मतानुसारं निदिध्यासनमङ्गी तथा श्रवणमनने अङ्गभूते । तथाहि - " नापि विद्योदय: , तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावाद् ।[155]

विवरणकारस्य मतानुसारं तु श्रवणस्याङ्गित्वं वर्तते तथा मनननिदिध्यासनयोरङ्गत्वम् । तद्यथा - मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गी विधीयते । ---- सर्वथा तावद् मनननिदिध्यसनाभ्यामङ्गभूताभ्यां सह श्रवणविधानमस्त्येव । वाचस्पतिमिश्र: निदिध्यासनस्याङ्गित्वं तथा श्रवणमननयोरङ्गत्वं निम्नलिखितप्रकारेण निरूपयति ।

• न च विविदिषन्ति यज्ञेनेत्यादिविरोधः, न ह्येष विधिरपि तु वर्तमानापदेशः। स च स्तुत्याप्युपपद्यते । वाचस्पतिः ब्रह्मसाक्षात्कारे चतसृणां प्रतिपत्तीनां ब्रह्मणि अनुपपत्तिं प्रदर्शयति । अपि च चतस्रः प्रतिपत्तयो ब्रह्मणि । प्रथमा तावद्वदुपनिषद्-वाक्यश्रवणमात्राद्भवति, यां किलाचक्षते 'श्रवणमिति' । द्वितीया मीमांसासहिता तस्मादेवोपनिषद्वाक्याभ्यामाचक्षते 'मननमिति' । तृतीया चिन्ता सन्ततिमयी यामा-चक्षते 'निदिध्यासनमिति' । चतुर्थी साक्षात्कारवती वृत्तिरूपा, नान्तरीयकं हि तस्याः कैवल्यमिति' । तत्राद्ये तावत्प्रतिपत्ती विदित विदितपदतदर्थस्य विदितवाक्यम-गतिगोचरन्यायस्य च पुंस उपपद्येत एवेति न तत्र क्रमापेक्षा । त एव च चिन्तामयं तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि क्रमापेक्षा । स चादरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमादत्त एव प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति क्रमापेक्षा स तन्ना-न्तरीयकं च कैवल्यमिति न तस्यापि क्रमापेक्षा । तदेवं प्रमाणतः प्रमेयस्योत्पत्तौ च कार्ये च न ज्ञानस्य क्रमापेक्षेति बीजं शङ्कायाम् । एवं प्राप्त उच्यते - उत्पत्तौ ज्ञानस्य क्रमापेक्षा विद्यते विविदिषोत्पादद्वारा विविदिषन्ति यज्ञेनेति श्रुतेः[156] । अत्रेयं शङ्का उदेति यत् श्रवणादीनां त्रयाणां समुदितानां ज्ञानसाधनत्वम्, एके-केषां वा नाद्यः, तेषां युगपदनुष्ठानायोगात् । एकानुष्ठानकाले अपरस्य विनाशेन समुच्चयासम्भवात् । न द्वितीयः । एकेनैव ज्ञानोत्पत्तौ इतरयोः वैयर्थ्यप्रसङ्गादिति चेदुच्यते - तेषु त्रिविधेषु ज्ञानसाधनेषु निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षा-त्कारणमङ्गी वा । श्रवणमनने तु तस्याङ्गे इति ।

निदिध्यासनस्य साक्षात्कारत्वेन च " ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ",[157] "ततस्तु तं पश्यते निष्कलं ध्यायमानम्"[158] इत्यादिश्रुतिः प्रमाणम् । मनने श्रवणं हेतुः ।

विवरणकारस्य प्रकाशात्मयतेर्मतानुसारमात्मसाक्षात्कारे श्रवण-स्याङ्गित्वं भवति तथा मनननिदिध्यासनयोरङ्गत्वम् । तथाहि- " मनन-निदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां श्रवणं नामाङ्गी विधीयते[159] "

श्रवणादिषु विधित्वमधिकृत्यापि भामतीप्रस्थाने विवरण-प्रस्थाने च मतभेदाः सन्ति । वाचस्पतिः श्रवणमनननिदिध्यासनेषु कमपि विधिं नाङ्गीकरोति । किन्तु विवरणकारः नियमविधिं स्वीकरोति । समन्वयाधि-करणे वाचस्पतिरेवमभिप्रयति- " आत्मेत्येवोपासीतेति न विधिः, अपि तु विधिसरूपोऽयम् इति ।[160] अन्यतः प्राप्ता एव हि श्रवणादयः विधिसरूपवाक्यैर-

श्रवणादिषु विधित्वमधिकृत्यापि भामतीप्रस्थाने न मतभेदाः सन्ति ।वाचस्पतिः श्रवणमनननिदिध्यासनेषु कमपि विधिं नाङ्गीकरोति । ~~किन्तु विवरणा-~~ किन्तु विवरणाकारः नियमविधिं स्वीकरोति । समन्वयाधिकरणे वाचस्पतिरेवम् अभिप्रैति । - आत्मेत्येवोपासितेति न विधिः , अपि तु विधिसरूपः अयमिति ।[160] अन्यतः प्राप्त एव हि श्रवणादयः विधिसरूपवाक्यैरनूद्यन्ते ।[161] मनननिदिध्यासने अपि विधिं खण्डयन् स कथयति मनननिदिध्यासनयोरपि न विधिः तयोः अन्वय-व्यतिरकसिद्धाxxxxxxxxसाक्षात्कारस्याः विधिसरूपवचनैरनुवादात् ।[162] अतः ब्रह्मसाक्षात्कारस्याय विधेः आवश्यकता नास्ति । " आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्च " इति श्रुतिवाक्ये xxवस्तुतः विधिर्नास्तीति तत्वसमीक्षायामपि उपपादितम् विस्तरेण । तद्यथा -" न च चिन्तासाक्षात्कारयोः विधिरिति "तत्वसमीक्षायामस्माभिरुपपादितम् । विस्तरेण च अयमर्थस्तत्रैव प्रपंचितः । जर्तिलयम्वाग्वा जहुयात् इतिवद् विधिसरूपा एते " आत्मा वा अरे द्रष्टव्यः " इत्यादयो नतु विधेय इति " ।[163]

प्रकटार्थविवरणाकारप्रभृतयः केचिदाचार्याः एनमाक्षेपं कुर्वन्ति यद्[164] वाचस्पतिमिश्रः सहकार्यन्तरविद्याधिकरणे " अपूर्वत्वाद्विधिरास्थेयः" इत्यनेन वाक्येन श्रवणादावपूर्वविधिं स्वीकरोति । अपरत्र "सहकारित्वेन च "[165] इत्यस्य सूत्रस्य भामत्यां " द्रष्टव्यो निदिध्यासितव्यः " इति च विधिसरूपं न विधिः " इति कथयति । अतः वाचस्पतेः कथनेषु पूर्वापरव्याहृतभाषिता वर्त्तीति । अस्याक्षेपस्य समाधानममलानन्देन तथा अप्पयदीक्षितेन सम्यक्रूपेण कृतम् । अमलानन्दः कथयति - " नात्रापूर्वविधिः प्राप्तेरनन्योपायता न च ।
नियमः परिसंख्या वा श्रवणादिषु सम्भवेत् ।। "[166]

यथा्त् ब्रह्मसाक्षात्कारं प्रति श्रवणादिष्वपूर्वविधिः नियमविधिः परिसंख्याविधिर्वा नास्ति । यतः श्रवणादिभिः भिन्नः कश्चिदन्योपायः एव तत्र सम्भवः नास्ति । तद्यथा - " न तु श्रवणादिसाध्ये ब्रह्मसाक्षात्कारे अस्त्युपायान्तरसंभावो यतः श्रवणादेर्नियमः परिसंख्या वा स्याद् । न च ब्रह्मसाक्षात्कारव्यक्तावुपायान्तरसम्भावो यतः श्रवणादेर्नियमः परिसंख्या वा स्याद् । न च ब्रह्मसाक्षात्कारव्यक्तावुपायान्तरासंभावाद् अपूर्वविधित्वमाशङ्कनीयम् , यतः सामान्योपाधावक्तावुपायान्तरासंभावाद् ... न्वयव्यतिरेको निविशेते । , न व्यक्तौ , इतरथावधातव्यक्तिसाध्यतण्डुलव्यक्ता-

वुपायान्तरासम्भावपरिज्ञानादपूर्वविधित्वप्रसङ्गात् । यत्तु वार्तिककृद्भिरुक्तम् - " सर्वमानप्राप्तौ च सर्वमानफलाश्रयात् । श्रोतव्यः इत्यतः प्राह वेदान्तावरुरुत्सया ।। "[67] इति ।

परिमलकारः अप्पयदीक्षितोऽपि प्रकटार्थविवरणाकारस्य मतं खण्डयन् कथयति - " सौ पदतत्भाष्ययोः भेददर्शनव्यासङ्गात् ध्यानेनुत्सहमानस्य उत्साहजननार्थम् विधिसरूपोऽयमर्थवाद इत्यत्रैव तात्पर्यमिति भावः । विद्यभावपक्षमेव सिद्धान्तमवलम्ब्य तमुपपादयति । "[68]

उपर्युक्तप्रकारेण वाचस्पतिमिश्रः श्रवणादौ कमपि विधिं स्वीकरोति। किन्तु विवरणाकारः नियमविधिमङ्गीकरोति । तद्यथा - " तण्डुलनिष्पत्तिः फलतया दुष्टफले अप्यवघाते व्रीहीनवहन्ति इति यथा नियमविधिः तथा इह श्रोतव्य इति विधिः किं न स्यात् । "[69]

अस्मिन् सन्दर्भे वार्तिककारस्य सुरेश्वराचार्यस्य मतमिदमस्ति यत् श्रवणादौ परिसंख्याविधिरस्तीति यथोक्तम् अप्पयदीक्षितेन सिद्धान्तलेशसंग्रहे

" नियमः परिसंख्या वा विध्यर्थोऽत्र भवेद्यथा ।
अनात्मा दर्शनेनैव परमात्मानमुपास्महे ।। "[70]

x x x x x x x x x x x x x x x

## 6.6.0. अध्यायस्य सारः समाहारश्च

न केवलमद्वैतवेदान्ते , अपि तु सर्वेष्वेव दर्शनेषु ज्ञानमीमांसा - या: अत्यधिकं महत्वं वर्तते । " ऋते ज्ञानान्न मुक्ति " , "विद्यया अमृतमश्नुते" , " सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुतिवाक्यानि ज्ञानस्य प्रामुख्यं दर्शयति । " अथातो ब्रह्मजिज्ञासा" , " शास्त्रयोनित्वात्", "तत्तु समन्वयात्" इत्यादि सूत्राण्यपि ज्ञानस्य महत्वं निरूपयन्ति । अत एतत् वक्तुं शक्यते यत् ज्ञानमीमांसायामद्वैतवेदान्तिभिः यः पन्था अनुसृताः तस्य प्रतिपादनं भामतीप्रस्थाने सम्यग्रूपेणोपलभ्यते ।

अस्मिन्नध्यायेऽस्माभिर्यदुक्तं तस्य सारः निम्नलिखितप्रकारेणावगन्तुं शक्यते ।

"तत्वपरिच्छेदः प्रमा" इत्येवंप्रकारेण वाचस्पतिमिश्रः प्रमायाः यल्लक्षणं निर्दिशति तदतीव संक्षिप्तमपि अद्वैतवेदान्तचिन्तनपरम्परायाः प्रतिनिध्यं करोति। प्रत्यक्षप्रमाणस्य विश्लेषणं कुर्वता वाचस्पतिना प्रत्यक्षागमयोर्मध्ये बलीयस्त्वस्य

येन प्रकारेण निर्धारणं कृतं तदपि वाचस्पतिमिश्रस्य सर्वतन्त्रस्वातन्त्र्यं समर्थयति । स तस्याः एव श्रुतेः प्रत्यक्षाबलीयस्त्वं स्वीकरोति, या तात्पर्यवती स्यात् । न्याय-प्रभृतिषु दर्शनेषु वृत्तेरस्तित्वं न स्वीक्रियते । किन्तु अद्वैतवेदान्तिभिः वृत्तेः अनिवार्यत्वं स्वीकृतम् । यद्यप्यद्वैतवेदान्तिभिः वृत्तेरनिवार्यतायाः विषये अनेके तर्काः प्रस्तुताः, तथापि मम विचारः अयमस्ति यत् इन्द्रियद्वारेणैव विषयावभाससम्भवादन्तःकरणवृत्तेः स्वीकरणस्यावश्यकता नासीत् । अतः अस्मिन् सन्दर्भे नैयायिकानां मतमेवाधिकं ग्राह्यं प्रतीयते ।

शाब्दप्रमायाः परोक्षापरोक्षत्वविषये वाचस्पतिना यदुक्तं, तदप्यस्मिन्सन्दर्भे महत्त्वपूर्णम् वर्तते । नैयायिकैरपि शाब्दप्रमायाः परोक्षत्वं स्वीकृतम् । अतः वाचस्पतिमिश्रप्रवर्तिता भामतीप्रस्थानीयाज्ञानमीमांसा समधिकरूपेण वाचस्पतेर्नैयायिकत्वमप्यावेष्टयति इति मदीया धारणा । ज्ञानं मानसिकी क्रिया नास्ति इत्यस्मिन् विषये न्यायदर्शनेन सहाद्वैतवेदान्तस्य साम्यमस्ति । अत एतदपि कथयितुं शक्यते यत् नैयायिकमते वेदान्तमते च स्वभावतयाऽपि ज्ञानमीमांसायाः क्षेत्रेऽधिकं वैषम्यं नास्ति ।[7]

xxxxxxxxxxxxxxxxxx

## अष्टाध्यायस्य पादटिप्पण्य:

1. तत्वपरिच्छेद: 1·1·1 पृ·40
2. सिद्धान्तबिन्दु: पृ·58
3. पंचपादिकाविवरणम्, पृ·572
4. " पृ·203
5. भामती 1·1·5 , पृ·169
6. " पृ·129
7. वेदान्तकल्पतरु: , पृ·129
8. वेदान्तपरिभाषा, अनुमानपरिच्छेद:
9. " , उपमानपरिच्छेद:
10. चित्सुखी, पृ·1
11. अद्वैतसिद्धि:, पृ·783
12. बृहदारण्यकोपनिषत् 3·4·1
13. भामती 1·1·1
14. वे·प· , प्रयोजनपरिच्छेद: , पृ·385 , (सम्पादक: मुसलगावङ्कर:) चौखाम्बाविद्याभावन्
15. वे · प· , पृ·387
16. पंचपादिका, पृ·57
17. " , पृ·58
18. पं·पा·वि· , पृ·403
19. कल्पतरुपरिमल: , पृ·55
20. " , पृ·55,56
21. " , पृ·56
22. " , पृ·56
23. वे· प· , पृ·62
24. वे· प· , पृ·64
25. वे·प· , पृ·64
26. वे·प· , पृ·64

27. वे. प. , पृ.61 (मुसलगावङ्कर:)
28. वे.प. ,पृ.73 (चौखाम्बा 1968संस्करण्)
29. पं. पा. वि. ,पृ.306
30. भामती ,पृ.57
31. वे. क. ,पृ.55,56
32. क.प. ,पृ.56
33. क.प. ,पृ.56
34. वे.प. ,पृ.37
35. वे.प. ,पृ.46,47
36. वे.प. ,पृ.47,48
37. वे.प. ,पृ.48,49
38. भामती 1.1.1 ,पृ.55,57
39. वे.क. ,पृ.55,56
40. पं.पा.वि. ,पृ.4
41. वे. प. ,पृ.88
42. वे.प. ,पृ.91
43. वे.प. ,पृ.79
44. वे.प. ,पृ.82
45. न्यायबिन्दु: 1-4
46. प्रमेयकमलमार्तण्ड: (प्रभाचन्द्राचार्य:) 1.2.3
47. साङ्ख्यकारिका-5
48. ब्र.सू.शा.बा. ,2.3.32
49. ब्र.सू.शा.भा.,2.4.6
50. बृहदारण्यकभाष्यवार्तिकम् ,1-4,पृ.834
51. " , 3-4,पृ.149,150
52. प्रकटार्थविवरणम् 1.1.1,पृ.33,34
53. विवरणप्रमेयसंग्रह: ,पृ.58।
54. सिद्धान्तबिन्दु: ,पृ.56,57
55. वे.प.,पृ.46,47

भामती ,पृ॰635
56॰ बृ॰उ॰ 3॰4॰1
57॰ वे॰प॰,प्रत्यक्षापरिच्छेद: ,पृ॰13
58॰ बृ॰उ॰ ,1॰4॰3
59॰ वे॰प॰ ,पृ॰15
60॰ वे॰प॰ ,पृ॰17
61॰ वे॰प॰ ,पृ॰28
62॰ वे॰प॰ ,पृ॰31,32
63॰ योगवासिष्ठम् 1-4,पृ॰20
64॰ " " "
65॰ अद्वैतदीपिका , पृ॰159,160
66॰ पं॰पा॰ ,पृ॰58
67॰ वि॰प्र॰सं॰ ,पृ॰244
68॰ पं॰पा॰ ,पृ॰116
69॰ पं॰पा॰ ,पृ॰102
70॰ सि॰ बि॰ ,पृ॰63
71॰ सि॰बि॰ , पृ॰62
72॰ वे॰ प॰ ,पृ॰324
73॰ सिद्धान्तलेशसंग्रह: ,पृ॰157
74॰ सि॰बि॰ ,पृ॰65,66
75॰ सि॰ ले॰सं॰ ,प्र॰प॰ ,पृ॰193,195
76॰ अ॰दी॰ ,पृ॰125,126
77॰ अ॰दी॰ ,पृ॰127
78॰ पं॰पा॰वि॰ , पृ॰308
79॰ पं॰पा॰वि॰ ,पृ॰309
80॰ पं॰पा॰वि॰ ,पृ॰309,310
81॰ अद्वैतदीपिका(विवरणसहित)पृ॰129
82॰ भामती ,पृ॰9
83॰ नैष्कर्म्यसिद्धि: ,पृ॰4
84॰

85. नै॰ सि॰ , 1-13
86. बृहदारण्यकसम्बन्धावार्तिकम् पृ॰183
87. " 4-4, पृ॰705
88. बृहदारण्यकभाष्यवार्तिकम् , 4-4, पृ॰707,708
89. बृ॰भा॰ वा॰
90. अद्वैतसिद्धि:, पृ॰876
92. भामती, 1॰1॰1, पृ॰55
93. वे॰क॰, पृ॰55,56 1॰1॰1
94. भामती, पृ॰55-57
95. वेदान्तकल्पतरुपरिमल: , पृ॰55
96. वेदान्तकल्पतरु: , पृ॰55,56
97. भामती, पृ॰287
98. " , पृ॰290
99. " , पृ॰502
100. वे॰क॰, 1॰1॰28, पृ॰218
101. भामती, पृ॰58,932,933
102. मुण्डकोपनिषद् 3॰2॰6
103. बृ॰उ॰ 3॰1॰26
104. प्रश्नोपनिषद् 6-4
105. छान्दोग्योपनिषद् 7-26
106. ब्र॰सू॰ 1॰1॰3
107. केनोपनिषद् 1॰6॰
108. बृ॰उ॰भा॰ 2॰4॰105
109. वे॰क॰ , पृ॰56
110. वे॰क॰ , पृ॰56
111. भामती, पृ॰57
112. मु॰उ॰ 3॰1॰9
113. कठोपनिषद् 3-12
114. बृ॰उ॰ 4॰3॰20

115. सि॰ले॰सं॰, पृ॰47।
116. प्रकटार्थविवरणम्
117. तत्वप्रदीपिका, पृ॰186,187
118. " ,1-19
119. शाङ्करवेदान्ते तत्वमीमांसा, पृ॰196
120. वे॰क॰ ,पृ॰93
121. वे॰क॰ ,पृ॰95
122. वे॰क॰ प॰,पृ॰94
123. ब्र॰सू॰,1॰1॰1
124. भामती,1॰1॰1
125. ब्र॰सू॰शा॰भा॰ 4॰4॰5
126. ब्र॰सू॰4॰4॰17
127. सि॰ले॰सं॰,पृ॰104
128. भामती,पृ॰623
129. क॰प॰,पृ॰623
130. वे॰क॰प॰ ,पृ॰303,304
131. ब्र॰सू॰4॰1॰15
132. छा॰उ॰6॰14॰2
133. ब्र॰सू॰शा॰भा॰,4॰1॰15
134. वि॰प्र॰सं॰,पृ॰362
135. भामती,पृ959
136. " ,पृ॰58
137. सि॰ल॰सं॰ ,पृ॰513,514
138. ब्र॰सू॰1॰1॰4
139. गीताभाष्यम् 2-55
140. भामती,पृ॰994
141. ",पृ॰994,995
142. ",पृ॰958
143. ",पृ॰953

144. भामतीप्रस्थान् तथा विवरणप्रस्थान् का तुलनात्मकाध्ययन् - सत्यदेवशास्त्रि, पृ. 136
145. बृ.उ., 4.4.21
146. भामती, पृ. 30
147. बृ.उ.भा., 4.3.640
148. ब्र.सू.शा.भा. 1.1.4
149. वे.क., 1.1.3
150. ब्र.सू.शा.भा., 1.1.4
151. बृ.उ.भा., 4.4.819
152. बृ.उ.भा.वा. 4.4.820, 821
153. गीता, 4-37
154. नै.सि., पृ.49
155. भामती, 1.1.4, पृ.14
156. " , पृ.898
157. बृ.उ., 4.5.6
158. बृ.उ., 2.4.5
159. पं.पा.वि. प्रथमवर्णकम्, पृ.30
160. भामती, 1.1.4, पृ.15
161. " , पृ.130
162. " , पृ.153
163. " , पृ.713
164. वाचस्पतिः समन्वयसूत्रे विधिं निराचक्षौ। अत्र तु तद्विधिमुरीचक्रे। अहो बतास्य पाण्डित्यम् । (प्रकटार्थविवरणम्)
165. ब्र.सू 3.4.33
166. वे.क. , पृ.920
167. वे.क. , पृ.920, 921
168. वे.क.प. , पृ.919
169. विवरणतात्पर्यदीपिका, पृ.34
170. सि.ले.सं. , पृ.40

## सप्तमोऽध्यायः

### 7.1.0 उत्तरवर्तिप्रमुखवेदान्तग्रन्थेषु भामत्याः प्रभावः

परवर्तिनो व्याख्याकाराः स्वस्वरचनासु भामतीग्रन्थात् स्थाने स्थाने साहाय्यं प्राप्तवन्तः । अत्र केचन एतादृशाः अंशाः प्रस्तूयन्ते , यत्र ते आचार्याः भामतीकारात्स्पष्टतया प्रभाविताः परिलक्ष्यन्ते ।

शांकरभाष्यस्य व्याख्यारूपा भवति भामती । एषोत्तरवर्तिभिः व्याख्याकारैः प्रायः अनुसृता । भामत्याः आशयगम्भीरतां प्रचिकटयिषवः नैके ग्रन्थकाराः तदीयां शैलीमपि अनुकृतवन्तः ।

भामतीप्रस्थाने मुख्यतया पंचग्रन्थाः अन्तर्भवन्ति । तद्यथा- ब्रह्मसूत्रम् - शारीरकभाष्यम् -भामती - वेदान्तकल्पतरु- वेदान्तकल्पतरुपरिमलश्च भामतीसम्बद्धाः अन्ये ग्रन्थाः प्रस्थानाङ्गभूता न सन्ति , तथापि भामतीप्रस्थानव्याख्यानपरिवारे अथवा भामतीप्रभावितव्याख्यानग्रन्थेषु तेषां गणना भवति । तेषु ग्रन्थेषु अपि भामत्याः प्रभावः स्पष्टतया द्रष्टुं शक्यते ।

### 7.1.1 वेदान्तकल्पतरौ भामत्याः प्रभावः

वेदान्तकल्पतरुकारः अमलानन्दसरस्वती । तस्य जन्म 1250 ईशवीयवर्षे अभवदिति कथ्यते । श्रीअनुभवानन्दः तस्य दीक्षागुरुः आनन्दात्मयतिःपरमगुरुः, तथा श्रीसुखप्रकाशः विद्यागुरुश्चासन्निति कथ्यते । वेदान्तकल्पतरुमतिरिच्यामलानन्दसरस्वती भामतीमनुसृत्य 'शास्त्रदर्पणमिति' नामकं ग्रन्थमपि लिखितवान् । अस्यारम्भे स एवं लिखति -

" हरिहरलीलावपुषौ परमेशौ व्यासशङ्करं नत्वा ।
वाचस्पतिनिर्मितमादर्शम् प्रारभे विमलम् ।। "

वाचस्पतिं प्रति अमलानन्दस्य महती श्रद्धा आसीदिति अस्माभिः तस्य कथनेभ्यः ज्ञातुं शक्यते । तद्यथा-

" पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः ।
वाचस्पतेरित्यर्थोऽप्यबोधा इति साहसम् ।। "[1]

वाचस्पतेः वैदिकसम्प्रदायरक्षामधिकृत्यामलानन्दः कल्पतरोः मङ्गलश्लोके एवं वदति- " वैदिकमार्गम् वाचस्पतिरपि सम्यक् सुरक्षितं चक्रे"[2] इति । एवंप्रकारेण वेदान्तकल्प-

तद्वत् भामतीग्रन्थप्रभावितं व्याख्यानमन्यन्न द्रष्टुं शक्यते ।

7·1·2 कल्पतरुपरिमले भामत्याः प्रभावः

भामत्याः तृतीयपरम्परायां व्याख्यानस्य व्याख्यानरूपेण द्वे उपव्याख्याने उपलभ्येते - कल्पतरुपरिमलः , आभोगश्च । कल्पतरुपरिमलस्य रचना षोडशशताब्द्यामप्पय्यदीक्षितेन कृता । अप्पय्यदीक्षितः कथयति यत् अमलानन्दकृतः कल्पतरुः अन्येषां व्याख्याकाराणां मार्गदर्शनमप्यकरोत् । तद्यथा-

" यावन्तो निविशन्ते विदुषां व्याख्यानचातुरीभेदाः ।
सर्वेषामपि तेषामयमवकाशं ददाति पुष्पकवत् ॥[3] " इति ।

तस्य कथनमपि यत् कल्पतरोः समस्तगम्भीरभावानां वर्णने तस्य शक्तिर्नास्ति । तद्यथा- " इत्थमिहातिगभीरे कियदाशयवर्णनं मया क्रियते ।
तुष्यति ततोऽपि बुधाः कतिपयरत्नग्रहादिवाम्बुनिधेः ॥ "[4]

परिमलकारः अप्पय्यदीक्षितः कल्पतरुव्याख्यानेन सह यत्र तत्र भाष्यभामत्योः वैशिष्ट्यावबोधाय प्रयत्नं करोति । परिमलः मीमांसाबहुलं व्याख्यानं भवति ।

7·1·3 आभोगे भामत्याः प्रभावः

कल्पतरोः अन्या व्याख्या भवति आभोगः । अस्य प्रणेता आचार्यः लक्ष्मीनृसिंहः । तस्य गुरुः नारायणेन्द्रः आसीत् । तद्यथा -"नारायणेन्द्रयोगीन्द्रगुर्वनुग्रहयोग्यता "[4] इत्यादि ।

परिमलकारस्य तथा आभोगकारस्य च विचारशैल्योः महानन्तरः दृश्यते । अप्पय्यदीक्षितः पूर्वमीमांसायां महान् विद्वानासीत् । अतः परिमलव्याख्यायाः स्वरूपं मीमांसाप्रधानं भवति । कुत्रचित्तेन भामत्याः कल्पतरोश्च समालोचनापि कृता ।

किन्तु आचार्यः लक्ष्मीनृसिंहः भामत्याः कल्पतरोश्च पोषणं कृतवान् । यथा- "स्मृत्यनवकाशदोषप्रसङ्ग" इति चेन्नान्यस्मृत्यवकाशदोषप्रसङ्गात् " (ब्र· सू· 2·1·1) इति सूत्रस्य भाष्ये शङ्कराचार्यः कथयति यत् 'ऋषिं प्रसूतं कपिलम् (श्वे· 5·2) इति श्रुतौ नान्ये मन्वादयः[6] ' इति कथयति । अर्थात् कपिल एव श्रुतिप्रतिपादितत्वात् श्रौतः न तु मन्वादयः । किन्तु अस्याशयः साधारणपाठकैः स्पष्टरूपेण ज्ञातुं न शक्यते । अत्र वाचस्पतेर्मतं समर्थयन् आभोगकारः कथयति यत् वाचस्पतेर्मतानुसारं सगरपुत्रदाहकः कपिलः तथा

तथा सांख्यशास्त्रप्रणेता कपिल एक एव ऋषिः वर्तते । अतः द्वयोर्नास्ति भेदः।
भाष्यभामतीकल्पतरौ गाम्भीर्यम् प्रति लक्ष्मीनृसिंहेण एवमप्युक्तम् -

" क्वाहं क्व कल्पतरुः क्व च सूक्तयोऽमूः ।
वाचस्पतेः क्व नु गभीरतरं च भाष्यम् ।।
एवं स्थितेऽपि विवृतं त्रितयं कथंचित्
किं दुष्करं गुरुनृसिंहकटाक्षभाजाम् " ।।[7]

7.1.4 सिद्धान्तलेशसंग्रहे भामत्याः प्रभावः

सिद्धान्तलेशसंग्रहे अप्पयदीक्षितेन अद्वैतवेदान्तनयस्य नैकेषां प्रमुख - सिद्धान्तानां निरूपणम् कृतम् । तेन स्वपूर्ववर्तिनां प्रयः सर्वेषां प्रमुखानामाचार्याणां मतानि संगृहीतानि । ~~तेन स्वपूर्ववर्तिनां प्रायः सर्वेषां~~ एतादृशे मतसंग्रहे अप्प अप्पयदीक्षितेन प्रायः स्वीयं नीरक्षीरविवेकित्वं प्रदर्शितम् । नैकेषु स्थलेषु तेन वाचस्पतिमिश्रस्य कथनानि प्रति समादरः प्रकटितः । अस्मिन् सन्दर्भे उदाहरणत्वेन कतिपयोद्धरणानि अत्र प्रस्तूयन्ते । इतरे तु प्रतिजीवगविद्याभेदमभ्युपगम्यैव तदनु - वृत्तिनिवृत्तिभ्यां बद्धमुक्तव्यवस्थां समर्थयन्ते ।[8]

एतत्प्रतीयते यदस्मिन् ~~सन्दर्भे~~ स्थले अप्पयदीक्षितः वाचस्पतेर्मतं समर्थयति।

(क) क्व तर्हि कर्मणामुपयोगः । अत्र भामतीमतानुवर्तिनामाहुः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेः विद्यासम्पादनद्वारा ब्रह्मावाप्तिः उपायभूतायां विविदिषायामुपयोगः ।[9]

7.1.5 ऋजुप्रकाशिकायां भामत्याः प्रभावः

भामत्याः व्याख्यात्वेनाखण्डानन्दयतिना ऋजुप्रकाशिका रचिता । पूर्वाश्रमे स रङ्गनाथ इति नाम्ना प्रथितः आसीत् । तच्च ऋजुप्रकाशिकायाः मङ्गलश्लोकेनापि स्पष्टं भवति -

" श्रीमान् श्रीनलगन्तुवंशजनिलः श्रीकालहस्त्यध्वरी ।
यज्ञाम्बा च यमात्मजं प्रसुषुवे श्रीरङ्गनाथाभिधम् ॥
सोऽयं सम्प्रति साधनोज्ज्वलमनाः प्राग्जन्मपुण्योदया-
त्प्राप्याखण्डयतीशतामनुभवत्यायातिदण्डं मुदम् ।।

ऋजुप्रकाशिकाकारः कथयति यद् अहङ्कारातिरिक्तमात्मनि अहङ्कारा-

दुत्पन्नात् भेदाग्रहादेव अध्यास: जायत इति । अहङ्कारातिरिक्तस्यात्मन: सत्ताया प्रमाणं नास्ति । यत: अहमित्याकारकं प्रत्यक्षमहङ्कारस्यैवात्मत्वं कथयति ।

भामत्या: परवर्तिव्याख्याकारेषु ये भामतीमनुकुर्वन्ति , तेषु प्रमुखा: सन्ति आनन्दगिरि: , गोविन्दानन्द: , अद्वैतानन्दश्च । तेषां कृतिषु वाचस्पतिमिश्रस्य प्रभाव: स्पष्टत: द्रष्टुं शक्यते ।

7·1·6 न्यायनिर्णये भामत्या: प्रभाव:

त्रयोदशशताब्द्यामाचार्येणानन्दगिरिणा शारीरकभाष्यस्य न्यायनिर्णयनाम्नी व्याख्या लिखिता । भाष्यभामत्यो: सामंजस्यस्थापनाय स: प्रयत्नं कृतवान् । तस्य व्याख्यानस्य प्रमुखोद्देश्यं तु शारीरकभाष्यस्यार्थप्रकाशनमेवासीत् । किन्तु स: भामतीकारात् प्रभावित आसीदिति तु सुस्पष्टमेव । तद्यथा -

(क) " असतिप्रतिज्ञोपरोधो यौगपद्यमन्यथा "[10] इत्यस्य सूत्रस्य भाष्ये चित्तचैत - पदार्थानां जनयितॄणां हेतूनां चातुर्विध्यं निर्दिशन् वाचस्पति: यत् कथयति तेन सह न्यानिर्णयस्य साम्यमस्ति । तद्यथा-

(ख) नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तर- प्रत्ययात्पूर्वविज्ञानात्बोधरूपता । चक्षुषोऽधिपतिप्रत्याद्रूपग्रहणप्रतिनियम: । आलोकात्सहकारिप्रत्ययाद्धेतो : स्पष्टार्थता । एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि । सेयं प्रतिज्ञा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्तावुत्पद्यन्त इत्यभावकारणत्वमुपरुध्येत् । न्यायनिर्णये अपि एतदेवाधोलिखितरूपेणोक्तम् -

" नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तरप्रत्ययात् - पूर्वज्ञानात् बोधरूपता । चक्षुषोऽधिपतिप्रत्ययात् रूपग्रहणप्रतिनियम: । आलोकाद्धेतो: स्पष्टता । सुखादीनामपि चैत्तानां चित्ताभिन्नामेतान्येव चत्वारि कारणानि । सेयं प्रतिज्ञा निर्हेतुफलोत्पत्तौ बाध्येते इत्यर्थ:।[12]

" अपि च सहोपलम्भनियमात् विषयविज्ञानयोरभेद आपतति । न हि अनयोरेकस्यानुपलम्भो अन्यस्य उपलम्भोऽस्ति " इति वाक्येन ज्ञानविषययो: सहोपलम्भत्वं कल्पयति । अत्र भाष्यगतसहोपलम्भनियमस्य वाचस्पतिना निर्वचनं कृतम् । तद्यथा - " यद्येन सह नियतसहो -

" नाभाव उपलब्धे: " इत्यस्मिन् सूत्रे भाष्यकार: 

पलम्भान तत्वत: न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमा: । नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धि:"।[13]

न्यायनिर्णये आनन्दगिरिणापि एवमुक्तम् । तद्यथा- "यद्येन नियत-सहोपलम्भानं तत्तेनाभिन्नम्, यथैकेन चन्द्रमसा द्वितीयश्चन्द्रमा: नियतसहोपलम्भनञ्चेयं ज्ञानेनेत्यर्थ: ।

" सहोपलम्भनियमादभेदो नीलतद्धियो: ।
भेदश्च भ्रान्तिविज्ञानै: दृश्येतेन्दाविवाद्वये ।।"[14]

एवमेव स्वप्नादिवच्चेदं द्रष्टव्यम् अस्य भाष्यवाक्यस्य व्याख्यानेऽपि भामती-न्यायनिर्णययो: समानता दृश्यते । तद्यथा भामत्याम् -
"यो य: प्रत्यय: स सर्वो बाह्यानालम्बन:, यथा स्वप्नमायादिप्रत्यय:, तथा चैष विवादाध्यासित: प्रत्यय: इति स्वभावहेतु:"।[15] तथा च न्यायनिर्णये -
"यो य: प्रत्यय: स सर्वो बाह्यानालम्बन:, यथा स्वप्नादिप्रत्यय: तथा चैष विमतप्रत्यय:"।[16]

### 7•1•7 रत्नप्रभायां भामत्या: प्रभाव:

गोविन्दानन्देन सप्तदशशताब्द्यां शाङ्करभाष्यमाश्रित्य रत्नप्रभा नाम्नी टीका लिखिता । टीकाया: प्रारम्भे स: विवरणकारस्य मतस्य समर्थनं तथा वाचस्पतेर्मतस्य खण्डनं च करोति । तद्यथा - "तस्मादागमचार्यैरापातत: प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम् । तदुक्तं प्रकाशात्मश्रीचरणै: - "अधिकार्यादीनागमात्मिकत्वेऽपि इति न्यायेन निर्णयार्थमिदं सूत्रमिति । एषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणे अधिकार्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापततीत्यलं प्रसङ्गेन "।[17]

रत्नप्रभाया: समीक्षणानन्तरमेतत्कथयितुं शक्यते यत् गोविन्दानन्द: स्वटीकायां वाचस्पतिमिश्रस्य प्रभावमुपेक्षितुं न पारयामास । उदाहरणतया भामत्या: मङ्गलश्लोके शाङ्कराचार्यस्य महत्वमेवं निर्दिशति -

" आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपात: पवित्रयति ।।"[18]

गोविन्दानन्दोऽपि रत्नप्रभाया: मङ्गलश्लोके वाचस्पतेरनुकरणं करोति।

तद्यथा -

" श्रीमच्छारीरकं भाष्यं प्राप्य वाक्शुद्धिमाप्नुयात् ।
इतिके श्रमो मे सफलो गंगां रथ्योदकं यथा ।। " 19

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणो: तमप्रकाशवत् विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्ति: " 20 इत्यस्मिन् भाष्यवाक्ये वाचस्पतेर्मतानुसारं युष्मदस्मत्प्रत्ययगोचरयोरिति अत्रेदमस्मत्-गोचरया: इति कथितव्यमासीत् इति । अत्र भेदार्थमिदम् इत्यस्य स्थाने युष्मच्छब्दस्य ग्रहणं भाष्यकारेण कृतम् , कुत इति चेदुच्यते । तद्यथा -

" इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । यथाह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकार: , एते वयमिमे वयमास्म इति बहुलं प्रयागदर्शनादिति ।" 21

गाविन्दानन्दोपि रत्नप्रभायां वाचस्पतेर्भावस्य प्रस्फुटनमेवं करोति- " अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दो अस्मदर्थे लोके वेदे च बहुश: इमे वयमास्महे , इमे विदेहा: , अयमहमस्मीति च प्रयोगदर्शनात् नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्द: प्रयुक्त: इदंशब्दप्रयोगो विरोधास्फूर्ते: ।" 22

## 7•1•8 ब्रह्मविद्याभरणे भामत्या: प्रभाव:

श्रीअद्वैतानन्दसरस्वती (सप्तदशशताब्द्यां) ब्रह्मसूत्रभाष्योपरि ब्रह्मविद्याभरणं नाम्नीम् व्याख्यां लिखितवान् । किन्तु वस्तुत: असौ ग्रन्थ: भामत्या: वर्चस्वेन पूर्णतया भास्वरितं वर्तते । भामत्या: पद्धतिमाश्रित्य सूत्रेण सहैव भाष्यस्य संघाटनं दृश्यते ।

वाचस्पतिना शाब्दीप्रमाया: प्रत्यक्षत्वं स्वीकृतम् । तस्य कथनमेतदस्ति यद् - " न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलमपि तु प्रत्यक्षस्य , तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थम् भावनासहितमन्त:करणं त्वंपदार्थस्यापरोक्षस्य ~~स्वस्~~ तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् ।" 23

वाचस्पते: कथनस्यानुसरणं कुर्वन् ब्रह्मविद्याभरणकारोऽपि कथयति यद् अहं कर्ता इत्यादि कर्तृत्वादिधर्मयुक्तस्यात्मन: प्रत्यक्षे मनस: हेतुता निश्चि-

ता इव भवति । अतः निर्विशेषात्मनः साक्षात्कारे मन एव कारणम् ।

" तमेतमात्मानं वदानुवचनेन " इत्यत्र वाचस्पतिः कर्मणामुपयोगः विविदिषायां प्रतिपादयति । ब्रह्मविद्याभरणकारोऽपि वाचस्पतिमनुकरोति । तद्यथा-

" विविदिषावाक्यं विविदिषार्थमेव कर्माणि विद्यते । जीवाश्रिताविद्याविषये अपि वाचस्पतिरद्वैतानन्दयोः मतसादृश्यं दृश्यते । ब्रह्मविद्याभरणकारः वाचस्पतिमनुकरोति इति निम्नलिखितैरुद्धारणैरपि सिद्ध्यति -

(1) "येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नम् । यथा कुसुमेभ्यो सूत्रम् ।" 25

येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नम् । यथा कुसुमेभ्यो सूत्रम् ।"25

(2)"योऽहं बाल्ये पितरावन्वभूव स एव स्थविरे प्रणप्तॄननुभवामि ।" 26"य एवाहं बाल्ये पितरावन्वभूवं स एव स्थविरे प्रणप्तॄननुभवमामि ।"27

एवमनेकेषु स्थलेषु वाचस्पतिरद्वैतानन्दयोः कथनेषु सादृश्यं वर्तते ।

### 7.1.9 सर्वदर्शनसंग्रहे भामत्याः प्रभावः

माधवाचार्येण (चतुर्दशशताब्द्यां) सर्वदर्शनसंग्रहे चार्वाकदर्शनादारभ्य शाङ्करदर्शनपर्यन्तं षोडशदर्शनानां निरूपणं कृतम् । येन क्रमेण दर्शनानां परिचयः तेन दत्तः तदाश्रित्यैतत् कथयितुं शक्यते यद् सः शाङ्करदर्शनस्यान्यदर्शनानां तुलनायां सर्वाधिकं महत्वं स्वीकरोति प्रतिपादयति च । अद्वैत - वेदान्तस्य कृते माधवाचार्येण शाङ्करदर्शनस्य प्रयोगः कृतः । अतः एतदपि स्पष्टं वर्तते यत् माधवाचार्यः अद्वैतवेदान्तस्याचार्येषु भाष्यकारेषु च शाङ्कराचार्यस्याप्रतिमं स्थानमस्तीति प्रतिपादयति । अद्वैतवेदान्तस्य ये प्रमुखाः सिद्धान्ताः सन्ति तेषां निरूपणे माधवाचार्येण यत्रतत्र वाचस्पतेर्मतस्योल्लेखः समादरपूर्वकं कृतः । एवं चान्यमतानां तुलनायां वाचस्पतेर्मतस्य समर्थनमपि कृतम् । अस्मिन् सन्दर्भे सर्वदर्शनसंग्रहात्केचिदंशाः अत्र प्रस्तूयन्ते -

" प्रपंचः ब्रह्मणः विवर्तः अस्ति न तु परिणामः" इत्यस्मिन् सन्दर्भे माधवाचार्यः कथयति - " तदवोचदाचार्यवाचस्पतिः - "

" विवर्तस्तु प्रपंचोऽयं ब्रह्मणोऽपरिणामिना ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥" 28

वाचस्पतेरेतत्कथनं माधवाचार्येण निम्नलिखितस्य मतस्य पुष्ट्यर्थमुद्धृतम् -----

ननु जीवजड्योरयमस्ति यद् सारूप्यासारूप्यभावेन चिद्विवर्तीत्वं प्रपंचस्य न संपद्यत इति ------नैतत् साधु । निबन्धाना: सर्वे विभ्रमा इति व्याप्तिरस्ति । असरूपादपि कामादे: कान्तालिङ्गनादिष्विव स्वप्नविभ्रमस्योपलम्भात् । किंच कादाचित्के विभ्रमे सारूप्यापेक्षा नानाद्यविद्याबन्धाने प्रपंचे ।" 29

देहात्मवादस्य निरसनार्थम् तथा अध्यासस्य विश्लेषणार्थमद्वैतवेदान्तिभि: महान् प्रयास कृत: । अनात्मनि देहे आत्मबुद्धिरेवाध्यास:इति भाष्यकारमतम् । अध्यास एवाविद्या । अविद्याया: निराकरणेन ब्रह्मसाक्षात्कार: । स च श्रवणमननसहकृतनिदिध्यासनसंस्कृतेन मनसा भवतीति वाचस्पतेर्मतम् । माधवाचार्योऽप्यस्य मतस्योल्लेखं समर्थनं च एवंप्रकारेण करोति । व्यवहारसमये पामरसाम्यानतिरेकात् । अपरोक्षभ्रमस्य परोक्षज्ञानविनाशत्वोपपत्तेश्च । यदुक्तं भगवता भाष्यकारेण - " पश्वादिभिश्चाविशेषात् । भामतीकारैरप्युक्तं शास्त्रकारा: खल्वेवं विचारयन्ति न प्रतिपत्तार: इति । तथा चात्मगोचरस्याध्यासात्मरूपत्वं सुस्तम् ।" 30

अस्याशय: अयमस्ति यद् सोहमस्मि इत्यादि प्रत्यभिज्ञया देहात्मनो भेद: सिद्ध्यति । किन्तु शङ्कराचार्यस्यैतत् कथनमस्ति यद् सोऽहमस्मि इत्यस्य सिद्ध्यर्थम् देहात्मनोर्भेदस्यावश्यकता नास्ति । अपि च विद्वांसोऽपि सोहमस्मीत्येवं रूपेण यां प्रत्यभिज्ञां कर्तुम् न शक्नुवन्ति । यत: शास्त्रचिन्तका: सन्तोऽपि विद्वांस: ब्रह्मसाक्षात्काराभावे व्यवहारदशायां पश्वादिभिर्भिन्ना: न भवन्ति । वाचस्पतिमिश्रेण भाष्यकारस्य कथनं विश्लेषितं तथैतद् प्रतिपादितं यद् ब्रह्मसाक्षात्काररहिता: श्रवणमननपरा: शास्त्रचिन्तका: पशुवत्व्यवहरन्ति , न तु आत्मसाक्षात्कारसमर्था: प्रतिपत्तार: । एवंप्रकारेणैतत्सिद्ध्यति यद् अध्यासस्य कारणादेवानात्मन्यात्मबुद्धिर्भवति । माधवाचार्येणाप्यस्मिन् सन्दर्भे वाचस्पतेमेतस्यौचित्यं ज्ञात्वा तस्योल्लेख: सर्वदर्शनसंग्रहे कृत: ।

7·1·10 अल्लालसूरिविरचिते भामतीतिलके भामत्याः प्रभावः

अल्लालसूरिः क्रिस्तोरनन्तरं चतुर्दशशातककाले बभूव । अस्य[2] जन्म कोतिकला ग्राम आसीत् । अस्य मातुः नाम नागमाम्बा[1] तथा पितुर्नाम त्रिविक्रमाचार्यः विद्यागुरोर्नाम अनन्ताचार्यः आसन् । अनेन कल्पतरुकारमनुसृत्यैव भामत्याः व्याख्या लिखिता । भामतीतिलके अल्लालविरचिताः निम्नलिखिताः श्लोकाः द्रष्टव्याः वर्तन्ते -

"व्याचष्टाल्लालनामैवं नागमाम्बासुतः सुधीः ।
भामत्याः प्रथमेऽध्याये द्वितीयं पादमादरात् ।।"
यद्ग्रन्थाकवचयोगाद् पक्षो व्यासस्य विजयते जगति ।
विद्रुतविरोधिवर्गे वाचस्पतये नमस्तस्मै ।। "

अल्लालसूरिः [2]भामतीवाक्यानि सावतरणं व्याख्याय शङ्कास्थजान्यपि सम्यग् स्पष्टयति । भामत्याः नैके पाठभेदा अपि तेन निर्दिष्टाः[3] ।

7·1·11 वेदान्तसारे भामत्याः प्रभावः

वेदान्तसारस्य रचयिता सदानन्दयोगीन्द्रः षोडशशताब्द्याः आरम्भे जन्म लेभे । एतत्कथ्यते यत्तेन वेदान्तशास्त्रसिद्धान्तः, सारसंग्रहः, स्वरूपनिर्णयः तथा अन्येऽपि केचिद्ग्रन्थाः रचिताः । किन्तु तस्यान्यग्रन्थानपेक्ष्य वेदान्तसार एव प्रसिद्धिमवाप । वेदान्तसारमाश्रित्य नृसिंहसरस्वती (षोडशशताब्द्यां)सुबोधिनीव्याख्यां कृष्णतीर्थस्य शिष्यः रामतीर्थयतिः(सप्तदशशताब्द्यां)विद्वन्मनोरंजिनीं व्याख्यां तथा महाराष्ट्रीयासन्तप्रवरस्य श्री एकनाथमहाराजस्य प्रपौत्रः आपदेवः(सप्तदशशताब्द्यां) बालबोधिनीं व्याख्यां रचितवन्तः । हिन्दीभाषायां वेदान्तसारस्याधुनिकव्याख्याकारेषु रमाशङ्करत्रिपाठी श्रीरामशरणत्रिपाठी, डा॰ सन्तनारायणश्रीवास्तवः आचार्यः बदरीनाथशुक्लः, श्रीगजाननशास्त्रीमुसलगावङ्गरः तथा डा॰ राममूर्तिशर्मा प्रसिद्धाः सन्ति ।

वेदान्तसारः अन्वर्थनामा ग्रन्थो वर्तते । सदानन्दयतिना प्रायः सर्वेषामेव पूर्ववर्तिनामाचार्याणां सिद्धान्ताः स्युः संगृहीताः स्युः । किन्तु तेषु तेन स एव सिद्धान्तः स्वकीयग्रन्थे निरूपितः येन सह तस्य सहमतिरासीत् । सदानन्देन कुत्रापि सिद्धान्तप्रवर्तकानां नामोल्लेखः कृतः । किन्तु प्रतिपादिताद्विषयादेतत् ज्ञातुं शक्यते यद् सः कस्मिन् स्थले कस्य पूर्ववर्तिनः आचार्यस्यानुसरणं करोतीति ।

समष्टिव्यष्टिरूपेणाज्ञानस्य भेदद्वयं सदानन्देन वेदान्तसारे निर्दिष्टम् । एतत्प्रतीयते यदस्मिन्सन्दर्भे सदानन्दः वाचस्पतेरनुसरणं करोति । वाचस्पतिना अविद्यायाः नानात्वं निर्दिष्टम् । सदानन्दोऽपि प्रकारान्तरेण तदनुसरति । एवं च सः आवरणशक्त्या आत्मनः अवच्छिन्नत्वमप्यङ्गीकरोति । तद्यथा- " अस्याज्ञानस्यावरण - विक्षेपनामकमस्ति शक्तिद्वयम् -----अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्व-भोक्तृत्वसुखदुःखमोहाद्यात्मकतुच्छसंसारभावनापि सम्भाव्यते[32]।"

एवंप्रकारेणैतत्कथयितुं शक्यते यत् यद्यपि वेदान्तसारे भामत्याः प्रभावः स्पष्टरूपेण न दृश्यते , तथापि केषुचित्स्थलेषु प्रकारान्तरेण द्रष्टुं शक्यते ।

7•1•12 <u>वेदान्तपरिभाषायां भामत्याः प्रभावः</u>

वदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण (सप्तदशशताब्द्यां) यद्यपि विवरणप्रस्थानस्य समर्थनं कृतं तथापि नैकेषु स्थलेषु तेन वाचस्पतेर्मतमपि समर्थितम् । ज्ञानानां प्रत्यक्षत्वविषय एव न , अपि तु करणेऽपि निर्भरं वर्तते । इत्यत्रैवमेवाविद्यायाः अनेकत्वविषयेऽपि धर्मराजाध्वरीन्द्रः वाचस्पतेर्मतं समर्थयन्निव प्रतीयते । एकाविद्यायाः स्वीकृतौ सर्वमुक्तिप्रसङ्गः आपतति । अतः सः अविद्यायाः आवरणशक्तेः नानात्वस्य समर्थनाय वाचस्पतेर्मतमुद्धारति । तद्यथा - " तदुक्तमाचार्य - वाचस्पतिमिश्रैः -

" उपासनादिसंसिद्धितोषितेश्वरचोदितम् ।
अधिकारं समाप्यैते प्रविशन्ति परं पदम् ।।"

एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते । तस्मादेकविद्यापक्षेऽपि प्रतिजीवमावरण-जीवोपगमेन व्यवस्थोपपादनीया ।"[33]

श्रवणमननिदिध्यासनेषु श्रवणस्याङ्गत्वं वर्ततेति विवरणपन्थिनः कथयन्ति । किन्तु भामतीपन्थिनां मतानुसारं निदिध्यासनस्याङ्गित्वं वर्तते । वेदान्तपरिभाषायाः सम्यक्समीक्षणानन्तरमेतत्कथयितुं शक्यते यत् नैकेषु स्थलेषु धर्मराजाध्वरीन्द्रेण विवरणमतापेक्षया वाचस्पतेर्मतमधिक ग्राह्यं वर्ततेति प्रतिपादितम् । तद्यथा - " ब्रह्मसाक्षात्कारे पि मनन-निदिध्यासनसंस्कृतं मन एव करणं मनसैवानुद्रष्टव्यः इत्यादि श्रुतेः । मनोगम्यत्वश्रुतिश्चासंस्कृतमनोविषया ।"[34]

xxxxxxxxxxxxxxx

सप्तमोऽध्याय:

द्वितीयो भाग:

7.2.0 भामत्या प्रयुक्ताया: टीकाशैल्या: दृष्ट्या भामतीप्रस्थानस्य वैशिष्ट्यम्

विभिन्नेषु शास्त्रेषु विभिन्नान् टीकाग्रन्थान् रचयित्वा स्वजीवनस्य चरमे भागे वाचस्पतिमिश्र: स्वनामधान्या भामतीटीका प्रणिनाय। न केवलं कालक्रमेण अपि तु दार्शनिकचिन्तकस्य दृष्ट्या भाषाया: दृष्ट्या तथा टीकाशैल्या: दृष्ट्या भामती तस्य चरमा कृतिरस्ति ।

भामत्या: लेखनस्य प्रयोजनं शांकरभाष्यस्य प्रामाणिकं व्याख्यानमासीत् । किन्तु व्याख्याने न केवलं शब्दार्थ: वाक्यार्थो वा स्पष्टीक्रियते अपितु य: तत्र ज्ञाता : अज्ञाता: ग्रन्था: वा सन्ति तासामपि निराकरणं क्रियते। भामती टीका अस्ति वा वार्तिकमस्ति वा इत्यस्मिन् विषयेऽपि विदुषां विवाद: दृश्यते । किन्तु वार्तिकापेक्षाया भामत्या: टीकात्वमेव विद्वद्भिरङ्गीक्रियते । वाचस्पते: पूर्वम् भास्कराचार्यप्रभृतय: केचिदाचार्या: शांकरभाष्योपरि नैकानाक्षेपान् कृतवन्त: । तेषामाक्षेपाणां समाधानमपि भामत्या: रचनाया: उद्देशमासीत् । अद्वैतवेदान्तपरम्परायां एतादृशा: अनेके सिद्धान्ता: प्रवर्तिता: आसन् , यै: सह वाचस्पतेर्मतैक्यं नासीत् । एतादृशेषु सिद्धान्तेषु तत्वमस्यादिवाक्यश्रवणात् मोक्ष: जायतेति सिद्धान्तोऽप्यासीत् । वाचस्पतिनाऽस्य सिद्धान्तस्य निराकरणं कृत्वा साक्षात्कार: मानसिक: भवतीत्येष सिद्धान्त: प्रवर्तित: । एवंप्रकारेणाद्वैतवेदान्तपरम्परायां प्रवर्तितानां सिद्धान्तानां संशोधनमपि भामत्या: रचनाया: उद्देश्यमासीत् ।

अपरं च चार्वाकबौद्धप्रभृतिभि: ये सिद्धान्ता: प्रतिपादि-

ता: आसन् तेषां खण्डनं कृत्वा वैदिकमार्गस्य स्थानमपि भामत्या: उद्देश्यमासीदिति भामतीव्याख्याकारैरपि स्पष्टरूपेण प्रतिपादितम् । एवंप्रकारेण एतेषामुद्देश्यानां पूर्त्यर्थम् वाचस्पतिना या विधाय: समादृता: ता: निम्न - लिखितप्रकारेण निर्देष्टुं शक्यते ।

। कोषविधि:, व्युत्पत्तिविधि:, विग्रहविधि:, आभाणकविधि: सारसंग्रहश्लोकविधि:, विशेषयोजकशब्दविधि:, पतनिकाविधि:, दुर्विसुक्ति दुर्विसक्तिपरिहारविधि: ।

भामत्या: रचनाशैल्या: उपर्युक्तानां घटकविधीनां विश्लेषणमत्र प्रस्तूयते -

7•2•। कोषविधिसमाश्रयणम्

भाष्यवाक्यानां व्याख्याने वाचस्पतिना नैकेषु स्थलेषु कोशाकारवदेकस्य शब्दस्य स्थाने अन्यस्य शब्दस्य शब्दसमूहस्य वा प्रयोग: कृत: । उदाहरणतया स्मृतिरूप: परत्र पूर्वदृष्टावभास: इत्यस्य भाष्यवाक्यस्य व्याख्याने वाचस्पति: कथयति - परत्र=शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमित्युक्तम् । परत्र पूर्वदृष्टावभास इत्यलक्षणम्, अतिव्यापकत्वात्[35] । अन्यधर्मस्य = ज्ञानधर्मस्य रजतस्य । ज्ञानाकारस्येति यावत् । अध्यासोऽन्यत्र बाह्ये[36] । तस्मिन्नध्यासो विषयधर्माणां= देहेन्द्रियधर्माणाम्, कथं किमाक्षेपे[37] ।

'अस्यानर्थहेतो: प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता: आरभ्यन्ते इत्यस्य भाष्यवाक्यस्य व्याख्याने वाचस्पति: कथयति - प्रतिपत्ति: = प्राप्ति:, तस्यै, नतु जपमात्राय, नापि कर्मसु प्रवृत्तये, आत्मैकत्वं = विगलितनिखिलप्रपंचत्वमानन्दरूपस्य सत:, तत्प्रतिपत्तिं निर्विचिकित्सां भावयन्तो वेदान्ता: समूलघातमध्यासमुपघ्नन्ति[38] ।

भगवता शंकराचार्येणोक्तम् - ' ब्रह्मशब्दस्य हि व्युत्पाद्यमान-

स्य नित्यशुद्धत्वादयो अर्थाः प्रतीयन्ते बृंहतेर्धातोरर्थानुगमात् सर्वस्यात्मत्वाय ब्रह्मास्तित्वप्रसिद्धिः । अस्य भाष्यवाक्यस्य व्याख्याने वाचस्पतिः कथयति - नित्येति = क्षयितालक्षणदुःखमुपक्षिपति , शुद्धेति = देहाद्युपाधिकमपि दुःखमपाकरोति । बुद्धेति = अपराधीनप्रकाशमानानन्दात्मानं दर्शयति ------ मुक्तौ सत्यामस्यैते शुद्धत्वादयः प्रदत्ते , तदस्तु प्राक् देहाद्यभेदेन तद्धर्मजजन्मजरामरणादि दुःखयोगादित्यत उक्तम् -'मुक्तेति'। सदैव मुक्तः सदैव केवलो अनाद्यविद्यावशात्तु भ्रान्त्या तदावभासत इत्यर्थः ।[39] " तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यन्यो भिचाकशीति मु॰ ३॰१॰१ भाष्ये उद्धृतस्यास्य श्रुतिवाक्यस्य व्याख्याने वाचस्पतिरेवं कथयति - अन्यो- जीवात्मा , पिप्पलं - कर्मफलम् , अनश्नन्नन्य इति परमात्मा [40]

उपर्युक्तप्रकारेणैतत्स्पष्टं भवति यत् वाचस्पतिमिश्रः भाष्यवाक्यानां स्पष्टीकरणार्थम् नैकेषु स्थलेषु कोशकारवद्व्यवहरति ।

### 7·2·2 व्युत्पत्तिविधिसमाश्रयणम्

भामत्याः नैकेषु स्थलेषु वाचस्पतिना व्युत्पत्तिविधेः समाश्रयणं कृतम् । " युष्मत्प्रत्ययोपेतस्य च प्रत्यगात्मनो विषयत्वं ब्रवीषि " अस्य भाष्यवाक्यस्य भामत्यां वाचस्पतिः प्रत्यगात्मनः विशेषणं व्युत्पत्तिविधिना करोति । तद्यथा - प्रत्यगात्मा अशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्यः आत्मानं प्रतीपं निर्वचनीयमंचति जानातीति प्रत्यङ् स चात्मेति प्रत्यगात्मा , स चापराधीनप्रकाशात्वात् , अंशत्वाच्च अ विषयः तस्मिन्नध्यासो विषयधर्माणां , देहेन्द्रियादिधर्माणां कथं किमाक्षेपे " [41]।

मीमांसाशब्दस्यापि विश्लेषणं वाचस्पतिनैवं कृतम् - " न च जिज्ञासा मीमांसा , येन योगानुशासनवदतिक्रियेत , नान्तत्वं निपात्य माङ् माने

इत्यस्माद्वा 'मान पूजायाम्' इत्यस्माद्वा धातोः मान्बन्ध - इत्यादिना अनिश्चयार्थो सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात् ।" 42

" युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके -----" अस्य भाष्यवाक्यस्य व्याख्याने वाचस्पतिरेवं वदति - " एते हि चिदात्मानं विषिन्वन्ति अवबध्नन्ति, स्वेनरूपेण निरूपणीयं कुर्वन्ति इति यावत् ।"43 "बृहत्वात् बृंहणत्वाद्वा आत्मैव ब्रह्मेति गीयते " 44 अत्रापि ब्रह्मन् शब्दस्य व्युत्पत्तिपरको अर्थो वाचस्पतिना प्रस्तुतः ।

वाचस्पतिः कुत्रचिदन्येभ्यो ग्रन्थेभ्योऽपि शब्दानां व्युत्पत्ति - परकांशान् भामत्यामुद्धारति । उदाहरणतया आचार्यशब्दस्य व्युत्पत्त्यर्थम् पुराणादुद्धारति । तद्यथा - " आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥" 45

एवंप्रकारेण वाचस्पतिः अनेकेषु स्थलेषु नैकेषां शब्दानां व्युत्पत्तिपरकं विश्लेषणं कृत्वा भामत्याः आशयं पाठकानां मनसि दृढरूपेण स्थापयितुं प्रयतते ।

### 7.2.3 विग्रहविधिसमाश्रयणम्

भाष्यवाक्यानां स्पष्टीकरणार्थम् वाचस्पतिः यत्र तत्र विग्रहविधेरपि प्रयोगं करोति । उदाहरणतया शंकराचार्यः कथयति यत् - " कोऽयमध्यासो नाम, उच्यते - स्मृतिरूपः परत्र पूर्वदृष्टावभासः ।" अस्य व्याख्यानं वाचस्पतिः विग्रहविधिमनुसृत्य कथयति । तद्यथा - " स्मृतेः रूपमिव रूपमस्येति स्मृतिरूपः । असन्निहितविषयत्वं च स्मृतिरूपत्वम्, सन्निहितविषयत्वं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः।46"

भाष्यकारद्वारा कृतानां विग्रहाणां सन्दर्भेऽपि वाचस्पतिः यत्र तत्र स्वमतं प्रकाशयति । "कथं पुनः स्वप्रधानं सत् ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते – 'ब्रह्मपुच्छं प्रतिष्ठा' इति नैष दोषः पुच्छवत्पुच्छम्। प्रतिष्ठा परायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इव इत्येतदनेन विवक्ष्यते"। अस्य भाष्यवाक्यस्य सन्दर्भे वाचस्पतिः कथयति – "आनन्दयपदस्य ब्रह्मार्थत्वे ब्रह्मपुच्छमिति न समंजसं न , तदेवावयव्यवयवश्चेति युक्तम् । आधारपरत्वे च पुच्छशब्दस्य प्रतिष्ठेत्येतदपि उपपन्नतरं भवति"।[47]

एवंप्रकारेण वाचस्पतिः न केवलं विग्रहविधिमाश्रयति किन्तु यत्र भाष्यकारेण विग्रहविधेराश्रयणं कृतं तत्रापि ये पूर्वपक्षाः उत्तरपक्षाः वा समुद्भूताः तेषां समाधानमपि करोति ।

7·2·4 आभाणकविधिसमाश्रयणम्

भामतीकारः स्वकथनस्य पुष्ट्यर्थम् तथा प्रतिपक्षमतानां निराकरणार्थम् यथा तथा आभाणकानामपि प्रयोगं कृतवान् । आभाणकानां प्रयोगेण वाचस्पतेः कथनेषु रोचकतायाः सन्निवेशः संजातः । दार्शनिकविषयाणामपि आभाणकैः विश्लेषणं कर्तुम् शक्यतेति भामत्याः अध्ययनेन स्पष्टं भवति । केचिदाभाणकाः अत्र प्रस्तूयन्ते – "न हि मृगाः सन्तीति शाल्यो नोप्यन्ते , भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्ते ।" अस्याभाणकस्य प्रयोगः वाचस्पतिना अस्य कथनस्य समर्थनाय कृतं यत् – "दुःखभयात् नानुकूलवेदनीयं ऐहिकं वाऽऽमुष्मिकं वा सुखं परित्यक्तुमुचितम्[48]" कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वेऽइतरेतरदोषप्रसङ्गात् इत्यस्य

भाष्यवाक्यस्यापि विश्लेषणं कुर्वता वाचस्पतिनाप्युक्तम् :- " तथा चायमपरो गण्डस्योपरि स्फोट: " इति ।[49] " अन्धास्येवान्धलग्नस्य विनिपात: पदे पदे "अस्वाभाणकस्य प्रयोगोऽपि भामत्यां दृश्यते । वाचस्पतिना निम्नलिखितस्य कथनस्य समर्थनाय असावाभाणक: पुन: उद्धृत: । तथाहि - " योऽयमर्थप्रकाश: फलम् , यस्मिन्नर्थश्चात्मा च प्रतीते: । स किं जड स्वयंप्रकाशो वा । जडश्चेद्द्वयोरात्मनावपि जडाविति कस्मिन् किं प्रकाशेत , अविशेषादिति प्राप्तमन्त्यमशेषस्य जगत: । तथा चाभाणक: 5 " अन्तस्येवान्धलग्नस्य विनिपात पदे पदे "[50] अविद्या - प्रत्युपस्थापित नामरूपमायावेशवशेनासकृत्प्रत्युप्तत्वात् " इत्यस्य भाष्यवाक्यस्य व्याख्यानेऽपि वाचस्पतिराभाणकस्य प्रयोगं करोति । तद्यथा - कारणभूतया लयलक्षणाया अविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यद् प्रत्युपस्थापितं नामरूपं तदेव माया । तदावेशेनास्य चोद्यस्यासकृत् प्रत्युक्तत्वात् । एतदुक्तं भवति - नेयं सृष्टिर्वास्तुसती येनाद्वैतिनो वस्तुसतो द्वितीयस्याभावादनुयुज्येत । काल्पनिक्यां तु सृष्टावस्ति काल्पनिकं द्वितीयं सहायं मायामयम् । यदाहु: - " सहायस्तदृशा एव तादृशी भवितव्यता ।"[51]

एवंप्रकारेणाभाणकानां प्रयोगं कृत्वा वाचस्पतिना भामत्यां स्वीयाभिमतस्य स्थापना कृता ।

7.2.5 पतनिकाविधिसमाश्रयणम्

भामत्याः अन्यतमं वैशिष्ट्यं वर्तते तस्याः पतनिकाशैली । "पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" (बृ.3.5.1) इति मौलिकसिद्धान्तानुसारेण वाचस्पतिः स्थविरावस्थायाः चिन्तनस्य बाल्यावस्थायाः चिन्तनेन सह साम्यं स्थापयति । सः न्यायकणिकायाः उपक्रमे तथा भामत्याः उपक्रमे समानपदानि प्रयुङ्क्ते । तद्यथा न्यायकणिकायाम् -

(क) "यदप्रयोजनमविषयं न तत् प्रेक्षावत्प्रवृत्तिगोचरः । यथा काकदन्तपरीक्षा । तथा चैतत्प्रकरणमिति व्यापकविरुद्धोपलब्धिः[52] " । तथा च भामत्याम् -

(क) "यदसन्दिग्धमप्रयोजनं च न तत् प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्ता वा, तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः[53] "

अस्मिन् सन्दर्भे सम्भवतः वाचस्पतिमिश्रः स्वपूर्ववर्तिनां शाबरस्वामि-कुमारिलभट्ट-अर्चटभट्टप्रभृतीनां दार्शनिकानां पातनिकाशैलीमनुकरोति । शाबरस्वामिना मीमांसाभाष्यस्यारम्भे धर्मजिज्ञासायाः उपक्रमे एवं प्रतिपादितम् - "धर्मः प्रसिद्धो अप्रसिद्धोवा प्रसिद्धश्चेन्न जिज्ञासितव्यः, अप्रसिद्धश्चेन्नतराम् ।[54]"

श्लोकवार्तिकस्यारम्भे कुमारिलभट्टो पि एतत्कथयति -

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यताम् ।।"[55]

अर्चटभाट्टोऽपि हेतुबिन्दुटीकायाः आरम्भे कुमारिलभाट्टोऽपि एवं कथयति -
" यत्प्रयोजनसहितं वाक्यम् , तदर्थो वा , न तद् प्रेक्षावताऽऽरभ्यते कर्तुम् प्रतिपादयितुं वा । तद्यथा - दशादाडिमादिवाक्यं काकदन्तपरीक्षा च । निष्प्रयोजनं चेदं प्रकरणं तदर्थो वा इति व्यापकानुपलब्ध्या ------ ."[56]

भाष्यकारभगवत्पादशंकराचार्योऽपि ब्रह्मसूत्रभाष्ये शाबरभाष्यमनुकरोति । तद्यथा - " तद् पुनर्ब्रह्मा प्रसिद्धामप्रसिद्धं वा स्यात् । यदि न प्रसिद्धं न जिज्ञासितव्यम् । अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति ।[57]" वाचस्पतिः न्यायशास्त्रे न्यायवार्तिकतात्पर्यटीकायां सांख्याशास्त्रे सांख्यतत्त्वकौमुद्यां , योगशास्त्रे तत्त्ववैशारदीं पूर्वमीमांसायां न्यायकणिकां च रचितवान् । अतः ये विषयाः तेन उपर्युक्तेषु ग्रन्थेषु ये विषयाः प्रतिपादिताः तेषां पुनरुक्तिः तेन भामत्यां न कृतः । तद्यथा - " वेदानामपौरुषेयत्वनिरूपणप्रसङ्गे सः कथयति - " उपपादितं ~~xxx~~ चास्माभिर्न्यायकणिकायाम् , इह तु विस्तारभयान्नोक्तम् ।"[58]

एवंप्रकारेण पतनिकाविधिं विस्तरपरिहारविधिं च समाश्रित्य वाचस्पतिना रचनाशैल्याः दृष्ट्याऽपि अद्वैतवेदान्तनये एकः नवीनः पन्था प्रवर्तितः ।

7.2.6 द्विरुक्त्यादिपरिहारविधिसमाश्रयणम्

प्रायः एतद् दृश्यते यद् शारीरकभाष्ये भगवता शंकराचार्येण ब्रह्मसूत्राणां यद्व्याख्यानं कृतं तत्र नैकेषु स्थलेषु पुनरुक्तयः दृश्यन्ते । अस्यैकं कारणमेतदप्यस्ति यद् सूत्रेष्वपि तादृशी पुनरुक्तता वर्तते । अस्मिन् सन्दर्भे सूत्रभाष्यवार्ति-

कलक्षणानामप्युल्लेखः अपि आवश्यकः प्रतीयते । तद्यथा -

सूत्रम् - " अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।।"

भाष्यम्- " सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।।"

वार्तिकम्- " उक्तानुक्तद्विरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहः वार्तिकज्ञा मनीषिणः ।।"

उपर्युक्तप्रकारेण टीकाग्रन्थस्य तथा वार्तिकग्रन्थस्यान्तरः भवति। किन्तु वाचस्पतिमिश्रेण रचिता भामतीटीका टीका सत्यपि वार्तिकवदपि नैकेषु स्थलेषु प्रतीयते । अतः केचिदालोचकाः भामत्याः टीकात्वमाक्षिपन्ति । वाचस्पतिना भाष्यस्य द्विरुक्तीनां परिहाराय कथं चिन्ता कृता द्विरुक्तचिन्तनं वार्तिकस्य क्षेत्रं न तु टीकायाः । अस्मिन्सन्दर्भे कल्पतरुकारस्य निम्नलिखितं कथनमवधेयमस्ति - " ननु टीकायां द्विरुक्तिचिन्ता न युक्ता , वार्तिकेऽपि सा भवति , तर्हि वार्तिकमस्तु , न हि वार्तिकस्य शाङ्गमस्ति । अत एवानन्दमयाधिकरणे मन्त्रवार्णिकसूत्रे आरम्भणाधिकरणे च भावे चोपलब्धेरिति सूत्रभाष्यमपेक्ष्य व्याख्यां चकार[59] अत्रैतज्ज्ञातव्यं वर्तते यद् वाचस्पति यत्र यत्र भाष्यव्यतिरिक्तमनुक्तवाक्यान्यपि प्रदर्शयति । तद्यथा - " आनन्दमयाधिकरणस्य " मान्त्रवार्णिकमेव च गीयते "।[60] इत्यस्य सूत्रस्य भाष्ये भाष्यकारः " सत्यं ज्ञानमनन्तं ब्रह्म (तै॰ 2·1) इति मन्त्रं मन्त्रवर्णपदेन निर्दिश्य तद्द्वारा प्रतिपादितस्य ब्रह्मणः एकवाक्यताम् " अन्यो अन्तरात्मा " (तै॰ 2-5) इति ब्राह्मणवाक्ये

प्रदर्शितेन ब्रह्मणा सह दर्शयित्वा सिद्धान्तं समर्थयति ।

किन्तु वाचस्पतिमिश्र: मन्त्रवर्णपदं गौणार्थे स्वीकृत्य " अन्ये ~~वसा~~ अन्तरात्मा " इत्यादि ब्राह्मणवाक्यमपि मन्त्रपदेन गृह्णाति तथा प्रतिपादितमानन्दरूपं वस्तु अपि मन्त्रवर्णिकमिति मनुते । वाचस्पतिद्वारा निर्दिष्टमार्गस्य परित्यागस्य कारणं किमिति कल्पतरुकार: एवं वदति - " भाष्यकृद्भि: सत्यंज्ञानमनन्तमिति मन्त्रप्रस्तुतं ब्रह्म , आनन्दमयवाक्ये निर्दिश्यते , प्रकृतत्वादसम्बद्धापदव्यवायाभावश्चेति विवृतम् । तत्रेतरेतरत्रार्थम् प्रत्यभिज्ञानाभावात् मन्त्रब्राह्मणयोर्व्याख्यानव्याख्येयभावस्याविशदत्वात् प्रकारान्तरेण सूत्रं व्याचष्टे । ---------यथा मन्त्र: प्रयोगोपाय: एवं कोशचतुष्कवाक्यमानन्दमयब्रह्मप्रतिपत्त्युपायस्य देहादिव्यतिरेकस्य समर्पकत्वात् गौण्या वृत्या मन्त्र उच्यते ।[61]

अथाद्भाष्यकारस्याशय: इदं वर्तते यद् " सत्यंज्ञानमनन्तं ब्रह्म" इति मन्त्रे निर्दिष्टं ब्रह्मैव " अन्योऽन्तरात्मा " आदि वाक्येषु व्याख्यायते । किन्त्वत्र प्रत्यभिज्ञानार्थस्यानुक्तत्वादुभयोरेकवाक्यता न सम्भवति । अत: वाचस्पतिमिश्र:'मान्त्रवर्णिकमेव च गीयते' इति सूत्रस्य व्याख्यानं प्रस्तूयते । तद्यथा- " अपि च मन्त्रब्राह्मणयोरुपेयोपायभूतयो: संप्रतिपत्तेर्ब्रह्मैवानन्दमयपदार्थ: । मन्त्रे हि पुन: पुन: अन्योऽन्तरात्मेति परब्रह्मण्यन्तरश्रवणात् , तस्यैव च अन्योऽन्तरात्मानन्दमय इति ब्राह्मणे प्रत्यभिज्ञानात् परं ब्रह्मैवानन्दमयमित्याह सत्रकार: ----। मान्त्रवर्णिकमेव परं ब्रह्म ब्राह्मणेऽप्यानन्दमय इति गीयत इति ।[62] अथार्त् यथा मन्त्र: कर्मानुष्ठानकाले व्यापृतो भवति तथा अन्योऽन्तरात्मा इति ब्राहम्णवाक्यमपि

प्रधानप्रतिपाद्यस्य परब्रह्मब्रह्मण: समर्पकत्वात् मन्त्रेत्युच्यते । अत: अस्मिन् वाक्ये उपात्तौ विज्ञानमयादिशब्दैरपि परब्रह्म एव निर्दिष्टम् ।

इत्थं च भाष्यसंयोजिकया किंचिद्दूरमपसृत्य वाचस्पतिमिश्र: सूत्रार्थस्य समन्वयं स्वकीयेन प्रकारेण कृतवान् यदनुक्तार्थप्रतिपादनमिति कथ्यते । एतदपि वार्तिकस्यैव लक्षणमस्ति । इत्थं चानुक्तार्थप्रदर्शनस्य निर्देशास्थलान्तरेपि कृतो वर्तते । "भावे चोपलब्धे" (2·1·16) इति सूत्रस्य भाष्यपंक्त्या एतत्प्रकाशितं भवति यत् ते नैयायिकवत् कार्यकारणभावसमर्थकमन्वयव्यतिरेकं प्रदर्श्य प्रकृते कार्यकारणयोरभेदं साधयितुं वाञ्छन्ति । अत एव भाष्यकारोऽप्युक्तवान् इतश्च कारणादनन्यत्वं कार्यस्य । अथादिपर्युक्तयुक्त्याधारेणापि कार्येण कारणस्याभेद: समर्थयितुं शक्यते अर्थात् कारणस्य भावे उपलब्धे सति कार्यस्य भावोऽपि समुपलभ्यते ।

यथा नैयायिका: कथयन्ति, 'तत्सत्वे तत्सत्त्वमन्वय: तदभावे तदभावो व्यतिरेक' इति अन्वयव्यातिरेकौ द्वयो: पदार्थयो: उपलभ्येते तत्र कार्यकारणभावो भवति यथा तन्तुपटयोरिति । यतो हि तन्तुसत्वे पटसत्ता तन्त्वाभावे पटाभावो दृश्यते । अत: तन्तु: कारणं भवति पटं च कार्यम् भवति । "भावे चोपलब्धे:" एतस्य सूत्रस्याप्ययमेवार्थो प्रतीयते यत् कारणस्य सद्भाव एव कार्योपलब्धि: जायते । अत: कारणादभिन्नं भवति कार्यम् ।

वाचस्पतिमिश्रेण यद्यपि शांकरभाष्यस्य व्याख्यानरूपेणैव भामती लिखिता तथापि नैकेषु स्थलेषु वाचस्पतेर्मतं भगवत्पादशांकराचार्यस्य मताद्भिन्नं प्रतीयते । एतादृशानां स्थलानां परिगणना पूर्णत: कर्तुमशक्या तथापि स्थालीपुलाकन्यायेन कानिचित्स्थलान्यत्र निर्दिश्यन्ते । "व्याप्तेश्च समंजसम्" 63अत्र

निर्दिश्यन्ते । 'व्याप्तेश्च समंजसम्'[63] इत्यस्य सूत्रस्य भाष्ये भगवता शांकराचार्येण ओमित्येतदक्षरमुद्गीतमुपासीत[64] एषा श्रुतिरुद्धृता । तथा चात्र श्रुतिस्थाक्षारोद्गीथबुद्धिारध्यस्यते उद्गीथे वा अक्षारेति एवमुक्तम् ।

वाचस्पति: प्रतीयमानस्य वस्तुन: सत्वं नाङ्गीकरोति । तदधिकृत्य स एवं वदति - " तथा सति मरुषु मरीचिचयमुच्चावचमुच्चलतुङ्गतरङ्गभङ्गमालयाभ्यवतीर्णमन्दाकिनीत्यभिसन्धाय प्रवृत्तस्तोयमपि पिपासामुपशामयेदिति।"[65] अर्थात्सत्तामात्रस्य सत्वमङ्गीकर्तुम् न शाक्यते । यत: मरीचितोय: सत्वरूपेण प्रतीयते किन्तु तेन दाहोपशाम: कर्तुम् न शाक्यते । अत: भामतीकारस्य मते प्रकाशमानत्वं सत्वमिति सिद्धान्त: अङ्गीकर्तुम् न शाक्यते ।

उदाहरणतया भाष्यकारेण भगवत्पादशांकराचार्येण प्रथमाध्याये 'अथातो ब्रह्मजिज्ञासा' इत्यस्य व्याख्यानात्पूर्वमेव यल्लक्षणं भवति तस्योल्लङ्घनं जायतेति भास्कराचार्यमाक्षिपति । भाष्यलक्षणं त्वेतत् -

" सूत्रस्थं पदमादाय वाक्यै: सूत्रानुसारिभि: ।

स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु: ।। इति ।

भाष्यं सूत्रानुसारी भवति इत्येतल्लक्षणं शांकरभाष्यस्यारम्भे न संघटते । यत: भगवत्पादेन शांकराचार्येण सूत्रमाश्रित्य भाष्यं न कृतमपि तु सम्बद्धां समस्यामध्यासविषयीमाश्रित्य भाष्यस्यारम्भ: कृत: । तस्याक्षेपस्योत्तरं वाचस्पतिमिश्रेण एवं प्रकारेण प्रदत्तं यत् " आत्मा विचारणीय: अस्ति , सन्दिग्धात्वात् । अत: अथातो ब्रह्मजिज्ञासा इत्यस्य सूत्रानुसारिण: व्याख्यानात्पूर्वमध्यासनिरूपणस्योपाधेयताऽस्तीति । एवंप्रकारेण सूत्रभाष्ययोर्मध्ये [redacted] वाचस्पतिना सामंज-

स्यमपि ~~स्थू~~ स्थापितम् ।

7.2.7 विशेषयोजकशब्दविधिसमाश्रयणम्

वाचस्पतिमिश्रस्य व्याख्याशैल्या: अन्यद्वैशिष्ट्यमिदमस्ति यत् स: भाष्यकारवचनानां स्पष्टीकरणार्थम् स्वकीयाभिमतस्य सन्निवेशार्थम् च स्थाने स्थाने विशेषयेजकशब्दानां सन्निवशं करोति । तद्यथा- अद्धा [66] एतदुक्तं भवति [67] तस्मात्सुष्ठूक्तं [68] इदमत्राकूतम् ,[69] अयमभिसन्धि:[70]

एतेषामेतादृशानामन्येषां शब्दानां वाक्यानां च प्रयोगं कृत्वा वाचस्पतिना एका नूतना शैली समाविष्कृता । स्वकीयकथनानां पुष्ट्यर्थम् विविधेभ्य: ग्रन्थेभ्य: उद्धारणानि गृहीत्वा भामत्यां समायोजितानि । तद्यथा -

" आभूतसंम्प्लवस्थानममृतत्वं हि भाष्यते "[71]

" अधीत्य विधिवद्वेदान् पुत्राश्चोत्पाद्य धर्मत: ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ।। "[72]

" पदावधारणोपायान् बहूनिच्छन्ति सूरय: ।
क्रमन्यूनातिरिक्तत्व स्वरवाक्यश्रुतिस्मृती ।। "[73]

" आगमाश्चेह भूयांसो भाष्यकारेण दर्शिता: ।
श्रुतिस्मृतिपुराख्यास्तत् व्याकोपोऽन्यथा भवेत् ।। "[74]

7.2.8 सारसंग्रहश्लोकविधिसमाश्रयणम्

वाचस्पति: स्वकथनानां सार्थम् अन्यग्रन्थेभ्यो उद्धृतानां तथा स्वरचितानां संग्रहश्लोकानां माध्यमेनापि प्रस्तौति । एतादृशा: केचन संग्रहश्लोका:

अत्र प्रस्तूयन्ते । तद्यथा -

(क) " स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ।।"[75]

(ख) " पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ।।"[76]

(ग) " प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ।।"[77]

(घ) " विवर्तस्तु प्रपंचोऽयं ब्रह्मणो अपरिणामिना ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ।।"[78]

(ङ) " ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मशब्दात्प्रतीयते ।
विशुद्धं ब्रह्म विकृतं त्वानन्दमयशब्दता ।।"[79]

(च) " प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्नुत्तरं पक्षे प्रायपाठस्य बाधनम् ।।"[80]

एतत्तु स्पष्टमेव वर्तते यत् इदृशानां श्लोकानां माध्यमेन वाचस्पतिना दर्शनशास्त्रेऽपि कवित्वमापादितम् भामत्याश्च स्पृहणीयता संवर्द्धिता ।

***********************

## सप्तमोऽध्याय:

### तृतीयो भाग:

7·3·। वेदान्तेतरप्रमुखभारतीयदर्शनेषु तथा भामतीप्रस्थाने चर्चितानां कतिपयसिद्धान्तानां पुनराकलनम्

आत्मन: नित्यत्वं सत्यत्वं चाद्वैतवेदान्तिभि: प्रतिपाद्यते । अस्मिन् सन्दर्भे वेदान्तमतस्य विरोध: सर्वतोऽधिकं चार्वाकमतेन सह वर्तते । चार्वाकाणामनुसारं देहव्यतिरिक्तस्यात्मनोऽस्तित्वं नास्ति । एवंच चैतन्यस्यापि तथैव भूतविकृतित्वमस्ति यथा किण्वादिषु सम्मील्य मतशक्तित्वं संजायते । यद्यप्यस्य मतस्य खण्डनं प्रायप्राय: सर्वैरेवास्तिकदर्शनै: कृतम् तथापि वाचस्पतिना भामत्यां येन प्रकारेण चार्वाकमतस्य निरसनं कृत्वा आत्मनाऽस्तित्वं साधितं , तस्याप्रतिमं वैशिष्ट्यमस्ति । वाचस्पतिमिश्रस्य कथनानां सार: अयमस्ति यद् चैतन्येच्छाद्वेषप्रभृतिगुणानाश्रित्य आत्माऽनुमातुं शक्यते , एवंप्रकारेण च देहव्यतिरिक्तस्यात्मनोऽस्तित्वं सिद्ध्यति ।

बौद्धदार्शनिकै: प्रवर्तितेषु सिद्धान्तेषु शून्यवादस्य , विज्ञानवादस्य , क्षणभङ्गवादस्य तथा प्रतीत्यसमुत्पादवादस्य समीक्षा भामत्यां विशेषरूपेण दृश्यते । भामतीपन्थिनामेतत्कथनमस्ति यद् , 'शून्यवादपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध: इति '। एवमवान्त:करणस्य चित्क्षणमतिरिच्य विज्ञानक्षणं किमपि नास्ति । अत: योगाचारनिर्दिष्टस्य विज्ञानस्य कूटस्थेनात्मना सह साम्यं स्वीकर्तुम् न शक्यते । 'नाभावोपलब्धे:' इत्यस्य सूत्रस्य व्याख्याने भगवता शंकराचार्येण शून्यवादविज्ञानवादयो: यन्निरसनं कृतं तत्र वाचस्पतेरपि सम्मतिरस्ति । तद्यथा-

" अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन् उपलब्धाुं क्षणिकतामभ्युपेयात् । न च सा सम्भवति । अनुस्मृतेः ।

सृष्टिप्रक्रियायाः सन्दर्भे बौद्धाः प्रतीत्यसमुत्पादवादमाश्रयन्ति। एषैव वादः संघातवाद इत्यभिधीयन्ते । बौद्धमतानुसारं कस्यापि कार्यस्यैकः हेतुः स्वीकर्तुम् न शक्यते । तत्र कारणद्वयं भवति । एकं कारणमस्ति हेतूपनिबन्धनरूपम्। यथाङ्कुरस्य कारणं बीजम् । द्वितीयं कारणमस्ति प्रत्ययोपनिबन्धनरूपं यथा बीजं प्रति मृत्तिकाजलउष्म-आकाशइत्येतेषां तत्वानां मिलित्वा कारणत्वम् । अस्मिन् सन्दर्भे वाचस्पतेः कथनमेतदस्ति यत् यावत्पर्यन्तं जडवर्गः क्रियाशीलो भवितुं न शक्नोति तावत्पर्यन्तं बौद्धाः चेतनस्यात्मनः सत्तां न स्वीकुर्वन्ति । अतस्तैः प्रवर्तितः प्रतीत्यसमुत्पादवादः स्वीकरणीयो नास्ति । यतः चैतन्यस्य सहयोगं विना जडाः पृथिव्यादिप्रत्ययाः कार्योत्पादने न समर्थाः न सन्ति ।

क्षणभङ्गनिरसने जैनदर्शनाद्वैतवेदान्तदर्शनयोः साम्यमस्ति । जैनदार्शनिकैः रत्नत्रयस्य मोक्षसाधनत्वं निर्दिष्टम् । रत्नत्रये च सम्यक् दर्शनं सम्यक्ज्ञानं सम्यक्चारित्र्यमित्येतेषामन्तर्भावः कृतः । सम्यक्दर्शनस्य प्रयोगः सम्यक्श्रद्धायाः कृते दृश्यते । अद्वैतवेदान्तिभिः मोक्षसाधनानां विषये यत् कथितं तस्य निरूपणमस्माभिः यथास्थाने कृतम् । अत्र तु संक्षेपतः इदं कथयितुं शक्यते यत् जैनदर्शनानुसारं मोक्षस्य प्रथमं साधनं भवति श्रद्धा । किन्तु भामतीप्रस्थानः श्रवणमननसहकृतनिदिध्यासनेन संस्कृतं मन एवात्मसाक्षात्कारे रणमिति मन्यन्ते ।

शारीरपरिमाणो जीव इत्यार्हदाः मन्यन्ते । किन्तु वाचस्पतिरे-

तन्न स्वीकरोति । तद्यथा - " शरीरपरिणामत्वे हि आत्मनो कृत्स्नत्वं परिच्छिन्नत्वं तथा चानित्यत्वं , ये हि परिच्छिन्नास्ते सर्वे नित्याः यथा घटादयः ।

स्याद्वादः जैनानां प्रमुखः सिद्धान्तः वर्तते । असावेव सप्तभङ्गीनयः इत्युच्यते । किन्तु भामतीप्रस्थानानुसारं सप्तभङ्गीनयः स्वीकरणीयः नास्ति । यतः एष सिद्धान्तः अनिश्चयात्मकं मोहमुत्पादयति । सप्तभङ्गीनये ~~अस्वी~~ अस्वीकृते सति चान्येऽपि जैनसिद्धान्ताः स्वत एव निरस्ताः संजायन्ते । " 'एकस्मिन्नसंभवात्' इत्यस्य सूत्रस्य भामत्यां वाचस्पतिः कथयति यद् " न हि एकस्मिन् धर्मिणि परमार्थं सति परमार्थसतां युगपत्सत्वादीनां धर्माणां परस्परपरिहारस्वरूपाणां समावेशः सम्भवति । " एवंप्रकारेण भामतीप्रस्थाने जैनसिद्धान्तानां यन्निरसनं दृश्यते तत्समुचितमेवास्तीति मम मतम् ।

न्यायवैशेषिकदर्शनयोः ये सिद्धान्ताः सन्ति तेषु नैकेषां खण्डनमद्वैतवेदान्ते विशेषतः दृश्यते । परमाणुकारणतावादस्य पूर्वपक्षरूपेणोपक्रमं कृत्वा वाचस्पतिमिश्रः तस्य खण्डनमेवंप्रकारेण करोति -" कारणगताः गुणाः न कार्ये समानजातीयं गुणान्तरमारभन्ते इत्येतावदेवेष्टसिद्धौ न तद्हेतुहत्वनुसरणे खेदनीयं मनः । अचेतनत्वात्परमाणवः अस्य जगतः उत्पत्तौ कथं समर्थाः स्युः? परमाणुषु प्रथमसंयोगस्यक कृते यदि स्वाभाविकी गतिशीलता स्वीक्रियते तर्हि तेषु गतिहीनता प्रलयकालेऽपि न स्याद् । अतः न्यायवैशेषिकप्रवर्तितः परमाणुवादः समीचीनो नास्तीति भामतीपथन्थनामाशयः ।

नैयायिकैः ज्ञानाधिकरणमात्मा इत्युच्यते । किन्तु अद्वैतवेदान्ति

न्तिन: आत्मन: ज्ञानस्य चैक्यं स्वीकुर्वन्ति । एवंप्रकारेणात्मनो विषये पि न्याय-वैशेषिकमतेन सहाद्वैतवेदान्तिमतस्य वैषम्यं दृश्यते ।

न्यायवैशेषिकदर्शनयो: सामान्यस्य जातेर्वा स्तित्वं स्वीक्रियते । किन्त्वद्वैतवेदान्तिन: जातेर्सामान्यस्य वा स्तित्वं न स्वीकुर्वन्ति । किन्तु भामती-पन्थिभिरनुगतधर्म: स्वीक्रियते । अनुगतधर्मस्तु मम मतानुसारं प्रकारान्तरेण जाति-रेव वर्तते । अत: अस्मिन् विषये नैयायिकानां मतमेवाधिकं ग्राह्यमिति प्रतीयते । प्रमाणानां विषये तथा प्रमाया: निरूपणे पि भामतीपन्थिनां न्यायवैशेषिक-मतेन सह विरोध: वर्तते । यद्यपि वाचस्पति: तत्वाच्छेद: प्रमेत्येवंप्रकारेण प्रमाया: लक्षणं कृतवान् तथापि प्रमाया: लक्षणे अनधिगतत्वस्य य: समावेश: अद्वैत-वेदान्तिभि: क्रियते स: न्यायवैशेषिकदृष्ट्या समीचीनो नास्ति । यत: धारावा-हिकज्ञानेष्वेतल्लक्षणं न संघटते । वैशेषिके प्रमाणद्वयमेव स्वीक्रियते । न्याये च प्रमाणचतुष्टयम् । किन्तु भामतीप्रस्थाने षट्प्रमाणानि स्वीक्रियन्ते । अपि च न्यायवैशेषिकदर्शनयो: प्रमाण्यस्य परपरत्वं निरूप्यते । किन्तु भामतीपन्थिन: स्वत:प्रमाण्यवादं स्वीकुर्वन्ति । एवं प्रकारेण न्यायवैशेषिकदर्शनाभ्यां सहाद्वैत-वेदान्तस्य यद्वैषम्यं वर्तते तस्य निरूपणं भामतीपन्थिभि: सम्यग्रूपेण कृतम् ।

सांख्याप्रवर्तित: सत्कार्यवाद: भामतीपन्थिभिरपि न स्वी-क्रियते यत: भामतीपन्थिनां मतानुसारं कार्यकारणयोरभेद: । कारणमेव कार्य-रूपेण प्रकाशते । कारणव्यतिरेकेण कार्यस्याभाव: । कार्यकारणयोर्मध्ये कारणं सत्यम् कार्यम् त्वाभासमात्रम् । कारणद्भिन्नत्वे सति तस्यानृतत्वम् । एवंप्रकारेण यद्यपि कारणस्य सत्यत्वमद्वैतवेदान्तिन: अपि स्वीकुर्वन्ति । तथाहि भामत्यां

वाचस्पतिमिश्रः – " वाचया केवलमारभ्यते न विकारजातं न तु तत्वतोऽस्ति । यतो नामधेयमात्रमेतत् ।

सांख्यास्तु कारणस्यैव कार्यस्यापि सत्यत्वं स्वीकुर्वन्ति । सांख्यानां मतानुसारं त्रिगुणमचेतनं प्रधानमेव जगतः कारणम् । किन्तु अद्वैतवेदान्तिनां मतानुसारं ब्रह्म एव जगदुत्पत्तिस्थितिविनाशकारणम् । सांख्यमतानुसारं पुरुषातिरिक्तं प्रकृतिरपि परमं तत्वं वर्तते । किन्तु भामतीपन्थिनस्तु ब्रह्म एव परमं तत्वमिति स्वीकुर्वन्ति । सांख्याः परिणामवादमाश्रयन्ति , वेदान्तिनस्तु विवर्तवादं स्वीकुर्वन्ति । एवंप्रकारेण सांख्ययोगदर्शनाभ्यां सहाद्वैतवेदान्तस्य यत्पार्थक्यं भामतीपन्थिभिः निर्दिष्टं तत् महत्वपूर्णमस्ति ।

मीमांसादर्शनेन सहाद्वैतवेदान्तिनामनेकेषु विषयेषु मतैक्यमस्ति । किन्तु सन्त्यत्रैतादृशा अपि विषयाः येषु उभयोर्दर्शनयोर्मतभेदः अस्ति । तद्यथा- मीमांसकाः वेदान्तवाक्यानामुपयोगित्वं प्रतिपत्तिविधेरङ्गत्वेन निरूपयन्ति । किन्तु वेदान्तिभिरेतन्न स्वीक्रियते । मीमांसकानां कथनस्य सारमयमस्ति यत् वेदान्तवाक्यानामात्मस्वरूपबोधकत्वं न , अपि तु आत्मज्ञानविधिविषयककार्यपरकत्वमस्तीति । तद्यथा – " सिद्धब्रह्मविषयकवेदान्तवाक्यानां श्रवणात्संसारनिवृत्तिमोक्षप्राप्तिपरकं प्रयोजनं सिद्ध्यत्येवेत्यनुभवसिद्धम् । अतः वेदान्तवाक्यानां हितसाधनत्वरूपं शास्त्रत्वं स्वतः स्पष्टम् । भामतीपन्थिभिः वेदान्तवाक्यानां विध्येकवाक्यतापि नाङ्गीकृता , यतः अर्थवादवाक्येषु प्रयोजनाकाङ्क्षा भवति । किन्तु वेदान्तवाक्येषु मोक्षरूपप्रयोजनं स्वतःसिद्धमस्ति । एवंप्रकारेणार्थवादवाक्यानां तथा वेदान्तवाक्यानां मध्ये भेदो वर्तते ।

उपर्युक्तप्रकारेण वदान्तेतरदर्शनेषु ये केचन प्रमुखाः सिद्धान्ताः

प्रतिपादिता: दृश्यन्ते तेषां तुलनायां भामतीप्रस्थानप्रतिपादितानां सिद्धा-न्तानां वैशिष्ट्यं स्वत: स्पष्टं वर्तते ।

7.3.2 वेदान्तपरम्परायाः सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम्

वेदान्तस्य परम्परा महती वर्तते । तस्याः इतिहासः सोपानत्रये विभक्तुं शक्यते । तद्यथा शांकराचार्यपूर्ववर्तिनी वेदान्तपरम्परा, शांकराचार्य-समकालिकी वेदान्तपरम्परा, शांकराचार्योत्तरवर्तिनी वेदान्तपरम्परा ।

प्रथमा परम्परा आर्षवेदान्त इत्यनेन नाम्नापि प्रथिता वर्तते । यद्यप्यार्षवेदान्ताचार्याणामितिहासः पूर्णतया नोपलभ्यते तथापि बादरायणस्य सूत्रेषु तथा भाष्यप्रभृतिग्रन्थेषु तेषामाचार्याणां नामानि दृश्यन्ते । तैः प्रवर्तितानां सिद्धान्तानामपि परिचयः सूत्रभाष्यादिग्रन्थेभ्यः प्राप्तुं शक्यते । वस्तुतः अद्वैतवेदान्तस्य परम्परायाः प्रवर्तकः गौडपादाचार्यएव न अपितु तस्य पूर्व-वर्तिनः अनेके आचार्याः आसन् । बादरेः निर्विशेषाद्वैतवादः, जैमिनेः निर्विशे-षब्रह्माद्वैतवादः तथा भर्तृहरेः शब्दाद्वैतवादः अस्मिन् सन्दर्भे विशेषरूपेण निर्देष्टुं शक्यन्ते । प्रकारान्तरेणैतत्कथयितुं शक्यते यदुपर्युक्तानामाचार्याणामुप-युक्तेषु वादेषु अद्वैतवादस्य तत्त्वानि निहितानि सन्ति । एतेषामेव पुनराकलनम-द्वैतवेदान्ते दृश्यते । एवंप्रकारेण यद्यपि गौडपादाचार्यः शांकरवेदान्तपरम्परायाः प्रथमः आचार्यः स्वीकर्तुम् शक्यते तथापि पूर्ववर्ति आर्षवेदान्त्याचार्याणामुपेक्षा कर्तुम् न शक्यते ।

अस्मिन् सन्दर्भे वाचस्पतिमिश्रस्य निम्नलिखितानि कथनानि

विशेषतः द्रष्टव्यानि सन्ति ।

(क) अयं बादरिः तत्वदर्शी इति । वाचस्पतेरस्य कथनस्याधारः निम्नलिखितं भाष्यवाक्यमस्ति । 'तत्र कार्यमेव सगुणमपरं ब्रह्मेनान् गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः अस्य गत्युपपत्तेः । अस्य हि कार्यब्रह्मणोर्गन्तव्यत्वमुपपद्यते, प्रदेशकत्वात्, न तु परस्मिन् ब्रह्मणि गन्तृत्वं, गन्तव्यत्वम्, गतिर्वा अवकल्पते, सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तृणाम् ।" 4।

सूत्रभाष्यादिपर्यालोचनेनैतज्ज्ञायते यत् काशकृत्स्नस्य निर्विशेषब्रह्माद्वैतवादः अद्वैतवादेन सह साम्यं धारयति । भामतीकारो पि काशकृत्स्नीयं मतं साधुत्वेन निर्धारयति । यद्यपि ब्रह्मसूत्रस्य दहराधिकरणे भागवता शंकरेण भर्तृहरिप्रवर्तितस्य शब्दाद्वैतवादस्य खण्डनं कृतं तथापि स्फोटवादमाश्रित्यैवोभयोर्दर्शनयोर्मतभेदो वर्तते । न तु ब्रह्मणः एकत्वमाश्रित्य । अत एतत्स्वीकर्तुम् शक्यते यत् शांकराद्वैतवादः भर्तृहरेः शब्दाद्वैतवादेन सह वैषम्ये सत्यपि किंचित्साम्यं धारयतीति मदीया धारणा । अद्वैतवेदान्तपरम्परायां गौडपादस्य महत्वं सर्वैः स्वीक्रियते । गौडपादाचार्यस्य माण्डूक्यकारिका द्वैतवेदान्तस्य प्रमुखः ग्रन्थो वर्तते । शांकराचार्येण गौडपादस्योल्लेखः सम्प्रदायविद्भिराचार्यैः तथा सम्प्रदायविदः इत्येवंप्रकारेण कृतः ।

शांकरादारभ्यायन्नदीक्षितपर्यन्तं शांकराद्वैतपरम्परायामनेके आचार्याः अभवन् । तेषु आभासवादप्रवर्तकः सुरेश्वराचार्यः, अवच्छेदवादप्रवर्तकः वाचस्पतिमिश्रः, प्रतिबिम्बवादप्रवर्तकः प्रकाशात्मयतिश्च प्रमुख्यं भजन्ते । यतः एतैः प्रवर्तितेषु प्रस्थानेष्वेवाद्वैतपरम्परायाः विकासः संजातः । भामती -

प्रस्थानस्य सम्यगाकलनाय एतेषां सर्वेषामाचार्याणां ये सिद्धान्ताः सन्ति तेषामपि स्वरूपपरिचयः आवश्यक इति कृत्वा मया यथास्थानं तेषामुल्लेखः कृतः ।

वैष्णववेदान्तपरम्परायामप्यनेके एतादृशाः आचार्याः अभवन् । एषां प्रभावः भारतीयचिन्तनपरम्परायां विशेषरूपेण दृश्यते । विशिष्टाद्वैतवादप्रवर्तकः रामानुजाचार्यः, द्वैतवादप्रवर्तकः मध्वाचार्यः, द्वैताद्वैतवादप्रवर्तकः निम्बार्काचार्यः, शुद्धाद्वैतवादप्रवर्तकः वल्लभाचार्यः, चिन्त्याचिन्त्यभेदवादप्रवर्तकः चैतन्यमहाप्रभुः अस्मिन्सन्दर्भे विशेषतः उल्लेखनीयाः वर्तन्ते । वस्तुतः भारतीयजनसमाजे एतेषामाचार्याणां प्रभावः अद्वैतवादादधिकं दृश्यते । दार्शनिकचिन्तनेपि एतेषां विचाराः अत्यधिकं महत्वं धारयन्ति । एतदेव कारणं यत् भामतीप्रस्थानेन सह एतेषां साक्षात्सम्बन्धाभावे पि एतेषां सिद्धान्तानामावश्यकताऽस्ति इति मत्वा मयाऽत्र व्यवहृतम् ।

अद्वैतवेदान्तस्याधारः प्रस्थानत्रयी वर्तते । श्रुतिप्रस्थानं, स्मृतिप्रस्थानं, न्यायप्रस्थानं च । श्रुतिप्रस्थाने उपनिषदां न्यायप्रस्थाने ब्रह्मसूत्रस्य तथा स्मृतिप्रस्थाने भगवद्गीतायाः समावेशः भवति । शांकरवेदान्तस्याधारः अपि प्रस्थानत्रयैव वर्तते । किन्तु शांकरवेदान्ते वार्तिकप्रस्थान-भामतीप्रस्थान-विवरणप्रस्थानादीनां यः विकासः संजातः सोऽपि महत्वं धारयति । मम मतमेतदस्ति यत् वार्तिकप्रस्थानस्याधारः प्रमुखरूपेण श्रुतिप्रस्थानमस्ति । विवरणप्रस्थान-भामतीप्रस्थानयोराधारः प्रमुखतया न्यायप्रस्थानमस्ति ।

~~7-3-3 वार्तिकप्रभृतिप्रस्थानानां सन्दर्भे भामतीप्रस्थानस्य पुनरोकलनम्~~

3

## 7.3.3 वार्तिकप्रभृतिप्रस्थानानां सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम्

सुरेश्वराचार्यप्रवर्तितं वार्तिकप्रस्थानं स्वीयं विशिष्टं महत्त्वं धारयति । बन्ति वार्तिकप्रस्थानस्य प्रमुखानां सिद्धान्तानां सारोयमस्ति ज्ञानस्याभाव एवाविद्या। अविद्यायाः आश्रयः विषयश्चैक एव । तच्च ब्रह्म । अविद्याप्येका । ईश्वरः चिदाभासः । जीवोप्याभासरूपः । जीवोऽप्येक एव । जीस्यावस्थाभेदास्सन्ति । न तु स्वरूपभेदाः । जगतोऽवस्थात्रयं -जाग्रत्स्वप्नसुषुप्तिरूपेण । बन्धस्य कारणमविद्या मोक्षसाधने च कर्मणामनुपयोगित्वम् ।

सुरेश्वराचार्यस्योपर्युक्तानां सिद्धान्तानां खण्डनं वाचस्पतिना भामत्यां कृतम् । वाचस्पतिमिश्रः प्रतिजीवमविद्यायाः पृथक्त्वं स्वीकरोति । अतः सः अविद्यायाः नानात्वं तथा भावरूपत्वं स्वीकरोति । तस्य मतानुसारमभावाद्भावस्य (संसारस्य) उत्पत्तिः स्वीकर्तुम् न शक्यते । भावरूपमेव वस्तु अन्यस्य वस्तुनः आधारत्वेन स्वीकरणीया भवति । प्रलयावस्थायां च अविद्यैव प्रपंचस्याधारः । अतः सा भावरूपा । अस्मिंन् सन्दर्भे कल्पतरुकारस्यामलानन्दस्य निम्नलिखितं कथनमप्यवधेयं वर्तते - " भ्रमात्संस्कारतश्चान्या मण्डूकमुदाहृते: ।
भावरूपमविद्या स्फुटं वाचस्पतेरिह ।।" 82

वाचस्पतेर्मतानुसारमविद्यायाः आश्रयः जीवः विषयश्च ब्रह्म । एष जीवः ब्रह्मणः आभासो न, अपि तु अवच्छेदः वर्तते । कर्मणां विध्यर्थकत्वमपि वाचस्पतिना न स्वीकृतम् । स तु कर्मणां विविदिषार्थत्वं स्वीकरोति । एवंप्रकारेणैतत्स्पष्टं ज्ञायते यत् सुरेश्वराचार्यप्रवर्तिताः सिद्धान्ताः भामतीपन्थिनामनुसारं स्वीकरणीयाः न सन्ति।।

भास्कराचार्येण शंकराचार्यस्य मतं खण्डयित्वा भेदाभेदवादस्य स्थापना कृता । शंकराचार्यस्य मायावादोऽप्यनेन निराकृत: तथा ज्ञानकर्मसमुच्चयवाद: समर्थित: । भास्कराचार्येण भगवत्पादसम्मतमविद्याध्यासयोरैक्यं तथा लोकव्यवहारस्याविद्याकृतत्वमपि नाङ्गीकृतम् । भास्करस्य मतानुसारं - जीवस्य वस्तुभूतस्य देहादिष्वात्मसु विपरीतज्ञानं , ब्रह्मस्वरूपाप्रतिपत्तिश्च ,तदुभयं ग्रहणाग्रहणमविद्या । सा तत्वमस्यादिश्रवणजन्यया विद्यया निवर्तते ।" [83]अविद्याया: अनिर्वचनीयत्वमपि भास्करेण न स्वीकृतम् । तद्यथा - "यस्या: कार्यमिदं कृत्स्नं व्यवहाराय कल्पते ।

निर्वक्तुं सा शक्येति वचनं वचनार्थकम् ".[84]

प्रपंचस्य मिथ्यात्वविषये भास्कराचार्यस्य निम्नलिखितं वचनं द्रष्टव्यं वर्तते -" न च पुरुषापेक्षाया मिथ्यात्वं सत्यत्वं वा प्रपंचस्य कल्पयितुं शक्यम् । मुमुक्षून् प्रति मिथ्या, इतरान्प्रति सत्यमिति । नहि रूपमन्धान् प्रत्यसत्यमितरान्प्रति सत्यमिति वक्तुं शक्यम् । नहि पुरुषस्य भावानुरोधिनोभावा: , येन तदपेक्षाया सत्यत्वम् , असत्यत्वं वा भजेरन् ।"

वाचस्पते: कथनानुसारं ब्रह्मणस्तु इयमविद्याशक्ति: मायादिशब्द - वाच्या न शक्या तत्वेनान्यत्वेन वा निर्वक्तुम् । इदमेवास्या व्यक्तत्वं यदनिर्वाच्यत्वं नाम । अविद्याध्यासयो: पर्यायत्वं तथा विवेकाग्रहस्य मिथ्याज्ञानत्वं निरूप्य वाचस्पतिनैतदपि प्रतिपादितं यन्मिथ्याप्रत्यये योऽध्यासो भवति सोऽप्यनिर्वचनीयोऽस्ति ।

भास्कराचार्य: परिणामवादं स्वीकरोति । तस्य मतानुसारं जगत् ब्रह्मण: परिणाम: तथा कार्यकारणयोरुभयोरपि सत्यत्वं भेदाभेदश्च वर्तते ।

तद्यथा- कार्यकारणयोरत्यन्तं भेद: , कारणं मृत्पिण्ड: , शरावादिकार्यम् ~~भेदेनं~~ भेदेनोपलभ्यते कार्यस्य च उदकाहरणादि कार्यम् , न मृत्पिण्डस्य । अत: अनयोर्भेद: । अस्मिन्सन्दर्भे भास्कर: कथयति यत्सूत्रकार: श्रुत्यनुसारी परिणामपक्षं सूत्रयाम्बभूव । अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां समाश्रित: । तथा च वाक्यं परिणामस्तु दद्यात् इति[85] अस्य निराकरणं वाचस्पतिरेवं करोति -" इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेण , अपि तु यथा सर्पस्योपादानं रज्जु: एवं ब्रह्म जगदुपादानं द्रष्टव्यम्[86] ।

कार्यस्य मिथ्यात्वमपि भास्करेण न स्वीक्रियते । स कथयति यद्वागमादपि कार्यमिथ्यात्वस्य सिद्धिर्न भवति । तद्यथा - 'आगमात्प्रपंचस्य मिथ्यात्वमुच्यते , तदयुक्तम् । श्रोत्रप्रभावस्य ज्ञानस्य मिथ्यात्वात् । वर्णात्मकस्य तत्त्वमस्यादिवाक्यस्याभाव: । ततश्च केन मिथ्यात्वं प्रतिपद्येत ?---------'नेह नानास्ति' इत्यपि इहशब्दोपादानात्कारणस्वरूपे नानात्वं नास्तीति विवक्षातं स्थितम् । स्थित्यवस्थायां कार्यमप्यस्तीत्यविरोध:'[87] ।

वाचस्पतिरस्मिन्सन्दर्भे एतत्कथयति यत् - 'यथा रज्वज्ञान - सहिता रज्जूपादानाधारा रज्वां सत्यामस्ति रज्वामेव च लीयते । एवमविद्यासहित- ब्रह्मोपादानं जगत् ब्रह्मण्येवास्ति , तत्रैव च लीयतेति सिद्धम्'[88]

भास्कराचार्य: सत्कार्यवादस्य समर्थक: । तद्यथा - " सदेव कार्यम् कारणमेव हि तामवस्थां प्रतिपद्यमानं कार्यमिति गीयते । अवस्थातद्वतोश्च नात्यन्तभेद: । " नहि शुक्लपटयो: धर्मधर्मिणोरत्यन्तभेद:, किन्त्वेकमेव वस्तु ----- परमात्मा स्वयमात्मानं कार्यत्वेन परिणमयामास । शक्तिविक्षेप

कृतवान् ----- तथा च मन्त्रवर्ण: श्वेताश्वतराणाम् - ~~xxxxx~~

" न तस्य कार्यम् करणं च विद्यते स तत्समश्चाप्यधिकश्च दृश्यते ।
पराऽस्यशक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च ।। (श्वे॰ 6-8)

इति । अस्मिन्सन्दर्भे वाचस्पतिमिश्रस्यैतत्कथनं द्रष्टव्यं वर्तते - " कारणमेव विशेषावस्थान्तरमापद्यमानं कार्यम् ---- वस्तुत: कार्यत्वं न कारणाद्भिद्यते , कारणस्वरूपमेव हि तत् । अनिर्वाच्यं तु कार्यरूपं भिन्नमिवाभिन्नमिव च अवभासते ।

जीवस्य ब्रह्मणाभिन्नत्वेऽपि तयोर्मध्ये औपाधिको भेदोऽस्तीति भास्कराचार्यस्य विचार: । तद्यथा- " यथा च भग्ने घटे घटाकाशो महाकाश एव भवति दृष्टत्वात् । एवमत्रापीति । जीवपरयोश्च स्वाभाविकाभेद: । औपाधिकस्तु भेद: । स: तन्निवृत्तौ निवर्तते । ---- तत्वमसीति श्रुतेर्भिन्नाभिन्नो जीव: । स्वाभाविकं नित्यसिद्धं भिन्नं रूपम् , इतरदौपाधिकं रूपं प्रवाहनित्यमिति विवेक: । ------ जीवानां परस्परभेद एव परमात्मना चाभेद: फेनतरङ्गादीनामिव ।

एतस्य भास्करीयमतस्य निराकरणं वाचस्पतिनैवं क्रियते - " पर एव आत्मा देहेन्द्रियमनोबुद्ध्युपादिभिर्विच्छिद्यमानो बालै: शारीरं इत्युपचर्यते । अनाद्यविद्यावच्छेदलब्धजीवभाव: पर एवात्मा स्वतो भेदानवभासते । तादृशानां च जीवानामविद्या न तु निरुपाधिनो ब्रह्मण: । न च अविद्यायां सत्यां जीवात्मविभाग: । सति च जीवात्मविभागे तदाश्रयाविद्या इत्यन्योन्याश्रयविधिासाम्प्रतम् , अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात्।"

मुक्तेस्स्वरूपस्य विषये भास्कराचार्यस्य निम्नलिखितानि कथनानि अवधेयानि सन्ति । - " न भेदज्ञाननिवृत्ति: , किं तर्हि शरीरादावनात्मन्यात्म-

बुद्धिनिवृत्तिः । ------ तन्निवृत्तौ शरीरपातादनन्तरं सर्वज्ञः सर्वशक्तिः---- निरतिशयसुखासंवेदी मुक्तो भवति।"[89] ---- द्विधा मुक्तिः जीवदवस्थायां रागद्वेषमोहैः तदङ्गैश्च महदादिभिर्विमुक्तिः । पातोत्तरकालमात्यन्तिकीति [90] ------ द्विधा मुक्तिः सद्योमुक्तिः क्रममुक्तिश्चेति । ये साक्षात्ब्रह्मैवोपासते सद्य एव मुच्येरन्, इतरे तु हिरण्यगर्भम् प्राप्य शुद्धान्तःकरणाः तत्रै ज्ञानप्रकर्षमासाद्य छायातपयोरिव ब्रह्मलोकेति विविक्तबोधोत्पत्तिसंकीर्तनात्तेन सह मुच्येरन्।[91] एवंप्रकारेण भास्कराचार्यः जीवन्मुक्तेर्निराकरणं करोति ।

वाचस्पतिमिश्रस्तु जीवन्मुक्तिं समर्थयति । एतदस्माभिः यथास्थानं पूर्वमेव सुस्पष्टं व्याख्यातम् । भास्कराचार्यः शांकरभाष्यस्य खण्डनाय स्वकीयं भाष्यं प्रणिनाय इत्येतत्तु तेन स्वयमपि भाष्यारम्भश्लोके स्पष्टीकृतम् । तद्यथा-

" सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ।।"

वाचस्पतिमिश्रेण भामत्यां भास्करमतस्य खण्डनं कृतम् । शांकरस्य कथनेषु ये आक्षेपाः भास्करेण कृताः तेषामपि निराकरणं कृतम् । उदाहरणतया अक्षरमम्बरान्तधृतेः ब्र॰सू॰(1-3-10) अस्य सूत्रस्य भाष्ये भास्करः कथयति -

" केचिदक्षरशब्दस्य वर्णे प्रसिद्धत्वात् अक्षरमोङ्कार इति पूर्वपक्षयन्ति ------ तदेतदधिकरणेनासंबद्धम् । वाचस्पतिमिश्रः भास्करीयकथनस्य खण्डनमेवं करोति-

" ~~बस्त्र~~ ये तु प्रधानं पूर्वपक्षयित्वानेन सूत्रेण परमात्मैवाक्षरमिति सिद्धान्तयन्ति, तैरम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियेतेति वाच्यम् ---- तस्माद्वर्णाक्षरता निराक्रियैवास्यादित्यर्थः।[92] जीवेश्वरयोर्भेदाभेदमुपपादयन् भास्करः कथयति -

" ननु भेदाभेदौ कथं परस्परविरुद्धौ सम्भवेताम् नैष दोषः -

" प्रमाणतश्चेत्प्रतीयते को विरोधोऽयमुच्यते ।
विरोधो चाविरोधो च प्रमाणं कारणं मतम् ।।"

अस्मिन्सन्दर्भे वाचस्पतिरेवं कथयति - " यदि जीवपरमात्मनोर्भेदाभेदाववस्थीयातां ततस्तयोर्मिथोविरोधात्समुच्चयाभावादेकस्य बलीयस्त्वे नात्मनि निरपवादं विज्ञानं जायेत । बलीयसा एकेन दुर्बलपक्षावलम्बिनो ज्ञानस्य बाधात् । अथ तु अगृह्यमाण-विशेषतया न बलाबलावधारणं ततः संशये सति न सुनिश्चितार्थमात्मनि ज्ञानं भवेत् । सुनिश्चितार्थज्ञानं च मोक्षोपायः । श्रूयते , 'वेदान्तविज्ञानसुनिश्चितार्थाः[93] इति । अत्र परिमलकारः एवं कथयति - " भास्करग्रन्थेषु विरुद्धयोरपि सम-बलयोरपि भेदाभेदयोरसंस्कारोपपादनं कृतम् । भेदो घटशरावादिकार्यात्मना । अभेदस्तावदनुवृत्तमृदादिकारणात्मनेति । तन्निरस्यति भेदाभेदाव्यवस्था चेति । कल्पतरुकारः अमलानन्दः कथयति । तद्यथा -

" भेदाभेदव्यवस्था चेद्धिंसा विधिनिषेधवत् ।
कार्यकारणयोस्तर्हि नैकवस्तो भिदाभिदे ।।"

तथा च " सामानाधिकरण्यं यद्धेमकुण्डलकं न तत् ।
भेदाभेदावगाहीति प्राक्वाचस्पतिनेरितम् ।।"

भास्करस्यैतत्कथनमस्ति यज्जीवः इश्वरस्यांशः " तदंशो जीवोऽस्ति " । वाचस्पति-रस्य खण्डनमेवं करोति - " ये तु काशकृत्स्नीयं मतमास्थाय जीवं परमात्मनोरंश-माचख्युः तेषां कथं निष्कलं निष्क्रियं शान्तमिति न श्रुतिविरोधः[94]"

उपर्युक्तप्रकारेणैतत्स्पष्टं भवति यत् भास्कराचार्यः भेदाभेद-

वादस्य प्रतिपादनाय शांकरसिद्धान्तानां खण्डनं कृतवान् । किन्तु वाचस्पतिमिश्रः भास्करीयकथनानां निरसनं कृत्वा शांकरमतं पोषयामास ।

विवरणप्रस्थानस्य मूलभूतानि तत्वानि पंचपादिकायामुपलभ्यन्ते । किन्त्वस्य प्रस्थानत्वेन निरूपणं प्रकाशात्मयतिकृतायां टीकायां समुपलभ्यते । एतत्प्रस्थानमपि शांकरभाष्यमाश्रित्य प्रचलति । किन्तु शारीरकभाष्यस्य व्याख्यानेषु मतभेदाः संजाताः । विवरणप्रस्थानस्याचार्यैः शारीरकभाष्यस्य व्याख्याने ये विशिष्टाः सिद्धान्ताः प्रवर्तिताः तेषु प्रतिबिम्बवादस्य प्राधान्यमस्ति । वस्तुतः यथा भामतीप्रस्थानावच्छेदवादयोरैक्यं तथैवास्ति स्थितिः विवरण - प्रस्थानप्रतिबिम्बवादयोरपि । 'एतदेवं [illegible] पण्डिता अविवेकेति मन्यन्ते, तद्विवेकेन च [illegible]

विवरणप्रस्थानस्य प्रमुखानां सिद्धान्तानां निरूपणमस्माभिः विस्तरेण तृतीयाध्याये कृतम् । तस्य सारोत्र सौकर्यार्थम् पुनरपि दीयते ।

भगवान् शंकराचार्यः अविद्याध्यासयोरेकत्वं निरूप्य माया-महासुप्ति-मिथ्याप्रत्यय-अव्यक्त-अव्याकृत-मोहप्रभृतिशब्दानां प्रयोगः पर्यायत्वेनकृतवान् । विवरणप्रस्थानेऽपि भाष्यवाक्यानामनुवादः दृश्यते । यद्यप्यनात्मसु देहादिषु अहमस्मीत्यात्मबुद्धिरविद्येत्युच्यते । तथाप्यविद्यायानिर्वाच्यत्वं विवरणप्रस्थानेऽपि स्वीक्रियते । तथाहि - " अव्यक्ता हि सा माया तत्वान्यत्वनिरूपणस्याशक्यत्वात् । विवरणप्रस्थानानुसारमविद्यायाःआश्रयः विषयश्च ब्रह्मैव । वस्तुतः विवरणमतानुयायिनः आश्रयविषययोर्मध्ये भेदस्यास्तित्वं न स्वीकुर्वन्ति । यथान्धकारः स्वाश्रयभूतप्रदेशस्यावरणं स्वयं करोति एवमेवाविद्यापि स्वाश्रयस्यावरणे समर्था वर्तते । विवरणाकारः मूलाविद्यायाः नानात्वमपि नाङ्गीकुर्वन्ति । तेषां मतानुसारं

मूलाऽविद्या एका एव विद्यते किन्तु तस्याः अवस्थाभेदाः वर्तन्ते । एतदेव कारणं यदविद्यायाः एकत्वेपि जीवानां पृथक् पृथक् बन्धमोक्षव्यवस्थायाः उपपादनं पृथक् पृथक् संजायते । ********

किन्त्वविद्यायाः अवस्थाभेदानां कल्पनायापेक्षया विद्यायाः भेद-स्वीकरणमेवाधिकं समीचीनमस्ति इति मदीयं मतम् । वस्तुतः विवरणप्रस्थान-भामतीप्रस्थानयोः जीवानां नानात्वस्योपपादनायाविद्यायाः नानात्वमपि स्वीक्रियते किंचिद्वैषम्येण सह ।

अन्येषु विषयेषु भामतीप्रस्थानविवरणप्रस्थानयोर्यद्वैषम्य-मस्ति तस्य निरूपणं मया विस्तरेण पूर्वमेव कृतम् । अत्र तु संक्षेपतः तस्य मतस्य पुनराकलनं संक्षेपेण क्रियते । तद्यथा -

| विवरणम् | भामती |
|---|---|
| 1. मायाशबलितं ब्रह्म जगत्कारणम् । | 1. ब्रह्मैव केवलं जगत्कारणम् । |
| 2. श्रवणादौ विधिः । | 2. श्रवणादौ न विधिः । |
| 3. अविद्याप्रतिबिम्बो जीवः । बिम्बभूतः ईश्वरः । | 3. अन्तःकरणावच्छिन्नं चैतन्यं जीवः । अनवच्छिन्नं चैतन्यमीश्वरः । |
| 4. अविद्याश्रयः ब्रह्म । | 4. अविद्याश्रयः जीवः । |
| 5. श्रुतिमात्रं प्रत्यक्षात्बलीयः । | 5. तात्पर्यवती श्रुतिः प्रत्यक्षात्बलीयसी । |
| 6. यज्ञादिकर्मणां वदने उपयोगः । | 6. यज्ञादिकर्मणां वेदनेच्छायामुपयोगः |
| 7. ब्रह्मसाक्षात्कारे महावाक्यमेव करणम् । | 7. ब्रह्मसाक्षात्कारे मन एव करणम् |
| 8. [illegible] ब्रह्म न वृत्तिविषयः। | 8. शुद्धं ब्रह्म वृत्तिविषयः। 96 |

## 7.3.4 भामतीप्रस्थाने प्रतिपादितानां प्रमुखसिद्धान्तानां पुनराकलनम्

वाचस्पतिमिश्रस्य जीवनविषये प्राय: एतद् कथ्यते यत्तेन युवावस्थायां स्वकीयाा धर्मपत्नी भामती साधारणगृहस्थधर्मानुरूपेण व्यवहारेण सह न सम्भाविता । किन्तु भामतीग्रन्थस्य रचनाया: अवस्थाकाले रात्रिंदिवं तं सेवमाना नारी तस्य पत्नी अस्तीति ज्ञात्वा तेन स्वग्रन्थस्य नाम भामतीति कृतम् । किन्त्वस्मिन् विषये मम वैमत्यमस्ति । वाचस्पतिसदृश: पटुकरण: सर्वशास्त्रज्ञ: लोकव्यवहारनिपुण: पण्डितप्रवर: कथा स्वीयां पत्नीं तथोपेक्षितुं शक्नुयात् ? अत: मदीय: विचारोऽयमस्ति यद् वाचस्पतिमिश्रस्य पत्न्या सह तादृशं स्नेहाधिक्यमासीत् यत्तेन स्वकीयाया: चरमकृतेरभिधानं स्वकीयपत्न्या: नामानुरूपं कृतम् । प्रकारान्तरेणैतत्कथयितुं शक्यते यद् वाचस्पतिना स्वीया अन्तिमा कृति: स्वकीयां पत्नीं प्रति समर्पिता । अपि चैतदपि सम्भाव्यते यद् भामती तस्य पत्न्या: नाम न अपि तु निवासस्थानस्य नाम आसीत् । अथवा शांकरभाष्यस्याभाऽनया टीकया विस्तारिता । अत: अस्या: टीकाया: नाम वाचस्पतिना भामतीति कृतम् ।

एवंप्रकारेण मदीय: विचारोऽयमस्ति यद् वाचस्पतिमिश्रेणास्या: टीकाया: भामतीति नाम स्वपत्नीं प्रति उपेक्षादोषनिराकरणार्थम् न कृतमपि तु पत्नीं प्रति स्वकीयप्रेम्ण: अगाधताया: प्रकटनार्थम् कृतम् । अथवा स्वकीयस्य जन्मस्थानस्य प्रसिद्ध्यर्थम् कृतम् । अथवा टीकाया: अन्वर्थतां प्रतिपादयितुं भामतीति नाम कृतम् । किन्त्वेतेषु विकल्पेष्वेतन्मतमेव मह्यमधिकं रोचते यद् पत्न्या सह स्वकीयप्रेम्ण: चिरस्थायित्वं स्थापयितुमेवास्या: टीकाया: नाम भामतीति कृतम् ।

भामतीप्रस्थाने ब्रह्मसूत्रम्-शारीरकभाष्यम्-भामती-कल्पतरु: -परिमल: इत्येते ग्रन्था: व्यपदिश्यन्ते । चतुरध्यायात्मकं ब्रह्मसूत्रं तथा व्याख्यानभूता: चत्वारो ग्रन्था: एव विशेषत: वेदान्तशास्त्रत्वेनाद्रियन्ते । वाचस्पतिमिश्र: पदार्थ-वाक्यार्थ-तात्पर्यार्थविवर्णनपूर्वकं शारीरकभाष्याशयं विवृण्वन्ति । यद्यपि भामत्या: व्याख्याग्रन्थेषु वाचस्पतिमिश्रस्य कथनानां प्राय: पुष्टि: कृता दृश्यते तथापि सन्ति तावत् केचिदेतादृशा: अपि पक्षा: यत्रोत्तरवर्तिव्याख्याकाराणां वाचस्पतिना सह वैमत्यं वर्तते । कल्पतरुकार: अमलानन्द: वाचस्पतिमिश्रस्य महान् प्रशंसको ऽस्ति । अमलानन्देन प्रकटार्थकारकृतानाक्षेपान् निरस्य वाचस्पते: कथनानां समर्थने महानादर: प्रदर्शित: । तद्यथा-

" पदवाक्यप्रमाणाब्धे: परं पारमुपेयुष: ।
वाचस्पतेरित्यर्थो ऽप्यबोधा इति साहसम् ।।" 97

किंच " वैदिकमार्गम् वाचस्पतिरपि सम्यक् सुरक्षितं चक्रे ।" 98 किन्तु परिमलकार: अप्पयदीक्षित: केषांचित्स्थलेषु वाचस्पते: कथनानामयुक्तत्वं निर्दिशति । "अनियम: सर्वासामविरोध: शब्दानुमानाभ्याम् " (ब्र॰सू॰ 3-3-31) अस्य सूत्रस्य भामत्यां वाचस्पति: कथयति यत् - न चैवं सति श्रुत्यादिद्वयोरपि विनियोजका:;तेषामपि हि प्रकरणेन सामान्यसम्बन्धे सति विनियोजकत्वात् । अत्र परिमलकारेण वाचस्पतेर्मतस्य खण्डनं कृतम् । तस्याशय: अयमस्ति यत् श्रुतिलिङ्गवाक्यप्रकरणसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यस्य जैमिनिसूत्रस्यानुसारं पूर्वप्रमाणादुत्तरप्रमाणस्य दौर्बल्यं सिद्धान्तितमस्ति । किन्तु वाचस्पते: कथनानुसारं श्रुति: लिङ्गस्यापेक्षा

करोति । तच्च सिद्धान्तविरुद्धमस्ति[11] इति परिमलकारस्य मतम् ।

वाचस्पतिमिश्रस्याविद्याया: आश्रयो जीव:, विषयश्च ब्रह्म इत्यस्य मतस्य खण्डनं नारायणानन्दसरस्वती शारीरकभाष्यवार्तिके एवं करोति यत् अविद्या तम इव वर्तते । तमस: आश्रय: विषयश्च एक एव भवति । अतस्तस्य मतानुसारमविद्याया: आश्रय: तथा विषय: एक एव भवितव्य: । जीवब्रह्मणो - भेदविषयेऽपि नारायणानन्दस्य वाचस्पतिना सह मतभेद: वर्तते । यतस्तस्य मतानुसारमाश्रयविषययोर्भेद: जीवब्रह्मणोर्भेदमपेक्षते । जीवब्रह्मणोर्भेदश्चाश्रयविषययोर्भेदमपेक्षते । एवंप्रकारेणात्रान्योन्याश्रयदोष: प्रसज्यते ।

उपर्युक्तप्रकारेण केचिदाक्षेपा: वाचस्पते: कथनेषु तदुत्तरवर्तिभिराचार्यै: कृता: । तथापि मदीयं मतमेतदस्ति यत् वाचस्पतिमिश्रस्य कथनानि शारीरकभाष्यकारस्य सम्यक् व्याख्यानं कुर्वन्ति ।

वाचस्पतिमिश्रप्रवर्तितेषु सिद्धान्तेषु अवच्छेदवाद: प्रामुख्यं भजते । अस्य विश्लेषणं मया यथास्थानं विस्तरेण कृतम् । वाचस्पतिमिश्रेण भामत्यां ये प्रमुखा: सिद्धान्ता: प्रतिपादिता: तेषां विश्लेषणमस्माभि: पूर्वमेव चतुर्थाध्याये कृतम् । तत्रास्माभिर्यत्कथितं तस्य पुनराकलनमेवं कर्तुम् शक्यते- ब्रह्मजिज्ञासाया: अनादित्वमस्ति तादृशी एव च स्थितिरध्यासस्य । देहादिप्रपंचस्याप्यध्यस्तत्वमस्ति । अविद्याया:भावरूपत्वमस्ति । अविद्याया: आश्रय: जीव: विषयश्च ब्रह्म । अविद्यानानात्वमाश्रित्य जीवनानात्वमपि भामतीप्रस्थाने प्रतिपादितं दृश्यते । वाचस्पतिनापि अनिर्वचनीयख्याति: समर्थिता । अध्यासस्य व्या-

ख्याने अविद्याया: विश्लेषणे च भामतीप्रस्थानस्याचार्याणां विवरणप्रस्थानस्य भास्करप्रस्थानस्य तथा आभासप्रस्थानस्य च आचार्यैः सह मतभेदाः वर्तन्ते । तेषामुल्लेखः मया यथास्थानं पूर्वमेव कृतः । अत्र संक्षेपतः इदं कथयितुं शक्यते यद् वाचस्पतिमिश्रः वस्तुतः सर्वतन्त्रस्वतन्त्रः आचार्यः आसीत् तस्य ग्रन्थः न केवलमेकः टीकाग्रन्थः अपि तु अद्वैतवेदान्तनये एकस्यनवीनस्य प्रस्थानस्याविर्भावोऽप्यस्ति। अतः वाचस्पतिमिश्रस्याद्वैतचिन्तनपरम्परा महत्वपूर्णाऽस्ति ।

### 7.3.5 तत्वमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम्

पंचमाध्यायेऽस्माभिः तत्वमीमांसायाः सन्दर्भे भामतीप्रस्थानस्य समीक्षणं कृतम् । "सत्यं ज्ञानमनन्तं ब्रह्म " इत्येतद् तटस्थलक्षणमस्तीति भामतीपन्थिभिरपि स्वीक्रियन्ते । ब्रह्मणः एकत्वमद्वितीयत्वम् , सत्वम् , स्वप्रकाशत्वम् , चित्स्वरूपत्वम् , आनन्दमयत्वम् , निर्गुणत्वं तथा निर्विशेषत्वमपि भामतीप्रस्थानसम्मतम् ।

भागवता शंकराचार्येणैतत्कथितं यद् एकस्यैवाद्वितीयस्य ब्रह्मणः तस्य मायाशक्त्या ईश्वरः तथाऽविद्योपाधिना जीव इति रूपद्वयं जायते । वाचस्पतिः अस्य कथनस्य व्याख्यानं कुर्वन् कथयति यदविद्या जीवस्याधिकरणम् । " यथाऽहि विभ्रमो रज्जूपादानः । एवं प्रपंचविभ्रमः ईश्वरोपादानः । तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया जीवमाश्रयते ति ईश्वराश्रयेत्युच्यते न त्वाधारतया , विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः[100] । अस्मिन्सन्दर्भे प्रकटार्थविवरणकारस्य मतमेतदस्ति यद् " अनादिर्वाच्या भूतप्रकृतिचिन्मात्रसम्बन्धिनि

माया तस्यां चित्प्रतिबिम्बः ईश्वरः तस्य एव परिच्छिन्नानन्तप्रदेशेषु आवरण - विविक्षेपशक्तिदर्शनात् अविद्याभिधानेषु चित्प्रतिबिम्बो जीवो इति । विवरण- मतानुसारं चैतन्यस्याभासः जीवः तथा बिम्बस्थानापन्नं चैतन्यमीश्वरः । विद्या- रण्यस्य मतमेतदस्ति यत् त्रिगुणात्मिकायाः प्रकृतेः माया विद्या चेति रूपद्वयम् । शुद्ध- धासत्वप्रधाना माया , मलिनसत्वप्रधाना अविद्या । जीवेश्वरयोर्सम्बन्धविषये भग- वतः शांकराचार्यस्य मतमेतदस्ति यत् * चैतन्यतत्वमुभयत्रैकमेव वर्तते । जीवः ईश्वरस्यां - शो नास्ति , यतः निरवयवस्यांशः भवितुं न शक्नोति । ईश्वरः मायाशक्ति - सम्पन्नः ।

अस्मिन् सन्दर्भे वाचस्पतेर्मतमपि द्रष्टव्यम् वर्तते । तद्यथा - " नहि तावदनवयवेश्वरस्य जीवा भवितुमर्हन्त्यंशाः । अपि च जीवानां ब्रह्मांशत्वे तद्गता वेदना ब्रह्मणो भवेत् । पादादिगत इव वेदना देवदत्तस्य । ततश्च ब्रह्मभूयगतस्य समस्तजीवगतवेदनानुभावप्रसङ्गः इति वरं संसार एव मुक्तेः । तत्र हि स्वगतवेदनानुभाव प्रभवः मात्राभूरि दुःखमनुभवति । मुक्तस्तु सर्वजीववेदनाभागिति प्रयत्नेन मुक्तिरर्थः बहुल- तया परिहर्तव्या स्यादिति । तथा भेदाभेदयाः पारस्परिकविरोधिनोरेकत्रासम्भ- वान्नांशत्वं जीवानाम् ।[101]" यद्यपि जीवः जाग्रत्स्वप्नसुषुप्तिषु तिसुस्ववस्थासु अव- तिष्ठते । स्थूलसूक्ष्मकारणशरीराभिमानी अयं जीवः आश्रयं क्रमशो विश्वतैजसप्रा- ज्ञां लभते । भगवतः शांकराचार्यस्य मतानुसारं अविद्योपाधिकं ब्रह्मैव जीवः । तद्यथा- " जीवो हि अविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्य- विद्यया कृतं दुःखोपभोगमभिमन्यते । नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभि- मानो वास्ति[102]

46

अत्र भामती - "यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावे वतिष्ठते न कृपाणे प्रतिबिम्बितमपि । एवमविद्योपादानविगमे जीवब्रह्मभाव इति सिद्धाम् । जीवो ब्रह्माँश इव तत्तन्त्रतया न तु अंश इति तात्पर्यार्थ:[103] ।"

केषांचिद्विदुषां ~~[illegible]~~ मतमेतदस्ति यद् वाचस्पतिमिश्रस्य जीवाश्रितानेकाविद्यावाद: दृष्टिसृष्टिवादेन साम्यं धारयति[104] । किन्तु एतद् कथनं समीचीनं ~~नहीं~~ नास्ति । वस्तुत: वाचस्पति: विवर्तवादमेव समथायति । किन्तु केषांचिद्विदुषां मतानुसारं दृष्टिसृष्टिवाद: , सृष्टिदृष्टिवादश्च विवर्तवादस्यैव द्वौ भेदौ वर्तेते[105] । सृष्टिदृष्टिवादे सत्तात्रैविध्यमङ्गीक्रियते । प्रातिपदार्थानां बाध: प्रमातु: विनापि संजायते । किन्तु व्यावहारिकपदार्थानां बाध: तथैव भवति यथा ब्रह्मसाक्षात्कारात्प्रमातुरपि बाध: संजायते । एवंप्रकारेण सृष्टिदृष्टिवादोऽपि व्यावहारिकप्रातिभासिकपदार्थयो: विवर्तत्वमङ्गीक्रियत एव ।

दृष्टिसृष्टिवादस्यापि द्वौ पक्षौ स्त: । (क) " दृष्टिसम-समया सृष्टि: तथा (ख) दृष्टिरेव सृष्टिरिति संक्षेपत: उभयोरेव पक्षयोरेतत्स्वीक्रियते यद् घटादिपदार्था: प्रतीतिसमकाल एव सत्तावन्त: न तु प्रतीतिविरहे । अथवा दृष्टिव्यतिरिक्तं सृज्यमानपदार्थानां सत्ता एव न भवति । अत: दृष्टिव्यतिरिक्तस्य जगत: सर्वथा भावो वर्तते ।

उपर्युक्तप्रकारेण सृष्टिदृष्टिवादस्य तथा दृष्टिसृष्टिवादस्य या व्याख्या क्रियते तदनुसारं यद्यनयोर्वादयोर्समावेश: विवर्तवादे क्रियते , तर्हि एतद् कथयितुं शक्यते यद् वाचस्पतिमिश्रस्वीकृतेन विवर्तवादेन सह दृष्टिसृष्टिवादस्य विरोध: नास्ति । किन्तु वाचस्पतेर्मतं दृष्टिसृष्टिवाद: अस्तीति कथनं समीचीनं नास्ति ।

नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति । न चानध्यस्तात्मभावेन देहेन कश्चित्व्याप्रियते । न चैतस्मिन् सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च ।[107] एवंप्रकारेण प्रमायाः प्रमाणानां च स्वरूप - निर्धारणविषये भाष्यभामत्योरैकमत्यं दृश्यते ॥

अद्वैतवेदान्तनये प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिरित्येतानि षट्प्रमाणानि स्वीक्रियन्ते । किन्तु प्रत्यक्षागमयोर्ज्येष्ठत्वविषये तथा शाब्दप्रमायाः परोक्षापरोक्षत्वविषये अस्ति मतभेदाः भामतीपन्थिनां विवरणपन्थिभिस्सह । सा एव श्रुतिः प्रत्यक्षात्प्रबला भवति यथा एकमेवाद्वितीयं ब्रह्म । यथा यज - मानः प्रस्तरः । शाब्दप्रमायाः परोक्षापरोक्षत्वविषये वा चस्पतेरेतत्कथनमस्ति यत् शब्दः परोक्षाज्ञानस्यैव साधनम् । अतः शब्दजन्यप्रमा परोक्ष एव ।

विवरणप्रस्थाने प्रत्यक्षप्रमायाः करणविषययोर्मध्ये विवरणपन्थिनः विषयस्य प्राधान्यमङ्गीकरोति । किन्तु भामतीपन्थिनामनुसारमत्र करणस्य प्राधान्यमस्ति ।

न्यायप्रभृतिषु दर्शनेषु वृत्तेरस्तित्वं न स्वीक्रियते । किन्त्वद्वैतवेदान्तनये वृत्तेरस्तित्वं स्वीक्रियते । वाचस्पतेर्मतानुसारं एकमपि चान्तःकरणमनेक - क्रियाकारि भविष्यति , यथा प्रदीपः एकः रूपप्रकाशनवर्ति विकारस्नेहशोषणहेतुः। तस्मान्नान्तःकरणभेदः । एकमेव त्वन्तःकरणं मननात्मनेति अभिमानादहंकार इति अध्यसायबुद्धिरित्युच्यते । वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचयति त्रयमिति । तत्त्वेन त्वेकमेव भिन्ने प्रमाणाभावात् ।

भामतीपन्थिन: सत्तात्रैविध्यमङ्गीकुर्वन्ति तथा पंचीकरणस्यापि सिद्धान्तापेक्षया त्रिवृत्करणसिद्धान्तमनुसरति । यद्यपि वाचस्पतिमिश्र: सामान्यतया भाष्यमतमनुसरन्ति , तथापि सन्ति एतादृशा अपि पक्षा: यत्र भाष्यभामत्योर्मध्ये किंचिद्वैषम्यं दृश्यते । एतत्सर्वम् मया पूर्वमेव यथास्थानं निर्दिष्टम् । अत: पुन: संक्षेपत: इदं कथयितुं शक्यते यत् तत्वमीमांसाया: सन्दर्भे भामतीपन्थिनामपि मतमेतदस्ति यत् - "ब्रह्म सत्यं जगन्मिथ्या , जीवो ब्रह्मैव नापर:"।

### 7.3.6 ज्ञानमीमांसाया: सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम्

'तत्वपरिच्छेदो हि प्रमा विद्या, तत्साधनानि प्रमाणानि' इत्युक्त्वा प्रकारेण प्रमाया: लक्षणं निरूप्य वाचस्पतिमिश्र: एतदपि कथयति यत् अविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि । तथा च -" अनाद्यविद्यालब्धाकर्तृत्वभोक्तृत्व - ब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते । एवं वेदान्ता: अपि अविद्यावत्पुरुषविषया एव । नहि प्रमात्रादिविभागादृते तदर्थाधिगम: । ते त्वविद्यावन्तमनुशासन्तो निमृष्टनिखिलविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेष: । तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति ।"[106]

वाचस्पतेरस्य कथनस्य सन्दर्भे भाष्यकारस्यवचनान्यप्यवधेयानि वर्तन्ते । तद्यथा- " तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा: लौकिका वैदिकाश्च प्रवृत्ता: , सर्वाणि च शास्त्राणि विधिप्रतिषेध - मोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ?-उच्यते - देहेन्द्रियादिष्वहममभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते:।

संक्षेपत: एतत्कथयितुं शाक्यते यत् यदन्त:करणस्य विषयाकारेण परिणाम: वृत्ति: इत्यस्मिन् विषये भामतीपन्थिनामप्यैकमत्यमस्ति ।

7·4·0 प्रस्थानप्रवर्तकस्य भामतीग्रन्थस्य रचनाशैल्या: प्रभावस्य च सन्दर्भे भामतीप्रस्थानस्य पुनराकलनम्

प्रस्थानप्रवर्तकस्य भामतीग्रन्थस्योत्तरवर्तिष्वद्वैतवेदान्तनयपरकेषु ग्रन्थेषु महान् प्रभावो दरीदृश्यते । वस्तुत: वाचस्पतिना भामत्या: माध्यमेन अद्वैत-वेदान्तनये यो नूतन: पन्थाऽविष्कृत: , तस्य समग्रमाकलनमशक्यमस्ति । अस्मिन् विषये कल्पतरुकारस्यामलानन्दस्यैतत्कथनं समीचीनं प्रतिभाति यत् -

" क्व भामकं क्लेशवशानुगामि चेत: क्व वाचस्पतिसूक्तयोऽमू: ।
क्व शांकराचार्यवच: क्व चेदं वैयासिकं सूत्रमगाधभावम् ।।"

(कल्पतरु: - पुष्पिकाश्लोक: -चतुर्थ: ।)

षड्दर्शनवल्लभो भामतीकार: सर्वत्रैव स्वीयं वाचस्पतित्वमन्वर्थ-यति । भामत्यां भाषाया: या रमणीयताऽस्ति , शैल्याश्च या स्पृहणीयता वर्तते साऽदृष्टपूर्वा वर्तते । तद्यथा- न चाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रसादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम्। (भामती , पृ·481) भामत्या: रामणीयकस्य पुनराकलने वस्तुत: अस्मादृशानां सामर्थ्यम् नास्ति,तथापि वाचस्पतेरेतत्कथनमेवास्मादृशामप्युत्साहं प्रति प्रमाणम् यत् - " नहि मृगा: सन्तीति शालयो नोप्यन्ते , नहि भिक्षुका: सन्तीति स्थाल्यो नाधिश्रियन्ते ।"

भामत्यां प्रवर्तितानां विश्लेषितानां सिद्धान्तानां च समुल्लेखः मया यथास्थानं कृतः। किन्तु वस्तुतोऽहमेतदनुभावामि यद्भामत्याः हिन्दीव्याख्यायाः आरम्भे स्वामियोगीन्द्रानन्दमहाभागेन यदुक्तं तत्सत्यं वर्तते। तद्यथा-

"भामतीपथिभिरेकाकी बभूवास्या रहस्यवित्।
वयं तु केवलमस्याः वीक्षितुं वीक्षितुं क्षमाः।।"

भामतीप्रस्थानस्य यत्साहित्यमस्ति तस्य समग्रं रहस्यं वस्तुतः पूर्णतया आकलयितुमशक्यम्। अतः अस्मिन् सन्दर्भे यः प्रयत्नः मया कृतः तदर्थमाभोगकारस्य लक्ष्मीनृसिंहस्य शब्देषु मयाऽपि एतद्वक्तुं शक्यते यत् -

"क्वाहं क्व कल्पतरुः क्व च सूक्तयोऽमूः
वाचस्पतेः क्व च गभीरतरं च भाष्यम्।"
(आभोगः - प्रारम्भिकश्लोकः)

उपर्युक्तप्रकारेण परिस्थितीनां ~~प्रकारेण~~ वामत्वेऽपि प्रांशुलभ्ये फले योऽयं लोभः वामनयेवाल्पज्ञया मया कृतः, तत्र भामतीकारस्य कथनमेव कारणं प्रमाणं च। तद्यथा-

"आचार्यकृतिनिवेशनमप्यवधूतम् वचोऽस्मदादीनाम्।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति।।" इति।
(भामती- मङ्गलश्लोकः)।

x x x x x x x x x x x x x x x x x x x x x
x x x x x x x x x x x x x x x x x x x x
x x x x x x x x x x x x x x x x x x
x x x x x x x x x x x x x x x x

सप्तमाध्यायस्य पादटिप्पण्य:

1• वेदान्तकल्पतरु: - 3•3•26 पृ• 393
2• वेदान्तकल्पतरु: - प्रारम्भिकश्लोकसंख्या ।।
3• कल्पतरु: - प्ररम्भिकश्लोकसंख्या •3
4• कल्पतरु: - प्ररम्भिकश्लोकसंख्या •4
5• आभोग: - अन्तिमात्पूर्व: श्लोक:, मद्रस् गवर्णमेन्ट् संस्करण्
6• भामती -पृ•435
7• आभोग: - अन्तिमश्लोक:
8• सिद्धान्तलशसंग्रह: -पृ• 172
9• " - पृ•552
10• ब्रह्मसूत्रम् - 2•2•21
11• भामती - 2•2•21, पृ•532,533
12• न्यायनिर्णय: -2•2•21
13• भामती -पृ•544
14• न्या• नि• 2•2•28
15• भामती -पृ• 544
16• न्या• नि• 2•2•28
17• रत्नप्रभा 1•1•1
18• भामतीमङ्•लश्लोकसंख्या•7
19• रत्नप्रभामङ्•गलश्लोकसंख्या•7
20• ब्र• सू• श• भा• , अध्यासभाष्यम्
21• भामती - अध्यासव्याख्या
22• र•प्र• - अध्यासभाष्यम्
23• भामती - 1•1•1 ,पृ•55,57
24• भामती , पृ•6
25• ब्रह्मविद्याभरणम् , पृ•4
26• भामती , पृ•6
27• ब्रह्मविद्याभरणम् , पृ•4

28· सर्वदर्शनसंग्रह: (सम्पादकऋषि:) पृ·752

29· " पृ·751

30· ब्र· सू· 1·1·1

31· भामतीतिलक: (चतुस्सूत्र्यन्तभाग:) सम्पादक: वा·शा·वै·गुरुस्वामिशास्त्रि आदिशङ्कराद्वैतविमर्शसमितिप्रकाशित: 1984

32· वेदान्तसार: ,पृ·5। चौखाम्बा अमरभारतीप्रकाशन्

33· वेदान्तपरिभाषा ,प्रयोजनपरिच्छेद: पृ·407, मुसलगावङ्कर:

34· " पृ·388

35· भा· , पृ· 18

36· भा· , पृ·26

37· भा· , पृ· 37

38· भा· , पृ·45

39· भा· , पृ·80

40· भा· , पृ·128

41· भा· , पृ·37

42· भा· , पृ· 48

43· भा· , पृ· 7

44· भा· , पृ· 5

45· भा· , पृ·121

46· भा· , पृ· 19,20

47· भा· , पृ· 187

48· भा· , पृ·74

49· भा· , पृ·568

50· भा· , पृ·35

51· भा· , पृ·494

52· न्या· क·, पृ·2

53· भा· , पृ·5

54· शाबरभाष्यम् जैमिनीयसूत्रम् 1-1-1

55· श्लोकवार्तिकम् 1-1-1 श्लो ·खा 12

56· हेतुबिन्दुटीका, पृ·6

57· शा·बा·ब्र·सू· , पृ·79

58· भा· , पृ·106

59· वे· क· , पृ659

60· ब्र·सू·शा·भा· 1-1-15

61. कल्पतरु: , पृ०81,82 1-1-15

62. भा० , पृ०6181 ,182

63. ब्र०सू० 3-3-9

64. छा० 1-1

65. भामती, अध्यासव्याख्या

66. भा० , पृ०343

67. भा० , पृ०37

68. भा० , पृ०336

69. भा० , पृ०54

70. भा०, ण्पृ०74 , 322, 335, 352, 377

71. भा० , पृ०74

72. भा० ,पृ०64

73. भा० , पृ०330

74. भा० , पृ०336

75. भा०, पृ०23

76. भा० , पृ०23

77. भा० , पृ० 125

78. भा० , पृ०186

79. भा० , पृ०186

80. भा० , पृ०187

81. ब्र. सू. भा., पृ.4-3-7

882. कल्पतरु:, पृ.333

83. भास्करसूत्र, 1-1-4

84. ", पृ.95

85. भा., पृ.85

86. भा., पृ.429

87. भास्करभाष्यम्, पृ.95

88. भा.1-1-1-2

89. भा.1-1-5

90. भा.4-3-14

91. भा.4-3-14

92. भा.., पृ.284

93. भा.., पृ.418, 420, क.प. पृ.419

94. भा., पृ.422

95. पं. पा. 1-4-3

96. भा. ति, भूमिका -गुरुस्वामिशास्त्रि:

97. वे.क., पृ.806

98. वे. क., प्रारम्भिकश्लोकसंख्या-11

99. भामती एक अध्ययन, पृ.193

100. भाट 1-4-3

101. भाट , पृ.622

102. ब्र.सू.2-3-46

103. भाट , पृ.623

104. वाचस्पतिमिश्र ओन् अद्वैतवेदान्त . पृ.207 ;एस्.एन्.दासगुप्त- हिस्टरी ओण् इन्धन् फिलोसफि वो.1, पृ.477 ,478

105. संक्षेपशारीरकभावदीपिकाख्या स्वामिरामानन्दकृतहिन्दीव्याख्याभूमिका, पृ.42

106. भाट , पृ.41

107. ब्र.सु.शा.भा. ,1-1-1

xxxxxxxxxxxxxxxxxxxx

# परिशिष्टम्

## क सन्दर्भग्रन्थसूची

1. अद्वैतदीपिका , नृसिंहाश्रम श्रीनारायणाश्रमकृतविवरणसहिता : रवेलाडीलाल एन्ड् सन्स् वाराणसी , 1919

2. अद्वैतसम्मतं वाक्यार्थज्ञानम् , डा॰ मुक्ताराम बानरजी : संस्कृतपुस्तक भाण्डार विधानसरणि कलकत्ता , 1983

3. अद्वैतवेदान्त , डा॰रामामूर्तिशर्मा : नाशनल् पब्लिशिङ्॰ हाउस , दिल्ली

4. अद्वैतवेदान्त की तार्किक भूमिका , डा॰जगदीशसहाय श्रीवास्तव , चौखाम्बा

5. अद्वैतवेदान्त में आभासवाद , डा॰ सत्यदेवमिश्र: इन्दिराप्रकाशन ,1979

6. अद्वैतवेदान्त में तत्व और ज्ञान , उर्मिलाशर्मा छन्दस्वतिप्रतिष्ठान , वाराणसी वितरक मोतिलाल् , 1978

7. अद्वैतसिद्धि: , मधुसूदनसरस्वती योगीन्द्रानन्दविरचिता व्याख्यासहिता प्रतिष्ठान उदासीनसंस्कृतविद्यालयढुण्ढिराज ,वाराणसी , 1977

8. आचार्य भास्कर भास्कराचार्य एक अध्ययन , रामजन्ममिश्र , चौखाम्बा ओरियन्टालिया , 1977

9. इष्टसिद्धि: , विमुक्तानन्द: गङ्कवाड् ओरियन्टल् सीरीज , बडोदा , 1933

10. ईशादिदशोपनिषद: शांकरभाष्यसहिता, , शंकराचार्य: , मोतिलाल् बनारसीदास् , दिल्ली , 1964

11. उपनिषदों का तत्वज्ञान , डा॰ जयदेवालंकार : प्रच्यविद्याशोधप्रतिष्ठान हरिद्वार ,1980

12. तत्वदीपिका चित्सुखी , उदासीनप्रवरस्वामी योगीन्द्र: षड्दर्शनप्रकाशन वाराणसी , 1974

13. द्वादशदर्शनसमीक्षणम् , डा॰ प॰ सीतारामहेब्बार , गायत्री आश्रमम् उडुपि, 1980

14. नैष्कर्म्यसिद्धि: चन्द्रिकोपेता सुरेश्वर: पूना द्वितीय संस्करण , 1925

15. न्यायदर्शनम् ;(आचार्य ढुंढिराजशास्त्रीविरचितप्रकाशिकाहिन्दीव्याख्योपेतम्,) चौखाम्बा संस्कृतसंस्थान , 1983

16. न्यायमंजरी ; जयन्तभट्ट: ; सं॰ सूर्यनारायणशुक्ल: चौखाम्बासंस्कृतसीरीस्, 1971

17. न्यायरत्नदीपावलि: ; आनन्दानुभव: ; गवर्नमेन्ट् ओरियन्टल् सरीज मद्रास, 1961

18. न्यायवार्तिकतात्पर्यटीका ; वाचस्पतिमिश्र: काशी सं॰सी॰. विद्यालय प्रेस्, काशी 1925

19. पंचपदिका (टीकाद्वयोपेता) पद्मपाद: ; मद्रास् गवण्मेण्ट(ओरि॰सी॰) भारतीविजयम् प्रेस् मद्रास , 1958

20. पंचपादिकाप्रस्थानम् ; श्रीसच्चिदानन्देन्द्रसरस्वती संयमिन: ; अध्यात्मप्रकाशन कार्यालय: होलनरसीपुरम् , 1966

21. पंचपादिकाविवरणम् ; प्रकाशात्मयति: ई॰ जे॰ लाजरस् कम्पनी , काशी , 1891

22. पातंजलयोगदर्शनम् (व्यासभाष्यसहितशोधपूर्णसंस्करण) श्रीब्रह्मलीनमुनि: चौखाम्बा संस्कृतसंस्थान , वाराणसी , वि सं : 2041

23. प्रकटार्थविवरणम् ; प्रकटार्थकार: : ति॰ रा॰ चिन्तामणि मद्रास विश्व-विद्यालय 1935

24. बृहदारण्यकोपनिषद्भाष्यवार्तिकम् (आनन्दगिरिकृतशास्त्रप्रकाशिकाख्यटीका संवलितम्); श्रीसुरेश्वराचार्य: आनन्दाश्रममुद्रणालय: , 1959

25. ब्रह्मसूत्रम् विद्यानन्दवृत्ति: , स्वामिविद्यानन्दगिरि: मोतीलाल् बनारसीदास दिल्ली , 1969

26. ब्रह्मसूत्रप्रमुखभाष्यपंचकसमीक्षणम् ,डा॰ रामशरणत्रिपाठी : चौखाम्बा संस्कृतसंस्थान , 1972

27. ब्रह्मसूत्रशांकरभाष्यम् (चतु:सूत्री , भाष्यकौमुदी हिन्दीव्याख्यासहिता) डा॰ कामेश्वरनाथमिश्र: चौखाम्बा अमरभारतीप्रकाशन-वि॰सं॰2033

28. ब्रह्मसूत्रशाङ्करभाष्यम्; (भामती-कल्पतरु-परिमलव्याख्योपेतम्) श्रीमदनन्तकृष्णशास्त्री, चौखाम्बा सीरीज, वाराणसी, वि॰सं॰ 2039
29. ब्रह्मसूत्रशाङ्करभाष्यम् (हिन्दीव्याख्यासहितभामतीसंवलितम्); स्वामी योगीन्द्रानन्दनिर्मिता भामतीव्याख्या : षड्दर्शनप्रतिष्ठानम्, वाराणसी, 1972
30. भामती एक अध्ययन, डा॰ ईश्वरसिंह : मथान पब्लिकेशान्स रोहतक, 1983
31. भामतीतिलकम्, अल्लालसूरि: आदिशांकराद्वैतरिसर्च सेन्टर्, मद्रास, 1984
32. भामतीप्रस्थान तथा विवरणप्रस्थान का तुलनात्मक अध्ययन, सत्यदेवशास्त्री : भारतभारती, वाराणसी, 1978
33. भारतीयदर्शन, गगनदेवगिरि, ज्योति, 1980
34. भारतीयदर्शन, बलदेव उपाध्याय, चौखाम्बा ओरियन्टालिया, 1979
35. भारतीयदर्शन, वाचस्पतिगौरोला : लोकभारतीप्रकाशन इलहाबाद्, 1883
36. भारतीयन्यायशास्त्र, डा॰ चक्रधारबिजल्वान् : उत्तरप्रदेश हिन्दी संस्थान लखनउ, 1983-84
37. मीमांसापरिभाषा (कृष्णयज्वा) सं॰ स्वामिमाधवानन्द:, रामकृष्ण-मिशन्, शारदापीठ, बेलूर्मठ हावरा, 1948
38. योगसूत्रम्, पतंजलि: : चौखाम्बा संस्कृत सीरिज, वाराणसी, वि॰सं 2039
39. रत्नप्रभा (भाष्यानुवादसहिता); गोविन्दानन्द:; अनुवादकर्तायतिवरश्रीमोलेबा बाजी- : श्रीलक्ष्मीनारायण प्रेस्, बनारस्, संवत् 1993
40. वाचस्पतिदर्शनम्, राजेन्द्रप्रसाद दूबे, क्लासिकल् पब्लिषिङ्ग् कम्पनी कर्मपुरा दिल्ली, 1983
41. वाचस्पतिमिश्र जीवनी और सिद्धान्त, राजेन्द्रप्रसाद दूबे, केपिटल् पब्लिषिङ्ग् हाउस, दिल्ली, 1981
42. विवरणप्रमेयसंग्रह:, ललिताप्रसादडबराल् : अच्युतग्रन्थमाला काशी, 2004
43. वेदान्तपरिभाषा (सविवरण प्रकाश हिन्दीव्याख्योपेता) सं॰ डा॰ गजाननशास्त्रीमुसलगावकर:, चौखाम्बा विद्याभवन, वाराणसी, वि॰सं॰ 1973
44. वेदान्तसार:, सदानन्दप्रणीत: (सारबोधिनी विमला संस्कृत-हिन्दीव्या-

ख्योपेत:) डा॰ गजाननशास्त्रीमुसलगावकर:, चौखाम्बा अमरभारतीप्रकाशन, वाराणसी, 1977

45• वेदान्तसिद्धान्तमुक्तावली, (भाषानुवादसहिता) प्रकाशानन्द:, अच्युतग्रन्थ-माला, काशी, सं॰ 1993

46• शांकरवेदान्ते ज्ञानमीमांसा, डा॰कालिप्रसादसिंह: विश्वविद्यालय संस्थान, वाराणसी, 1982

47• शांकरवेदान्ते तत्वमीमांसा, डा॰ के॰ पी॰ सिन्हा : विश्वविद्यालयप्रकाशन, वाराणसी, 1982

48• श्रीशंकरात्प्रागद्वैतवाद:, डा॰ मुरलीधरपाण्डेय:, मोतिलाल् बनार-सीदास्, दिल्ली, 1971

49• षड्दर्शन, गगनदेवगिरि: ज्योतिपटना रांची, वाराणसी, (भारतीयबुक्-कोरपरेषन्): 1983

50• षड्दर्शन, जगदीश्वरानन्दसरस्वती, गोविन्दाराममहासानन्द, दिल्ली, 1979

51• सर्वेषां दर्शनानां अद्वैते तात्पर्यम्, रामचन्द्रशास्त्री वी॰एस् : भारतीयविद्या-भवन, बम्बई, 1977

52• संक्षेपशारीरकम्, सर्वज्ञात्ममुनि: कुसन्द् पब्लिषिङ्ग् हाउस गजियाबाद्, वि॰सं॰ 2014

53• सांख्याकारिका (गौडपादभाष्य-भावार्थबोधिकासमेता), डा॰ विमलाकर्णा-टक: चौखाम्बा ओरियन्टालिया-दिल्ली, 1976

54• सायणमाधवाचार्यकृतसर्वदर्शनसंग्रहे अक्षपाददर्शनम्, कालीपदतर्काचार्य:, संस्कृत-विद्यापीठम् कल्कत्त, 1975

55• सिद्धान्तबिन्दु: (न्यारत्नदीपिकावलीसमलंकृत:), श्रीगौडब्रह्मानन्दसरस्वती : महेश अनुसन्धानसंस्थानम्, वाराणसी, 1978

56• सिद्धान्तलेशसंग्रह: श्री अप्पयदीक्षितविरचित: सं॰ श्रीजीवानन्दविद्यासागर-भट्टाचार्य: कलकत्ता नारायणप्रेस्, 1897

57• हिन्दुतत्व, रामदास गौड : शिवप्रसादगुप्तज्ञानमण्डलयन्त्रालय, काशी, वि॰ सं॰ 1995

## BIBLIOGRAPHY


1. A history of Indian Philosophy : S.N. Dasgupta ; Cambridge University Press & Motilal Banarasidas, 1975

2. The systems of the Vedanta : Dr. Paul Deussen ; Motilal Banarasidas, Delhi, 1912.

3. Indian Philosophy: Dr. Radhakrishnan; George Allen & Unwin Ltd London,

4. The Principal Upnishads : Radhkrishnan. S. ; George & Unwin London, 1953.

5. Theory of knowledge : Dr. C.D. Bijelwan ; Heritage pub. Delhi, 1977.

6. Vachaspati - The Bhamati (Catusutri English Translation : S.I. Surya Narayan Shastri & C. Kunhunni Raja ; Publishing House Madras , 1933.

7. Vedanta Paribhasa (English translation) : Surya Narayana Shastri. S.S. ; Adayar Library Adayar, 1942.

8. Brahmasutras (English translation according to Sri Bhasya of Ramanuja) : Vireshvaranand ; Adaitasram Culcutta, 1976.

9. Eight Upanishads (with the commentary of Sankaracharya) : Swami Gambhirananda ; Adaitasram Mayavati , 1982.

10. Philosophy of the Upanishads : Paul Deussen ; Motilal Banarasidas New Delhi, 1980.

11. Reflection on Indian philosophy : Sinha. K.P. ; Chowkamba Orientalia, 1985.

12. Contemporary Indian Philosophy : T.M.P. Mahadevan & G.V. Saroja ; Sterling New Delhi, 1981.

13. Status of the world in Advaita Vedanta : Hariprasad Bhattacharya ; Bharath Manisha-Varanasi, 1979.

14. The Sarva Siddanta Sangraha of Sankaracharya : M.Rengacharya Ajay book service New Delhi , 1983.

15. A study of Brahmasiddhi : R. Balasubramanyam ; Chawkhamba Amara Bharathi Varanasi, 1983.

16. Vedanta Siddanta Bheda : N.D, Metha ; A.D. Publication Delhi, 1985.

17. Studies in Philosophical Methods : Chhaya Rai ; University of Jabalpur Publication , 1980.

18. Sri Vallabhacharya and his Doctrines : G,H. Bhatt ; Shri Vallabha publication Baroda, 1984.

19. Philosophy of Budha : Bham. A.J. ; Vikas.N.D-2, 1984.

20. The Encyclopedia of Indian Philosophies (Vol III Adaita-Vedanta) : Karl - H. Potter ; Motilal Banarasidas, 1981.

21. Aparokshanubuthi on self - Realisation of Sri Sankaracharya text with English Translation ; Swamivimuktananda ; Adaitasram Culcutta , 1982.

22. Panchadasi of Srividyaranya Swami-(English Translation) : Swami Swahananda ; Sri Ramakrishna Math Madras ; 1980.

23. Brahmasutras (English translation): Swami Sivananda ; Motilal Delhi, 1977.

24. Vedanta Paribhasha (English translation) : Swami Madhavanand ; Adaitasram Culcutta, 1983.

25. A critique on the Vivarana School : Dr. B.K. Sen Gupta ; Culcutta, 1959.

26. An Introduction to Adaita Philosophy : Kokileshwer Shastri; Culcutta, 1925.

27. A Sketch of the Vedanta Philosophy : Tripathy. M.S. ; Bombay, 1927.

28. Metaphysics of Adaita Vedanta : Malkani. G.R. ; G.R.Indian Institute of Philosophy Amalnor.

29. A concept of Mukti in Adaita Vedanta : Krishna Warrier.A.G.; Madras University.

30. The chief currents of contemporary Philosophy : Dr.D.M.Datta;

31. The Nyaya Theory of knowledge : Chatterjee. S, ; University of Calcutta, 1950.

32. The six ways of knowing : George Allen & Unwin ; London ; 1932.

33. A primer of Indian Logic : Kupuswami Sastri.S.; Varadacharya & Co, Madras, 1932.

34. The Sarva darsana - sangraha English Translation : Cowell and Gough ; Keyan Paul,French, Trubner and Co, London, 1894.

35. The Philosophy of Adaitha with special referance to Bharatitirtha Vidyaranga : Mahavan. T.M.P. ; Luzac and Company, London, 1938.

36. The Philosophy of Bhedabheda : Srinivasachari. P.N. ; Sreenivasavaradhachari and Co; Madras, 1934.

37. Sambandha - Vartika of Suresvara (English translation) : Mahadeyan. T.M.P. ; University of Madras, 1958.

38. Gaudapada A study in Advaita : T.M.P. Mahadevan ; Madras, 1954.

39. Indian Philosophical studies : Hiryanna. M. ; Mysore, 1957.

40. Studies in Philosophy : K.C. Bhattacharya ; Calcutta, 1961.

41. Studies in Post Sankara Dialectics : Ashutosh Battacharya ; Calcutta, 1936.

42. The Age of Shankara : Narayana Sastri ; Madras, 1916-17.

43. The Doctrine of Maya : P.D. Sastri ; London, 1911.

44. Nagarjuna and Sankara : A.C. Mukerjee ; Allhabad, 1938.

45. The outlines of Vedanta : M. Srinivas Rai ; Banalore, 1928.

46. Vachaspatimisra on Advaita Vedanta : S.S. Hasurker ; Durbhanga, 1958.

47. Vedanta & Modern Science : Ajithkumar Sinh ; Bombay, 1978.

48. Yoga Philosophy : S.N. Gupta ; Motilal Banarasidas-Delhi, 1930.

49. An Introduction to Sankara's Theory of knowledge : N.K.Deva-Raja ; Motilal, Banarasidas, Delhi, 1872.

50. Vishistadvaitha Vedanta : Aravind Sharma ; Heritage Publishers Delhi, 1978.

51. The philosophy of Nimbarkar : M.M. Agrawal ; Madras, 1979.

52. Bagavath Geetha with English translation : S.Radhakrishnan; Calcutta, Calcutta, 1942.

53. The Analysis of Jnana and Ajnana in the light of Nyaya & Adaitha Vedanta : Dr. C.D. Bijalwan ; Bharatiya Vidyabhavan Madras, 1982.

54. Indian Logic & Metaphysics : Prof. R.V. Joshi ; Bharatiya Vidyaprakashan Delhi, May 1979.

55. History of Indian Logic : Vidyabhushan. D.C. ; Motilal 19 .

56. Philosophy of word and meaning : Gourinath Sastri ; Sanskrit College ; Calcutta, 1959

57. Vedanta Explained (Sankara's commentary on the Brahma Sutras)(2 vol) : V.H. Date ; Munshiram Manoharlal Publishers Pvt. Ltd.; Second Edition, 1973.

58. M.M. Professor Kuppuswami Sastri Birth Century Commemoration volume : Dr. S.S. Janaki ; The Kuppuswami Sastri Research Institute Madras, 1981.

59. Brahmasutra, with SankaraBashya, Edited by A.G. Krishna Warrier with Malayalam Translations 3 vol Kerala University Trivandrum, 1965, 1969.

60. God in Adaita : A.G. Krishna Warrier Sinha, 1977.

61. Bhagavath Geeth with Sankara Bhashya text with English translation : Ramakrishna Mission Mylapur ; Madras, 1983.

(ज) List of Research Journals

1. Adayar Library Bulletin - The Adayar Society, Adayar, Madras - 600020, India.

2. Annals of Bhandarkar Oriental Research Institute, Poona.

3. Annals of Oriental Research Institute University of Madras.

4. Arvachina Sanskritam,Devavani Parishad, Delhi.

5. Bulletin of Decan College Research Institute, Poona.

6. Indian National(Sanskrit) Bibliography Calcutta.

7. Indian Philosophical Quarterly.

8. Journal of Adaitasabha Kumbakonam.

9. Journal of Ganganath the Kendriya Sanskrit Vidyapeeth, Allah[illegible]. abad.

10. Journal of Royal Asiatic Society, Calcutta (Back volums).

11. Proceedings of All India Oriental Conferences.

12. Sangamani: Sanskrit Sahitya Parishad, Daragang, Prayag.

13. Sanskrit Vimarshati Rashtriya Sanskrit Sansthan, Delhi.

14. Saraswathi Sushama - Sampoornandh Samskrith Vidyalay Varanasi.

(घ) सङ्केतसूची

1. अ॰ दी॰ = अद्वैतदीपिका
2. अ॰ सि॰ = अद्वैतसिद्धिः
3. इ॰ सि॰ = इष्टसिद्धिः
4. उ॰ = उपनिषद्
5. ऋ॰प्र॰ = ऋजुप्रकाशिका
6. नै॰ सि॰ = नैष्कर्म्यसिद्धिः
7. न्या॰ नि॰ = न्यायनिर्णयः
8. पं॰ वि = पंचपादिकाविवरणम्
9. प्र॰ वि॰ = प्रकटार्थविवरणम्
10. बृ॰ उ॰ = बृहदारण्यकोपनिषद्
11. बृ॰ उ॰ भा॰ वा॰ = बृहदारण्यकोपनिषद्भाष्यवार्तिकम्
12. ब्र॰ सू॰ = ब्रह्मसूत्रम्
13. ब्र॰सू॰शा॰भा॰ = ब्रह्मसूत्रशांकरभाष्यम्
14. भा॰ = भामती
15. भा॰ ति॰ = भामतीतिलकम्
16. भा॰भा॰ = भा~~मती~~शंकरभाष्यम्
17. ~~xx~~ र॰ प्र॰ = रत्नप्रभा
18. वि॰प्र॰ सं॰ = विवरणप्रमेयसंग्रहः
19. वे॰क॰ = वेदान्तकल्पतरुः
20. वे॰क॰प॰ = वेदान्तकल्पतरुपरिमलः
21. वे॰ प॰ = वेदान्तपरिभाषा
22. श्लो॰ वा॰ = श्लोकवार्तिकम्
23. सं॰ भा॰ वा॰ = सम्बन्धभाष्यवार्तिकम्
24. सि॰ बि॰ = सिद्धान्तबिन्दुः
25. सि॰ल॰सं॰ = सिद्धान्तलेशसंग्रहः

xxxxxxxxxxxxxxxx